अथ प्रथमः पटलः

भैरव उवाच

परा श्रीपरमेशानीवदनाम्भोजनिःसृतम्।

श्रीयामलं महातन्त्रं स्वतन्त्रं विष्णुयामलम्॥ १-१॥

शक्तियामलमाख्यातं ब्रह्मणः स्तुतिहेतुना।

ब्रह्मयामलवेदाङ्गं सर्वञ्च कथितं प्रिये॥ १-२॥

इदानीमुत्तराकाण्डं वद श्रीरुद्रयामलम्।

यदि भाग्यवशाद् देवि तव श्रीमुखपङ्कजे॥ १-३॥

यानि यानि स्वतन्त्राणि संदत्तानि महीतले।

प्रकाशय महातन्त्रं नान्यतन्त्रेषु तृप्तिमान्॥ १-४॥

सर्ववेदान्तवेदेषु कथितव्यं ततः परम्।

तदा ते भक्तवर्गाणां सिद्धिः सञ्चरते ध्रुवम्॥ १-५॥

यदि भक्ते दया भद्रे  वद त्रिपुरसुन्दरि

महाभैरववाक्यञ्च पङ्कजायतलोचना॥ १-६॥

श्रुत्वोवाच महाकाली कथयामास भैरवम्।

भैरवी उवाच

शम्भो महात्मदर्पघ्न कामहीन कुलाकुल॥ १-७॥

चन्द्रमण्डलशीर्षाक्ष हालाहलनिषेवक।

अद्वितीयाघोरमूर्त्ते रक्तवर्णशिखोज्ज्वल॥ १-८॥

महाऋषिपते देव सर्वेषाञ्च नमो नमः।

सर्वेषां प्राणमथन श्रृणु आनन्दभैरव॥ १-९॥

आदौ बालाभैरवीणां साधनं षट्कलात्मकम्।

पश्चात् कुमारीललितासाधनं परमाद्भुतम्॥ १-१०॥

कुरुकुल्लाविप्रचित्तासाधनं शक्तिसाधनम्।

योगिनीखेचरीयक्षकन्यकासाधनं ततः॥ १-११॥

उन्मत्तभैरवीविद्या--कालीविद्यादिसाधनम्।

पञ्चमुद्रासाधनञ्च पञ्चबाणादिसाधनम्॥ १-१२॥

प्रत्यङ्गिरासाधनञ्च कलौ साक्षात्करं परम्।

हरितालिकास्वर्णविद्याधूम्रविद्यादिसाधनम्॥ १-१३॥

आकाशगङ्गा विविधा कन्यकासाधनं ततः।

भ्रूलतासाधनं सिद्धसाधनं तदनन्तरम्॥ १-१४॥

उल्काविद्यासाधनं च पञ्चतारादिसाधनम्।

अपराजितापुरुहूताचामुण्डासाधनं ततः॥ १-१५॥

कालिकासाधनं कौलसाधनं घनसाधनम्।
चर्चीकासाधनं पश्चात् घर्घरासाधनं ततः॥ १-१६॥

विमलासाधनं रौद्रीत्रिपुरासाधनं ततः।
सम्पत्प्रदासप्तकूटासाधनंचेटीसाधनम्।
शक्तिकूटादिषट्कूटानवकूटादिसाधनम्॥ १-१७॥

कनकाभाकाञ्चनाभावह्न्याभासाधनं ततः।
वज्रकूटापञ्चकूटासकलासाधनं ततः॥ १-१८॥

तारिणीसाधनं पश्चात् षोडशीसाधनं स्मृतम्।
छिन्नादि--उग्रप्रचण्ड्यादिसाधनं सुमनोहरम्॥ १-१९॥

उल्कामुखीरक्तमुखीसाधनं वीरसाधनम्।
नानाविधाननिर्माणशवसाधनमेव च॥ १-२०॥

कृत्वा देवीसाधनञ्च कृत्वाहिसाधनं ततः।
नक्षत्रविद्यापटलं कालीपटलमेव च॥ १-२१॥

श्मशानकालिकादेवीसाधनं भूतसाधनम्।

रतिक्रीडासाधनञ्च सुन्दरीसाधनं तथा॥ १-२२॥

महामालासाधनञ्च महामायादिसाधनम्।
भद्रकालीसाधनञ्च नीलासाधनमेव च॥ १-२३॥

भुवनेशीसाधनञ्च दुर्गासाधनमेव च।
वाराहीगारुडीचान्द्रीसाधनं परमाद्भुतम्॥ १-२४॥

ब्रह्माणीसाधनं पश्चाद् हंसीसाधनमुत्तमम्।
माहेश्वरीसाधनञ्च कौमारीसाधनं तथा॥ १-२५॥

वैष्णवीसाधनं धात्रीधनदारतिसाधनम्।
पञ्चाभ्राबलिपूर्णास्या नारसिंहीसुसाधनम्॥ १-२६॥

कालिन्दीरुक्मिणीविद्याराधाविद्यादिसाधनम्।
गोपीश्वरीपद्मनेत्रापद्ममालादिसाधनम्॥ १-२७॥

मुण्डमालासाधनञ्च भृङ्गारीसाधनं ततः।
सकलाकर्षणीविद्याकपालिन्यादिसाधनम्॥ १-२८॥

गुह्यकालीसाधनञ्च बगलामुखीसाधनम्।
महाबालासाधनञ्च कलावत्यादिसाधनम्॥ १-२९॥

कुलजाकलिकाकक्षाकुक्कुटीसाधनं महत्।
चिञ्चादेवीसाधनञ्च शाङ्करीगूढसाधनम्॥ १-३०॥

प्रफुल्लाब्जमुखीविद्याकाकिनीसाधनं ततः।
कुब्जिकासाधनं नित्यासरस्वत्यादिसाधनम्॥ १-३१॥

भूर्लेखाशशिमुकुटा--उग्रकाल्यादिसाधनम्।
मणिद्वीपेश्वरीधात्रीसाधनं यक्षसाधनम्॥ १-३२॥

केतकीकमलाकान्तिप्रदाभेद्यादिसाधनम्।
वागीश्वरीमहाविद्या अन्नपूर्णादिसाधनम्॥ १-३३॥

वज्रदण्डारक्तमयीमन्वारीसाधनं तथा।
हस्तिनीहस्तिकर्णाद्यामातङ्गीसाधनं ततः॥ १-३४॥

परानन्दानन्दमयीसाधनं गतिसाधनम्।
कामेश्वरीमहालज्जाज्वालिनीसाधनं वसोः॥ १-३५॥

गौरीवेतालकङ्कालीवासवीसाधनं तथा।
चन्द्रास्यासूर्यकिरणारटन्तीसाधनं ततः॥ १-३६॥

किङ्किनी पावनीविद्या अवधूतेश्वरीति च।
एतासां सिद्धविद्यानां साधनाद्रुद्र एव सः॥ १-३७॥

अलकाकलियुगस्थाशक्तिटङ्कारसाधनम्।
हरिणीमोहिनीक्षिप्रातृष्यादिसाधनं तथा॥ १-३८॥

अट्टहासाघोरनादामहामेघादिसाधनम्।
वल्लरीकौरविण्यादिसाधनं परमाद्भुतम्॥ १-३९॥

रङ्किणीसाधनं पश्चाद् नन्दकन्यादिसाधनम्।
मन्दिरासाधनं कात्यायनीसाधनमेव च॥ १-४०॥

रजनीराजतीघोनासाधनं तालसाधनम्।
पादुकासाधनं चित्तासाधनं रविसाधनम्॥ १-४१॥

मुनिनाथेश्वरीशान्तिवल्लभासाधनं तथा।

मदिरासाधनं वीरभद्रासाधनमेव हि॥ १-४२॥

मुण्डालीकालिनीदैत्यदंशिनीसाधनं ततः।
प्रविष्टवर्णालघिमामीनादिसाधनं महत्॥ १-४३॥

फेत्कारीसाधनं भल्लातकीसाधनमद्भुतम्।
उड्डीयानेश्वरीपूर्णागिरिजासाधनं तथा॥ १-४४॥

सौकरीराजवशिनीदीर्घजङ्घादिसाधनम्।
अयोध्यापूजितादेवीद्राविणीसाधनाद्भुतम्॥ १-४५॥

ज्वालामुखीसाधनञ्च कृष्णजिह्वादिसाधनम्।
पञ्चवक्त्रप्रियाविद्यानन्तविद्यादिसाधनम्॥ १-४६॥

श्रीविद्याभुवनेशानीसाधनं कायसाधनम्।
रक्तमालामहाचण्डीमहाज्वालादिसाधनम्॥ १-४७॥

प्रक्षिप्तामन्त्रिकाकामपूजिताभक्तिसाधनम्।
श्वासस्थावायवीप्राप्तालेलिहानादिसाधनम्॥ १-४८॥

भैरवीलसितापृथ्वीवाटुकीसाधनं तथा।
अगम्या--आकुलीमौलीन्द्राञ्जनमन्त्रसाधनम्॥ १-४९॥

कुलावतीकुलक्षिप्तारतिचीनादिसाधनम्।
शिवाक्रोडादितरुणीनायिकामन्त्रसाधनम्॥ १-५०॥

साधनं शैलवासिन्या अकस्मात् सिद्धिवर्धनम्।
मन्त्रयन्त्रस्वतन्त्रादिपूज्यमानाः परात्पराः॥ १-५१॥

एताः सर्वाः कलियुगे कालिका हरकोमलाः।
मन्त्राद्या येन सिद्ध्यन्ति सत्यं सत्यं न संशयः॥ १-५२॥

महाकाल शिवानन्द परमानन्दपारग।
भक्तानामनुरागेण विद्यारत्नं पुनः शृणु॥ १-५३॥

आदौ वैष्णवदेवस्य मन्त्राणां नित्यसाधनम्।
ततस्ते मङ्गलं मन्त्रसाधनं परमाद्भुतम्॥ १-५४॥

अकस्माद्विहिता सिद्धिर्येन सिद्ध्यति भूतले।
बालभैरवयोगेन्द्रसाधनं शिवसाधनम्॥ १-५५॥

महाकालसाधनञ्च तथा रामेश्वरस्य च।

अघोरमूर्त्ते रमणासाधनं शृणु यत्नतः॥ १-५६॥

क्रोधराजभूतराजकचक्रादिसाधनम्।

गिरीन्द्रसाधनं पश्चात् कुलनाथस्य साधनम्॥ १-५७॥

बटुकेशादिश्रीकण्ठेशादिसाधनमेव च।

मृत्युञ्जयस्य रौद्रस्य कालान्तकहरस्य च॥ १-५८॥

उन्मत्तभैरवस्यापि तथा पञ्चास्यकस्य च।

कैलासेशस्य शम्भोश्च तथा शूलिन एव च॥ १-५९॥

भार्गवेशस्य सर्वस्य महाकालस्य साधनम्।

सुरान्तकस्य पूर्णस्य तथा देवस्य शङ्कर॥ १-६०॥

हरिद्रागणनाथस्य वरदेश्वरमालिनः।

ऊर्ध्वकेशस्य धूम्रस्य जटिलस्यापि साधनम्॥ १-६१॥

आनन्दभैरवस्यापि बाणनाथस्य साधनम्।

करीन्द्रस्य शुभाङ्गस्य हिल्लोलमर्दकस्य च॥ १-६२॥

पुष्पनाथेश्वरस्यापि वृषनाथस्य साधनम्।
अष्टमूर्त्तेः कालमूर्त्तेश्चन्द्रशेखरसाधनम्॥ १-६३॥

क्रमुकस्यापि घोरस्य कुबेराराधितस्य च।
त्रिपुरान्तकमन्त्रस्य कमलाक्षस्य साधनम्॥ १-६४॥

इत्यादिसिद्धमन्त्राणां मन्त्रार्थं विविधं मुदा।
उदितं तद्विशेषेण सुविस्तार्य श्रृणुष्व तत्॥ १-६५॥

इन्द्रादिदेवता सर्वा येन सिध्यन्ति भूतले।
तत्प्रकारं महादेव सावधानोऽवधारय॥ १-६६॥

उपविद्यासाधनञ्च मन्त्राणि विविधानि च।
नानाकर्माणि धर्माणि षट्कर्मसाधनानि च॥ १-६७॥

श्रीरामसाधनं यक्षसाधनं योगसाधनम्।
सर्वविद्यासाधनञ्च राजज्वालादिसाधनम्॥ १-६८॥

मन्त्रसिद्धिप्रकारञ्च हनुमत्साधनादिकम्।
विषज्वालासाधनञ्च पाताललोकसाधनम्॥ १-६९॥

भूतलिपिप्रकारञ्च तत्तत्साधनमेव च।
नवकन्यासाधनञ्च अष्टसिद्धिप्रकारकम्॥ १-७०॥

आसनानि च अङ्गानि साधनानि बहूनि च।
कात्यायनीसाधनानि चेटीसाधनमेव च॥ १-७१॥

कृष्णमार्जारसिद्धिश्च खड्गसिद्धिस्ततः परम्।
पादुकाजङ्घसिद्धिश्च निजजिह्वादिसाधनम्॥ १-७२॥

संस्कारगुटिकासिद्धिः खेचरीसिद्धिरेव च।
भूप्रवेशप्रकारत्वं नित्यतुङ्गादिसाधनम्॥ १-७३॥

स्तम्भनं दारुणं पश्चादाकर्षणं मुनेरपि।
नानाविधानि देवेश औषधादीनि यानि च॥ १-७४॥

हरितालादिसिद्धिश्च रसपारदसाधनम्।
नानारससमुद्भूतं रसभस्मादिसाधनम्॥ १-७५॥

वृद्धस्य तरुणाकारं साधनं परमाद्भुतम्।
वैजयन्तीसाधनञ्च चरित्रं वासकस्य च॥ १-७६॥

शिवाचरित्रमश्वस्य चरित्रं वायसस्य च।
कुमारीणां प्रकारं तु वज्राणां वारणं तथा॥ १-७७॥

सम्पत्तिसाधनं देशसाधनं कामसाधनम्।
गुरुपूजाविधानञ्च गुरूसन्तोषसाधनम्॥ १-७८॥

निजदेवाराधनञ्च निजसाधनमेव च।
वारुणीपैष्टिकीगौडीकैतकीमाध्विसाधनम्॥ १-७९॥

स्वदेहगमनं स्वर्गे मर्त्ये मर्त्यैश्च दुर्लभम्।
शरीरवर्धनञ्चैव कृष्णभावस्य साधनम्॥ १-८०॥

नयनाकर्षणञ्चैव कालसर्पस्य दर्शनम्।
रणक्षोभप्रकारञ्च पञ्चेन्द्रियनिवारणम्॥ १-८१॥

योगविद्यासाधनञ्च भक्षप्रस्थनिरूपणम्।

चान्द्रायणव्रतञ्चैव शृणु तद्योगसिद्धये॥ १-८२॥

यामलाग्रेण शंसन्ति यानि सर्वाणि कानि च।
ब्रह्माण्डे यानि वस्तूनि सर्वत्र दुर्लभं शिवम्॥ १-८३॥

येऽभ्यस्यन्ति महातन्त्रं बालाद्वा मन्त्रतोपि वा।
यामलं मम वक्राम्भोरुहसुन्दरसंभवम्॥ १-८४॥

अतिगुह्यं महागुह्यं शब्दगुह्यं निराकुलम्।
नानासिद्धिसमुद्राणां गृहं योगमयं शुभम्॥ १-८५॥

शास्त्रजालस्य सारं हि नानामन्त्रमयं प्रियम्।
वाराणसीपुरपतेः सदामोदं सुखास्पदम्॥ १-८६॥

सरस्वतीदैवतं यत् कालीषु शिखरे वृतम्।
महामोक्षं द्वारमोक्षं सर्वसंकेतशोभितम्॥ १-८७॥

वाञ्छाकल्पद्रुमं तन्त्रं शिवसंस्कारसंस्कृतम्।
अप्रकाश्यं क्रियासारं सहस्रस्तुतिराजितम्॥ १-८८॥

अष्टोत्तरशतं नाम सहस्रनाममङ्गलम्।

नानाद्रव्यसाधनादिविधृताञ्जनरञ्जितम्॥ १-८९॥

कालीप्रत्यक्षकथनं कालीषोढादिसंपुटम्।

महाचमत्कारकरं स्थितिसंहारपालकम्॥ १-९०॥

अष्टादशप्रकारञ्च षोढायाः सौख्यमुक्तये।

ये जानन्ति महाकालं यामलं कलिपावनम्॥ १-९१॥

आब्रह्मस्तम्बपर्यन्तं करे तस्य न संशयः।

तत्प्रकारमहं वक्ष्ये निगमागममङ्गलम्॥ १-९२॥

यस्माद्रुद्रो भवेज्ज्ञानी नानातन्त्रार्थपारगः।

यामिनीविहितं कर्म कुलतन्त्राभिसाधनम्॥ १-९३॥

महावीरहितं यस्मात् पञ्चतत्त्वस्वरूपकम्।

लंघनं नास्ति मे नाथ अस्मिन् तन्त्रे सुगोपनम्॥ १-९४॥

ततो यामलमाख्यातं चन्द्रशेखर शङ्कर।

रुद्राक्षं साधनोत्कृष्टं शतयागफलप्रदम्॥ १-९५॥

मनःसन्तोषविपुलं यामलं परिकीर्त्तितम्।

रुरुकादिभैरवाणां ब्राह्मीदेव्याश्च साधनम्॥ १-९६॥

जाम्बूनदलताकोटिहेमदासाधनं यतः।

मनसासाधनं यत्र लङ्कालक्ष्मीप्रसाधनम्॥ १-९७॥

देवतानाञ्च कवचं नानाध्यानव्रतं महत्।

अन्तर्यागविधानानि कलिकालफलानि च॥ १-९८॥

भाति यत्नप्रभाकारं प्रायश्चित्तविमर्षणम्।

पटलं त्रिंशता व्याप्तं ये पठन्ति निरन्तरम्॥ १-९९॥

अवश्यं सिद्धिमाप्नोति यद्यदिच्छति भूतले।

कर्मणा मनसा वाचा महातन्त्रस्य साधनम्॥ १-१००॥

करोति कमलानाथकरपद्मनिषेवितम्।

ज्ञात्वा सर्वधरं तन्त्रं सम्पूर्णं लोकमण्डले॥ १-१०१॥

प्राप्नोति साधकः सिद्धिं मासादेव न संशयः।

नानाचक्रस्य माहात्म्यं नानाङ्कमण्डलावृतम्॥ १-१०२॥

सर्वज्ञसिद्धिशतकं खण्डकालीकुलालयम्।
तरुणादित्यसंकाशं वनमालाविभूषितम्॥ १-१०३॥

दैवतं परमं हंसं कालकूटाशिनं प्रभुम्।
आदौ ध्यात्वा पूजयित्वा नमस्कुर्याद् महेश्वरम्।
प्रथमारुणसङ्काशं रत्नालङ्कारभूषितम्।
वरदं वारुणीमत्तं परमहंसं नमाम्यहम्॥ १-१०४॥

भैरव उवाच

यदि न पठ्यते तन्त्रं यामलं सर्वशङ्करम्।
तदा केन प्रकारेण साधकः सिद्धिभाग्भवेत्॥ १-१०५॥

केचिच्च बुद्धिहीनाश्च मेधाहीनाश्च ये जनाः
मन्दभाग्याश्च धूर्ताश्च मूढाः सर्वापदावृताः॥ १-१०६॥

प्राप्नुवन्ति कथं सिद्धिं दया जाता कथं वद।
तेषु मूर्खेषु हीनेषु शास्त्रार्थवर्जितेषु च॥ १-१०७॥

ज्ञानं भवति केनैव निर्मलं द्वैतवर्जीतम्।

तत्प्रकारं वद स्नेहाद् लोकानां पुण्यवृद्धये॥ १-१०८॥

भैरवी उवाच

कर्मसूत्रं यश्छिनत्ति प्रत्यहं तनुसंस्थितः।

स पश्यति जगन्नाथ मम श्रीचरणाम्बुजम्॥ १-१०९॥

विश्वमावेशसंस्कारभिन्नबुद्धिक्रियान्विताः

अतो मां नहि जानन्ति नानाकार्योत्कटावृताः॥ १-११०॥

तेषां शरीरं गृह्णाति कालदूतो भयानकः

यः करोति महायोगं त्यागसन्न्यासधर्मवान्॥ १-१११॥

मन्दभाग्यः पशोर्योनिं प्राप्नोति मां विहाय सः।

मयि भावं यः करोति दुर्लभो जनवल्लभः॥ १-११२॥

भावेन लभ्यते सर्वं भावेन देवदर्शनम्।

भावेन परमं ज्ञानं तस्माद् भावावलम्बनम्॥ १-११३॥

भावञ्च सर्वशास्त्राणां गूढं सर्वेन्द्रियस्थितम्।

सर्वेषां मूलभूतञ्च देवीभावं यदा लभेत्॥ १-११४॥

तदैव सर्वसिद्धिश्च तदा ध्यानदृढो भवेत्।

अकलङ्की निराहारी निवासधृतमानसः॥ १-११५॥

नित्यस्नानाभिपूजाङ्गो भावी भावं यदा लभेत्।

क्रियादक्षो महाशिक्षानिपुणोऽपि जितेन्द्रियः॥ १-११६॥

सर्वशास्त्रनिगूढार्थवेत्ता न्यासविवजीतः।

तेषां हस्तगतं भावं वद भावं यथा तनौ॥ १-११७॥

भावात् परतरं नास्ति येनानुग्रहवान् भवेत्।

भावादनुग्रहप्राप्तिरनुग्रहान् महासुखी॥ १-११८॥

सुखात् पुण्यप्रभावः स्यात् पुण्यादच्युतदर्शनम्।

यदा कृतस्य दर्शनाम्भोजदर्शनमङ्गलम्॥ १-११९॥

योगी भूत्त्वा सूक्ष्मपदं योगिनामप्यदर्शनम्।

पश्यत्येव महाविद्यापादाम्भोरुहपावनम्॥ १-१२०॥

गुरूणां परमहंसानां वाक्यं त्रैलोक्यपावनम्।
श्रुत्वा साधकसिद्ध्यर्थं योगी योगमवाप्नुयात्॥ १-१२१॥

पञ्जरे शुकसारी च पतगाः पक्षियोनयः।
गृह्णाति साधकः स्वर्गान् मन्नामविमलं महत्॥ १-१२२॥

यावत् ज्ञानस्य सञ्चारं तावत् कालं कुलेश्वर।
साधकानाञ्च साधूनां निकटस्थो भवेन्नरः॥ १-१२३॥

विद्याभ्यासी न पतति यदि बुद्धिपरो भवेत्।
नहि चेज्जन्म व्याख्यार्थं नानाशास्त्रार्थभाषणम्॥ १-१२४॥

सुरज्ञानं बिना किञ्चिन्नहि सिद्ध्यति भूतले।
मन्त्रं श्रीकायसिद्धिश्च कथं भवति भैरव॥ १-१२५॥

सांख्यज्ञानं वेदभाषाविधिज्ञानं तथा समम्।
शक्तिं बिना यथा शाक्तं सुरज्ञानं बिना हि सः॥ १-१२६॥

अहिताचारसम्पत्तिर्दरिद्रस्य गृहे यथा।
साधकस्य गृहे शक्तिर्ज्ञानाचारविवेचना॥ १-१२७॥

जायते यदि सायुज्यपदनाशाय केवलम्।
यद्यज्ञानविशिष्टा सा स्वशक्तिः शिवकामिनी॥ १-१२८॥

तदा न कुर्याद् ग्रहणा शक्तिसाधनमेव च।
यदि कुर्यादसंस्कारात् संसर्गं साधकोत्तमः॥ १-१२९॥

असंस्कृत्यादिदोषेण सिद्धिहानिः प्रजायते।
शक्तिप्रधानं भावानां त्रयाणां साधकस्य च॥ १-१३०॥

दिव्यवीरपशूनाञ्च भावत्रयमुदाहृतम्।
पशुभावे ज्ञानसिद्धिः पश्चाचारनिरूपणम्॥ १-१३१॥

वीरभावे क्रियासिद्धिः साक्षाद्रुद्रो न संशयः।
दिव्यभावे वीरभावे विभिन्नमेकभावतः॥ १-१३२॥

अण्डः पूर्वः सर्वगतं दिव्यभावस्य लक्षणम्।
दिव्यभावे देवताया दर्शनं परिकीतीतम्॥ १-१३३॥

वीरभावे मन्त्रसिद्धिरद्वैताचारलक्षणम्।

आदौ भावं पशोः प्राप्य रात्रिकर्मविवर्जयेत्॥ १-१३४॥

दिवसे दिवसे स्नानं पूजानित्यक्रियान्वितः।

पुरश्चरणवत् कार्यं शुचिभावेन सिद्ध्यति॥ १-१३५॥

पशुभावं विना वीरः को वशी भवति ध्रुवम्।

इन्द्रियाणाञ्च दमनं दमनं शमनस्य च॥ १-१३६॥

योगशिक्षानिविष्टाङ्गो यतिर्योगपरायणः।

सर्वक्षणादभ्यसतः प्रभातावधि रात्रिषु॥ १-१३७॥

सर्वकालं च कर्तव्यो योगः सर्वसुखप्रदः।

वाञ्छाकल्पतरुं नित्यं तरुणं पातकापहम्॥ १-१३८॥

साधयेदवहितं मन्त्री पशुभावस्थितो यदि।

योगभाषाविधिज्ञानं सर्वभावेषु दुर्लभम्॥ १-१३९॥

तथापि पशुभावेन शीघ्रं सिद्ध्यति निश्चितम्।

गुरूणां श्रीपदाम्भोजे यस्य भक्तिर्दृढा भवेत्॥ १-१४०॥

स भवेत् कामनात्यागी भावमात्रोपलक्षणम्।
वीरभावो महाभावो न भावं दुष्टचेतसाम्॥ १-१४१॥

भावं मन्दगतं सूक्ष्मं रुद्रमूर्त्याः प्रसिध्यति।
भ्रष्टाचारं महागूढं त्रैलोक्यमङ्गलं शुभम्॥ १-१४२॥

पञ्चतत्त्वादिसिध्यर्थं महामोहमदोद्भवम्।
सर्वपीठकुलाचारं हठादानन्दसागरम्॥ १-१४३॥

कारुण्यवारिधिं वीरसाधने भक्तिकेवलम्।
ज्ञानीभूत्त्वा पशोर्भावे वीराचारं ततः परम्॥ १-१४४॥

वीराचाराद् भवेद्रुद्रोऽन्यथा नैव च नैव च।
भावद्वयस्थितो मन्त्री दिव्यभावं विचारयेत्॥ १-१४५॥

सदा शुचिर्दीव्यभावमाचरेत् सुसमाहितः।
देवतायाः प्रियार्थञ्च सर्वकर्मकुलेश्वर॥ १-१४६॥

यद्यत्तत् सकलं सिद्ध्यत्यस्माद् धर्मोदयं शुभम्।
देवतातुल्यभावश्च देवतायाः क्रियापरः॥ १-१४७॥

तद् विद्धि देवताभावं सुदिव्यभाक्प्रकीतीतम्।
सर्वेषां भाववर्गाणां शक्तिमूलं न संशयः॥ १-१४८॥

भक्तिं केन प्रकारेण प्राप्नोति साधकोत्तमः।
ज्ञात्त्वा देवशरीरस्य निजकार्यानुशासनात्॥ १-१४९॥

ज्ञानश्च त्रिविधं प्रोक्तमागमाचारसम्भवम्।
शब्दब्रह्ममयं तद्धि ज्ञानमार्गेण पश्यति॥ १-१५०॥

पठित्वा सर्वशास्त्राणि स्वकर्मगायनानि च।
कृशो विवेकमालम्ब्य नित्यं ज्ञानी च साधकः॥ १-१५१॥

विवेकसंभवं ज्ञानं शिवज्ञानप्रकाशकम्।
लोचनद्वयहीनञ्च बाह्यभावविवजीतम्॥ १-१५२॥

लोकानां परिनिर्मुक्तं कालाकालविलोडनम्।
नित्यज्ञानं परं ज्ञानं तं विद्धि प्राणगोचरम्॥ १-१५३॥

मानुषं सफलं जन्म सर्वशास्त्रेषु गोचरम्।

चतुरशीतिलक्षेषु शरीरेषु शरीरिणाम्॥ १-१५४॥

न मानुष्यं विनान्यत्र तत्त्वज्ञानं तु विद्यते।

कदाचिल्लभ्यते जन्म मानुष्यं पुण्यसञ्चयात्॥ १-१५५॥

सोपानीभूतमोक्षस्य मानुष्यं जन्म दुर्लभम्।

मानुषेषु च शंसन्ति सिद्धयः स्युः प्रधानिकाः॥ १-१५६॥

अणिमादिगुणोपेतास्तस्माद् देवो नरोत्तमः।

विना देहेन कस्यापि पुरुषार्थो न लभ्यते॥ १-१५७॥

तस्माच्छरीरं संरक्ष्य नित्यं ज्ञानं प्रसाधय।

मानुषं ज्ञाननिकरं ज्ञानात्मानं परं विदुः॥ १-१५८॥

मुनयो मौनशीलाश्च मुनितन्त्रादिगोचरम्।

मानुषः सर्वगामी च नित्यस्थाननिराकुलः॥ १-१५९॥

(मित्र)मन्त्रजापं योगजापं कृत्वा पापनिवारणम्।

परं मोक्षमवाप्नोति मानुषो नात्र संशयः॥ १-१६०॥

मयोक्तानि च तन्त्राणि मद्भक्ता ये पठन्ति च।

पठित्वा कुरुते कर्म कृत्वा मत्सन्निधिं व्रजेत्॥ १-१६१॥

मदुक्तानि च शास्त्राणि न ज्ञात्वा साधको यदि।

अन्यशास्त्राणि सम्बोध्य कोटिवर्षेण सिद्ध्यति॥ १-१६२॥

शुक्तौ रजतविभ्रान्तिर्यथा भवति भैरव।

तथान्यदर्शनेभ्यश्च भुक्तिं मुक्तिञ्च काङ्क्षति॥ १-१६३॥

यत्र भोगस्तत्र मोक्षो द्वयं कुत्र न सिद्ध्यति।

मम श्रीपादुकाम्भोजे सेवको मोक्षभोगगः॥ १-१६४॥

बाह्यद्रष्टा प्रगृह्णाति आकाशस्थिततेजसम्।

ब्रह्माण्डज्ञानद्रष्टा च देशाण्डस्थं प्रपश्यति॥ १-१६५॥

घटप्रत्यक्षसमये आलोको व्यञ्जको यथा।

बिना घटत्त्वयोगेन न प्रत्यक्षो यथा घटः॥ १-१६६॥

इतराद् भिद्यमानोऽपि न भेदमुपगच्छति।

पुरुषे नैव भेदोऽस्ति विना शक्तिं कथञ्चन॥ १-१६७॥

शक्तिहीनो यथा देही निर्बलो योगविवजीतः।

ज्ञानहीनस्तथात्मानं न पश्यति पदद्वयम्॥ १-१६८॥

स्वभावं नाधिगच्छन्ति संसारज्ञानमोहिताः।

अभिपश्यति सश्लोको यद्भावं परिभाव्यते॥ १-१६९॥

ईश्वरस्यापि दूतस्य यमराजस्य बन्धनम्।

निधनं चानुगच्छन्ति दृष्ट्वा च तनुजं धनम्॥ १-१७०॥

लोको मोहसुरां पीत्त्वा न वेत्ति हितमात्मनः।

सम्पदः स्वप्नमेव स्याद् यौवनं कुसुमोपमम्॥ १-१७१॥

तडिच्चपलमायुष्यं कस्याप्यज्ञानतो धृतिः।

शतं जीवति मर्त्यश्च निद्रा स्यादर्धहारिणी॥ १-१७२॥

अर्धं हरति कामिन्याः शक्तिबुद्धिप्रतापिनी।

असद्वृत्तिश्च मूढानां हन्त्यायुषमहनीशम्॥ १-१७३॥

बाल्यरोगजरादुःखैः सर्वं तदपि निष्फलम्।
स्त्रीपुत्रपितृमात्रादिसम्बन्धः केन हेतुना॥ १-१७४॥

दुःखमूलो हि संसारः स यस्यास्ति स दुःखितः।
अस्य त्यागः कृतो येन स सुखी नात्र संशयः॥ १-१७५॥

सुखदुःखपरित्यागी कर्मणा किं न लभ्यते।
लोकाचारभयार्थं हि यः करोति क्रियाविधिम्॥ १-१७६॥

ब्रह्मज्ञाताहमखिले ये जपन्ति निरादराः।
सांसारिकसुखासक्तं ब्रह्मज्ञोस्मीति वादिनम्॥ १-१७७॥

त्यजेत् तं सततं धीरश्चाण्डालमिव दूरतः।
गृहारण्यसमालोके गतव्रीडा दिगम्बराः॥ १-१७८॥

चरन्ति गर्दभाद्याश्च व्रतिनस्ते भवन्ति किम्।
तृणपर्णोदकाहाराः सततं वनवासिनः॥ १-१७९॥

हरिणादिमृगाश्चैव तापसास्ते भवन्ति किम्।

शीतवातातपसहा भक्ष्याभक्ष्यसमा अपि॥ १-१८०॥

चरन्ति शूकराद्याश्च व्रतिनस्ते भवन्ति किम्।

आकाशे पक्षिणः सर्वे भूतप्रेतादयोऽपि च॥ १-१८१॥

चरन्ति रात्रिगाः सर्वे खेचराः किं महेश्वराः।

आजन्ममरणान्तञ्च गङ्गादितटनीस्थिताः॥ १-१८२॥

मण्डूकमत्स्यप्रमुखा व्रतिनस्ते भवन्ति किम्।

एतज्ज्ञाननिविष्टाङ्गाः यदि गच्छन्ति पण्डिताः॥ १-१८३॥

तथापि कर्मदोषेण नरकस्था भवन्ति हि।

कौटिल्यालससंसर्गवर्जिता ये भवन्ति हि॥ १-१८४॥

प्राप्नुवन्ति मम स्थानं मम भक्तिपरायणाः।

ऊर्द्ध्वं व्रजन्ति भूतानि शरीरमतिवाहिकम्॥ १-१८५॥

निजदेहाभिशापेन नानारूपो भवेन्नरः।

शरीरजैः कर्मदोषैर्याति स्थावरतां नरः॥ १-१८६॥

इह दुश्चरितैः केचित् केचित् पूर्वकृतैस्तथा।
प्राप्नुवन्ति दुरात्मानो नरा रूपविपर्ययम्॥ १-१८७॥

गुरुपादविहीना ये ते नश्यन्ति ममाज्ञया।
गुरुर्मूलं हि मन्त्राणां गुरुर्मूलं परन्तपः॥ १-१८८॥

गुरोः प्रसादमात्रेण सिद्धिरेव न संशयः।
अहं गुरुरहं देवो मन्त्रार्थोऽस्मि न संशयः॥ १-१८९॥

भेदका नरकं यान्ति नानाशास्त्रार्थवर्जीताः।
सर्वासामेव विद्यानां दीक्षा मूलं यथा प्रभो॥ १-१९०॥

गुरुमूलस्वतन्त्रस्य गुरुरात्मा न संशयः।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः॥ १-१९१॥

आत्मना क्रियते कर्म भावसिद्धिस्तदा भवेत्।
हीनाङ्गी कपटी रोगी बह्वाशी शीलवर्जीतः॥ १-१९२॥

मय्युपासनमास्थाय उपविद्यां सदाभ्यसेत्।
धनं धान्यं सुतं वित्तं राज्यं ब्राह्मणभोजनम्॥ १-१९३॥

शुभार्थं सम्प्रयोक्तव्यं नान्यचिन्ता वृथाफलम्।
नित्यश्राद्धरतो मर्त्यो धर्मशीलो नरोत्तमः॥ १-१९४॥

महीपालः प्रियाचारः पीठभ्रमणतत्परः।
पीठे पीठे महाविद्यादर्शनं यदि लभ्यते॥ १-१९५॥

तदा तस्य करे सर्वाः सिद्धयोऽव्यक्तमण्डलाः।
अकस्माज्जायते सिद्धिर्महामायाप्रसादतः॥ १-१९६॥

महावीरो महाधीरो दिव्यभावस्थितोऽपि वा।
अथवा पशुभावस्थो मन्त्रपीठं विवासयेत्॥ १-१९७॥

क्रियायाः फलदं प्रोक्तं भावत्रयमनोरमम्।
तथा च युगभावेन दिव्यवीरेण भैरव॥ १-१९८॥

प्रपश्यन्ति महावीराः पशवो हीनजातयः।
न पश्यन्ति कलियुगे शास्त्राभिभूतचेतसः॥ १-१९९॥

अपि वर्षसहस्रेण शास्त्रान्तं नैव गच्छति।

तर्काद्यनेकशास्त्राणि अल्पायुर्विघ्नकोटयः॥ १-२००॥

तस्मात् सारं विजानीयात् क्षीरं हंस इवाम्भसि।

कलौ च दिव्यवीराभ्यां नित्यं तद्गतचेतसः॥ १-२०१॥

महाभक्ताः प्रपश्यन्ति महाविद्यापरं पदम्।

साधवो मौनशीलाश्च सदा साधनतत्पराः॥ १-२०२॥

दिव्यवीरस्वभावेन पश्यन्ति मत्पदाम्बुजम्।

भावद्वयं ब्राह्मणानां महासत्फलकाङ्क्षिणाम्॥ १-२०३॥

अथवा चावधूतानां भावद्वयमुदाहृतम्।

भावद्वयप्रभावेण महायोगी भवेन्नरः॥ १-२०४॥

मूर्खोऽपि वाक्पतिः श्रेष्ठो भावद्वयप्रसादतः।

ये जानन्ति महादेव मम तन्त्रार्थसाधनम्॥ १-२०५॥

भावद्वयं हि वर्णानां ते रुद्रा नात्र संशयः।

भावुको भक्तियोगेन्द्रः सर्वभावज्ञसाधनः॥ १-२०६॥

उन्मत्तजडवन्नित्यं निजतन्त्रार्थपारगः।

वृक्षो वहति पुष्पाणि गन्धं जानाति नासिका॥ १-२०७॥

पठन्ति सर्वशास्त्राणि दुर्लभा भावबोधकाः।

प्रज्ञाहीनस्य पठनमन्धस्यादर्शदर्शनम्॥ १-२०८॥

प्रज्ञावतो धर्मशास्त्रं बन्धनायोपकल्पते।

तत्त्वमीदृगिति भवेदिति शास्त्रार्थनिश्चयः॥ १-२०९॥

अहं कर्ताऽहमात्मा च सर्वव्यापी निराकुलः।

मनसेति स्वभावञ्च चिन्तयत्यपि वाक्पतिः॥ १-२१०॥

सौदामिनीतेजसो वा सहस्रवर्षकं यदा।

प्रपश्यति महाज्ञानी एकचन्द्रं सहस्रकम्॥ १-२११॥

कोटिवर्षशतेनापि यत्फलं लभते नरः।

एकक्षणमङ्घ्रिरजो ध्यात्वा तत्फलमश्नुते॥ १-२१२॥

विचरेद्यदि सर्वत्र केवलानन्दवर्धनम्।

कामरूपं महापीठं त्रिकोणाधारतैजसम्॥ १-२१३॥

जलबुद्बुद्शब्दान्तमनन्तमङ्गलात्मकम्।

स भवेन्मम दासेन्द्रो गणेशगुहवत्प्रियः॥ १-२१४॥

कंकालाख्या--साट्टहासा--विकटाक्षोपपीठकम्।

विचरेत् साधकश्रेष्ठो मत्पादाब्जं यदीच्छति॥ १-२१५॥

ज्वालामुखीमहापीठं मम प्रियमतर्कवित्।

यो भ्रमेन्मम तुष्ट्यर्थं स योगी भवति ध्रुवम्॥ १-२१६॥

भावद्वयादिनिकरं ज्वालामुख्यादिपीठकम्।

भ्रमन्ति ये साधकेन्द्रास्ते सिद्धा नात्र संशयः॥ १-२१७॥

भावात् परतरं नास्ति त्रैलोक्यसिद्धिमिच्छताम्।

भावो हि परमं ज्ञानं ब्रह्मज्ञानमनुत्तमम्॥ १-२१८॥

कोटिकन्याप्रदानेन वाराणस्यां शताटनैः।

किं कुरुक्षेत्रगमने यदि भावो न लभ्यते॥ १-२१९॥

गयायां श्राद्धदानेन नानापीठाटनेन किम्।

नानाहोमैः क्रियाभिः किं यदि भावो न लभ्यते॥ १-२२०॥

भावेन ज्ञानमुत्पन्नं ज्ञानान्मोक्षमवाप्नुयात्।

आत्मनो मनसा देव्यागुरोरीश्वरमुच्यते॥ १-२२१॥

ध्यानं संयोजनं प्रोक्तं मोक्षमात्ममनोलयम्।

गुरोः प्रसादमात्रेण शक्तितोषो महान् भवेत्॥ १-२२२॥

शक्तिसन्तोषमात्रेण मोक्षमाप्नोति साधकः।

गुरुमूलं जगत्सर्वं गुरुमूलं परन्तपः॥ १-२२३॥

गुरोः प्रसादमात्रेण मोक्षमाप्नोति सद्वशी।

न लङ्घयेद् गुरोराज्ञामुत्तरं न वदेत् तथा॥ १-२२४॥

दिवारात्रौ गुरोराज्ञां दासवत् परिपालयेत्।

उक्तानुक्तेषु कार्येषु नोपेक्षां कारयेद् बुधः॥ १-२२५॥

गच्छतः प्रयतो गच्छेद् गुरोराज्ञां न लङ्घयेत्।

न श्रृणोति गुरोर्वाक्यं श्रृणुयाद् वा पराङ्मुखः॥ १-२२६॥

अहितं वा हितं वापि रौरवं नरकं व्रजेत्।

आज्ञाभङ्गं गुरोर्दैवाद् यः करोति विबुद्धिमान्॥ १-२२७॥

प्रयाति नरकं घोरं शूकरत्वमवाप्नुयात्।

आज्ञाभङ्गं तथा निन्दां गुरोरप्रियवर्तनम्॥ १-२२८॥

गुरुद्रोहञ्च यः कुर्यात् तत्संसर्गं न कारयेत्।

गुरुद्रव्याभिलाषी च गुरुस्त्रीगमनानि च॥ १-२२९॥

पातकञ्च भवेत् तस्य प्रायश्चित्तं न कारयेत्।

गुरुं दुष्कृत्य रिपुवन्निर्हरेत् परिवादतः॥ १-२३०॥

अरण्ये निर्जने देशे स भवेद् ब्रह्मराक्षसः।

पादुकाम् आसनं वस्त्रं शयनं भूषणानि च॥ १-२३१॥

दृष्ट्वा गुरुं नमस्कृत्य आत्मभोगं न कारयेत्।

सदा च पादुकामन्त्रं जिह्वाग्रे यस्य वर्तते॥ १-२३२॥

अनायासेन धर्मार्थकाममोक्षं लभेन्नरः।

श्रीगुरोश्चरणाम्भोजं ध्यायेच्चैव सदैव तम्॥ १-२३३॥

भक्तये मुक्तये वीरं नान्यभक्तं ततोऽधिकम्।

एकग्रामे स्थितः शिष्यो गत्वा तत्सन्निधिं सदा॥ १-२३४॥

एकदेशे स्थितः शिष्यो गत्वा तत्सन्निधिं सदा।

सप्तयोजनविस्तीर्णं मासैकं प्रणमेद् गुरुम्॥ १-२३५॥

श्रीगुरोश्चरणाम्भोजं यस्यां दिशि विराजते।

तस्यां दिशि नमस्कुर्यात् कायेन मनसा धिया॥ १-२३६॥

विद्याङ्गमासनं मन्त्रं मुद्रां तन्त्रादिकं प्रभो।

सर्वं गुरुमुखाल्लब्ध्वा सफलं नान्यथा भवेत्॥ १-२३७॥

कम्बले कोमले वापि प्रासादे संस्थिते तथा।

दीर्घकाष्ठेऽथवा पृष्ठे गुरुश्चैकासनं त्यजेत्॥ १-२३८॥

श्रीगुरोः पादुकामन्त्रं मूलमन्त्रं स्वपादुकाम्।

शिष्याय नैव देवेश प्रवदेद् यस्य कस्यचित्॥ १-२३९॥

यद् यदात्महितं वस्तु तद्द्रव्यं नैव वञ्चयेत्।

गुरोर्लब्ध्वा एकवर्णं तस्य तस्यापि सुव्रत॥ १-२४०॥

भक्ष्यं वित्तानुसारेण गुरुमुद्दश्य यत्कृतम्।

स्वल्पैरपि महत्तुल्यं भुवनाद्यं दरिद्रताम्॥ १-२४१॥

सर्वस्वमपि यो दद्याद् गुरुभक्तिविवजीतः।

नरकान्तमवाप्नोति भक्तिरेव हि कारणम्॥ १-२४२॥

गुरुभक्त्या च शक्रत्वमभक्त्या शूकरो भवेत्।

गुरुभक्तः परं नास्ति भक्तिशास्त्रेषु सर्वतः॥ १-२४३॥

गुरुपूजां विना नाथ कोटिपुण्यं वृथा भवेत्॥ १-२४४॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सर्वविद्यानुष्ठाने

सिद्धिमन्त्रप्रकरणे भैरवीभैरवसंवादे प्रथमः पटलः॥ १॥

अथ द्वितीयः पटलः

अथातः सम्प्रवक्ष्यामि सर्वदर्शनविद्यया।

सर्वज्ञ परमानन्दो दयाबीज भयङ्कर॥ २-१॥

श्रृणुष्वैकमनाः शम्भो कुलाचारविधिं श्रृणु।

पशूनां व्रतभङ्गादौ विधिं प्रथमतः प्रभो॥ २-२॥

व्रतभङ्गे नित्यभङ्गे नित्यपूजादिकर्मणि।

सहस्रं प्रजपेन्मन्त्री व्रतदोषोपशान्तये॥ २-३॥

नित्यश्राद्धं तथा सन्ध्यावन्दनं पितृतर्पणम्।

देवतादर्शनं पीठदर्शनं तीर्थदर्शनम्॥ २-४॥

गुरोराज्ञापालनञ्च देवतानित्यपूजनम्।

पशुभावस्थितो मर्त्यो महासिद्धिं लभेद् ध्रुवम्॥ २-५॥

पशूनां प्रथमो भावो वीरस्य वीरभावनम्।

दिव्यानां दिव्यभावस्तु तेषां भावास्त्रयः स्मृताः॥ २-६॥

स्वकुलाचारहीनो यः साधकः स्थिरमानसः।

निष्फलार्थी भवेत् क्षिप्रं कुलाचारप्रभावतः॥ २-७॥

भैरव उवाच

केनोपायेन भगवतीचरणाम्भोजदर्शनम्।
प्राप्नोति पद्मवदने पशुभावस्थितो नरः॥ २-८॥

तत्प्रकारं सुविस्तार्य कथ्यतां कुलकामिनि।
यदि भक्तिर्दृढा मेऽस्ति यदि स्नेहोऽस्ति मां प्रति॥ २-९॥

महाभैरवी उवाच

प्रभाते च समुत्थाय अरुणोदयकालतः।
निशाष्टदण्डपर्यन्तं पशूनां भाव ईरितः॥ २-१०॥

प्रातः शय्यादिकं कृत्वा पुनः शय्यास्थितः पशुः।
गुरुं सञ्चिन्तयेच्छीर्षाम्भोजे साहस्रके दले॥ २-११॥

तरुणादित्यसङ्काशं तेजोबिम्बं महागुरुम्।
अनन्तानन्तमहिमासागरं शशिशेखरम्॥ २-१२॥

महाशुभ्रं भासुराङ्गं द्विनेत्रं द्विभुजं विभुम्।
आत्मोपलब्धिवीषमं तेजसा शुक्लवाससम्॥ २-१३॥

आज्ञाचक्रोद्र्ध्वनिकरं कारणं जगतां मुखम्।

धर्मार्थकाममोक्षाङ्गं वराभयकरं विभुम्॥ २-१४॥

प्रफुल्लकमलारूढं सर्वज्ञं जगदीश्वरम्।

अन्तःप्रकाशचपलं वनमालाविभूषितम्॥ २-१५॥

रत्नालङ्कारभूषाढ्यं देवदेवं सदा भजेत्।

अन्तर्यागक्रमेणैव पद्मपुष्पैः समर्चयेत्॥ २-१६॥

एकान्तभक्त्या प्रणमेदायुरारोग्यवृद्धये।

अथ मध्ये जपेन्मन्त्रमाद्यन्तप्रणवेन च॥ २-१७॥

मध्ये वाग्भवमायोज्य गुरुनाम ततः परम्।

आनन्दनाथशब्दान्ते गुरुं ङेऽन्तं समुद्धरेत्॥ २-१८॥

नमः शब्दं ततो ब्रूयात् प्रणवं सर्वसिद्धिदम्।

महागुरोर्मनुं जप्त्वा सर्वसिद्धीश्वरो भवेत्॥ २-१९॥

वाक्सिद्धिर्वदनाम्भोजे गुरुमन्त्रप्रभावतः।

शतमष्टोत्तरं नित्यं सहस्रं वा तथाष्टकम्॥ २-२०॥

प्रजप्यार्पणमाकृत्य प्राणायामत्रयञ्चरेत्।
वाग्भवेन ततः कुर्यात् प्राणायामविधिं मुदा॥ २-२१॥

अखण्डमण्डलाकारं व्याप्तं येन चराचरम्।
तत्पदं दर्शीतं येन तस्मै श्रीगुरवे नमः॥ २-२२॥

अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः॥ २-२३॥

देवतायाः दर्शनस्य कारणं करुणानिधिम्।
सर्वसिद्धिप्रदातारं श्रीगुरुं प्रणमाम्यहम्॥ २-२४॥

वराभयकरं नित्यं श्वेतपद्मनिवासिनम्।
महाभयनिहन्तारं गुरुदेवं नमाम्यहम्॥ २-२५॥

महाज्ञानाच्छापिताङ्गं नराकारं वरप्रदम्।
चतुर्वर्गप्रदातारं स्थूलसूक्ष्मद्वयान्वितम्॥ २-२६॥

सदानन्दमयं देवं नित्यानन्दं निरञ्जनम्।
शुद्धसत्त्वमयं सर्वं नित्यकालं कुलेश्वरम्॥ २-२७॥

ब्रह्मरन्ध्रे महापद्मे तेजोबिम्बे निराकुले।
योगिभिर्ध्यानगम्ये च चक्रे शुक्ले विराजिते॥ २-२८॥

सहस्रदलसङ्काशे कर्णीकामध्यमध्यके।
महाशुक्लभासुरार्ककोटिकोटिमहौजसम्॥ २-२९॥

सर्वपीठस्थममलं परं हंसं परात्परम्।
वेदोद्धारकरं नित्यं काम्यकर्मफलप्रदम्॥ २-३०॥

सदा मनःशक्तिमायालयस्थानं पदद्वयम्।
शरज्ज्योत्स्नाजालमालाभिरिन्दुकोटिवन्मुखम्॥ २-३१॥

वाञ्छातिरिक्तदातारं सर्वसिद्धीश्वरं गुरुम्।
भजामि तन्मयो भूत्त्वा तं हंसमण्डलोपरि॥ २-३२॥

आत्मानं च निराकारं साकारं ब्रह्मरूपिणम्।
महाविद्यामहामन्त्रदातारं परमेश्वरम्॥ २-३३॥

सर्वसिद्धिप्रदातारं गुरुदेवं नमाम्यहम्।

कायेन मनसा वाचा ये नमन्ति निरन्तरम्॥ २-३४॥

अवश्यं श्रीगुरोः पादाम्भोरुहे ते वसन्ति हि।

प्रभाते कोटिपुण्यञ्च प्राप्नोति साधकोत्तमः॥ २-३५॥

मध्याह्ने दशलक्षञ्च सायाह्ने कोटिपुण्यदम्।

प्रातःकाले पठेत् स्तोत्रं ध्यानं वा सुसमाहितः॥ २-३६॥

तदा सिद्धिमवाप्नोति नात्र कार्या विचारणा॥ २-३७॥

शिरसि सितपङ्कजे तरुणकोटिचन्द्रप्रभ।

वराभयकराम्बुजं सकलदेवतारूपिणम्।

भजामि वरदं गुरुं किरणचारुशोभाकुल।

प्रकाशितपदद्वयाम्बुजमलक्तकोटिप्रभम्॥ २-३८॥

जगद्भयनिवारणं भुवनभोगमोक्षप्रदम्।

गुरोः पादयुगाम्बुजं जयति यत्र योगे जयम्।

भजामि परमं गुरुं नयनपद्ममध्यस्थित।

भवाब्धिभयनाशनं शमनरोगकायक्षयम्॥ २-३९॥

प्रकाशितसुपङ्कजे मृदुलषोडशाख्ये प्रभु।
परापरगुरुं भजे सकलबाह्यभोगप्रदम्।
विशालनयनाम्बुजद्वयतडित्प्रभामण्डल।
कडारमणिपाटलेन्दुबिन्दुबिन्दुकम्॥ २-४०॥

चलाचलकलेवरं प्रचपलदले द्वादशे।
महौजसमुमापतेर्वीगतदक्षभागे हृदि।
प्रभाकरशतोज्ज्वलं सुविमलेन्दुकोट्यानन।
भजामि परमेष्ठिनं गुरुमतीव वारोज्ज्वलम्॥ २-४१॥

गुर्वाद्यञ्च शुभं मदननिदहनं हेममञ्जरीसार।
नानाशब्दाद्भुताह्लादितपरिजनाच्चारुचक्रत्रिभङ्गम्।
नित्यं ध्यायेत् प्रभाते अरुणशतघटाशोभनं योगगम्य।
नाभौ पद्मेऽतिकान्ते दशदलमणिभे भाव्यते योगिभिर्यत्॥ २-४२॥

या माता मयदानवादिस्वभुजा निर्वाणसीमापुरे।
स्वाधिष्ठाननिकेतने रसदले वैकुण्ठमूले मया।
जन्मोद्धारविकारसुप्रहरिणी वेदप्रभा भाव्यते।

कन्दर्पापीतशान्तियोनिजननी विष्णुप्रिया शाङ्करी॥ २-४३॥

या भाषाननकुण्डली कुलपथाच्छामाभशोभाकरी।
मूले पद्मचतुर्दले कुलवती निःश्वासदेशाश्रिता।
साक्षात्काङ्क्षितकल्पवृक्षलतिका सूद्भाषयन्ती प्रिया।
नित्या योगिभयापहा विषहरा गुर्वम्बिका भाव्यते॥ २-४४॥

ऊद्र्ध्वाम्भोरुहनिःसृतामृतघटी मोदोद्वलाप्लाविता।
गुर्वास्या परिपातु सूक्ष्मपथगा तेजोमयी भास्वती।
सूक्ष्मा साधनगोचरामृतमयी मूलादिशीर्षाम्बुजे।
पूर्णा चेतसि भाव्यते भुवि कदा माता सदोद्ध्वामगा॥ २-४५॥

स्थितिपालनयोगेन ध्यानेन पूजनेन वा।
यः पठेत् प्रत्यहं व्याप्य स देवो न तु मानुषः॥ २-४६॥

कल्याणं धनधान्यं च कीर्तीमायुर्यशःश्रियम्।
सायाह्ने च प्रभाते च पठेद्यदि सुबुद्धिमान्॥ २-४७॥

स भवेत् साधकश्रेष्ठः कल्पद्रुमकलेवरः।
स्तवस्यास्य प्रसादेन वागीशत्वमवाप्नुयात्॥ २-४८॥

पशुभावस्थिता ये तु तेऽपि सिद्धाः न संशयः।

आदौ साधकदेवश्च सदाचारमतिः सदा॥ २-४९॥

पशुभावस्ततो वीरः सायाह्ने दिव्यभाववान्।

एतेषां भाववर्गाणां गुरुर्वेदान्तपारगः॥ २-५०॥

शान्तो दान्तः कुलीनश्च विनीतः शुद्धवेषवान्।

शुद्धाचारः सुप्रतिष्ठः शुचिर्दक्षः सुबुद्धिमान्॥ २-५१॥

आश्रमी ध्याननिष्ठश्च मन्त्रतन्त्रविशारदः।

निग्रहानुग्रहे शक्तो वशी मन्त्रार्थजापकः॥ २-५२॥

निरोगी निरहङ्कारो विकाररहितो महान्।

पण्डितो वाक्पतिः श्रीमान् सदा यज्ञविधानकृत्॥ २-५३॥

पुरश्चरणकृत् सिद्धो हिताहितविवजीतः।

सर्वलक्षणसंयुक्तो महाजनगणादृतः॥ २-५४॥

प्राणायामादिसिद्धान्तो ज्ञानी मौनी विरागवान्।

तपस्वी सत्यवादी च सदा ध्यानपरायणः॥ २-५५॥

आगमार्थविशिष्टज्ञो निजधर्मपरायणः।

अव्यक्तलिङ्गचिह्नस्थो भावको भद्रदानवान्॥ २-५६॥

लक्ष्मीवान् धृतिमान्नाथो गुरुरित्यभिधीयते।

शिष्यस्तु तादृशो भूत्वा सद्गुरुं पर्युपाश्रयेत्॥ २-५७॥

वर्जयेच्च परानन्दरहितं रूपवर्जितम्।

कुष्ठिनं क्रूरकर्माणं निन्दितं रोगिणं गुरुम्॥ २-५८॥

अष्टप्रकारकुष्ठेन गलत्कुष्ठिनमेव च।

श्वित्रिणं जनहिंसार्थं सदार्थग्राहिणं तथा॥ २-५९॥

स्वर्णविक्रयिणं चौरं बुद्धिहीनं सुखर्वकम्।

श्यावदन्तं कुलाचाररहितं शान्तिवर्जितम्॥ २-६०॥

सकलङ्कं नेत्ररोगैः पीडितं परदारगम्।

असंस्कारं प्रवक्तारं स्त्रीजितं चाधिकाङ्क्षकम्॥ २-६१॥

कपटात्मानकं हिंसाविशिष्टं बहुजल्पकम्।

बह्वाशिनं हि कृपणं मिथ्यावादिनमेव च॥ २-६२॥

अशान्तं भावहीनं च पञ्चाचारविवर्जीतम्।

दोषजालैः पूरिताङ्गं पूजयेन्न गुरुं बिना॥ २-६३॥

गुरौ मानुषबुद्धिं तु मन्त्रेषु लिपिभावनम्।

प्रतिमासु शिलारूपं विभाव्य नरकं व्रजेत्॥ २-६४॥

जन्महेतू हि पितरौ पूजनीयौ प्रयत्नतः।

गुरुर्वीशेषतः पूज्यो धर्माधर्मप्रदर्शकः॥ २-६५॥

गुरुः पिता गुरुर्माता गुरुर्देवो गुरुर्गतिः।

शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन॥ २-६६॥

गुरोर्हीतं प्रकर्तव्यं वाङ्मनःकायकर्मभिः।

अहिताचरणाद् देव विष्ठायां जायते कृमिः॥ २-६७॥

मन्त्रत्यागाद् भवेन्मृत्युर्गुरुत्यागाद् दरिद्रता।

गुरुमन्त्रपरित्यागाद् रौरवं नरकं व्रजेत्॥ २-६८॥

गुरौ सन्निहिते यस्तु पूजयेदन्यदेवताम्।
प्रयाति नरकं घोरं सा पूजा विफला भवेत्॥ २-६९॥

गुरुवद् गुरुपुत्रेषु गुरुवत् तत्सुतादिषु।
अविद्यो वा सविद्यो वा गुरुरेव तु दैवतम्॥ २-७०॥

अमार्गस्थोऽपि मार्गस्थो गुरुरेव तु दैवतम्।
उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदो गुरुः॥ २-७१॥

तस्मान्मन्येत सततं पितुरप्यधिकं गुरुम्।
गुरुदेवाधीनश्चास्मि शास्त्रे मन्त्रे कुलाकुले॥ २-७२॥

नाधिकारी भवेन्नाथ श्रीगुरोः पदभावकः।
गुरुर्माता पिता स्वामी बान्धवः सुहृत् शिवः॥ २-७३॥

इत्याधाय मनो नित्यं भजेत् सर्वात्मना गुरुम्।
एकमेव परं ब्रह्म स्थूलशुक्लमणिप्रभम्॥ २-७४॥

सर्वकर्मनियन्तारं गुरुमात्मानमाश्रयेत्।

गुरुश्च सर्वभावानां भावमेकं न संशयः॥ २-७५॥

निःसन्दिग्धं गुरोर्वाक्यं संशयात्मा विनश्यति
निःसंशयी गुरुपदे सर्वत्यागी पदं व्रजेत्॥ २-७६॥

खेचरत्वमवाप्नोति मासादेव न संशयः।
सद्गुरुमाश्रितं शिष्यं वर्षमेकं प्रतीक्षयेत्॥ २-७७॥

सगुणं निर्गुणं वापि ज्ञात्वा मन्त्रं प्रदापयेत्।
शिष्यस्य लक्षणं सर्वं शुभाशुभविवेचनम्॥ २-७८॥

अन्यथा विप्रदोषेण सिद्धिपूजाफलं दहेत्।
कामुकं कुटिलं लोकनिन्दितं सत्यवजीतम्॥ २-७९॥

अविनीतमसमर्थं प्रज्ञाहीनं रिपुप्रियम्।
सदापापक्रियायुक्तं विद्याशून्यं जडात्मकम्॥ २-८०॥

कलिदोषसमूहाङ्गं वेदक्रियाविवजीतम्।
आश्रमाचारहीनं चाशुद्धान्तःकरणोद्यतम्॥ २-८१॥

सदा श्रद्धाविरहितमधैर्यं क्रोधिनं भ्रमम्।
असच्चरित्रं विगुणं परदारातुरं सदा॥ २-८२॥

असद्बुद्धिसमूहोत्थमभक्तं द्वैतचेतसम्।
नानानिन्दावृताङ्गं च तं शिष्यं वर्जयेद् गुरुः॥ २-८३॥

यदि न त्यज्यते वीर धनादिदानहेतुना।
नारकी शिष्यवत् पापी तद्विशिष्टमवाप्नुयात्॥ २-८४॥

क्षणादसिद्धः स भवेत् शिष्यासादितपातकैः।
अकस्मान्नरकं प्राप्य कार्यनाशाय केवलम्॥ २-८५॥

विचार्य यत्नात् विधिवत् शिष्यसंग्रहमाचरेत्।
अन्यथा शिष्यदोषेण नरकस्थो भवेद् गुरुः॥ २-८६॥

न पत्नीं दीक्षयेद् भर्ता न पिता दीक्षयेत् सुताम्।
न पुत्रं च तथा भ्राता भ्रातरं नैव दीक्षयेत्॥ २-८७॥

सिद्धमन्त्रो यदि पतिस्तदा पत्नीं स दीक्षयेत्।
शक्तित्त्वेन भैरवस्तु न च सा पुत्रिका भवेत्।

मन्त्राणां देवता ज्ञेया देवता गुरुरूपिणी॥ २-८८॥

तेषां भेदो न कर्तव्यो यदीच्छेच्छुभमात्मनः।
एकग्रामे स्थितः शिष्यस्त्रिसन्ध्यं प्रणमेद् गुरुम्॥ २-८९॥

क्रोशमात्रस्थितो भक्त्या गुरुं प्रतिदिनं नमेत्।
अर्धयोजनतः शिष्यः प्रणमेत् पञ्चपर्वसु॥ २-९०॥

एकयोजनमारभ्य योजनद्वादशावधिः।
दूरदेशस्थितः शिष्यो भक्त्या तत्सन्निधिं गतः॥ २-९१॥

तन्त्रयोजनसंख्योक्तमासेन प्रणमेद् गुरुम्।
वर्षैकेण भवेद् योग्यो विप्रो हि गुरुभावतः॥ २-९२॥

वर्षद्वयेन राजन्यो वैश्यस्तु वत्सरैस्त्रिभिः।
चतुर्भिर्वत्सरैः शूद्रः कथिता शिष्ययोग्यता॥ २-९३॥

यदि भाग्यवशेनैव सिद्धमन्त्रं लभेत् प्रभो।
महाविद्या त्रिशक्त्याश्च गृह्णीयात् तत्कुलाद्भवम्॥ २-९४॥

गुरोर्विचारं सर्वत्र तातमातामहं विना।

प्रमादाच्च तथाज्ञानान् एभ्यो मन्त्रं समाचरन्॥ २-९५॥

प्रायश्चित्तं ततः कृत्वा पुनर्दीक्षां समाचरेत्।

सावित्रीमन्त्रजापञ्च लक्ष्यं जाप्यं जगत्पतेः॥ २-९६॥

विष्णोर्वा प्रणवं लक्ष्यं प्रायश्चित्तमिति स्मृतम्।

अशक्तश्चेन्महादेव चायुतं प्रजपेन्मनुम्॥ २-९७॥

दशसाहस्रजाप्येन सर्वकल्मषनाशिनी।

गायत्रीच्छन्दसां माता पापराशितुलानला॥ २-९८॥

मम मूर्त्तीप्रकाशा च पशुभावविवर्जीता।

फलोद्भवप्रकरणे ब्रह्मणापद्यते निशि॥ २-९९॥

यदि भाग्यवशाद् देव सिद्धमन्त्रं गुरुं तथा।

तदैव तान्तु दीक्षेत अष्टैश्वर्याय केवलम्॥ २-१००॥

निर्बीजञ्च पितुर्मन्त्रं शैवे शाक्ते न दुष्यति।

ज्येष्ठपुत्राय दातव्यं कुलीनैः कुलपण्डितैः॥ २-१०१॥

कुलयुक्ताय दान्ताय महामन्त्रं कुलेश्वरम्।
तदैव मुक्तिमाप्नोति सत्यं सत्यं न संशयः॥ २-१०२॥

कनिष्ठञ्च रिपुं चापि सोदरं वैरिपक्षगम्।
मातामहञ्च पितरं यतिञ्च वनवासिनम्॥ २-१०३॥

अनाश्रमं कुसंसर्गं स्वकुलत्यागिनं तथा।
वर्जयित्वा च शिष्यांस्तान् दीक्षाविधिमुपाचरेत्॥ २-१०४॥

अन्यथा तद्विरोधेन कामनाभोगनाशनम्।
सिद्धमन्त्रञ्च गृह्णीयाद् दुष्कुलादपि भैरव॥ २-१०५॥

सद्गुरोर्भावनेच्छन्नरूपे रूपे धरे शुभे।
तत्र दीक्षां समाकुर्वन् अष्टैश्वर्यजयं लभेत्॥ २-१०६॥

स्वप्ने तु नियमो नास्ति दीक्षासु गुरुशिष्ययोः।
स्वप्नलब्धे स्त्रिया दत्ते संस्कारेणैव शुध्यति॥ २-१०७॥

साध्वी चैव सदाचारा गुरुभक्ता जितेन्द्रिया।

सर्वमन्त्रार्थ तत्त्वज्ञा सुशीला पूजने रता॥ २-१०८॥

सर्वलक्षणसम्पन्ना जापिका पद्मलोचना।
रत्नालङ्कारसंयुक्ता वर्णाभूवनभूषिता॥ २-१०९॥

शान्ता कुलीना कुलजा चन्द्रास्या सर्ववृद्धिगा।
अनन्तगुणसम्पन्ना रुद्रत्वदायिनी प्रिया॥ २-११०॥

गुरुरूपा मुक्तिदात्री शिवज्ञाननिरूपिणी।
गुरुयोग्या भवेत् सा हि विधवा परिवर्जीता॥ २-१११॥

स्त्रिया दीक्षा शुभा प्रोक्ता मन्त्रश्चाष्टगुणा स्मृता।
पुत्रिणी विधवा ग्राह्या केवला ऋणकारिणी॥ २-११२॥

सिद्धमन्त्रो यदि भवेद् गृह्णीयाद् विधवामुखात्।
केवलं सुफलं तत्र मातुरष्टगुणं ध्रुवम्॥ २-११३॥

सधवा स्वप्रकृत्या च ददाति यदि तन्मनुम्।
ततोऽष्टगुणमाप्नोति यदि सा पुत्रिणी सती॥ २-११४॥

यदि माता स्वकं मन्त्रं ददाति स्वसुताय च।

तदाष्टसिद्धिमाप्नोति भक्तिमार्गे न संशयः॥ २-११५॥

तदैव दुर्लभं देव यदि मात्रा प्रदीयते।

आदौ भक्तिं ततो मुक्तिं सम्प्राप्य कालरूपधृक्॥ २-११६॥

सहस्रकोटिविद्यार्थं जानाति नात्र संशयः।

स्वप्ने तु माता यदि वा ददाति शुद्धमन्त्रकम्॥ २-११७॥

पुनर्दीक्षां सोऽपि कृत्वा दानवत्त्वमवाप्नुयात्।

यदि भाग्यवशेनैव जननी दानवतीनी॥ २-११८॥

तदा सिद्धिमवाप्नोति तत्र मन्त्रं विचारयेत्।

स्वीयमन्त्रोपदेशेन न कुर्याद् गुरुचिन्तनम्॥ २-११९॥

तथा श्रीललिता काली महाविद्या महामनोः

सर्वसिद्धियुतो भूत्वा वत्सरात् तां प्रपश्यति॥ २-१२०॥

कालीकल्पलता देवी महाविद्यादिसाधने।

गुरुचिन्ता न कर्तव्या ये जानन्ति गुरोर्वचः॥ २-१२१॥

यदि मन्त्रं विचार्याशु गृह्णाति साधकोत्तमः।

अनन्तकोटिपुण्यस्य द्विगुणं भवति ध्रुवम्॥ २-१२२॥

विचार्य चक्रसारञ्च मन्त्रं गृह्णाति यो नरः।

वैकुण्ठनगरे वासस्तेषां जन्मशतैरपि॥ २-१२३॥

इति श्रुत्वा महादेवो महादेव्याः सरस्वतीम्।

उवाच पुनरानन्दपुलकोल्लासविग्रहः॥ २-१२४॥

ज्ञातुं चक्रं षोडशञ्च चक्रहस्तवरप्रदम्।

अत्यद्भुतफलोपेतं धर्मार्थकाममोक्षदम्॥ २-१२५॥

श्री भैरव उवाच

कथयस्व महादेवि कुलसद्भावप्राप्तये।

यदि मे सुकृपादृष्टिः वर्तते स्नेहसागरे॥ २-१२६॥

त्वत्प्रसादाद् भैरवोऽहं कालोऽहं जगदीश्वरः।

भुक्तिमुक्तिप्रदाता च योगयोग्यो दिगम्बरः॥ २-१२७॥

इदानीं सर्वविद्यानां दीक्षाद्यं चक्रमण्डलम्।
अकालकुलहीनञ्चाकडमञ्च कुलाकुलम्॥ २-१२८॥

श्रीभैरवी उवाच

ताराचक्रं राशिचक्रं कूर्मचक्रं तथापरम्।
शिवचक्रं विष्णुचक्रं ब्रह्मचक्रं विलक्षणम्॥ २-१२९॥

देवचक्रं ऋणिधनि उल्काचक्रं ततः परम्।
वामाचक्रं चतुश्चक्रं सूक्ष्मचक्रं ततो वदेत्॥ २-१३०॥

तथा कथहचक्रञ्च कथितं षोडशं प्रभो।
एतदुत्तीर्णमन्त्रञ्च यं गृह्णन्ति नरोत्तमाः॥ २-१३१॥

तेषामसाध्यं जगति न किमपि वर्तते ध्रुवम्।
किमन्यत् कथयामीह देवतादर्शनं लभेत्॥ २-१३२॥

सर्वत्रगामी स भवेत् चक्रराजप्रसादतः।
सर्वचक्रविचारञ्च न जानाति द्विजोत्तमः॥ २-१३३॥

यज्जानाति तद्विचार्यं देवताप्रीतिकारकम्।

ताराशुद्धिं वैष्णवानां कोष्ठशुद्धिं शिवस्य च॥ २-१३४॥

राशिशुद्धिं त्रैपुरस्य गोपालेऽकडमः स्मृतः।

अकडमो वामने च गणेशे हरचक्रतः॥ २-१३५॥

कोष्ठचक्रं वराहस्य महालक्ष्म्याः कुलाकुलम्।

नामादिचक्रे सर्वेषां भूतचक्रे तथैव च॥ २-१३६॥

त्रैपुरं तारचक्रे च शुद्धं मन्त्रं भजेद् बुधः।

वैष्णवं राशिसंशुद्धं शैवञ्चाकडमं स्मृतम्॥ २-१३७॥

कालिकायाश्च तारायाः हरचक्रं शुभं भवेत्।

चण्डिकाया भवेत् कोष्ठे गोपाले ऋक्षचक्रकम्॥ २-१३८॥

हरचक्रे सर्वमन्त्रान् ऋणाधिक्येन चाश्रयेत्।

ऋणाधिक्ये शुभं विद्याद् धनाधिक्ये च नो विधिः॥ २-१३९॥

दोषान् संशोध्य गृह्णीयान्मध्यदेशे तु साधकः।

पितृमातृकृतं नाम त्यक्त्वा शर्मादिदेवकान्॥ २-१४०॥

श्रीवर्णञ्च ततो विद्याचक्रेषु योजयेत् क्रमात्।
क्रमेण शृणु तत्सर्वं शुभाशुभफलप्रदम्॥ २-१४१॥

जापकानां भावुकानां शुद्धं सिध्यति तत्क्षणात्।
मन्त्रमात्रं प्रसिध्येत भक्तानामिति निश्चयः॥ २-१४२॥

कुलीनकुलजातानां ध्यानमार्गार्थगामिनाम्।
महाविद्या महाज्ञानं संशुद्धमपि सिध्यति॥ २-१४३॥

सिद्धमन्त्रप्रकरणे यदुक्तञ्च महेश्वर।
अष्टसिद्धिकरे तस्य सायुज्यपदमाप्नुयात्॥ २-१४४॥

चक्रं षोडशसारञ्च सर्वेषां मन्त्रसिद्धये॥ २-१४५॥

विचार्य सर्वमन्त्रञ्च यन्मया गदितं हितम्।
आदौ बालाभैरवीणामकडमान्मतं मया॥ २-१४६॥

कुमारीललितादेव्याः कुरुकुल्लादिसाधने।

श्रीचक्रं फलदं प्रोक्तं सर्वचक्रफलप्रदम्॥ २-१४७॥

योगिन्यादिसाधने च ताराचक्रं महत्फलम्।

उन्मत्तभैरवीविद्याद्यादिसाधननिर्मले॥ २-१४८॥

राशिचक्रं कोटिफलं नानारत्नप्रदं शुभम्।

प्रत्यङ्गिरासाधने च उल्काविद्यादिसाधने॥ २-१४९॥

शिवचक्रं महापुण्यं सर्वचक्रफलप्रदम्।

कालिकाचचीकामन्त्रे विमलाद्यादिसाधने॥ २-१५०॥

सम्पत्प्रदाभैरवीणां मन्त्रग्रहणकर्मणि।

विष्णुचक्रे कोटिशतं पुण्यं प्राप्नोति मानवः॥ २-१५१॥

छिन्नादिश्रीविद्यायाः कृत्यादेव्याश्च साधने।

नक्षत्रविद्याकामाख्या ब्रह्माण्यादि सुसाधने॥ २-१५२॥

ब्रह्मचक्रं महापुण्यं सर्वविद्याफलं लभेत्।

कोटिजाप्येन यत्पुण्यं ग्रहणात् तत्फलं लभेत्॥ २-१५३॥

वज्रज्वालामहाविद्यासाधने मन्त्रजापने।

गुह्यकालीसाधने च कुब्जिकामन्त्रसाधने॥ २-१५४॥

देवचक्रं शुभं प्रोक्तं वाक्यसिद्धिप्रदायकम्।

कामेश्वरीट्टहासामन्त्रसाधनकर्मणि॥ २-१५५॥

राकिणीमन्दिरादेवी मन्दिरामन्त्रसाधने।

ऋणिधनिमहाचक्रं विचार्य सर्वसिद्धिदम्॥ २-१५६॥

श्रीविद्याभुवनेशानीभैरवीसाधने तथा।

पृथ्वीकुलावतीवीणासाधने वामनीमनोः॥ २-१५७॥

उल्काचक्रं महापुण्यं राजत्वफलदं शुभम्।

शिवादिनायिकामन्त्रे बालाचक्रं सुखप्रदम्॥ २-१५८॥

फेत्कारीमन्त्रजाप्ये च उड्डीयानेश्वरी मनोः।

चतुश्चक्रं शतफलं महामन्त्रफलप्रदम्॥ २-१५९॥

द्राविणीदीर्घजङ्घादि ज्वालामुख्यादिसाधने।

नारसिंहीसाधने च सूक्ष्मचक्रं फलोद्भवम्॥ २-१६०॥

हरिणी मोहिनी कात्यायनीसाधनकर्मणि।

वैष्णवे च तथा शैवे देवीमन्त्रे च भैरव॥ २-१६१॥

अकथहं महाचक्रं विचार्य यत्नपूर्वकम्।

यो गृह्णाति महामन्त्रं स शिवो नात्र संशयः॥ २-१६२॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महायन्त्रोद्दीपने सर्वचक्रानुष्ठाने

महागुरुप्रकरणे भावनिर्णये भैरवीभैरवसंवादे द्वितीयः

पटलः॥ २॥

अथ तृतीयः पटलः

भैरवी उवाच

अथ चक्रं प्रवक्ष्यामि कालाकालविचारकम्।

यदाश्रितो महावीरो दीव्यो वा पशुभाववान्॥ ३-१॥

चक्रराजं प्रविचार्य सिद्धमन्त्रं न चालयेत्।

प्रबलस्य प्रचण्डस्य प्रासादस्य महामनोः॥ ३-२॥

शक्तिकूटादिमन्त्राणां सिद्धादीन्नैव शोधयेत्।
वराहार्कनृसिंहस्य तथा पञ्चाक्षरस्य च॥ ३-३॥

महामन्त्रस्य कालस्य चन्द्रचूडस्य सन्मनोः।
नपुंसकस्य मन्त्रस्य सिद्धादीन्नैव शोधयेत्॥ ३-४॥

विंशत्यर्णाधिका मन्त्रा मालामन्त्राः प्रकीर्तिताः।
सूर्यमन्त्रस्य योगस्य कृत्यामन्त्रस्य शङ्कर॥ ३-५॥

शंभुबीजस्य देवस्य सिद्धादीन्नैव शोधयेत्।
चक्रेश्वरस्य चन्द्रस्य वरुणस्य महामनोः॥ ३-६॥

कालीतारादिमन्त्रस्य सिद्धादीन्नैव शोधयेत्।
तथापि शोधयेन्मन्त्रं प्रशंसापरमेव तत्॥ ३-७॥

यत्र प्रशंसापरमं तत्कार्यं दैवतं स्मृतम्।
प्रशंसा यत्र नास्त्येव तत्कार्यं नापि कारयेत्॥ ३-८॥

अत्यन्तफलदं मन्त्रं गृह्णीयात् कुलरक्षणात्।

धनिमन्त्रं न गृह्णीयाद् अकूलञ्च तथैव च॥ ३-९॥

गृहीत्वा निधनं याति कोटिजाप्येन सिध्यति।
मननं विश्वविज्ञानं त्राणं संसारबन्धनात्॥ ३-१०॥

यतः करोति संसिद्धौ मन्त्र इत्यभिधीयते।
प्रणवाद्यं न दातव्यं मन्त्रं शूद्राय सर्वथा॥ ३-११॥

आत्ममन्त्रं गुरोर्मन्त्रं मन्त्रं चानपसंज्ञकम्।
पितुर्मन्त्रं तथा मातुर्मन्त्रसिद्धिप्रदं शुभम्॥ ३-१२॥

शूद्रो निरयमाप्नोति ब्राह्मणो यात्यधोगतिम्।
अदीक्षिता ये कुर्वन्ति जपपूजादिकाः क्रियाः॥ ३-१३॥

न भवन्ति श्रिये तेषां शिलायामुप्तबीजवत्।
देवीदीक्षाविहीनस्य न सिद्धिर्न च सद्गतिः॥ ३-१४॥

तस्मात्सर्वप्रयत्नेन गुरुणा दीक्षितो भवेत्।
विचारं चक्रसारस्य करणीयमवश्यकम्॥ ३-१५॥

अदीक्षितोऽपि मरणे रौरवं नरकं व्रजेत्।

तस्माद्दीक्षा प्रयत्नेन सदा कार्या च तान्त्रिकात्॥ ३-१६॥

दीक्षापूर्वदिने कुर्यात् सुविचारं प्रयत्नतः।

तत्प्रकारं प्रयत्नेन कार्यं पर्वतपूजित॥ ३-१७॥

आदावकडमे सिद्धिर्मन्त्रं सञ्चारयेद् बुधः।

रेखाद्वयं पूर्वपरे मध्ये रेखाद्वयं लिखेत्॥ ३-१८॥

चतुष्कोणे चतूरेखाकडमं चक्रमण्डलम्।

भ्रामयित्वा महावृत्तं निर्माय वर्णमालिखेत्॥ ३-१९॥

अकारादिक्षकारान्तान् क्लीबहीनान् लिखेत्ततः।

एकैकमतो लेख्यान् मेषादिषु (वृषा?)मीनान्तकान्॥ ३-२०॥

वामावर्तेन गणयेत् क्रमशो वीरवल्लभ।

तन्त्रमार्गेण गणयेन्नामादिवर्णकादिमान्॥ ३-२१॥

मेषादितोऽपि मीनान्तं क्रमशः शास्त्रपण्डितः।

सिद्धसाध्यसुसिद्धादीन् पुनः सिद्धादयः पुनः॥ ३-२२॥

नवैकपञ्चमे सिद्धः साध्यः षड्दशयुग्मके।
सुसिद्धस्त्रिसप्तके रुद्रे वेदाष्टद्वादशे रिपुः॥ ३-२३॥

एतत्ते कथितं नाथ अकडमादिकमुत्तमम्।
पद्माकारं महाचक्रं दलाष्टकसमन्वितम्॥ ३-२४॥

अ आ वर्णद्वयं पूर्वे द्वितीये च द्वितीयकम्।
तृतीये कर्णयुग्मञ्च चतुर्थे नासिकाद्वयम्॥ ३-२५॥

पञ्चमे नयनं प्रोक्तं षष्ठे ओष्ठाधरं तथा।
सप्तमे दन्तयुग्मञ्च अष्टमे षोडशस्वरम्॥ ३-२६॥

कवर्गञ्च पूर्वदले द्वितीये च चवर्गक।
तृतीये च टवर्गञ्च चतुर्थे च तवर्गकम्॥ ३-२७॥

पवर्गं पञ्चमे प्रोक्तं यवान्तं षष्ठपत्रके।
सप्तमे शषसान् लिख्य (ल?)हक्षमष्टमके पदे॥ ३-२८॥

सुखं राज्यं धनं विद्यां यौवनायुषमेव च।

विचार्य चक्रमाप्नोति पुत्रत्त्वञ्च स्वजीवनम्॥ ३-२९॥

स्वीय--नामाक्षरं तत्र देवनामाक्षरं तथा।
एकस्थानं युगस्थानं विरोधं द्विविधं स्मृतम्॥ ३-३०॥

जीवनं मरणं तत्र अकारादिसु पत्रके।
लिखित्वा गणयेन्मन्त्री मरणं वर्जयेत् सदा॥ ३-३१॥

यत्रास्ति मरणं तत्र जीवनं नास्ति निश्चितम्।
परस्परविरोधेन सिद्धमन्त्रञ्च मूलदम्॥ ३-३२॥

जीवने जीवनं ग्राह्यं सर्वत्र मरणं त्यजेत्।
कुलाकुलस्य भेदं हि वक्ष्यामि मन्त्रिणामिह॥ ३-३३॥

वाय्वग्निभूजलाकाशाः पञ्चाशल्लिपयः क्रमात्।
पञ्चह्रस्वाः पञ्चदीर्घाः बिन्द्वन्ताः सन्धिसम्भवाः॥ ३-३४॥

कादयः पञ्चशः (षक्ष)यादिलसहक्षान्ताः प्रकीतीताः।
साधकस्याक्षरं पूर्वं मन्त्रस्यापि तदक्षरम्॥ ३-३५॥

यद्येकभूतदैवत्यं जानीयात्सकुलं हितम्।
भौमस्य वारुणं मित्रमाग्नेयस्यापि मारुतम्॥ ३-३६॥

पार्थीवाणाञ्च सर्वेषां शत्रुराग्नेयमम्भसाम्।
एन्द्रवारुणयोः शत्रुर्मारुतः परिकीर्तीतः॥ ३-३७॥

पार्थीवे वारुणं मित्रं तैजसं शत्रुरीरितः।
नाभसं सर्वमित्रं स्याद्विरुद्धं नैव शीलयेत्॥ ३-३८॥

रेखाष्टकं हि पूर्वाग्रं रेखैकादशमध्यतः।
दक्षिणोत्तरभागेन दक्षिणावधिमालिखेत्॥ ३-३९॥

कुलाकुलञ्च कथितं ताराचक्रं पुनः शृणु।
दक्षिणोत्तरदेशे तु रेखाचतुष्टयं लिखेत्॥ ३-४०॥

दशरेखाः पश्चिमाग्राः कर्तव्याः वीरवन्दित।
अश्विन्यादिक्रमेणैव विलिखेत्तारकाः पुनः॥ ३-४१॥

वक्ष्यमाणक्रमेणैव तन्मध्ये वर्णकान् लिखेत्।
युग्ममेकं तृतीयञ्च वेदमेकैकयुग्मकम्॥ ३-४२॥

एकयुग्मं तथैकञ्च युगलं युगलं युगम्।

एकं युग्मं तृतीयञ्च चन्द्रनेत्रं विविधं विधुम्॥ ३-४३॥

चन्द्रयुग्मं चन्द्रयुग्मं रामवेदं गृहे शुभे।

वर्णाः क्रमाः स्वराण्येव रेवत्यश्विगतावुभौ॥ ३-४४॥

अकारद्वयमश्विन्यां देवतागणसम्भवाः।

इकारं भरणी सत्यां कृत्स्नमुस्वरकृत्तिका॥ ३-४५॥

राक्षसी कृत्तिका भूमौ सर्वविघ्नविनाशिनी।

नासिकागण्डमन्त्रञ्च रोहिणीशवरूपिणी॥ ३-४६॥

ओष्ठमध्ये मृगशिरा देवता परिकीर्तीता।

अधरान्तमार्द्रया च मानुषं सर्वलक्षणम्॥ ३-४७॥

दन्तयुग्मं पुनर्वस्वाच्छादितं मानुषं प्रियम्।

कः पुष्या देवता ज्ञेया खगाश्लेषा च राक्षसी॥ ३-४८॥

मघावक्षे घङान्ता च तथा च पूर्वफाल्गुनी।

छजोत्तरा--फल्गुनी च मनुष्याः परिकीतीताः॥ ३-४९॥

झञहस्ता देवगणा टठचित्रा च राक्षसी।
डस्वाती देवरमणी विशाखा ढणराक्षसी॥ ३-५०॥

तथदानुराधया च शोभिता देवनायिका।
ध ज्येष्ठा राक्षसी ज्ञेया मूलानपफराक्षसी॥ ३-५१॥

पूर्वाषाढा मानुसानी बकाराक्षयमालिनी।
भोत्तराषाढया मर्त्यो मकारः श्रवणः मतः॥ ३-५२॥

धनिष्ठा यररक्षः स्त्रीलस्था शतभिषा तथा।
वशापूर्वभाद्रपदा मनुजाः परिकीतीताः॥ ३-५३॥

तथोत्तराभाद्रपदा मानुषी--मङ्गलोद्भवा।
अं अः ल्हक्षरेवती च देवकन्याः प्रकीतीताः॥ ३-५४॥

स्वजातौ परमा प्रीतिर्मध्यमा भिन्नजातिषु।
रक्षोमानुषयोर्नाशो वैरं दानवदेवयोः॥ ३-५५॥

जन्मसम्पत् विपत् क्षेमप्रत्यरिः साधको वधः।
मित्रं परममित्रञ्च गणयेच्च पुनः पुनः॥ ३-५६॥

वर्जयेज्जन्मनक्षत्रं तृतीयं पञ्चसप्तकम्।
षडष्टनवभद्राणि युगञ्च युग्मकं तथा॥ ३-५७॥

यदीह निजनक्षत्रं न जानाति द्विजोत्तमः।
नामाद्यक्षरसम्भूतं स्वतारमविरोधकम्॥ ३-५८॥

विनीय गणयेन्मन्त्री शुभाशुभविचारवान्।
प्रादक्षिण्येन गणयेत् साधकाद्यक्षरात् सुधीः॥ ३-५९॥

इत्येतत् कथितं नाथ ममात्मा पुरुषेश्वर।
कुलाकुलमनन्ताख्यं ताराचक्रं मनोर्गुण॥ ३-६०॥

तारामन्त्रं प्रदीपाभं रत्नभाण्डस्थितामृतम्।
एतद्विचारे महतीं सिद्धिमाप्नोति मानवः॥ ३-६१॥

राशिचक्रं प्रवक्ष्यामि सिद्धिलक्षणमुत्तमम्।
क्रमेण देया युगला रेखा पूर्वापरोद्गमा॥ ३-६२॥

तन्मध्यतो द्वयं दद्याद् रेखाग्निदक्षिणे ततः।

अग्निनैर्ऋतिवायवीशक्रमेण रेखयेत् तथा॥ ३-६३॥

विलिखेन्मेषराश्यादि मीनान्तं सर्ववर्णकान्।

कन्यागृहगतान् शादिवर्णानालिख्य यत्नतः॥ ३-६४॥

गणयेत्साधकश्रेष्ठो लग्नाद्यामव्ययान्तकान्।

स्वराशिदेवकोष्ठानामनुकूलान् भजेन्मनून्॥ ३-६५॥

राशीनां शुद्धता ज्ञेया त्यजेत् शत्रुमृतिं व्ययम्।

स्वराशेर्मन्त्रराश्यन्तं गणनीयं विचक्षणैः॥ ३-६६॥

साध्याद्यक्षरराश्यन्तं गणयेत् साधकाक्षरात्।

एकं वा पञ्च नवमं बान्धवं परिकीतीतम्॥ ३-६७॥

द्विषड्दशमसंस्थाश्च सेवकाः परिकीतीताः।

रामरुद्राश्च मुनयः पोषकाः परिकीतीताः॥ ३-६८॥

सूर्याष्टवेदयुक्तास्तु घातकाः सर्वदोषदाः।

शक्त्यादौ तु महादेव कुलचूडामणिर्यतिः॥ ३-६९॥

वर्जयेत् षष्ठगेहञ्च अष्टमं द्वादशं तथा।

लग्नं धनं भ्रातृबन्धुपुत्रशत्रुकलत्रकाः॥ ३-७०॥

मरणं धर्मकर्मायव्यया द्वादशराशयः।

नामानुरूपमेतेषां शुभाशुभफलं दिशेत्॥ ३-७१॥

वैष्णवे तु महाशत्रोः स्थाने बन्धुः प्रकीतीतः।

कूर्मचक्रं प्रवक्ष्यामि शुभाशुभफलात्मकम्॥ ३-७२॥

यज्ज्ञात्वा सर्वशास्त्राणि जानाति पण्डितोत्तमः।

अभेद्यभेदकं चक्रं शृणुष्वादरपूर्वकम्॥ ३-७३॥

कूर्माकारं महाचक्रं चतुष्पादसमावृतम्।

मुण्डे स्वरा दक्षपादे कवर्गं वामपादके॥ ३-७४॥

चवर्गं कीतीतं पश्चाद् अधःपादे टवर्गकम्।

तदधस्तु तवर्गं स्यादुदरे च पवर्गकम्॥ ३-७५॥

यवान्तं हृदये प्रोक्तं सहान्तं पृष्ठमध्यके।

लाङ्गूले शत्रुबीजञ्च क्षकारं लिङ्गमध्यके॥ ३-७६॥

लिखित्वा गणयेन्मन्त्री चक्रं कलिमलापहम्।

स्वरे लाभं कवर्गे श्रीश्चवर्गे च विवेकदम्॥ ३-७७॥

टवर्गे राजपदवीं तवर्गे धनवान् भवेत्।

उदरे सर्वनाशः स्याद् हृदये बहुदुःखदम्॥ ३-७८॥

पृष्ठे च सर्वसन्तोषं लाङ्गूले मरणं ध्रुवम्।

वैभवं (पृष्ठ?)लिङ्गदेशे तु दुःखञ्च वामपादके॥ ३-७९॥

विरुद्धद्वयलाभे तु न कुर्याच्चक्रचिन्तनम्।

विरुद्धैके धर्मनाशो युग्मदोषे च मारणम्॥ ३-८०॥

यत्र देवाक्षरञ्चास्ति तत्र चेन्निजवर्णकम्।

विरुद्धञ्चेत्त्यजेत् शत्रुमन्यमन्त्रं विचारयेत्॥ ३-८१॥

पृथक्स्थाने यदि भवेद्वर्णमाला महेश्वर।

यदि तत् सौख्यभावः स्यात् सौख्यं नापि विवर्जयेत्॥ ३-८२॥

विभिन्नगेहे दोषश्चेत् शुभमन्त्रञ्च सन्त्यजेत्।

इति ते कथितं देवि(देव) दृष्टादृष्टफलप्रदम्॥ ३-८३॥

यः शोधयेच्चरेद् वर्णं मन्त्रमालामहेश्वरः।

यदि शुध्यति चक्रेन्द्रं मन्त्रसिद्धिप्रदं शुभम्॥ ३-८४॥

शिवचक्रं प्रवक्ष्यामि महाकालकुलेश्वर।

अवश्यं सिद्धिमाप्नोति शिवचक्रप्रभावतः॥ ३-८५॥

षट्कोणमध्यदेशे तु चतुरस्रं लिखेद् बुधः।

तन्मध्ये विलिखेच्चारु चतुरस्रं सवर्णकम्॥ ३-८६॥

मस्तकस्थत्रिकोणे तु शिवसंस्थानमन्त्रकम्।

दक्षिणावर्तमानेन गणयेत् सर्वमन्त्रकम्॥ ३-८७॥

विष्णुस्थाने स्वमन्त्रञ्च द्वितीये च त्रिकोणके।

त्रिकोणे च तृतीये च ब्रह्मसंस्थानमन्त्रकम्॥ ३-८८॥

शक्तिमन्त्रादिसंस्थानं त्रिकोणाधो मुखे तथा।

नायिकामन्त्रसंस्थानं त्रिकोणाधो मुखे तथा॥ ३-८९॥

नायिकामन्त्रसंस्थानं तद्वामे दुर्लभं शुभम्।
तदूर्द्ध्वे च त्रिकोणे च भूतसंस्थानमन्त्रकम्॥ ३-९०॥

शिवाधो यक्षमन्त्रस्य संस्थानमतिदुर्लभम्।
विष्णुब्रह्मसन्धिदेशे महाविद्यापदं ध्रुवम्॥ ३-९१॥

स्वरस्थानं तथा वर्णस्थानं श्रृणु महाप्रभो।
अ--आवर्णद्वयं शैवे कवर्गञ्च सबिन्दुकम्॥ ३-९२॥

विष्णौ नेत्रं चवर्गञ्च टवर्गं ब्रह्मणि श्रुतम्।
तवर्गं नासिकाशक्तौ सर्वमन्त्रार्थचेतनम्॥ ३-९३॥

नायिकायां पवर्गञ्च न युगं परिकीतीतम्।
भूते यवान्तं विलिखेदोष्ठाधरसमन्वितम्॥ ३-९४॥

प्रणवं यक्षमन्त्रे च शकारं परिकीतीतम्।
अधोदन्तं पिशाचे च षयुक्तं बिन्दुभूषितम्॥ ३-९५॥

शिवो बीजं देवमन्त्रे सकारञ्च सबिन्दुकम्।

महाविद्यादिसंस्थाने लक्षवर्णं प्रकीतीतम्॥ ३-९६॥

इति ते कथितं शम्भो शृणु वर्णाङ्क(ङ्ग)वर्णनम्।

शिवे एकविंशतिश्च द्वात्रिंशद्विष्णुकोणके॥ ३-९७॥

ब्रह्मणे षोडशाद्यञ्च शक्तिकूटे युगाष्टकम्।

नायिकायां वह्निबाणं भूते सप्ताङ्कमेव च॥ ३-९८॥

यक्षे च चन्द्रवेदञ्च पिशाचेऽष्टवसुः स्मृतः।

सर्वदेवे बाणवेदं कृत्यायां षष्ठषष्ठकम्॥ ३-९९॥

मध्ये षष्ठे हुताशञ्च महाविद्यागृहे शुभे।

साधकस्य च साध्यस्यैकाङ्कं साध्यमन्दिरे॥ ३-१००॥

साधकाङ्कमूर्ध्वदेशे साध्याङ्कं गणयेदधः।

भुजयुग्मं शिवे प्रोक्तं विष्णौ वामाष्टकं तथा॥ ३-१०१॥

ऋषिचन्द्रं विधौ प्रोक्तं शक्तौ रामाष्टकं तथा।

नायिकायां वेदबाणं भूतेऽष्टनवमं तथा॥ ३-१०२॥

यक्षे युग्मं चतुर्थं च पिशाचे वज्रकाष्टकम्।
शक्तौ वशकृतौ ज्ञेयौ कृत्या(ल)यां मुनिषष्ठकम्॥ ३-१०३॥

यस्मिन् यस्मिन् गृहस्था ये देवतास्तु महाफलाः। क०।
अनामाक्षरदेहस्थमक्षरं द्विगुणं स्मृतम्।
साध्याङ्केन योजयित्वा पूरयेत्षष्ठपञ्चमैः॥ ३-१०४॥

तद्देहं ग्राहयेद् यत्नात् देवताद्यक्षरं यथा।
एकशेषस्थितं वर्णं कुर्यान्नापि विवेचनम्॥ ३-१०५॥

शुद्धं तद्धि विजानीयाद्विचारमन्यतोऽपि च।
षष्ठाङ्केन च वेदाङ्कं तथा च देववर्णकम्॥ ३-१०६॥

शशाङ्कं मिश्रितं चाङ्कं द्विगुणं देवतार्णकम्। क०।
पश्चात् कृत्वा तदङ्कञ्च हरेद्रामेण वल्लभ।
यदि साध्याङ्कं विस्तीर्णं तदा नैव शुभं भवेत्॥ ३-१०७॥

साधकाङ्कञ्च विस्तीर्णं यदि स्याज्जायते गृहे।
तदा सर्वकुलेशः स्याद् रुद्रश्रवणसंशयः॥ ३-१०८॥

द्विगुणं देवतावर्णं साधकाङ्केन योजयेत्।

वर्णसंख्याङ्कमालिख्य गणयेत् साधकोत्तमः॥ ३-१०९॥

रसबाणेन सम्पूर्य संहरेत् रससंख्यया।

आत्माङ्कमिश्रितं पश्चाद् यदि किञ्चिन्न तिष्ठति॥ ३-११०॥

स्वीयाभिधानकाङ्कस्य द्विगुणञ्चापि योजयेत्।

पश्चादनलसंख्याभिर्हरेत् सौख्यार्थीमुक्तये॥ ३-१११॥

अङ्कं बहुतरं ग्राह्यं साधकस्य सुखावहम्।

न ग्राह्यं साध्यविस्तीर्णमि(म?)तिशास्त्रार्थनिश्चयम्॥ ३-११२॥

विचारादस्य चक्रस्य राजत्वं लभते ध्रुवम्।

समानाङ्केन गृह्णीयाद् गुण्याङ्कं वर्जयेदिह॥ ३-११३॥

अवश्यं चक्रमेवं हि गोपनीयं सुरासुरैः।

विष्णुचक्रं प्रवक्ष्यामि चक्राकारं सुगोपनम्॥ ३-११४॥

सर्वसिद्धिप्रदं शुद्धं चक्रं कृत्वा फलप्रदम्।

श्रृणु नाथ महाविष्णोः स्थानं मङ्गलदायकम्॥ ३-११५॥

लक्ष्मीप्रियमङ्कमयं नवकोणं महाप्रभम्।

तदूर्ध्वे च तमालिख्य तदूद्र्ध्वेऽष्टग्रहं शुभम्॥ ३-११६॥

चतुष्कोणाकारगेहं सन्धौ शून्याष्टकं लिखेत्।

तदूर्ध्वे च तमालिख्य चक्रमेतद्धनेश्वर॥ ३-११७॥

पूर्वे महेन्द्राभरणमूद्र्ध्वदेशोल्लसत्करम्।

मुनिरामखचन्द्राद्यमङ्कं सर्वसमृद्धिदम्॥ ३-११८॥

दक्षिणे वह्निभरणं रसवेदे खयुग्मकम्।

तदधो रामचक्रञ्च सप्तषड्ढु च रामकम्॥ ३-११९॥

तदधो निर्ऋते स्वर्गे युगाङ्कशून्यवेदकम्।

केवलाधो जलेशस्य मन्दिरं सुमनोहरम्॥ ३-१२०॥

रामेषु शून्यबाणाढ्यं तस्यामेवायुमन्दिरम्।

भुजहस्तखरसाढ्यं चक्रेदमीश्वरात्मकम्॥ ३-१२१॥

नवकोणं मध्यदेशे पञ्चाङ्गभागमालिखेत्।
तन्मध्ये रचयेद्वर्णं पञ्चकोणे त्रिकोणके॥ ३-१२२॥

इन्द्राधो विलिखेद् धीरो वर्णमाद्यञ्च सप्तकम्।
भागे दक्षिणकोणेषु ऋकारादङ्ककं लिखेत्॥ ३-१२३॥

ककारादिटकारान्तं तदधो विलिखेद् बुधः।
तद्वामे ठादिमान्तञ्च वर्णलक्षणकारणम्॥ ३-१२४॥

तदूर्ध्वे यादिवर्णञ्च चक्रञ्च गणयेत्ततः।
पूर्वकोणपतिः शक्रो द्वितीयेशौ यमानलौ॥ ३-१२५॥

निर्ऋतिर्वरुणश्चैव तृतीयमन्दिरेश्वरः।
चतुर्थाधिपतिर्वायुः कुबेरो नाथ इत्यपि॥ ३-१२६॥

पञ्चगेहस्याधिपतिरीशो विश्वविदाम्बरः।
पञ्चकोणे प्रतिष्ठन्ति पञ्चभूताशयस्थिताः॥ ३-१२७॥

प्राणे सिद्धिमवाप्नोति चापाने व्याधिपीडनम्।
समाने सर्वसम्पत्तिरुदाने निर्धनं भवेत्॥ ३-१२८॥

व्याने च ईश्वरप्राप्तिरेतस्मिन् लक्षणं शुभम्।

पूर्वगेहे महामन्त्रं मन्त्रत्यागं करोति यः॥ ३-१२९॥

स तावत् साधकश्रेष्ठो विष्णुमार्गेण शङ्कर।

विशेषं श्रृणु यत्नेन सावधानावधारय॥ ३-१३०॥

सप्ताक्षरं त्र्यक्षरं च दशमाक्षरमेव च।

पूर्वगेहे यदि भवेदाद्याक्षरसमन्वितम्॥ ३-१३१॥

तदा भवति सिद्धिश्च सर्वमेवंप्रकारकम्।

षष्ठाक्षरं वेदवर्णं विंशत्यर्णं महामनुम्॥ ३-१३२॥

आम्नायाद्यक्षरं व्याप्तं सफलं गणयेद् बुधः।

तथास्मिन् मम गेहे च मन्त्रं सप्ताक्षरं शुभम्॥ ३-१३३॥

षष्ठाक्षरञ्च गणयेत्त्रिंशदक्षरमेव च।

आद्याक्षरसमायुक्तं साध्यसाधकयोरपि॥ ३-१३४॥

एकस्यापि च लाभे च मन्त्रसिद्धिरखण्डिता।

मन्त्राक्षरादिलाभञ्च अवश्यं गणयेदिह॥ ३-१३५॥

नैर्ऋते च जलेशस्य द्व्यक्षरञ्च नवाक्षरम्।
शून्यदेवाक्षरं नाथ गणनीयं विचक्षणैः॥ ३-१३६॥

तथात्र अक्षरं मन्त्रं पञ्चाक्षरमनं तथा।
पञ्चाशदक्षरं मन्त्रं मन्दिरे गणयेत् शुभम्॥ ३-१३७॥

वायुकोणे कुबेरस्य मन्दिरे गणयेत्तथा।
द्वाविंशत्यक्षरं मन्त्रं शून्यषष्ठमनुं तथा॥ ३-१३८॥

पञ्चाक्षरं तारिकायाः शिवे पञ्चाक्षरं तथा।
सुसप्तमन्त्रग्रहणे सफलं परिकीतीतम्॥ ३-१३९॥

ईशानपञ्चकोणे च सफलञ्च नवाक्षरम्।
अष्टाक्षरं हि विद्याया गणयेत् सहितं सुधीः॥ ३-१४०॥

एतदुक्तञ्च गणयेद्विरुद्धं नैव शीलयेत्।
प्राणमित्रं समानञ्च समानो व्यानबान्धवः॥ ३-१४१॥

एतत्स्थितञ्च गृह्णीयाद् दोषभाक् स भवेत् क्वचित्।
एकदैव प्रिये प्रीतिरेकगेहे तथा प्रियम्॥ ३-१४२॥

गृहीत्वा विष्णुपदवीं प्राप्नोति मानवः क्षणात्।
यदि चक्रं न विचार्य रिपुमन्त्रं सदा न्यसेत्॥ ३-१४३॥

निजायुषं छिनत्त्येव मूको भवति निश्चितम्।
विचार्य यदि यत्नेन सर्वचक्रे प्रियं हितम्॥ ३-१४४॥

महामन्त्रं महादेव लघु सिध्यति भूतले॥ ३-१४५॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सर्वचक्रानुष्ठाने
सिद्धमन्त्रप्रकरणे भावनिर्णये भैरवभैरवीसंवादे तृतीयः
पटलः॥ ३॥

अथ चतुर्थः पटलः

श्रीभैरवी उवाच

अथ वक्ष्यामि चक्रान्यत् शृणु भैरव सादरम्।

येन हीना न सिद्ध्यन्ति महाविद्या वरप्रदाः॥ ४-१॥

तव चक्रं ब्रह्मणा व्यक्तं ब्रह्मचक्रमुदाहृतम्।
यस्य ज्ञानात् स्वयं ब्रह्मा स्वबलेन भवं सृजेत्॥ ४-२॥

अकालमृत्युहरणं परं ब्रह्मपदं व्रजे।
चतुष्कोणे चतुष्कोणं तन्मध्ये च चतुश्चतुः॥ ४-३॥

मध्यगेहं वेष्टयित्वा इष्टं मन्दिरमुत्तमम्।
अष्टकोणे महादेव षोडशस्वरमालिखेत्॥ ४-४॥

अष्टकोणं वेष्टयित्त्वा वृत्तयुग्मं लिखेत् सुधीः।
मध्यगेहे चतुष्कोणे कादिक्षान्तञ्च वर्णकम्॥ ४-५॥

दक्षिणावर्त्तयोगेन विलिखेत् साधकोत्तमः।
तदूर्द्ध्वे स्वगृहे चाङ्कं विलिख्य गणयेत् सुधीः॥ ४-६॥

चतुर्गेहस्योद्र्ध्वदेशे युग्मगेहे क्रमाल्लिखेत्।
साध्यस्य साधकस्यापि मेषादिकन्यकान्तकम्॥ ४-७॥

अधो लिखेत्तुलाद्यन्तमिति राश्यादिकं शुभम्।

ततो लिखेद् गेहदक्षे युग्मगेहे महेश्वर॥ ४-८॥

तारकानश्विनी ताराद्यन्तान् दक्षिणतो लिखेत्।

वर्णक्रमेण विलिखेद् वेदमन्दिरमण्डले॥ ४-९॥

ऊर्द्ध्वाधः क्रमशो लेख्यमङ्गतारं सुरेश्वर।

ततो हि गणयेन्मन्त्री योजयित्वा क्रमेण तु॥ ४-१०॥

सुखं राज्यं धनं वृद्धिं कलहं कालदर्शनम्।

सिद्धिमृद्धिमष्टकोणे विदित्वा च शुभाशुभम्॥ ४-११॥

गणयेद्राशिनक्षत्रं मनुचाहं विवर्जयेत्।

सुखे सुखमवाप्नोति राज्ये राज्यमवाप्नुयात्॥ ४-१२॥

धने धनमवाप्नोति वृद्धौ वृद्धिमवाप्नुयात्।

मेषो वृषमिथुनश्च कर्कटः सिंह एव च।

कन्यका देवता ज्ञेया नक्षत्राणि पुनः श्रृणु॥ ४-१३॥

ऊर्द्ध्वयुग्मगृहस्यापि दक्षवामे च भागके।

नक्षत्राणि सन्ति यानि तानि श्रृणु महाप्रभो॥ ४-१४॥

अश्विनी मृगशिराश्लेषा हस्तानुराधिका तथा।
उत्तराषाढिकार्द्रा वा पूर्वभाद्रपदा तथा॥ ४-१५॥

दक्षाग्रहस्तितास्तारा: स्पष्टीभूताश्च देवता:।
एतासामधिपा एते राशयो ग्रहरूपिण:॥ ४-१६॥

कर्कटकेशरी कन्यादेवता: परिकीतीता:।
एतेषाञ्चापि वर्णानामधिपाश्चेति राशय:॥ ४-१७॥

ककारस्य(ढ?) खकारस्य ञकारस्य टकारप:।
दकारस्य फकारस्य यकारस्य सकारप:॥ ४-१८॥

नकारस्यापि पतयो ज्ञेयाश्च क्रमश: प्रभो।
संश्रृणु रोहिणीपुष्या तथा चोत्तरफाल्गुनी॥ ४-१९॥

विशाखा च तथा ज्ञेया पूर्वाषाढा च तारका।
तथा शतभिषातारा वाममन्दिरपर्वगा:॥ ४-२०॥

एतासामधिपा एते राशयो ग्रहरूपिणः।

मेषो वृषो मिथुनश्च ईश्वराः परिकीतीताः॥ ४-२१॥

एतद्गेहस्थितं वर्णमेते रक्षन्त्यनित्यशः।

ककारस्य नकारस्य ऋकारस्य उकारपः॥ ४-२२॥

अकारस्य पकारस्य मकारस्य वकारपः।

हकारस्याधिपा एते ऋद्धिमोक्षफलप्रदाः॥ ४-२३॥

दक्षिणाधोगृहस्यापि देवता इति राशयः।

तुला च वृश्चिकश्चैव धनुश्चैव ग्रहेश्वरः॥ ४-२४॥

एतासां तारकाणाञ्च पतयो गदिता मया।

भरण्यार्द्रमघाचित्राज्येष्ठाश्रवणवल्लभाः॥ ४-२५॥

तथोत्तरभाद्रपदा वल्लभाः राशयो मताः।

अथ गेहस्थितं वर्णं शृणु नाथ भयापह॥ ४-२६॥

यकारस्य दकारस्य टकारस्य नकारपः।

धकारस्य वकारस्य चकारस्य यकारपः॥ ४-२७॥

क्षकारपणका एते राशयः परिकीतीताः।

धनवृत्तिप्रदा नित्या नित्यस्थाननिवासिनः॥ ४-२८॥

वामाधोमन्दिरस्यापि वल्लभा इति राशयः।

मकराधस्तु कोष्ठेषु मीनो राशिफलस्थिताः॥ ४-२९॥

एतानि भानि रक्षन्ति शूलपाशासिधारकाः।

पुनर्वसुः कृत्तिका च तथाभंपूर्वफल्गुनी॥ ४-३०॥

स्वाती मूला धनिष्ठा च रेवती वामगेहगाः।

एतासामधिपा एते जलस्था ग्रहदेवताः॥ ४-३१॥

एतान् वर्णान् प्ररक्षन्ति गृहस्था नव राशयः।

धकारस्य जकारस्य टकारस्य तकारपः॥ ४-३२॥

नकारस्य भकारस्य लकारस्य तकारपः।

कलहादिमहादोषकालदर्शनकारकाः॥ ४-३३॥

राशयो लोकहा नाथ तन्मन्त्रं परिवर्जयेत्।

यद्येकदेवतागेहं विभिन्नञ्च सुशोभनम्॥ ४-३४॥

चतुः स्थानं युगस्थानं सर्वत्रापि निषेधकम्।
एकगेहस्थितं मन्त्रं बहुसौख्यप्रदायकम्॥ ४-३५॥

नाम्न आद्यक्षरं नीत्वा राशिनक्षत्रविस्मृतौ।
सभावं साधकश्रेष्ठः कलहे कलहं भवेत्॥ ४-३६॥

रिपुश्चेन्मूलनाशः स्यात् कलहोऽपि सुरेश्वर।
नेत्रयुग्मं स्वरं पाति सिंहो हि कन्यकां तथा॥ ४-३७॥

कर्णयुग्मं तुला पाति संयुगं वृश्चिको धनुः।
चयुगं मकरः पाति कुम्भो मीनश्च पाति हि॥ ४-३८॥

ओष्ठञ्च पाति च तथा अधरं मेष एव च।
दन्तयुग्मं वृषः पाति मिथुनः शेषगोऽक्षरः॥ ४-३९॥

यस्य ये ये राशयः स्युस्तस्य तत्तच्छुभं स्मृतम्।
एकराशिः शुभं नित्यं ददाति च मनोरथम्॥ ४-४०॥

अन्यत्र दुखदं प्रोक्तं साधकः सिद्धिभाग् भवेत्।
भिन्नराशौ वर्जनीयं कलहं कालदर्शनम्॥ ४-४१॥

श्रूयतां शैलजानाथ चक्रं श्रीत्रिदशात्मकम्।
पूर्वपश्चिमभेदेन षट् च रेखाः समालिखेत्॥ ४-४२॥

वामादि दक्षिणान्तञ्च रेखा दश समालिखेत्।
पञ्चगेहे पूरकाङ्कं सर्वाधोहारकाङ्ककम्॥ ४-४३॥

तन्मध्ये रचयेदक्षं देवताग्रहसंयुतम्।
पूरकाङ्कं मध्यगेहे सप्तषीयुक्तमालिखेत्॥ ४-४४॥

तद्दक्षिणे द्वादशञ्च तद्दक्षेण रसं तथा।
तद्दक्षे अष्टदशके तद्दक्षे षोडशस्मृतम्॥ ४-४५॥

पूरकाङ्कं ततो लेख्यं इन्द्राद्यङ्काश्च दक्षतः।
इन्द्रगेहे च शतकं विधिविद्याफलप्रदम्॥ ४-४६॥

धर्मगेहे शून्यसप्त युगलं विलिखेद् बुधः।
अनन्तमन्दिरे नाथ शून्याष्टवसुरेव च॥ ४-४७॥

कालीगृहे शून्यवेदवामाद्याङ्कं विलिखेत्ततः।
धूमावतीमन्दिरे च शून्यखेषु निशापतिम्॥ ४-४८॥

इन्द्राद्या दक्षतो लेख्या अङ्काश्चन्द्राधिदेवताः।
शून्याष्टचन्द्रयुक्तञ्च सर्वत्र देवता लिखेत्॥ ४-४९॥

तथाश्विनीकुमारौ च शून्यानलयुगायुगौ।
तत्पश्चात् पूर्वगेहञ्च सहस्रार्कसमन्वितम्॥ ४-५०॥

तारिणीमन्दिरस्थाङ्कं शून्यवेदं तथैव च।
बगलामुखीगेहस्थं शून्याष्टचन्द्रसंयुतम्॥ ४-५१॥

ततश्चन्द्रगृहस्याधो वायुर्गेहं मनोरमम्।
रन्ध्रवेदात्मकं गेहं सर्वसिद्धिप्रदायकम्॥ ४-५२॥

राहुगेहं महापापं शून्यशून्यमुनिप्रियम्।
पश्चादेकत्र हस्तञ्च खशून्ययुगलात्मकम्॥ ४-५३॥

षोडशीमन्दिरे शून्यमष्टचन्द्रसमन्वितम्।

मातङ्गीमन्दिरे शून्यरुद्रचन्द्रसमन्वितम्॥ ४-५४॥

वायोरधोवरुणस्य गृहं सप्तशशिप्रियम्।
तरुणी गेहमध्ये च शून्याष्टकसमन्वितम्॥ ४-५५॥

बुधगेहस्थिताङ्कञ्च शून्यचन्द्रयुगात्मकम्।
भुवनेशीमन्दिरस्थं शून्याष्टकशशिप्रियम्॥ ४-५६॥

वरुणाधः कुबेरस्य गृहस्थं षट् च युग्मकम्।
आनन्तभैरवी गेहे दशकं परिकीतीतम्॥ ४-५७॥

धरणीगृहमध्ये च शून्ययुग्मेन्दुसंयुतम्।
भैरवी गृहमध्यस्थं शून्ययुगलचन्द्रकम्॥ ४-५८॥

राशिगृहस्थितं शून्यषीचन्द्रमण्डलसंयुतम्।
कुबेराधः स्वकं चक्रस्थिताङ्कं सर्वसिद्धिदम्॥ ४-५९॥

ईश्वरस्य गृहस्थञ्च सप्तशून्ययुगात्मकम्।
तिरस्करिण्या गेहस्थं सहस्राङ्कसमन्वितम्॥ ४-६०॥

किङ्किणीमन्दिरं पश्चादष्टचन्द्रसमन्वितम्।

छिन्नमस्तागृहं पश्चाच्छून्याष्टचन्द्रमण्डलम्॥ ४-६१॥

वागीश्वरीगृहं पश्चात् सप्तमं चन्द्रमण्डलम्।

महाफलप्रदातारं धर्मो रक्षति तं पुनः॥ ४-६२॥

ईश्वरस्य अधोगेहे बटुकस्य गृहं ततः।

शून्याष्टमाद्यं स्वगृहं धर्मार्थकाममोक्षदम्॥ ४-६३॥

तत्पश्चात् डाकिनीगेहं खशून्यमुनिसंयुतम्।

हन्ति साधकसौख्यं हि क्षणादेव न संशयः॥ ४-६४॥

स्वगृहे स्वीयमन्त्रस्य फलदं परिकीतीतम्।

भीमादेवीगृहं पश्चात् खसप्तचन्द्रमण्डलम्॥ ४-६५॥

भयदं सर्वदेशे तु वर्जयेद् गृहान्तरम्।

लक्षवर्णं लिखेत् शेषगृहे द्वे पण्डितोत्तमः॥ ४-६६॥

इन्द्रगेहावधिं धीरो वकारादिकवर्णकम्।

क्षकारान्तं लिखेत्तत्र गणयेत् साधकस्ततः॥ ४-६७॥

पूरकाङ्कमूद्र्ध्वदेशे हारकाङ्कमधो लिखेत्।

निजनामाक्षरं यत्र तत्कोष्ठाङ्कं महेश्वर॥ ४-६८॥

नीत्त्वा च पूजयेद्विद्वान् स्वस्वगेहोर्ध्वदेशगैः।

अङ्कैस्ततो हरेर्नाथ अधोऽङ्के हार्यशेषकम्॥ ४-६९॥

विस्तारश्चेद्देवताङ्गस्तदङ्गः शुभदः स्मृतः।

अल्पाङ्गः शुभदः प्रोक्तः साधकस्य सुखावहः॥ ४-७०॥

एकाक्षरे महासौख्यं तत्रापि गणयेद् वचः।

धीराङ्कः शून्यगामी च देवताङ्कस्तथा विभो॥ ४-७१॥

तदा नैव शुभं विद्यादशुभाय प्रकल्प्यते।

एके धनमवाप्नोति द्वितीये राजवल्लभः॥ ४-७२॥

तृतीये जाप्यसिद्धिः स्याच्चतुर्थे मरणं ध्रुवम्।

पञ्चमे पञ्चमानः स्यात् षष्ठे दुःखोत्कटानि च॥ ४-७३॥

शैवानां शाक्तवर्णानामित्यङ्कः परिगृह्यते।

वैष्णवानां निषेधे च पञ्चमाङ्को निषेधकः॥ ४-७४॥

यासां यासां देवतानां हिंसा तिष्ठति चेतसि।

तन्मन्त्रग्रहणादेवाष्टैश्वर्ययुतो भवेत्॥ ४-७५॥

यद्देवस्याश्रिता ये तु तद्गृहाङ्कं हरन्ति ते।

ऊद्र्ध्वाङ्केन पूरयित्त्वा अधोऽङ्केन हरेत्सदा॥ ४-७६॥

ॠणिधनिमहाचक्रं वक्ष्यामि शृणु तत्त्वतः।

दर्शनादेव कोष्ठस्य जानाति पूर्वजन्मगम्॥ ४-७७॥

देवं बहुतराङ्गेषु ज्ञात्वा सिद्धीश्वरो भवेत्।

निजसेव्यां महाविद्यां गृहीत्वा मुक्तिमाप्नुयात्॥ ४-७८॥

कोष्ठशुद्धञ्च मन्त्रञ्च ये गृह्णन्ति द्विजोत्तमाः।

तेषां दुःखानि नश्यन्ति ममाज्ञा बलवत्तरा॥ ४-७९॥

कोष्ठशुद्धं महामन्त्रं फलदं रुद्रभैरव।

न हातव्यं महामन्त्रं सद्गुरुप्रियदर्शनात्॥ ४-८०॥

तत्र कोष्ठं न विचार्यं चेज्जानाति विचार्यकम्।

महाविद्या महामन्त्रे विचार्यकोटिपुण्यभाक्॥ ४-८१॥

अविचारे चोक्तफलं ददाति कामसुन्दरी।

कोष्ठान्येकादशान्येव देवेन पूरितानि च॥ ४-८२॥

अकारादिहकारान्तं लिखेत् कोष्ठेषु तत्त्ववित्।

प्रथमं पञ्चकोष्ठेषु ह्रस्वदीर्घक्रमेण तु॥ ४-८३॥

द्वयं द्वयं लिखेत्तत्र विचारे खलु साधकः।

शेषेष्वेकैकशो वर्णान् क्रमशस्तु लिखेत्सुधीः॥ ४-८४॥

अमावर्ण द्वयस्यार्द्धावधिस्तु क्रमशोऽङ्ककम्।

आद्यमन्दिरमध्ये तु षष्ठाङ्कं विलिखेद् बुधः॥ ४-८५॥

द्वितीये षष्ठचिन्हञ्च तृतीये च गृहे तथा।

चतुर्थे गगनाङ्कञ्च पञ्चमे चक्रत्रयं तथा॥ ४-८६॥

षष्ठचापे चतुर्थञ्च सप्तमे च चतुर्थकम्।

अष्टमे गगनाङ्कञ्च नवमे दशमं तथा॥ ४-८७॥

शेषमन्दिरमध्ये तु त्रयाङ्कं विलिखेत्ततः।
एते नाथ साध्यवर्णाः कथिताः क्रमशो ध्रुवम्॥ ४-८८॥

कथयामि साधकार्णं सकलार्थनिरूपणम्।
आद्यगेहे द्वितीयञ्च द्वितीये च तृतीयकम्॥ ४-८९॥

तृतीये पञ्चमं प्रोक्तं गगनं वेदपञ्चके।
षष्ठे युगलमेवं हि सप्तमे चन्द्रमण्डलम्॥ ४-९०॥

अष्टमे गगनं प्रोक्तं नवमे च चतुर्थकम्।
वेदञ्च दशमे प्रोक्तं चन्द्रमेकादशे तथा॥ ४-९१॥

साधकार्णाः स्मृताः त्वेते वर्णमण्डलमध्यगाः।
साध्यवर्णान् महादेव स्वरव्यञ्जनभेदकान्॥ ४-९२॥

एवं हि सर्वमन्त्रार्णानमष्टाद्यङ्कैः प्रपूरयेत्।
एकीकृत्य हरेदष्टसंख्याभिः क्षणवल्लभे॥ ४-९३॥

यस्यापहस्थितं वर्णं तन्नेभव्यं मनौ शुभे।

साधकाभिधानवर्णा स्वरव्यञ्जनभेदकान्॥ ४-९४॥

पृथक् पृथक् संस्थितांश्च व्यक्तं शृणु पुनः पुनः।
द्वितीयाद्यङ्कचन्द्रान्ते संपूर्वाष्टभिराहरेत्॥ ४-९५॥

मन्त्रो यस्त्वधिकाङ्कः स्यात्तदा मन्त्रं जपेत् सुधीः।
समेऽपि च जपेन्मन्त्रं न जपेत्तु ऋणाधिके॥ ४-९६॥

शून्ये मृत्युं विजानीयात्तस्माच्छून्यं विवर्जयेत्।
द्वितीयाद्यङ्कजालञ्च वैष्णवे सुखदं स्मृतम्॥ ४-९७॥

द्वितीयाद्यङ्कजालञ्च वैष्णवे सुखदं स्मृतम्।
द्वितीयाद्यङ्कजालञ्च तथा वै परिकीतीतम्॥ ४-९८॥

इन्द्राद्यङ्कं तथा नाथ सौरे शाक्ते शुभप्रदम्।
तथा दिक्संख्यकाङ्कञ्च साधकस्य शुभप्रदम्॥ ४-९९॥

तदङ्कं शृणु यत्नेन पूर्ववत् सकलं स्मृतम्।
स्थलञ्चैव विभिन्नाङ्कमूर्द्ध्वाधश्च क्रमेण तु॥ ४-१००॥

साध्याङ्कान् साधकाङ्काश्च पूरयेद् गृहसंख्यया।

गुणिते तु हृते चापि यच्छेषं जायते स्फुटम्॥ ४-१०१॥

तदङ्कं कथयाम्यत्र एकादशगृहे स्थितम्।

इन्द्रतारास्वर्गरवितिथिषड्वेददाहनाः॥ ४-१०२॥

अष्टवसु नवाङ्कस्थाः साध्यार्णगुणिता इति।

दिग्भूगिरिश्रुतिगजवह्निपर्वतपञ्चमाः॥ ४-१०३॥

वेदषष्ठानलाङ्कञ्च गणयेत् साधकाक्षरान्।

नामाद्यक्षरमारभ्य यावन्मन्त्राक्षरं भवेत्॥ ४-१०४॥

तत्संख्याञ्च त्रिधा कृत्वा सप्तभिः संहरेद् बुधः।

अधिकं च ऋणं प्रोक्तं तच्छेषं धनमुच्यते॥ ४-१०५॥

अथवान्यप्रकारञ्च कृत्वा मन्त्रं समाश्रयेत्।

नामाद्यक्षरमारभ्य यावत् साधकवर्णकम्॥ ४-१०६॥

तावत्संख्यां सप्तगुणं कृत्वा वामैर्हरेद् बुधः।

श्रीविद्येतरविद्यायां गणना परिकीतीता॥ ४-१०७॥

अथवान्यप्रकारञ्च सकलान् साधकाक्षरान्।

स्वरव्यञ्जनभेदेन द्विगुणीकृत्य साधकः॥ ४-१०८॥

साध्ययुक्तं ततः कृत्वा स्वरव्यञ्जनभेदकम्।

अष्टाभिः संहरेदङ्कं शृणु संहारविग्रहम्॥ ४-१०९॥

पूर्वचारक्रमं सम्यक् सर्वत्रापि शुभाशुभम्।

अस्य विचारमात्रेण सिद्धिः सर्वार्थसाधिका॥ ४-११०॥

पूर्वजन्माराधितायां तां प्राप्नोति हि देवताम्।

अथान्यत् सम्प्रवक्ष्यामि सावधानावधारय॥ ४-१११॥

उल्काचक्रं सर्वसारं मन्त्रदोषादिनिर्णयम्।

मत्स्याकारमूर्ध्वमुखं सर्वमन्त्रादि विग्रहम्॥ ४-११२॥

स्कन्धदेशावधिर्नाथ पुच्छपर्यन्तमेव च।

एकाक्षरादिमन्त्रादिद्वादशान्ताक्षरात्मकम्॥ ४-११३॥

विलिखेत् पृष्ठदेशे तु शुभाशुभविशुद्धये।

त्रयोदशाक्षरान् वाथ एकविंशाक्षरान्तकम्॥ ४-११४॥

नेतव्यं साधकैर्मन्त्रं पृष्ठस्थमुदरस्थकम्।
तथा श्रीशुभदं प्रोक्तं कण्ठादिपुच्छकान्तकम्॥ ४-११५॥

द्वाविंशादि चतुस्त्रिंशदक्षरान्तमनुं शुभम्।
पुच्छस्थं नापि गृह्णीयात् मुखस्थञ्च तथा ध्रुवम्॥ ४-११६॥

शीर्षस्थञ्चापि गृह्णीयात् तदक्षरं शृणु प्रभो।
पञ्चत्रिंशादि द्विचतुर्द्वाविंशदन्तमेव च॥ ४-११७॥

मस्तकस्थं शुभं प्रोक्तं मुखवर्णान् शृणु प्रभो।
त्रिचत्वारिंशदर्णादि एकपञ्चाशदन्तकम्॥ ४-११८॥

मुखस्थमन्तमशुभं न गृह्णीयात् कदाचन।
पृष्ठस्थं शृणु यत्नेन निरर्थकमहाश्रमम्॥ ४-११९॥

श्रमगात्रस्य पीडाभिर्देवता कुप्यतेऽनिशाम्।
द्विपञ्चाशदक्षरादि एकषष्टितमान्तकान्॥ ४-१२०॥

वर्णान् पुच्छस्थितानेतान् नेत्रस्थान् शृणु वल्लभ।
द्विषष्टितमवर्णादि चतुःषष्ट्यक्षरान्तकान्॥ ४-१२१॥

अङ्कं लोचनसंस्थं च ततोऽन्यं रसनास्थितम्।
तत्सर्वं शुभदं प्रोक्तमेतदन्यतमं स्मृतम्॥ ४-१२२॥

वैष्णवानाञ्च शैवानां शाक्तानां मन्त्रजापने।
ततोऽन्यदेवभक्तानां भुक्तिमुक्तिप्रदं नृणाम्॥ ४-१२३॥

अथ वक्ष्ये महादेव चक्रसारं सुदुर्लभम्।
रामचक्रं महाविद्या सर्वमन्दिरमेव च॥ ४-१२४॥

सर्वसिद्धिप्रदं मन्त्रं निजनामस्थमाश्रयेत्।
तदैव सिद्धिमाप्नोति सत्यं सत्यं महेश्वर॥ ४-१२५॥

तत्प्रकारं शृणु क्रोधभैरव प्रियवल्लभ।
नवाङ्कान् प्रलिखेद् विद्वान् वामदक्षिणभागतः॥ ४-१२६॥

तन्मध्ये क्रमशो दद्यात् तथा सप्तदशाङ्ककान्।
दक्षिणादिक्रमेणैवमुक्तविद्याः समालिखेत्॥ ४-१२७॥

अकारादिक्षकारान्तं सर्वस्मिन् मन्दिरे लिखेत्।
बालादिदेवताः सर्वा भ्रामर्यन्ताश्च देवताः॥ ४-१२८॥

अस्याकाशविधे गेहे सान्तनित्यं फलप्रदम्।
पुनर्वीलोममार्गेण आदिक्षान्तार्णमन्दिरे॥ ४-१२९॥

रक्तदन्तादि श्रीविद्या मन्त्रान्तं विलिखेद् बुधः।
क्षकाराद्यनुलोमेन अकारान्तं लिखेत् ततः॥ ४-१३०॥

पुनस्तच्छेषविद्याश्च शेषगेहे लिखेत् सदा।
कायशोधनमुख्यादि शैलवासिनि मन्त्रकम्॥ ४-१३१॥

पञ्चविंशतिगेहस्थं गणयेत् साधकस्ततः।
गृहस्थमङ्कं वक्ष्यामि श्रृणु योगीशवल्लभ॥ ४-१३२॥

बालागृहादिशेषान्तं मुनिहस्तविधौ गृहे।
क्रमेण श्रृणु तत्सर्वं सावधानावधारय॥ ४-१३३॥

दक्षिणावर्तयोगेन गणयेत् क्रमशो बुधः।

वसुसप्तपञ्चमेषुवह्निवेदानलस्तथा॥ ४-१३४॥

मुनिषष्ठाद्यवेदाश्च सप्तेषुमुनयस्तथा।
पञ्चवेदेषुवसवो वेदेषुवह्नयस्तथा॥ ४-१३५॥

वह्निवेदाश्च सम्प्रोक्ता आकाशं तदनन्तरम्।
आकाशानन्तरे गेहे अनलं परिकीतीतम्॥ ४-१३६॥

तत्पश्चात् सर्वगेहेषु सर्वाङ्कं दक्षतः शृणु।
वह्नि वह्निवेदवह्नि वेदवह्नय एव च॥ ४-१३७॥

श्रवणाक्षिवेदबाण वेदेषु सप्तकस्तथा।
षष्ठाष्टसप्तमाः प्रोक्ता वह्न्यग्नीषु मुनिस्तथा॥ ४-१३८॥

मुनीषु बाणवेदाश्च मुन्यग्निवह्नयस्तथा।
वह्निवेदबाणसप्त अष्टाङ्कवेदबाणकाः॥ ४-१३९॥

पञ्चसप्तानलाग्निश्च वह्नीषुबाणबाणकाः।
बाणवेदकान्तवेदकान्तश्रुतिचतुर्थकाः॥ ४-१४०॥

रामषीमुनिषष्ठाश्च सप्तेषु रामवेदकाः।

वेदसप्ताष्टवसवो नवमाष्टमसप्तमाः॥ ४-१४१॥

वह्न्यग्निवेदबाणाश्च वस्वष्टानलवेदकाः।

सप्ताष्टमाश्च सम्प्रोक्ता गृहाङ्काः परिकीतीताः॥ ४-१४२॥

येषां मनसि या विद्या सदा तिष्ठति भावने।

तामाश्रित्य जपेद्विद्वान् तदा सिध्यति निश्चितम्॥ ४-१४३॥

स्वनाम देवतानाम पूरयेत् षोडशाङ्ककैः।

हरेन्निजगृहस्थेन चाङ्केन साधकोत्तमः॥ ४-१४४॥

कृतशेषं बहुतरं शुभं देवस्य निश्चितम्।

अल्पाङ्कसाधकस्यापि सौख्यमेव न संशयः॥ ४-१४५॥

उक्तक्रमेण गणयेत् साधकः स्थिरमानसः।

महाविद्यानायिकादियज्ञभूतादिसाधने॥ ४-१४६॥

सम्प्रोक्तं चक्रसारञ्च सर्वतन्त्रेषु गोपितम्।

ततश्चक्रविचारेण सिद्धिमाप्नोति साधकः॥ ४-१४७॥

चतुश्चक्रं प्रवक्ष्यामि शृणुष्व पार्वतीपते।
वामदक्षिणयोगेन रेखापञ्चकमालिखेत्॥ ४-१४८॥

पूर्वपश्चिमभेदेन रेखाः पञ्च समालिखेत्।
चतुष्कोष्ठे दक्षभागे चतुष्कोष्ठे च मन्त्रवित्॥ ४-१४९॥

तदधश्च चतुष्कोष्ठे तद्वामस्थे चतुर्गृहे।
प्रलिखेत् क्रमशश्चाद्ये चतुर्मन्दिरमध्यके॥ ४-१५०॥

शीघ्रञ्च शीतलं जप्तं सिद्धञ्चापि ततः परम्।
अकारञ्च उकारञ्च ॡसोकारं ततः परम्॥ ४-१५१॥

ऊद्र्ध्वस्थमिति वर्णं तु शीतलस्थं शृणु प्रभो।
अकारञ्च उकारञ्च(ऌ ॡ)सौकारञ्च ततः परम्॥ ४-१५२॥

तदधो जपगेहस्थं वर्णं शृणु महाप्रभो।
इकारञ्च ऋकारञ्च एकारञ्च ततः परम्॥ ४-१५३॥

सिद्धगेहस्थितं वर्णं शृणु सर्वसुखप्रदम्।

तद्दक्षिणचतुर्गेहे स्थितान् वर्णान् वदामि तान्॥ ४-१५४॥

आह्लादश्च प्रत्ययश्च मुखश्च शुद्धमित्यपि।
एतत्कुलस्थान् सर्वार्णान् शुभाशुभफलप्रदान्॥ ४-१५५॥

ककारश्च ऋकारश्च ॠकारश्च ञकारकम्।
आह्लादस्थमिति प्रोक्तं प्राप्तिमात्रेण सिद्धिदम्॥ ४-१५६॥

प्रत्ययस्थं गकारश्च घकारं टठमित्यपि।
मुखस्थं हि ङकारश्च चकारं डढमित्यपि॥ ४-१५७॥

शुद्धस्थश्च उकारश्च जकारं णतमित्यपि।
तदधःस्थं चतुर्गेहं लौकिकं सात्त्विकं तथा॥ ४-१५८॥

मानसिकं राजसिकं चतुर्गेहस्थितं त्विमम्।
लौकिकस्थं थकारश्च दकारश्च मकारकम्॥ ४-१५९॥

सात्त्विकस्थं धकारश्च लकारश्च यकारकम्।
मानसिकश्च श्रृणु भो पकारश्च फमित्यपि॥ ४-१६०॥

शृणु राजसिकत्वञ्च भकारं वनमित्यपि।

तन्नामस्थं चतुर्गेहं शृणु पञ्चानन प्रभो॥ ४-१६१॥

सुप्तं क्षिप्तञ्च लिप्तञ्च दुष्टमन्त्रं प्रकीतीतम्।

ऊद्र्ध्वगेहस्थिता वर्णमन्त्रान् गृह्णाति यो नरः॥ ४-१६२॥

वर्जयित्वा सुप्तमन्त्रं क्षिप्तं लिप्तञ्च दुष्टकम्।

एहिके सिद्धिमाप्नोति परे मुक्तिमवाप्नुयात्॥ ४-१६३॥

यद्यभाग्यवशात्सुप्तादिषु गेहेषु लभ्यते।

तदा मन्त्रं शोधयेद् वै सुप्तस्तम्भितकीलितैः॥ ४-१६४॥

वद्धीतैर्दोषजालस्थैरशुभं भूतशुद्धये।

भूतलिप्या पुटीकृत्या जप्त्वा सिद्धिं ततो लभेत्॥ ४-१६५॥

न तु वा वर्जयेद् गेहं चतुष्कं वर्णवेष्टितम्।

सुप्तगेहस्थितं वर्णं शृणु पञ्चानन प्रभो॥ ४-१६६॥

वकारञ्च हकारञ्च ततोऽन्यद्गृहसंस्थितम्।

शकारञ्च लकारञ्च क्षिप्तगेहस्थितद्वयम्॥ ४-१६७॥

धकारञ्च क्षकारञ्च लिप्तगेहस्थितं द्वयम्।

दुष्टगेहस्थितं नाथ शकारगगनं तथा॥ ४-१६८॥

निजं सौभाग्ययुक्तं यत्तन्मन्त्रं तदुपाश्रयेत्।

सूक्ष्मचक्रं प्रवक्ष्यामि हिताहितफलप्रदम्॥ ४-१६९॥

एतदुक्ताक्षरं शम्भो गृहीत्वा जपमाचरेत्।

वामदक्षिणमारभ्य सप्तरेखाः समालिखेत्॥ ४-१७०॥

भित्वा तदङ्कान् मन्त्री च रेखाचतुष्टयं लिखेत्।

दक्षिणादिक्रमेणैव बद्धमन्दिरमध्यके॥ ४-१७१॥

मन्त्राक्षराणि विलिखेदङ्काचारेण साधकः।

तदङ्कं शृणु यत्नेन नराणां भुक्तिमुक्तिदम्॥ ४-१७२॥

प्रथमे मन्दिरे नाथ भुजाङ्कं विलिखेत्ततः।

विष्णुमन्त्रादिगेहे च वेदाङ्कं विलिखेद् बुधः॥ ४-१७३॥

तत्पश्चादष्टमाङ्कं च भुजाधः षष्ठमेव च।

तद्गेहं शङ्करस्यापि तत्पश्चाद्दशमं गृहे॥ ४-१७४॥

तत्पश्चाद्द्वादशाङ्कञ्च नायिकास्थानमेव च।
षष्ठाधोयुगलाङ्कञ्च तत्पश्चादष्टमं तथा॥ ४-१७५॥

तद्गृहं शम्भुना व्यस्तं तत्पश्चादष्टमं तथा।
युगलाधोगृहे चापि चतुर्दशाक्षरं तथा॥ ४-१७६॥

तद्दक्षिणे सूर्यगेहं चतुर्द्दशाक्षरान्वितम्।
तत्पश्चात् षोडशाङ्कञ्च पुनरङ्कं लिखेत्ततः॥ ४-१७७॥

तद्दक्षिणे वेदवर्णं तत्पश्चादष्टमाक्षरम्।
ब्रह्ममन्दिरमेवं तत् षोडशाधः पुनः श्रृणु॥ ४-१७८॥

अष्टमाङ्कं ततो युग्ममष्टादशाक्षरं ततः।
प्रथमस्थं द्वितीयस्थं गृह्णीयाद् शुभदं स्मृतम्॥ ४-१७९॥

तृतीयस्थं महापापं सर्वमन्त्रेषु कीतीतम्।
द्वितीयं प्रथमं दुःखं तृतीयं सर्वभाग्यदम्॥ ४-१८०॥

तृतीयञ्च तथा नाथ गृह्णीयान्निजसिद्धये।
तृतीये प्रथमं भद्रं द्वितीयं दुःखदायकम्॥ ४-१८१॥

तृतीयञ्च तथा प्रोक्तमष्टाक्षरगृहं भयम्।
चतुर्दशाक्षरं भद्रं सूर्यमन्त्रं द्वितीयकम्॥ ४-१८२॥

तृतीयस्थं षोडशाङ्के महाकल्याणदायकम्।
अष्टमूर्तीः षोडशाङ्के चतुर्थे शत्रुमारणम्॥ ४-१८३॥

तृतीयगृहमध्यस्थं ब्रह्मकल्याणदायकम्।
वस्वक्षरं सर्वशेषगृहमध्यस्थमेव च॥ ४-१८४॥

अष्टमञ्च महाभद्रं क्षमं चित्तभयप्रदम्।
अष्टादशाङ्कं शुभदं शेषगेहत्रये तथा॥ ४-१८५॥

येषां यदक्षराणाञ्च मन्त्रं चेतसि वर्तते।
एतत् शुभाशुभं ज्ञात्वा मन्त्रवर्णं तदाभ्यसेत्॥ ४-१८६॥

विष्णुमन्त्रस्थितं मन्त्रं नायिकास्थं शिवस्थकम्।
सूर्यस्थं ब्रह्मसंस्थञ्च गृह्णीयात् शाक्त एव च॥ ४-१८७॥

वैष्णवो विष्णुमन्त्रार्थं शैवः शिवमुपाश्रयेत्।
नायिकामन्त्रजापी च नायिकार्णं सदाभ्यसेत्॥ ४-१८८॥

सूर्यमन्त्रविचारार्थी सूर्यमन्त्रं समाश्रयेत्।
एकस्थं युगलस्थानं तृतीयस्थानमेव च॥ ४-१८९॥

ज्ञात्त्वा मन्त्रं प्रगृह्णीयात् अन्यथा चाशुभं भवेत्।
एतदन्यतमं मन्त्रं दिव्यवीरेषु गीयते॥ ४-१९०॥

ततश्चक्रं पशोरुक्तं सर्वसिद्धिप्रदं ध्रुवम्।
एतच्चक्रप्रभावेण पशुर्वीरोपमः स्मृतः॥ ४-१९१॥

सर्वसिद्धियुतो भूत्वा वत्सरात्तां प्रपश्यति॥ ४-१९२॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महामन्त्रोद्दीपने सर्वचक्रानुष्ठाने
सिद्धमन्त्रप्रकरणे भावनिर्णये भैरवीभैरवसंवादे चतुर्थः
पटलः॥ ४॥

## अथ पञ्चमः पटलः

महाकथहचक्रार्थं सर्वचक्रोत्तमोत्तमम्।
यस्य विचारमात्रेण कामरूपी भवेन्नरः॥ १॥

ततः प्रकारं वीराणां नाथः त्वं क्रमशः शृणु।
चतुरस्त्रे लिखेत् वर्णांश्चतुःकोष्ठसमन्विते॥ ५-२॥

चतुःकोष्ठे चतुःकोष्ठे चतुश्चतुर्गृहान्वितम्।
मन्दिरं षोडशं प्रोक्तं सर्वकामार्थसिद्धिदम्॥ ५-३॥

चतुरस्त्रं लिखेत्कोष्ठं चतुःकोष्ठसमन्वितम्।
पुनश्चतुष्कं तत्रापि लिखेद्धीमान् क्रमेण तु॥ ५-४॥

सर्वेषु गृहमध्येषु प्रादक्षिण्यक्रमेण तु।
अकारादिक्षकारान्तं लिखित्वा गणयेत्ततः॥ ५-५॥

चन्द्रमग्ंनि रुद्रवर्णं नवमं युगलं तथा।
वेदमर्कं दशरसं वसुं षोडशमेव च॥ ५-६॥

चतुर्दशं भौतिकञ्च सप्तपञ्चदशेति च।

वह्नीन्दुकोष्ठगं वर्णं सङ्केताङ्कैः मयोदितम्॥ ५-७॥

एतदङ्कस्थितं वर्णं गणयेत्तदनन्तरम्।
नामाद्यक्षरमारभ्य यावन्मन्त्रादिमाक्षरम्॥ ५-८॥

चतुर्भीः कोष्ठैरेकैकमिति कोष्ठचतुष्टयम्।
पुनः कोष्ठगकोष्ठेषु सत्यतो नाम्न आदितः॥ ५-९॥

सिद्धः साध्यः सुसिद्धोऽरिः क्रमशो गणयेत्सुधीः।
सिद्धः सिध्यति कालेन साध्यस्तु जपहोमतः॥ ५-१०॥

सुसिद्धोऽग्रहणाज्ज्ञानी शत्रुर्हन्ति स्वमायुषम्।
सिद्धार्णो बान्धवः प्रोक्तः साध्यः सेवक उच्यते॥ ५-११॥

सिद्धकोष्ठस्थिता वर्णा बान्धवाः सर्वकामदाः।
जपेन बहुसिद्धिः स्यात् सेवकोऽधिकसेवया॥ ५-१२॥

पुष्णाति पोषकोऽभीष्टो घातको नाशयेद् ध्रुवम्।
सिद्धः सिद्धो यथोक्तेन द्विगुणः सिद्धसाधकः॥ ५-१३॥

सिद्धः सुसिद्धोद्र्ध्वजपात् सिद्धारिर्हन्ति बान्धवान्।
साध्यः सिद्धो द्विगुणकः साध्ये साध्यो निरर्थकः॥ ५-१४॥

तत्सुसिद्धो द्विगुणजपात् साध्यारिर्हन्ति गोत्रजान्।
सुसिद्धसिद्धोद्र्ध्वजपात्तत्साध्यो द्विगुणाधिकात्॥ ५-१५॥

तत्सुसिद्धो ग्रहादेव सुसिद्धारिः स्वगोत्रहा।
अरिः सिद्धः सुतान् हन्यादरिसाध्यस्तु कन्यकाः॥ ५-१६॥

तत्सुसिद्धिस्तु पत्नीघ्नस्तदरिर्हन्ति गोत्रजान्।
यदि वैरिमनोर्हस्तस्थितः स्यात् साधको भुवि॥ ५-१७॥

तदन्ते रक्षणार्थं हि कुर्यादेवं क्रियादिकम्।
तत्प्रकारं महावीर श्रृणुष्व गिरिजापते॥ ५-१८॥

वटपत्रे लिखित्वारिमन्त्रं स्त्रोतसि निक्षिपेत्।
एवं मन्त्रविमुक्तः स्यान्ममाज्ञावशहेतुना॥ ५-१९॥

पुनः प्रकारं विप्रस्तु गवां क्षीरे मुदान्वितः।
द्रोणमिते जपेन्मन्त्रमष्टोत्तरसमन्वितम्॥ ५-२०॥

पीत्वा क्षीरं मनोमध्ये ध्यात्वा मन्त्रं समुच्चरन्।

सन्त्यजन्नीरमध्ये तु वैरिमन्त्रप्रमुक्तये॥ ५-२१॥

पुनः प्रकारं वक्ष्यामि त्रिरात्रमेकवासरम्।

उपोष्य विधिनानेन पूजां कृत्वा शनौ कुजे॥ ५-२२॥

सहस्रं वा शतं वापि अष्टोत्तरसमन्वितम्।

जपित्वा सन्त्यजेन्मन्त्रं क्षीरसागरमण्डले॥ ५-२३॥

अथवा तद्गुरोः स्थाने चान्यस्थाने च वा पुनः।

विचार्य मन्त्रवर्णञ्च गृहीत्वा मोक्षमाप्नुयात्॥ ५-२४॥

स्वप्ने यदि महामन्त्रं प्राप्नोति साधकोत्तमः।

तदा सिद्धिमवाप्नोति सत्यं सत्यं कुलेश्वर॥ ५-२५॥

तन्मन्त्रं कौलिके नाथ गुरोर्यत्नेन सङ्ग्रही।

यदा भवति सिद्धिः स्यात्तत्क्षणान्नात्र संशयः॥ ५-२६॥

अरिं वा देवदेवेश यदि विग्राहयेन्मनुम्।

अन्यमन्त्रं विचार्यैव विष्णोश्चैव शिवस्य च॥ ५-२७॥

शक्तिमन्त्रं यदि रिपुं तदा एवं प्रकारकम्।

आदावन्ते च मध्ये च ओं वौषट् स्वाहयान्वितम्॥ ५-२८॥

कृत्वा जप्त्वा महासिद्धिं कामरूपस्थितामिव।

प्राप्नोति नात्र सन्देहो ममाज्ञा वरवर्णीनी॥ ५-२९॥

श्रृणु चक्रफलं नाथ विचाराचारमङ्गलम्।

प्रासादञ्च महामन्त्रं सद्गुरोर्मुखपङ्कजात्॥ ५-३०॥

लभ्यते यदि भाग्येन सिद्धिरेव न संशयः।

तदभावे सिद्धिमन्त्रं दृष्टादृष्टफलोन्मुखम्॥ ५-३१॥

महाचमत्कारकरं हृदयोल्लासवर्द्धनम्।

स्वप्ने वा सद्गुरोः स्थाने प्राप्तिमात्रेण मुक्तिदम्॥ ५-३२॥

तन्मन्त्रं वर्जयित्वा च घोरान्धकाररौरवे।

वसन्ति सर्वकालं च ममाज्ञावशभागिनी॥ ५-३३॥

तत्रैव चक्रसारादि विचारं व्यर्थभाषणम्।

अरिमन्त्रं महापुण्यं सर्वमन्त्रोत्तमोत्तमम्॥ ५-३४॥

कोटिजन्मार्जितैः पुण्यैर्महाविद्याश्रयी भवेत्।

स्वप्ने कोटिकुलोत्पन्नैः पुण्यकोटिफलैरपि॥ ५-३५॥

प्राप्नोति साधको मन्त्रं भुक्तये मुक्तये ध्रुवम्।

ततश्चक्रं न विचार्यं विचार्य मरणं भवेत्॥ ५-३६॥

किन्तु चक्रविचारञ्च यदि स्वप्ने चमत्कृतम्।

एतेषां चक्रवर्णानां विचारादष्टसिद्धिदम्॥ ५-३७॥

वायुं मुक्तिं धनं योगसिद्धिमृद्धिं धनं शुभम्।

धर्मदेहपवित्रञ्च अकाले मृत्युनाशनम्॥ ५-३८॥

वाञ्छाफलप्रदं गौरीचरणाम्भोजदर्शनम्।

भुक्तिं मुक्तिं हरस्थानं प्राप्नोति नात्र संशयः॥ ५-३९॥

एषां चक्रादिकालञ्च क्रमशो गणितं फलम्।

यदि सर्वविचारञ्च करोति साधकोत्तमः॥ ५-४०॥

तदा सर्वफलं नित्यं प्राप्नोति नात्र संशयः।

महाव्रतं विवेकञ्च विचाराल्लभते ध्रुवम्॥ ५-४१॥

अकस्मात् सिद्धिमाप्नोति चक्रराजं विचारतः।

सर्वे देवाः प्रशंसन्ति चक्रमन्त्राश्रितं जलम्॥ ५-४२॥

वाक्यसिद्धिर्भवेत् क्षिप्रं प्राणायामादिसिद्धिभाक्।

सर्वेषां प्रणमेद् भूमौ विचरेत् साधको बली॥ ५-४३॥

इति ते कथितं नाथ चक्रं षोडशमङ्गलम्।

चक्राणां लोकनादेव सायुज्यपदमाप्नुयात्॥ ५-४४॥

अतो विचारं सर्वत्र सर्वचक्रादिमङ्गलम्॥ ५-४५॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सर्वचक्रानुष्ठाने।

सिद्धितन्त्रप्रकरणे पञ्चम पटलः॥ ५॥

अथ षष्ठः पटलः

भैरव उवाच

अथ भावं वद श्रीदे दिव्यवीरपशुक्रमात्।

पशूनां परमाश्चर्यभावं श्रोतुं समुत्सुकः॥ ६-१॥

इच्छाम्याह्लादजलधौ स्थितोऽहं जगदीश्वरि।

यदि भाग्यवशादाज्ञासारं चिन्तय सिद्धये॥ ६-२॥

महाभैरव्युवाच

पशुनाथ वीरनाथ दिव्यनाथ कृपानिधे।

प्रकाशहृदयोल्लास चन्द्रशेखर तच्छृणु॥ ६-३॥

काली कलालताकारं तपस्याद्वयसङ्गतिम्।

पशुभावस्थितां नाथ देवतां श्रृणु विस्तरात्॥ ६-४॥

दुर्गापूजां शिवपूजां यः करोति पशूत्तमः।

अवश्यं हि यः करोति पशुरुत्तमः स्मृतः॥ ६-५॥

केवलं शिवपूजाञ्च करोति यदि साधकः।

पशूनां मध्यमः श्रीमान् शिवया सह चोत्तमः॥ ६-६॥

केवलं वैष्णवोऽधीशः पशूनां मध्यमः स्मृतः।
भूतानां देवतानाञ्च सेवां कुर्वन्ति ये सदा॥ ६-७॥

पशूनां मध्यमाः प्रोक्तं नरकस्था न संशयः।
त्वत्सेवां मम सेवाञ्च विष्णुब्रह्मादिसेवनम्॥ ६-८॥

कृत्वान्यसर्वभूतानां नायिकानां महाप्रभो।
यक्षिणीनां भूतिनीनां ततः सेवा शुभप्रदा॥ ६-९॥

यः पशुर्ब्रह्मकृष्णादि सेवां कुर्वन्ति ये सदा।
तथा श्रीतारकब्रह्म सेवाद्वये नरोत्तमाः॥ ६-१०॥

तेषामसाध्या भूतादिदेवताः सर्वकामदाः।
वर्जयेत् पशुमार्गेण विष्णुसेवापरो जनः॥ ६-११॥

प्रवक्तव्यञ्च पटले तेषां तेषां ततस्ततः।
विधिना विधिना नाथ क्रमशः शृणु वल्लभ॥ ६-१२॥

अतः प्रातः समुत्त्थाय पशुरुत्तमपण्डितः।

गुरूणां चरणाम्भोजमङ्गलं शीर्षपङ्कजे॥ ६-१३॥

विभाव्य पुनरेकं हि श्रीपादं भावयेद् यदि।

पूजयित्वा च वीरं वै उपहारैर्न मे स्तवैः॥ ६-१४॥

त्रैलोक्यं तेजसा व्याप्तं मण्डलस्थां महोत्सवाम्।

तडित्कोटिप्रभादीप्तिं चन्द्रकोटिसुशीतलाम्॥ ६-१५॥

सार्द्धत्रिवलयाकारां स्वयम्भूलिङ्गवेष्टिताम्।

उत्त्थापयेन्महादेवीं महारक्तां मनोन्मयीम्॥ ६-१६॥

श्वासोच्छ्वासद्वयावृत्तिं द्वादशाङ्गुलरूपिणीम्।

योगिनीं खेचरीं वायुरूपां मूलाम्बुजस्थिताम्॥ ६-१७॥

चतुर्वर्णस्वरूपान्तां वकारादिषसान्तकाम्।

कोटिकोटिसहस्त्रार्ककिरणां कुलमोहिनीम्॥ ६-१८॥

महासूक्ष्मपथप्रान्तवान्तरान्तरगामिनीम्।

त्रैलोक्यरक्षितां वाक्यदेवतां शम्भुरूपिणीम्॥ ६-१९॥

महाबुद्धिप्रदां देवीं सहस्त्रदलगामिनीम्।

महासूक्ष्मपथे तेजोमयीं मृत्युस्वरूपिणीम्॥ ६-२०॥

कालरूपां सर्वरूपां सर्वत्र सर्वचिन्मयीम्।

ध्यात्वा पुनः पुनः शीर्षे सुधाब्धौ विनिवेष्टिताम्॥ ६-२१॥

सुधापानं कारयित्वा पुनः स्थाने समानयेत्।

समानयनकाले तु सुषुम्नामध्यमध्यके॥ ६-२२॥

अमृताभिप्लुतां कृत्वा पुनः स्थानेषु पूजयेत्।

ऊद्र्ध्वोद्गमनकाले तु महातेजोमयीं स्मरेत्॥ ६-२३॥

प्रतिप्रयाणकाले तु सुधाधाराभिराप्लुताम्।

महाकुलकुण्डलिनीममृतानन्दविग्रहाम्॥ ६-२४॥

ध्यात्वा ध्यात्वा पुनर्ध्यात्वा सर्वसिद्धिश्वरो भवेत्।

तस्मिन्स्थाने महादेवीं विभाव्य किरणोज्ज्वलाम्॥ ६-२५॥

अमृतानन्दमुक्तिं तां पूजयित्वा शुभां मुदा।

मानसोच्चारबीजेन मायां वा कामबीजकम्॥ ६-२६॥

पञ्चाशद्वर्णमालाभिर्जप्त्वानुलोमसत्पथा।
विलोमेन पुनर्जप्त्वा सर्वत्र जयदं स्तवम्॥ ६-२७॥

पठित्वा सिद्धिमाप्नोति तत्स्तोत्रं शृणु भैरव॥ ६-२८॥

जन्मोद्धारनिरक्षिणीहतरुणी वेदादिबीजादिमा।
नित्यं चेतसि भाव्यते भुवि कदा सद्वाक्यसञ्चारिणी।
मां पातु प्रियदा स विपदं संहारयित्रि धरे।
धात्रि त्वं स्वयमादिदेववनितादीनातिदीनं पशुम्॥ ६-२९॥

रक्ताभामृतचन्द्रिकालिपिमयी सर्पाकृतिनीद्रिता।
जाग्रत्कूर्मसमाश्रिता भगवती त्वं मां समालोकय।
मांसोद्गन्धकुगन्धदोषजडितं वेदादिकार्यान्वित।
स्वल्पान्यामलचन्द्रकोटिकिरणैर्नीत्यं शरीरं कुरु॥ ६-३०॥

सिद्धार्थी निजदोषवित् स्थलगतिर्व्याजीयते विद्यया।
कुण्डल्याकुलमार्गमुक्तनगरीमायाकुमार्गः श्रिया।
यद्येवं भजति प्रभातसमये मध्याह्नकालेऽथवा।

नित्यं यः कुलकुण्डलीजपपदाम्भोजं स सिद्धो भवेत्॥ ६-३१॥

वाय्वाकाशचतुर्दलेऽतिविमले वाञ्छाफलान्यालके।
नित्यं सम्प्रति नित्यदेहघटिता शाङ्केतिताभाविता।
विद्याकुण्डलमानिनी स्वजननी मायाक्रिया भाव्यते
यैस्तैः सिद्धकुलोद्भवैः प्रणतिभिः सत्स्तोत्रकैः शंभुभिः॥ ६-३२
॥

धाताशङ्कर मोहिनीत्रिभुवनच्छायापटोद्गामिनी।
संसारादिमहासुखप्रहरणी तत्रस्थिता योगिनी।
सर्वग्रन्थिविभेदिनी स्वभुजगा सूक्ष्मातिसूक्ष्मापरा।
ब्रह्मज्ञानविनोदिनी कुलकुटी व्याघातिनी भाव्यते॥ ६-३३॥

वन्दे श्रीकुलकुण्डलीत्रिवलिभिः साङ्गैः स्वयम्भूं प्रिय।
प्रावेष्ट्याम्बरमारचित्तचपला बालाबलानिष्कला।
या देवी परिभाति वेदवदना संभाविनी तापिनी।
इष्टानां शिरसि स्वयम्भुवनितां संभावयामि क्रियाम्॥ ६-३४॥

वाणीकोटिमृदङ्गनादमदनानिश्रेणिकोटिध्वनिः।
प्राणेशीरसराशमूलकमलोल्लासैकपूर्णानना।

आषाढोद्भवमेघवाजनियुतध्वान्ताननास्थायिनी।
माता सा परिपातु सूक्ष्मपथगे मां योगिनां शङ्करः॥ ६-३५॥

त्वामाश्रित्य नरा व्रजन्ति सहसा वैकुण्ठकैलासयोः।
आनन्दैकविलासिनीं शशिशतानन्दाननां कारणाम्।
मातः श्रीकुलकुण्डली प्रियकरे काली कुलोद्दीपने।
तत्स्थानं प्रणमामि भद्रवनिते मामुद्धर त्वं पशुम्॥ ६-३६॥

कुण्डलीशक्तिमार्गस्थं स्तोत्राष्टकमहाफलम्।
यतः पठेत् प्रातरुत्थाय स योगी भवति ध्रुवम्॥ ६-३७॥

क्षणादेव हि पाठेन कविनाथो भवेदिह।
पठेत् श्रीकुण्डलो योगो ब्रह्मलीनो भवेत् महान्॥ ६-३८॥

इति ते कथितं नाथ कुण्डलीकोमलं स्तवम्।
एतत्स्तोत्रप्रसादेन देवेषु गुरुगीष्पतिः॥ ६-३९॥

सर्वे देवाः सिद्धियुताः अस्याः स्तोत्रप्रसादतः।
द्विपरार्द्धं चिरंजीवी ब्रह्मा सर्वसुरेश्वरः॥ ६-४०॥

त्वष्टापि मम निकटे स्थितो भगवतीपतिः।
मां विद्धि परमां शक्तिं स्थूलसूक्ष्मस्वरूपिणीम्॥ ६-४१॥

सर्वप्रकाशकरणीं विन्ध्यपर्वतवासिनीम्।
हिमालयसुतां सिद्धां सिद्धमन्त्रस्वरूपिणीम्॥ ६-४२॥

वेदान्तशक्तितन्त्रस्थां कुलतन्त्रार्थगामिनीम्।
रुद्रयामलमध्यस्थां स्थितिस्थापकभाविनीम्॥ ६-४३॥

पञ्चमुद्रास्वरूपाञ्च शक्तियामलमालिनीम्।
रत्नमालावलाकोट्यां चन्द्रसूर्यप्रकाशिनीम्॥ ६-४४॥

सर्वभूतमहाबुद्धिदायिनीं दानवापहाम्।
स्थित्युत्पत्तिलयकारीं करुणासागरस्थिताम्॥ ६-४५॥

महामोहनिवासाढ्यां दामोदरशरीरगाम्।
छत्रचामररत्नाढ्य महाशूलकरां पराम्॥ ६-४६॥

ज्ञानदां वृद्धिदां ज्ञानरत्नमालाकलापदाम्।
सर्वतेजःस्वरूपाभामनन्तकोटिविग्रहाम्॥ ६-४७॥

दरिद्रधनदां लक्ष्मीं नारायणमनोरमाम्।
सदा भावय शम्भो त्वं योगनायकपण्डित॥ ६-४८॥

पुनर्भावं पशोरेव श्रृणु सादरपूर्वकम्।
अकस्मात् सिद्धिमाप्नोति पशुर्नारायणोपमः॥ ६-४९॥

वैकुण्ठनगरे याति चतुर्भुजकलेवरः।
शङ्खचक्रगदापद्महस्तो गरुडवाहनः॥ ६-५०॥

महाधर्मस्वरूपोऽसौ महाविद्याप्रसादतः।
पशुभावं महाभावं भावानां सिद्धिदं पुनः॥ ६-५१॥

आदौ भावं पशोः कृत्वा पश्चात् कुर्यादवश्यकम्।
वीरभावं महाभावं सर्वभावोत्तमोत्तमम्॥ ६-५२॥

तत्पश्चादतिसौन्दर्यं दिव्यभावं महाफलम्।
फलाकाङ्क्षी मोक्षगश्च सर्वभूतहिते रतः॥ ६-५३॥

विद्याकाङ्क्षी धनाकाङ्क्षी रत्नाकाङ्क्षी च यो नरः।

कुर्याद् भावत्रयं दिव्यं भावसाधनमुत्तमम्॥ ६-५४॥

भावेन लभते वाद्यं धनं रत्नं महाफलम्।
कोटिगोदानजैः पुण्यैः कोटिशालग्रामदानजैः॥ ६-५५॥

वाराणस्यां कोटिलिङ्गपूजनेन च यत्फलम्।
तत्फलं लभते मर्त्यः क्षणादेव न संशयः॥ ६-५६॥

आदौ दशमदण्डे तु पशुभावमथापि वा।
मध्याह्ने दशदण्डे तु वीरभावमुदाहृतम्॥ ६-५७॥

सायाह्नदशदण्डे तु दिव्यभावं शुभप्रदम्।
अथवा पशुभावस्थो यजेदिष्टादिदेवताम्॥ ६-५८॥

जन्मावधि यजेन्मन्त्री महासिद्धिमवाप्नुयात्।
सर्वेषां गुरुरूपः स्यादैश्वर्यञ्च दिने दिने॥ ६-५९॥

यदि गुरुस्वभावः स्यात्तदा मधुमतीं लभेत्।
यदि विवेकी निर्याति महावननिवासवान्॥ ६-६०॥

ब्रह्मचर्यव्रतस्थो वा अथवा स्वपुरे वसन्।

पीठब्राह्मणमात्रेण महाषोढाश्रमेण च॥ ६-६१॥

पशुभावस्थितो मन्त्री सिद्धविद्यामवाप्नुयात्।

यदि पूर्वापरस्थाञ्च महाकौलिकदेवताम्॥ ६-६२॥

कुलमार्गस्थितो मन्त्री सिद्धिमाप्नोति निश्चितम्।

यदि विद्याः प्रसीदन्ति वीरभावं तदा लभेत्॥ ६-६३॥

वीरभावप्रसादेन दिव्यभावमवाप्नुयात्।

दिव्यभावं वीरभावं ये गृह्णन्ति नरोत्तमाः॥ ६-६४॥

वाञ्छाकल्पद्रुमलतापतयस्ते न संशयः।

आश्रमी ध्याननिष्ठश्च मन्त्रतन्त्रविशारदः॥ ६-६५॥

भूत्वा वसेन्महापीठं सदा ज्ञानी भवेद् यतिः।

किमन्येन फलेनापि यदि भावादिकं लभेत्॥ ६-६६॥

भावग्रहणमात्रेण मम ज्ञानी भवेन्नरः।

वाक्यसिद्धिर्भवेत् क्षिप्रं वाणी हृदयगामिनी॥ ६-६७॥

नारायणं परिहाय लक्ष्मीस्तिष्ठति मन्दिरे।

मम पूर्णं तु मादृष्टी तस्य देहे न संशयः॥ ६-६८॥

अवश्यं सिद्धिमाप्नोति सत्यं सत्यं न संशयः।

महाभैरव उवाच

सूचितं तु महादेवि कथयस्वानुकम्पया॥ ६-६९॥

सर्वतन्त्रेषु विद्यासु भावसङ्केतमेव हि।

तथापि शक्तितन्त्रेषु विशेषात् सर्वसिद्धिदम्॥ ६-७०॥

भावविद्याविधिं विद्ये विस्तार्य भावसाधनम्।

आनन्दभैरव उवाच

भावस्तु त्रिविधो देव दिव्यवीरपशुक्रमात्॥ ६-७१॥

गुरुरस्य त्रिधा चात्र तथैव मन्त्रदेवताः।

दिव्यभावो महादेव श्रेयसां सर्वसिद्धिदम्॥ ६-७२॥

द्वितीयो मध्यमः प्रोक्तस्तृतीयः सर्वनिन्दितः।
बहुजपात्तथाहोमात् कायक्लेशादिविस्तरैः॥ ६-७३॥

न भावेन बिना देवि तन्त्रमन्त्राः फलप्रदाः।
किं वीरसाधनेनैव मोक्षविद्याकुलेन किम्॥ ६-७४॥

किं पीठपूजनेनैव किं कन्याभोजनादिभिः।
स्वयोषित्प्रीतिदानेन किं परेषां तथैव च॥ ६-७५॥

किं जितेन्द्रियभावेन किं कुलाचारकर्मणा।
यदि भावो विशुद्धार्थो न स्यात् कुलपरायणः॥ ६-७६॥

भावेन लभते मुक्तिं भावेन कुलवर्द्धनम्।
भावेन गोत्रवृद्धिः स्याद् भावेन कुलशोधनम्॥ ६-७७॥

किं तथा पूजनेनैव यदि भावो न जायते।
केन वा पूज्यते विद्या केन वा पूज्यते मनुः॥ ६-७८॥

फलाभावश्च देवेश भावाभावात् प्रजायते।
एतन्मन्त्रस्य कथने शङ्कते मम मानसः॥ ६-७९॥

त्रिलोकं सञ्जयेत् प्रायः सर्वरत्नसमागमः।
नावीक्ष्य निर्जनं कुर्यात् कथं तत् कथयामि ते॥ ६-८०॥

श्रीनन्दभैरव उवाच

त्वत्प्रसादान्महादेवि विद्यास्वप्नप्रबोधिनि।
सर्वपञ्चप्रपञ्चानां दीक्षा देया महेश्वरि॥ ६-८१॥

यद्यतो देव सर्वेषां भूतानां स्वापकारणम्।
करोमि कथय त्वं मां भावमार्गोत्तमोत्तमम्॥ ६-८२॥

श्रीमहाभैरव्युवाच

प्रथमं दिव्यभावस्तु कौलिके श‍ृणु यत्नतः।
सर्वदेवाचीतां विद्यां तेजःपुञ्जप्रपूरिताम्॥ ६-८३॥

तेजोमयीं जगत्सर्वां विभाव्य मूतीकल्पनाम्।
तत्तन्मूतीमयैः रूपैः स्नेहशून्ये न वा पुनः॥ ६-८४॥

आत्मानं तन्मयं कृत्वा सर्वभावं तथैव च।
तत्सर्वां योषितं ध्यात्वा पूजयेद्यतमानसः॥ ६-८५॥

अशेषकुलसम्पन्नां नानाजातिसमुद्भवाम्।
नानादेशोद्भवां वापि सद्गुणालस्य संयुताम्॥ ६-८६॥

द्वितीयवत्सरादूर्ध्वं यावत् स्यादष्टमाब्दकम्।
तावज्जप्त्वा पूजयित्वा कन्यां सुन्दरमोहिनीम्॥ ६-८७॥

दिव्यभावः स्थितः साक्षात्तन्त्रमन्त्रफलं लभेत्।
कुमारीपूजनादेव कुमारीभोजनादिभिः॥ ६-८८॥

एकद्वित्र्यादिबीजानां फलदा नात्र संशयः।
ताभ्यः पुष्पफलं दत्त्वा अनुलेपादिकं तथा॥ ६-८९॥

बलिप्रियञ्च नैवेद्यं दत्त्वा तद्भावभावितः।
मुदा तदङ्गमाल्यानां बालभावविचेष्टितः॥ ६-९०॥

जातिप्रिय कथालापक्रीडाकौतूहलान्वितः।
यथार्थं तत् प्रियं तत्र कृत्त्वा सिद्धीश्वरो भवेत्॥ ६-९१॥

कन्या सर्वसमृद्धिः स्यात् कन्या सर्वपरन्तपः।

होमं मन्त्रार्चनं नित्यक्रियां कौलिकसत्क्रियाम्॥ ६-९२॥

नानाफलं महाधर्मं कुमारीपूजनं बिना।

तत्तदर्द्धफलं नाथ प्राप्नोति साधकोत्तमः॥ ६-९३॥

फलं कोटिगुणं वीरः कुमारीपूजया लभेत्।

कुसुमाञ्जलिपूर्णञ्च कन्यायां कुलपण्डितः॥ ६-९४॥

ददाति यदि तत्पुष्पं कोटिमेरुप्रदो भवेत्।

तज्ज्ञानजं महापुण्यं क्षणादेव समालभेत्॥ ६-९५॥

कुमारी भोजिता येन त्रैलोक्यं तेन भोजितम्।

एकवर्षा भवेत् सन्ध्या द्विवर्षा च सरस्वती॥ ६-९६॥

त्रिवर्षा च त्रिधामूर्तीश्चतुर्वर्षा च कालिका।

सूर्यगा पञ्चवर्षा च षड्वर्षा चैव रोहिणी॥ ६-९७॥

सप्तभिर्मालिनी साक्षादष्टवर्षा च कुब्जिका।

नवभिः कालसन्दात्री दशभिश्चापराजिता॥ ६-९८॥

एकादशे च रुद्राणी द्वादशेऽब्दे तु भैरवी।
त्रयोदशे महालक्ष्मीर्द्वीसप्तपीठनायिका॥ ६-९९॥

क्षेत्रज्ञा पञ्चदशभिः षोडशे चाम्बिका मता।
एवं क्रमेण सम्पूज्य यावत् पुष्पं न विद्यते॥ ६-१००॥

प्रतिपदादिपूर्णान्तं वृद्धिभेदेन पूजयेत्।
महापर्वसु सर्वेषु विशेषाच्च पवित्रके॥ ६-१०१॥

महानवम्यां देवेश कुमारीश्च प्रपूजयेत्।
तस्मात् षोडशपर्यन्तं युवतीति प्रचक्षते॥ ६-१०२॥

तत्र भावप्रकाशः स्यात्स भावः परमो मतः।
रक्षितव्यं प्रयत्नेन रक्षितास्ताः प्रकाशयेत्॥ ६-१०३॥

महापूजादिकं कृत्वा वस्त्रालङ्कारभोजनैः।
पूजयेन्मन्दभाग्योऽपि लभते जयमङ्गलम्॥ ६-१०४॥

अन्येषां कथनेनाथ प्रयोजनमहाफलम्।
विधिना पूजयेद् यस्तु दिव्यवीरपशुस्थितः॥ ६-१०५॥

भावत्रये महासौख्यं दिव्ये सत्कर्म सत्फलम्॥ ६-१०६॥

इति श्री रुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने कुमार्युपचर्याविलासे
सिद्धमन्त्रप्रकरणे भावनिर्णये षष्ठः पटलः॥ ६॥

अथ सप्तमः पटलः

आनन्दभैरवी उवाच

अथ पूजां प्रवक्ष्यामि कुमार्याश्चातिदुर्लभाम्।
व्याधिवर्गविहीनानां शीघ्रं सिद्ध्यति भूतले॥ ७-१॥

तत्प्रकारं महादेव वीराणामधिपाधिप।
पूजास्थानं महापीठं देवालयमथापि वा॥ ७-२॥

सुन्दरीं परमानन्दवर्द्धनीं जयदायिनीम्।
कालरात्रिस्वरूपां श्रीं गौरीं रक्ताङ्गरागिणीम्॥ ७-३॥

कन्यां देवकुलोद्भूतां राक्षसीं वा नरोत्तमाम्।

नटीकन्यां हीनकन्यां तथा कापालिकन्यकाम्॥ ७-४॥

रजकस्यापि कन्यां ते तथा नापितकन्यकाम्।

गोपालकन्यकाञ्चैव तथा ब्राह्मणकन्यकाम्॥ ७-५॥

शूद्रकन्यां वैश्यकन्यां तथा वैद्यकन्यकाम्

चण्डालकन्यकां वापि यत्र कुत्राश्रमे स्थिताम्॥ ७-६॥

सुहृद्वर्गस्य कन्यां च समानीय प्रयत्नतः।

पूजयेत् परमानन्दैरात्मध्यानपरायणः॥ ७-७॥

क्रमशः श्रृणु देवेन्द्र वरहस्तनिषेवित।

परमानन्दसौन्दर्य कारणानन्दविग्रहः॥ ७-८॥

मम पूजां यः करोति प्रत्यहं शुद्धभक्तितः।

तस्यावश्यं कुमारीणां पूजनं भोजनं रवेः॥ ७-९॥

तेजोरूपं विधोश्चाग्नेः सर्वभावे प्रशस्यते।

तत्पूजनात् तदालापाद् भोजनादपि तत् शुभम्॥ ७-१०॥

मम प्रीतिर्भवेत्साक्षाद् देवतागुप्तिसंस्थिता।
बालभैरवदेवस्य कामिनीवटुकस्य च॥ ७-११॥

मत्पुत्रस्य सर्वलोकपूजितस्य महौजसः।
पूजाभिर्विविधैर्दिव्यैः कुमारी देव पूजिता॥ ७-१२॥

कुमारी कन्यका प्रोक्ता सर्वज्ञा जगदीश्वरी।
पूजार्थं सर्वलोकस्य समानीय सुरेश्वराः॥ ७-१३॥

पूजयन्ति महादेवीं गुप्तभावनिवासिनीम्।
सदा भोजनवाञ्छार्घ्यां माल्यसन्तुष्टहासिनीम्॥ ७-१४॥

वृथा न रौति सा देवी कुमारी देवनायिका।
सरस्वतीस्वरूपा च पूज्यते सर्वनायकैः॥ ७-१५॥

शिवभक्तैर्विष्णुभक्तैस्तथान्यदेवपूजितैः।
सर्वलोकैः पूजिता सा चावश्यं पूज्यते बुधैः॥ ७-१६॥

पूजया लभते पूजां पूजया लभते श्रियम्।
पूजया धनमाप्नोति पूजया लभते महीम्॥ ७-१७॥

पूजया लभते लक्ष्मीं सरस्वतीं महौजसम्।
महाविद्याः प्रसीदन्ति सर्वे देवा न संशयः॥ ७-१८॥

बालभैरवब्रह्मेन्द्रा ब्राह्मणा ब्रह्मवादिनः।
रुद्राश्च देववर्गाश्च वैष्णवा विष्णुरूपिणः॥ ७-१९॥

अवताराश्च द्विभुजा विष्णवो मनुशोभिताः।
अन्ये दिक्पालदेवाश्च चराचरगुरुस्तथा॥ ७-२०॥

नानाविद्यायुतास्सर्वे दानवा कूटशालिनः।
अपवर्गस्थिता ये ये ते ते तुष्टा न संशयः॥ ७-२१॥

यद्यहं तुष्टिरूपा हि अन्ये लोके च का कथा।
कुमारी पूजनं कृत्वा त्रैलोक्यं वशमानयेत्॥ ७-२२॥

महाशान्तिर्भवेत् क्षिप्रं सर्वपुण्यं फलप्रदम्।
तत्तन्मन्त्रसदुल्लेखात् क्षणात् पुण्ययुतं भवेत्॥ ७-२३॥

मन्त्रेण पुटितं कृत्वा जप्त्वा सिद्धीश्वरो भवेत्।
यद्यत् प्रकारमुच्चार्य वदामि सुरसुन्दर॥ ७-२४॥

तत्तत् कार्यमवश्यं च भिन्नबुद्धिं न कारयेत्।

भैरव उवाच

अथ बीजप्रभेदञ्च वद शङ्करपूजिते॥ ७-२५॥

यदि मां स्नेहपुञ्जोऽस्ति मत्कुलार्थप्रवेशिनि।
वदस्व परमानन्द भैरवि प्राणवल्लभे॥ ७-२६॥

आनन्दभैरवी उवाच

श‍ृणु नाथ कुलार्थं मे कुमारीपूजने मनुम्।
महामन्त्रं महामन्त्रं सिद्धमन्त्रं न संशयः॥ ७-२७॥

एतन्मन्त्रप्रसादेन जीवन्मुक्तो भवेत् सुधीः।
अन्ते देवीपदं याति सत्यमानन्दभैरव॥ ७-२८॥

एहिकसुखसम्पत्तिर्मधुमत्याः प्रसादकम्।

अवश्यं प्राप्नुयान्मर्त्यो विश्वासं कुरु शङ्कर॥ ७-२९॥

वाग्भवेन पुरः क्षोभं मायाबीजे गुणाष्टकम्।

श्रियोबीजे श्रियोलाभो मायाबीजे रिपुक्षयः॥ ७-३०॥

भैरवेण तु बीजेन खेचरत्वं सुरादिभिः।

कुमारिका ह्यहं नाथ सदा त्वं हि कुमारकः॥ ७-३१॥

अष्टोत्तरशतं वापि एकां वा परिपूजयेत्।

पूजिताः प्रतिपद्यन्ते निर्दहन्त्यवमानिताः॥ ७-३२॥

कुमारी योगिनी साक्षात् कुमारी परदेवता।

असुरा अष्टनागाश्च ये ये दुष्टग्रहा अपि॥ ७-३३॥

भूतवेतालगन्धर्वा डाकिनीयक्षराक्षसाः।

याश्चान्या देवताः सर्वाः भूर्भुवः स्वश्च भैरव॥ ७-३४॥

पृथिव्यादीनि सर्वाणि ब्रह्माण्डं सचराचरम्।

ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः॥ ७-३५॥

ते तुष्टाः सर्वतुष्टाश्च यस्तु कन्यां प्रपूजयेत्।
निधियुक्तां कुमारीं तु पूजयेच्चैव भैरव॥ ७-३६॥

पाद्यमर्घ्यं तथा धूपं कुङ्कुमं चन्दनं शुभम्।
भक्तिभावेन सम्पूज्य कुमारीभ्यो निवेदयेत्॥ ७-३७॥

प्रदक्षिणत्रयं कुर्यादादौ मध्ये तथान्ततः।
पश्चाच्च दक्षिणा देया रजतस्वर्णमौक्तिकैः॥ ७-३८॥

दक्षिणां विधिवद्दत्वा कुमारीभ्यः क्रमेण तु।
विवाहयेत् स्वयं कन्यां ब्रह्महत्यां व्यपोहति॥ ७-३९॥

यावच्च पुण्यकाले तु कन्यादानं प्रकल्पयेत्।
भुक्तिमुक्तिफलं तस्य सौभाग्यं सर्वसम्पदः॥ ७-४०॥

रुद्रलोके वसेन्नित्यं त्रिनेत्रो भगवान् हरः।
तीर्थकोटिसहस्राणि अश्वमेधशतानि च॥ ७-४१॥

तत्फलं लभते सद्यो यस्तु कन्यां विवाहयेत्।

बालुकासागरे ज्ञेया तावदब्दसहस्रकम्॥ ७-४२॥

एकैकं कुलमुद्धृत्य रुद्रलोके महीयते।

तत्तदिष्टदेवानां प्रीतये तुष्टये सुधी॥ ७-४३॥

कन्यादानं समाहृत्य मुक्तिमाप्नोति भैरव।

तत्तद्वर्षीयकन्यायास्तत्तद्बुद्ध्या च साधकः॥ ७-४४॥

विभाव्य शिवरूपत्वं सम्प्रदानीयकारके।

पूर्णरूपं शिवं ध्यात्वा वरं सर्वाङ्गसुन्दरम्॥ ७-४५॥

तेजोमयं यशःकान्तं बालभैरवरूपिणम्।

बटुकेशं महादेवं वरयेत् साधकाग्रणीः॥ ७-४६॥

बालरूपां भैरवीं च त्रैलोक्यसुन्दरीं वराम्।

नानालङ्कारनम्राङ्गीं भद्रविद्याप्रकाशिनीम्॥ ७-४७॥

चारुहास्यां महानन्दहृदयां शुभदां शुभाम्।

ध्यात्वा द्वादशपत्राब्जे पूर्णचन्द्रनिभाननाम्॥ ७-४८॥

सम्प्रदाने समानीय तत्तन्मन्त्रेण दापयेत्।

एतत् श्रुत्वा महावीरो बाल(बल)रूपी निरञ्जनः॥ ७-४९॥

पुनर्जिज्ञासयामास परमानन्दभैरवीम्।

आनन्दभैरव उवाच

कुमारीकुलतत्त्वार्थं मन्त्रार्थं जपनक्रमम्॥ ७-५०॥

यजनादिप्रकारञ्च भोजनादिक्रमं तथा।

होमादिप्रक्रियां तस्याः स्तोत्रं प्रत्येकमेव हि॥ ७-५१॥

कवचं च कुमारीणां वदस्व क्रमशः प्रिये।

येन क्रमेण सा विद्या कुमारी परदेवता॥ ७-५२॥

निर्जने साधकस्याग्रे महावाक्यं स्वयं वदेत्।

बालिका चारुनयना केन हेतोः प्रसीदति॥ ७-५३॥

तत्प्रकारं वद स्नेहादानन्दभैरवप्रिये।

आनन्दभैरवी उवाच

श्रृणु शम्भो प्रवक्ष्यामि कुमारी कुलमन्त्रकान्॥ ७-५४॥

येन विज्ञानमात्रेण धरणीशो नरोत्तमः।

सर्वेषां गुरुरूपः स्यात् कुमारीयजनेन च॥ ७-५५॥

एकवर्षा वरा सन्ध्यादिकानां मनुमुत्तमम्।

षोडशाच्छान्तरूपाणां मन्त्रं श्रृणु महाप्रभो॥ ७-५६॥

क्रमादिकञ्च सर्वेषां चैतन्यसिद्धिसत्क्रियाम्।

आनीय सुन्दरीं नारीं कुमारीं वरनायिकाम्॥ ७-५७॥

रत्नालङ्कारसंयुक्तां शङ्खवस्त्रादिशोभिताम्।

वाग्भवेन जलं नाथ तन्नाम्ना परिदापयेत्॥ ७-५८॥

देवीबुद्ध्या सदा ध्यात्वा पूजयेत् साधकोत्तमः।

मायाबीजेन तन्नाम्ना पाद्यं दद्यात् तथा प्रभो॥ ७-५९॥

लक्ष्मीबीजेन चार्घ्यं तु कुर्याद् बीजेन चन्दनम्।

मायाबीजेन पुष्पाणि कुमार्यै दापयेत् सुधीः॥ ७-६०॥

सदाशिवेन मन्त्रेण धूपदीपौ महोत्तमौ।

दत्वा षडङ्गमन्त्रेण पूजयेद् देवनायकः॥ ७-६१॥

तत्प्रकारं महादेव शृणुष्वानन्दरूपधृक्।

महातेजोमयं शुभ्रं हृदयं हस्तदक्षिणैः॥ ७-६२॥

विभाव्य प्रपठेद् धीमान् तन्मन्त्रं शृणु शङ्कर।

आदौ वाग्भवमुच्चार्य मायां लक्ष्मीं तु कूर्चकम्॥ ७-६३॥

प्रेतबीजं ततो ब्रूयात् सविसर्गेन्दुबिन्दुकम्।

कुलशब्दं समुच्चार्य कुमारिके ततो वदेत्॥ ७-६४॥

हृदयायः नमः प्रोच्य ततः शिरसि भावयेत्।

शुक्लवर्णं सर्वमयं बीजमुच्चार्य संन्यसेत्॥ ७-६५॥

हकारं वाग्भवाढ्यञ्च वकारं वाग्भवार्थकम्।

मायां लक्ष्मीं वाग्भवं च द्विठान्ते शिरसे पदम्॥ ७-६६॥

वह्निजायावधिर्मन्त्रो न्यसेत् शिरसि साधकः।
शिखामध्ये कृष्णवर्णं नीलाञ्जनचयप्रभम्॥ ७-६७॥

विभाव्य संन्यसेन्मन्त्री कुमारीकुलसिद्धये।
आदौ प्रणवमुद्धृत्व तदन्ते वह्निसुन्दरी॥ ७-६८॥

शिखायै च समुद्धृत्य वषट्कारं ततो वदेत्।
ततः कवचमध्ये च बलवन्तं सुतेजसम्॥ ७-६९॥

प्रथमारुणसङ्काशं ध्यात्वा चारुकलेवरम्।
वाग्भवञ्च समुच्चार्य कुलशब्दं ततो वदेत्॥ ७-७०॥

वागीश्वरीपदं पश्चात् कवचाय ततो वदेत्।
तारकब्रह्मशब्दञ्च कवचन्यासजालकम्॥ ७-७१॥

ततो नेत्रत्रयं ध्यात्वा महाबीजं महाप्रभम्।
रक्तवर्णं कोटिकोटिवामण्डल मण्डितम्॥ ७-७२॥

विराजितं कोटिपुण्याजीततेजसि भास्करे।

वाग्भवं च समुच्चार्य कुलेश्वरिपदं ततः॥ ७-७३॥

नेत्रत्रयाय शब्दान्ते वौषट् लोचनमन्त्रकम्।
ततः साधकमन्त्री च वामहस्ततले तथा॥ ७-७४॥

मध्यमातर्जनीभ्यां च तालद्वयमुपाचरेत्।
तन्मन्त्रं कोटिसूर्योग्रज्योत्स्नाजालसमप्रभम्॥ ७-७५॥

महाकाशोद्भवं शब्दं महोग्रपरिपीडनम्।
मायाबीजं तथास्त्राय पदमुद्धृत्य यत्नतः॥ ७-७६॥

पान्तठान्तं समुद्धृत्य महामन्त्रं प्रकीतीतम्।
ततस्तस्या हृन्निलये ध्यात्वा च परिवारकान्॥ ७-७७॥

पूजयेद् यत्नतो मन्त्री भेषजामृतधारया।
तर्पयेत् पूजयेद् भक्त्या भैरवं बालभैरवम्॥ ७-७८॥

देवताभिः पूजयित्वा परिवारान् क्रमेण वै।
ततो वाग्भवमुच्चार्य सिद्धजयाय शब्दतः॥ ७-७९॥

पूर्वं पदं समुच्चार्य वक्त्राय नम ईरितः।

ततो वाग्भवमुच्चार्य जयाय शब्दमुद्धरेत्॥ ७-८०॥

उत्तरवक्त्रमुद्धृत्य चतुर्थ्यन्तं नमःपदम्।

ततो वाग्भवमाया श्री बीजमुच्चार्य यत्नतः॥ ७-८१॥

कुब्जिके पश्चिमान्ते च वक्त्राय नम इत्यपि।

ततो वाग्भवमुच्चार्य कालिके पदमुच्चरेत्॥ ७-८२॥

दक्षवक्त्राय शब्दान्ते नानामन्त्रं प्रकीतीतम्

एतन्मन्त्राक्षरं नाथ समुच्चार्य कुलेश्वर॥ ७-८३॥

पूजयित्वा क्रमेणैव भास्करं परिपूजयेत्।

चन्द्रं दिक्पालदेवञ्च सन्ध्यादीन् परिपूजयेत्॥ ७-८४॥

वीरभद्रां महाकालीं कौलिनीं कुलगामिनीम्।

अष्टादशभुजां कालीं चतुर्वर्गां प्रपूजयेत्॥ ७-८५॥

नैवेद्यादीन् समानीय नानाभोज्यादिसंयुतम्।

दुग्धं घनावृतं क्षीरं पक्वान्नं पक्वसत्फलम्॥ ७-८६॥

यद्यत्कालोपयोग्यञ्च शर्करामधुमिश्रितम्।

पञ्चतत्त्वं कुलद्रव्यं निजकल्याणवर्धनम्॥ ७-८७॥

नानाद्रव्यञ्च नैवेद्यं स्वस्वकल्पोक्तसाधितम्।

कुमारीभ्यो निवेद्यैवं नानासौरभशोभितम्॥ ७-८८॥

शीतलं जलमानीय दद्यात्ताभ्यो महासुधीः।

ततो हितं महामन्त्रं कुमार्याश्चातिदुर्लभम्॥ ७-८९॥

अथवा स्वीयमूलञ्च जप्त्वा सिद्धीश्वरो भवेत्॥ ७-९०॥

समर्थप्राणवायूनां धारयेत्कारयेत् स्वयम्।

अष्टाङ्गादिप्रणामं च कुर्वन् स्तोत्रं पठन् दिशेत्॥ ७-९१॥

नमामि कुलकामिनीं परमभाग्यसन्दायिनीम्।

कुमाररतिचातुरीं सकलसिद्धिमानन्दिनीम्॥ ७-९२॥

प्रवालगुटिकामृजां रजतरागवस्त्रान्विताम्।

हिरण्यकुलभूषणां भुवनवाक्कुमारीं भजे॥ ७-९३॥

इति मन्त्रेण संन्यस्य तारिणीं परिपूजयेत्।

शिवं गणेशं सम्पूज्य प्रणमेत् साधकोत्तमः॥ ७-९४॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने कुमार्युपचर्याविन्यासे

सिद्धमन्त्र-- प्रकरणे दिव्यभावनिर्णये सप्तम पटलः॥ ७॥

अथाष्टमः पटलः

श्रीनन्दभैरवी उवाच

अथ वक्ष्ये महादेव कुमार्या जपहोमकम्।

लक्षसंख्यजपं कृत्वा मायां वा वाग्भवं रमाम्॥ ८-१॥

कालीबीजं वापि नाथ मायां वा कामबीजकम्।

सदाशिवेन पुटितं बिन्दुचन्द्रविभूषितम्॥ ८-२॥

अथवा प्रणवेनापि पुटितं त्रिदशेश्वर।

जपित्वा मूलमन्त्रञ्च लक्षसंख्याविधानतः॥ ८-३॥

तद्दशांशं महाहोमं घृताक्तबिल्वपत्रकैः।
अथवा श्वेतपुष्पैश्च कुन्दपुष्पैर्महाफलम्॥ ८-४॥

एवं क्रमेण जुहुयात् करवीरप्रसूनकैः।
घृताक्तैः कैवलैर्वापि चन्दनागुरुमिश्रितैः॥ ८-५॥

हविष्याशी दिवाभागे रात्रौ पूजापरो भवेत्।
निजपूजावशेषैस्तु कुलद्रव्यैः प्रपूजयेत्॥ ८-६॥

दिवासंख्यं जपेत्तत्र परमानन्दरूपधृक्।
जपान्ते जुहुयान्मन्त्री मदुक्तद्रव्यसंयुतैः॥ ८-७॥

ततः प्राणात्मकं वायुं शोधयित्वा पुनः पुनः।
प्राणायामत्रयं कृत्वा चाष्टाङ्गं प्रणमेन्मुदा॥ ८-८॥

प्रणामसमये नाथ इदं स्तोत्रं पठेत् यतिः।
कवचञ्च तथा पाठ्यं कुमारीणामथापि वा॥ ८-९॥

निजदेव्या महास्तोत्रं पठेद्धि कवचं ततः।
कुमारीणां महादेव सहस्रनाम साष्टकम्॥ ८-१०॥

पठित्वा सिद्धिमाप्नोति पठित्वा साधकोत्तमः।

अग्रे संस्थाप्य ताः सर्वा रत्नकोटिसुशीतलाः॥ ८-११॥

ततः स्तोत्रं पठेद्धीमान् समाहितमना वशी।

महादिव्याचाररतो वीरभावोल्बणोऽपि वा॥ ८-१२॥

एवं क्रमेण प्रपठेद् भक्तिभावपरायणः।

महाविद्या महासेवा भक्तिश्रद्धाप्लुतापीतः॥ ८-१३॥

महाज्ञानी भवेत् क्षिप्रं वाञ्छासिद्धिमवाप्नुयात्॥ ८-१४॥

आनन्दभैरव उवाच

देवेन्द्रादय इन्दुकोटिकिरणां वाराणसीवासिनी।

विद्यां वाग्भवकामिनीं त्रिनयनां सूक्ष्मक्रियाज्वालिनीम्।

चण्डोद्योगनिकृन्तिनीं त्रिजगतां धात्रीं कुमारीं वरा।

मूलाम्भोरुहवासिनीं शशिमुखीं सम्पूजयामि श्रिये॥ ८-१५॥

भाव्यां देवगणैः शिवेन्द्रयतिभिर्मोक्षाथीभिर्बालिका।

सन्ध्यां नित्यगुणोदयां द्विजगणे श्रेष्ठोदयां सारुणाम्।

शुक्लाभां परमेश्वरीं शुभकरीं भद्रां विशालानना।

गायत्रीं गणमातरं दिनगतिं कृष्णाञ्च वृद्धां भजे॥ ८-१६॥

बालां बालकपूजितां गणभृतां विद्यावतां मोक्षदा।

धात्रीं शुक्लसरस्वतीं नववरां वाग्वादिनीं चण्डिकाम्।

स्वाधिष्ठानहरिप्रियां प्रियकरीं वेदान्तविद्याप्रदा।

नित्यं मोक्षहिताय योगवपुषा चैतन्यरूपां भजे॥ ८-१७॥

नानारत्नसमूहनिमीतगृहे पूज्यां सूरैर्बालिका।

वन्दे नन्दनकानने मनसिजे सिद्धान्तबीजानने।

अर्थं देहि निरर्थकाय पुरुषे हित्वा कुमारीं कलाम्।

सत्यं पातु कुमारिके त्रिविधमूर्त्या च तेजोमयीम्॥ ८-१८॥

वरानने सकलिकां कुलपथोल्लासैकबीजोद्वहा।

मांसामोदकरालिनीं हि भजतां कामातिरिक्तप्रदाम्।

बालोऽहं वटुकेश्वरस्य चरणाम्भोजाश्रितोऽहं सदा।

हित्वा बालकुमारिके शिरसि शुक्लाम्भोरुहेशं भजे॥ ८-१९॥

सूर्याह्लादवलाकिनीं कलिमहापापादितापापहा।

तेजोऽङ्गां भुवि सूर्यगां भयहरां तेजोमयीं बालिकाम्।
वन्दे हृत्कमले सदा रविदले वालेन्द्रविद्यां सती।
साक्षात् सिद्धिकरीं कुमारि विमलेऽन्वासाद्य रूपेश्वरीम्॥ ८-२०॥

नित्यं श्रीकुलकामिनीं कुलवतीं कोलामुमामम्बिका।
नानायोगनिवासिनीं सुरमणीं नित्यां तपस्यान्विताम्।
वेदान्तार्थविशेषदेशवसना भाषाविशेषस्थितां
वन्दे पर्वतराजराजतनयां कालप्रियो त्वामहम्॥ ८-२१॥

कौमारीं कुलकामिनीं रिपुगणक्षोभाग्निसन्दोहिनी।
रक्ताभानयनां शुभां परममार्गमुक्तिसंज्ञाप्रदाम्।
भार्या भागवतीं मतिं भुवनमामोदपञ्चानना।
पञ्चास्यप्रियकामिनीं भयहरां सर्पादिहारां भजे॥ ८-२२॥

चन्द्रास्यां चरणद्वयाम्बुजमहाशोभाविनोदीं नदी।
मोहादिक्षयकारिणीं वरकरां श्रीकुब्जिकां सुन्दरीम्।
ये नित्यं परिपूजयन्ति सहसा राजेन्द्रचूडामणि।
सम्पादं धनमायुषो जनयतो व्याप्येश्वरत्वं जगुः॥ ८-२३॥

योगीशं भुवनेश्वरं प्रियकरं श्रीकालसन्दर्भया।

शोभासागरगामिनं हरभवं वाञ्छाफलोद्दीपनम्।

लोकानामघनाशनाय शिवया श्रीसंज्ञया विद्यया।

धर्मप्राणसदैवतां प्रणमतां कल्पद्रुमं भावये॥ ८-२४॥

विद्यां तामपराजितां मदनभावामोदमत्ताननां

हृत्पद्मस्थितपादुकां कुलकलां कात्यायनीं भैरवीम्।

ये ये पुण्यधियो भजन्ति परमानन्दाब्धिमध्ये मुदा

सर्व्वाच्छापिततेजसा भयकरीं मोक्षाय सङ्कीर्तये॥ ८-२५॥

रुद्राणीं प्रणमामि पद्मवदनां कोट्यर्कतेजोमयीं

नानालङ्कृतभूषणां कुलभुजामानन्दसन्दायिनीम्।

श्री मायाकमलान्वितां हृदिगतां सन्तानबीजक्रियां

आनन्दैकनिकेतनां हृदि भजे साक्षादलब्धामहम्॥ ८-२६॥

नमामि वरभैरवीं क्षितितलाद्यकालानला।

मृणालसुकुमारारुणां भुवनदोषसंशोधिनीम्।

जगद्भयहरां हरां हरति या च योगेश्वरी।

महापदसहस्रकम् सकलभोगदान्तामहम्॥ ८-२७॥

साम्राज्यं प्रददाति याचितवती विद्या महालक्षणा।

साक्षादष्टसमृद्धिदातरि महालक्ष्मीः कुलक्षोभहा।

स्वाधिष्ठानसुपङ्कजे विवसितां विष्णोरनन्तप्रिये।

वन्दे राजपदप्रदां शुभकरीं कौलेश्वरीं कौलिकीम्॥ ८-२८॥

पीठानामधिपाधिपाम् असुवहां विद्यां शुभां नायिका।

सर्वालङ्करणान्वितां त्रिजगतां क्षोभापहां वारुणीं।

वन्दे पीठगनायिकां त्रिभुवनच्छायाभिराच्छादिता।

सर्वेषां हितकारिणीं जयवतामानन्दरूपेश्वरीम्॥ ८-२९॥

क्षेत्रज्ञां मदविह्वलां कुलवतीं सिद्धिप्रियां प्रेयसीम्।

शम्भोः श्री वटुकेश्वरस्य महतामानन्दसञ्चारिणीम्॥ ८-३०॥

साक्षादात्मपरोद्गमां कमलमध्यसंभाविनी।

शिरो दशशते दलेऽमृतमहाब्धिधाराधराम्।

निजमनः क्षोभापहां शाकिनीम्।

बाह्यार्थ प्रकटामहं रजतभां वन्दे महाभैरवीम्॥ ८-३१॥

प्रणामफलदायिनीं सकलबाह्यवश्यां गुणा।

नमामि परमम्बिकां विषयदोषसंहारिणीम्।

सम्पूर्णाविधुवन्मुखीं कमलमध्यसम्भाविनीं।

शिरो दशशते दलेऽमृतमहाब्धिधाराधराम्॥ ८-३२॥

साक्षादहं त्रिभुवनामृतपूर्णदेहां
सन्ध्यादि देवकमलां कुलपण्डितेन्द्राम्।
नत्वा भजे दशशते दलमध्यमध्ये।
कौलेश्वरीं सकलदिव्यजनाश्रयां ताम्॥ ८-३३॥

विश्वेश्वरीं स्वरकुले वरबालिके त्वां
सिद्धासने प्रतिदिनं प्रणमामि भक्त्या।
भक्तिं धनं जयपदं यदि देहि दास्य।
तस्मिन् महामधुमतीं लघुनाहताः स्यात्॥ ८-३४॥

एतत्स्तोत्रप्रसादेन कविता वाक्पतिर्भवेत्।
महासिद्धीश्वरो दिव्यो वीरभावपरायणः॥ ८-३५॥

सर्वत्र जयमाप्नोति स हि स्याद् देववल्लभः।
वाचामीशो भवेत् क्षिप्रं कामरूपो भवेन्नरः॥ ८-३६॥

पशुरेव महावीरो दिव्यो भवति निश्चितम्।
सर्वविद्याः प्रसीदन्ति तुष्टाः सर्वे दिगीश्वराः॥ ८-३७॥

वह्निः शीतलतां याति जलस्तम्भं स कारयेत्।

धनवान् पुत्रवान् राजा इह काले भवेन्नरः॥ ८-३८॥

परे च याति वैकुण्ठे कैलासे शिवसन्निधौ।

मुक्तिरेव महादेव यो नित्यं सर्वदा पठेत्॥ ८-३९॥

महाविद्यापदाम्भोजं स हि पश्यति निश्चितम्।

शृणु नाथ प्रवक्ष्यामि कुमारीतर्पणादिकम्॥ ८-४०॥

यासां तर्पणमात्रेण कुलसिद्धिर्भवेद् ध्रुवम्।

कुलबालां मूलपद्मस्थितां कामविहारिणीम्॥ ८-४१॥

शतधा मूलमन्त्रेण तर्पयामि तव प्रिये।

मूलाधारमहातेजो जटामण्डलमण्डिताम्॥ ८-४२॥

सन्ध्यादेवीं तर्पयामि कामबीजेन मे शुभे।

मूलपङ्कजयोगाङ्गी कुमारीं श्रीसरस्वतीम्॥ ८-४३॥

तर्पयामि कुलद्रव्यैस्तव सन्तोषहेतुना।

चक्रे मूलाधारपद्मे त्रिमूर्तीबालनायिकाम्॥ ८-४४॥

सर्वकल्याणदां देवीं तर्पयामि परामृतैः।
स्वाधिष्ठाने महापद्मे षड्दलान्तःप्रकाशिनीम्॥ ८-४५॥

श्रीबीजेन तर्पयामि भोगमोक्षाय केवलम्।
स्वाधिष्ठानकुलोल्लास विष्णुसङ्केतगामिनीम्॥ ८-४६॥

कालिकां निजबीजेन तर्पयामि कुलामृतैः।
स्वाधिष्ठानाख्यपद्मस्थां महातेजोमयीं शिवाम्॥ ८-४७॥

सूर्यगां शीर्षमधुना तर्पयामि कुलेश्वरीम्।
मणिपूराब्धिमध्ये तु मनोहरकलेवराम्॥ ८-४८॥

उमादेवीं तर्पयामि मायाबीजेन पार्वतीम्।
मणिपूराम्भोजमध्ये त्रैलोक्यपरिपूजिताम्॥ ८-४९॥

मालिनीं मलचित्तस्य सद्बुद्धिं तर्पयाम्यहम्।
मणिपूरस्थितां रौद्रीं परमानन्दवर्धिनीम्॥ ८-५०॥

आकाशगामिनीं देवीं कुब्जिकां तर्पयाम्यहम्।
तर्पयामि महादेवीं महासाधनतत्पराम्॥ ८-५१॥

योगिनीं कालसन्दर्भां तर्पयामि कुलाननाम्।
शक्तिमन्त्रप्रदां रौद्रीं लोलजिह्वासमाकुलाम्॥ ८-५२॥

अपराजितां महादेवीं तर्पयामि कुलेश्वरीम्।
महाकौलप्रियां सिद्धां रुद्रलोकसुखप्रदाम्॥ ८-५३॥

रुद्राणीं रौद्रकिरणां तर्पयामि वधूप्रियाम्।
षोडशस्वरसंसिद्धिं महारौरवनाशिनीम्॥ ८-५४॥

महामद्यपानचित्तां भैरवीं तर्पयाम्यहम्।
त्रैलोक्यवरदां देवीं श्रीबीजमालयावृताम्॥ ८-५५॥

महालक्ष्मीं भवैश्वर्यदायिनीं तर्पयाम्यहम्।
लोकानां हितकर्त्रीञ्च हिताहितजनप्रियाम्॥ ८-५६॥

तर्पयामि रमाबीजां पीठाद्यां पीठनायिकाम्।
जयन्तीं वेदवेदाङ्गमातरं सूर्यमातरम्॥ ८-५७॥

तर्पयामि सुधाभिश्च क्षेत्रज्ञां माययावृताम्।
तर्पयामि कुलानन्दपरमां परमाननाम्॥ ८-५८॥

तर्पयाम्यम्बिकादेवीं मायालक्ष्मीहृदिस्थिताम्॥ ८-५९॥

सर्वासां चरणद्वयाम्बुजतनुं चैतन्यविद्यावती।
सौख्यार्थं शुभषोडशस्वरयुतां श्रीषोडशीसङ्कुलाम्।
आनन्दार्णवपद्मरागखचिते सिंहासने शोभिते।
नित्यं तत् परितर्पयामि सकलं श्वेताब्जमध्यासने॥ ८-६०॥

ये नित्यं प्रपठन्ति चारुसफलस्तोत्रार्द्धसन्तर्पण।
विद्यादाननिदानमोक्षपरमां मायामयं यान्ति ते।
नश्यन्ति क्षितिमण्डलेश्वरगणाः सर्वाविपत्कारका।
राजानं वशयन्ति योगसकलं नित्या भवन्ति क्षणात्॥ ८-६१॥

तर्पणात्मकमोक्षाख्यं पठन्ति यदि मानुषाः।
अष्टैश्वर्ययुतो भूत्वा वत्सरात्तां प्रपश्यति॥ ८-६२॥

महायोगी भवेन्नाथ मासादभ्यासतः प्रभो।

त्रैलोक्यं क्षोभयेत्क्षिप्रं वाञ्छाफलमवाप्नुयात्॥ ८-६३॥

भूमध्ये राजराजेशो लभते वरमङ्गलम्।
शत्रुनाशे तथोच्चाटे बन्धने व्याधिसङ्कटे॥ ८-६४॥

चातुरङ्गे तथा घोरे भये दूरस्य प्रेषणे।
महायुद्धे नरेन्द्राणां पठित्वा सिद्धिमाप्नुयात्॥ ८-६५॥

यः पठेदेकभावेन सन्तर्पणफलं लभेत्।
पूजासाफल्यमाप्नोति कुमारीस्तोत्रपाठतः॥ ८-६६॥

यो न कुर्यात्कुमार्यर्चां स्तोत्रञ्च नित्यमङ्गलम्।
स भवेत् पाशवः कल्पो मृत्युस्तस्य पदे पदे॥ ८-६७॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने कुमार्युपचर्याविलासे
सिद्धमन्त्र-- प्रकरणे दिव्यभावनिर्णये अष्टमः पटलः॥ ८॥

## अथ नवमः पटलः

आनन्दभैरव उवाच

अथातः सम्प्रवक्ष्यामि कुमारीकवचं शुभम्।
त्रैलोक्यं मङ्गलं नाम महापातकनाशकम्॥ ९-१॥

पठनाद्धारणाल्लोका महासिद्धाः प्रभाकराः।
शक्रो देवाधिपः श्रीमान् देवगुरुर्बृहस्पतिः॥ ९-२॥

महातेजोमयो वह्निर्धर्म्मराजो भयानकः।
वरुणो देवपूज्यो हि जलानामधिपः स्वयम्॥ ९-३॥

सर्वहर्त्ता महावायुः कुबेरः कुञ्जरेश्वरः।
धराधिपः प्रियः शम्भोः सर्वे देवा दिगीश्वरः॥ ९-४॥

न मेरुः प्रभुरेकायाः सर्वेशो निर्मलो द्वयोः।
एतत्कवचपाठेन सर्वे भूपा धनाधिपाः॥ ९-५॥

प्रणवो मे शिरः पातु माया सन्दायिका सती।
ललाटोद्र्ध्वं महामाया पातु मे श्रीसरस्वती॥ ९-६॥

कामाक्षा वटुकेशानी त्रिमूर्त्तिर्भालमेव मे।

चामुण्डा बीजरूपा च वदनं कालिका मम॥ ९-७॥

पातु मां सूर्यगा नित्यं तथा नेत्रद्वयं मम।
कर्णयुग्मं कामबीजं स्वरूपोमातपस्विनी॥ ९-८॥

रसनाग्रं तथा पातु वाग्देवी मालिनी मम।
डामरस्था कामरूपा दन्ताग्रं कुञ्जिका मम॥ ९-९॥

देवी प्रणवरूपाऽसौ पातु नित्यं शिवा मम।
ओष्ठाधरं शक्तिबीजात्मिका स्वाहास्वरूपिणी॥ ९-१०॥

पायान्मे कालसन्दष्टा पञ्चवायुस्वरूपिणी।
गलदेशं महारौद्री पातु मे चापराजिता॥ ९-११॥

क्ष्रौं बीजं मे तथा कण्ठं रुद्राणी स्वाहयान्विता।
हृदयं भैरवी विद्या पातु षोडश सुस्वरा॥ ९-१२॥

द्वौ बाहू पातु सर्वत्र महालक्ष्मीः प्रधानिका।
सर्वमन्त्रस्वरूपं मे चोदरं पीठनायिका॥ ९-१३॥

पार्श्वयुग्मं तथा पातु कुमारी वाग्भवात्मिका।
कैशोरी कटिदेशं मे मायाबीजस्वरूपिणी॥ ९-१४॥

जङ्घायुग्मं जयन्ती मे योगिनी कुल्लुकायुता।
सर्वाङ्गमम्बिकादेवी पातु मन्त्रार्थगामिनी॥ ९-१५॥

केशाग्रं कमलादेवी नासाग्रं विन्ध्यवासिनी।
चिबुकं चण्डिका देवी कुमारी पातु मे सदा॥ ९-१६॥

हृदयं ललिता देवी पृष्ठं पर्वतवासिनी।
त्रिशक्तिः षोडशी देवी लिङ्गं गुह्यं सदावतु॥ ९-१७॥

श्मशाने चाम्बिका देवी गङ्गागर्भे च वैष्णवी।
शून्यागारे पञ्चमुद्रा मन्त्रयन्त्रप्रकाशिनी॥ ९-१८॥

चतुष्पथे तथा पातु मामेव वज्रधारिणी।
शवासनगता चण्डा मुण्डमालाविभूषिता॥ ९-१९॥

पातु माने कलिङ्गे च वैखरी शक्तिरूपिणी।
वने पातु महाबाला महारण्ये रणप्रिया॥ ९-२०॥

महाजले तडागे च शत्रुमध्ये सरस्वती।

महाकाशपथे पृथ्वी पातु मां शीतला सदा॥ ९-२१॥

रणमध्ये राजलक्ष्मीः कुमारी कुलकामिनी।

अर्द्धनारीश्वरा पातु मम पादतलं मही॥ ९-२२॥

नवलक्षमहाविद्या कुमारी रूपधारिणी।

कोटिसूर्यप्रतीकाशा चन्द्रकोटिसुशीतला॥ ९-२३॥

पातु मां वरदा वाणी वटुकेश्वरकामिनी

इति ते कथितं नाथ कवचं परमाद्भुतम्॥ ९-२४॥

कुमार्याः कुलदायिन्याः पञ्चतत्त्वार्थपारग

यो जपेत् पञ्चतत्त्वेन स्तोत्रेण कवचेन च॥ ९-२५॥

आकाशगामिनी सिद्धिर्भवेत्तस्य न संशयः॥ ९-२६॥

वज्रदेही भवेत् क्षिप्रं कवचस्य प्रपाठतः।

सर्वसिद्धीश्वरो योगी ज्ञानी भवति यः पठेत्॥ ९-२७॥

विवादे व्यवहारे च सङ्ग्रामे कुलमण्डले।

महापथे श्मशाने च योगसिद्धो भवेत् स च॥ ९-२८॥

पठित्वा जयमाप्नोति सत्यं सत्यं कुलेश्वर

वशीकरणकवचं सर्वत्र जयदं शुभम्॥ ९-२९॥

पुण्यव्रती पठेन्नित्यं यतिश्रीमान्भवेद् ध्रुवम्

सिद्धविद्या कुमारी च ददाति सिद्धिमुत्तमाम्॥ ९-३०॥

पठेद्यः शृणुयाद्वापि स भवेत्कल्पपादपः।

भक्तिं मुक्तिं तुष्टिं पुष्टिं राजलक्ष्मीं सुसम्पदाम्॥ ९-३१॥

प्राप्नोति साधकश्रेष्ठो धारयित्वा जपेद्यदि।

असाध्यं साधयेद्विद्वान् पठित्वा कवचं शुभम्॥ ९-३२॥

धनिनाञ्च महासौख्यधर्म्मार्थकाममोक्षदम्।

यो वशी दिवसे नित्यं कुमारीं पूजयेन्निशि॥ ९-३३॥

उपचारविशेषेण त्रैलोक्यं वशमानयेत्।

पललेनासवेनापि मत्स्येन मुद्रया सह॥ ९-३४॥

नानाभक्ष्येण भोज्येन गन्धद्रव्येण साधकः।
माल्येन स्वर्णरजतालङ्कारेण सुचैलकैः॥ ९-३५॥

पूजयित्वा जपित्वा च तर्पयित्वा वराननाम्।
यज्ञदानतपस्याभिः प्रयोगेण महेश्वर॥ ९-३६॥

स्तुत्वा कुमारीकवचं यः पठेदेकभावतः।
तस्य सिद्धिर्भवेत् क्षिप्रं राजराजेश्वरो भवेत्॥ ९-३७॥

वाञ्छार्थफलमाप्नोति यद्यन्मनसि वर्तते।
भूर्जपत्रे लिखित्वा स कवचं धारयेद् हृदि॥ ९-३८॥

शनिमङ्गलवारे च नवम्यामष्टमीदिने।
चतुर्दश्यां पौर्णमास्यां कृष्णपक्षे विशेषतः॥ ९-३९॥

लिखित्वा धारयेद् विद्वान् उत्तराभिमुखो भवन्।
महापातकयुक्तो हि मुक्तः स्यात् सर्वपातकैः॥ ९-४०॥

योषिद्वामभुजे धृत्वा सर्वकल्याणमालभेत्।
बहुपुत्रान्विता कान्ता सर्वसम्पत्तिसंयुता॥ ९-४१॥

तथाश्रीपुरुषश्रेष्ठो दक्षिणे धारयेद् भुजे।
एहिके दिव्यदेहः स्यात् पञ्चाननसमप्रभः॥ ९-४२॥

शिवलोके परे याति वायुवेगी निरामयः।
सूर्यमण्डलमाभेद्य परं लोकमवाप्नुयात्॥ ९-४३॥

लोकानामतिसौख्यदं भयहरं श्रीपादभक्तिप्रद।
मोक्षार्थं कवचं शुभं प्रपठतामानन्दसिन्धूद्भवम्।
पार्थानां कलिकालघोरकलुषध्वंसैकहेतुं जय।
ये नाम प्रपठन्ति धर्ममतुलं मोक्षं व्रजन्ति क्षणात्॥ ९-४४॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने कुमार्युपचर्याविन्यासे कुमारी-- कवचोल्लासे सिद्धमन्त्रप्रकरणे दिव्यभावनिर्णये नवमः पटलः॥ ९॥

अथ दशमः पटलः

आनन्दभैरव उवाच

वद कान्ते सदानन्दस्वरूपानन्दवल्लभे।
कुमार्या देवतामुख्याः परमानन्दवर्धनम्॥ १०-१॥

अष्टोत्तरसहस्राख्यं नाम मङ्गलमद्भुतम्।
यदि मे वर्तते विद्ये यदि स्नेहकलामला॥ १०-२॥

तदा वदस्व कौमारीकृतकर्मफलप्रदम्।
महास्तोत्रं कोटिकोटि कन्यादानफलं भवेत्॥ १०-३॥

आनन्दभैरवी उवाच

महापुण्यप्रदं नाथ शृणु सर्वेश्वरप्रिय।
अष्टोत्तरसहस्राख्यं कुमार्याः परमाद्भुतम्॥ १०-४॥

पठित्त्वा धारयित्त्वा वा नरो मुच्येत सङ्कटात्।
सर्वत्र दुर्लभं धन्यं धन्यलोकनिषेवितम्॥ १०-५॥

अणिमाद्यष्टसिद्ध्यङ्गं सर्वानन्दकरं परम्।

मायामन्त्रनिरस्ताङ्गं मन्त्रसिद्धिप्रदे नृणाम्॥ १०-६॥

न पूजा न जपं स्नानं पुरश्चर्याविधिश्च न।
अकस्मात् सिद्धिमवाप्नोति सहस्त्रनामपाठतः॥ १०-७॥

सर्वयज्ञफलं नाथ प्राप्नोति साधकः क्षणात्।
मन्त्रार्थं मन्त्रचैतन्यं योनिमुद्रास्वरूपकम्॥ १०-८॥

कोटिवर्षशतेनापि फलं वक्तुं न शक्यते।
तथापि वक्तुमिच्छामि हिताय जगतां प्रभो॥ १०-९॥

अस्याः श्रीकुमार्याः सहस्त्रनामकवचस्य।
वटुकभैरवऋषिरनुष्टुप्छन्दः,
कुमारीदेवता, सर्वमन्त्रसिद्धिसमृद्धये विनियोगः॥ १०-१०॥

ओं कुमारी कौशिकी काली कुरुकुल्ला कुलेश्वरी।
कनकाभा काञ्चनाभा कमला कालकामिनी॥ १०-११॥

कपालिनी कालरूपा कौमारी कुलपालिका।
कान्ता कुमारकान्ता च कारणा करिगामिनी॥ १०-१२॥

कन्धकान्ता कौलकान्ता कृतकर्मफलप्रदा।

कार्याकार्यप्रिया कक्षा कंसहन्त्री कुरुक्षया॥ १०-१३॥

कृष्णकान्ता कालरात्रिः कर्णेषुधारिणीकरा।

कामहा कपिला काला कालिका कुरुकामिनी॥ १०-१४॥

कुरुक्षेत्रप्रिया कौला कुन्ती कामातुरा कचा।

कलञ्जभक्षा कैकेयी काकपुच्छध्वजा कला॥ १०-१५॥

कमला कामलक्ष्मी च कमलाननकामिनी।

कामधेनुस्वरूपा च कामहा काममर्दीनी॥ १०-१६॥

कामदा कामपूज्या च कामातीता कलावती।

भैरवी कारणाढ्या च कैशोरी कुशलाङ्गला॥ १०-१७॥

कम्बुग्रीवा कृष्णनिभा कामराजप्रियाकृतिः।

कङ्कणालङ्कृता कङ्का केवला काकिनी किरा॥ १०-१८॥

किरातिनी काकभक्षा करालवदना कृशा।

केशिनी केशिहा केशा कासाम्बष्ठा करिप्रिया॥ १०-१९॥

कविनाथस्वरूपा च कटुवाणी कटुस्थिता।
कोटरा कोटराक्षी च करनाटकवासिनी॥ १०-२०॥

कटकस्था काष्ठसंस्था कन्दर्पा केतकी प्रिया।
केलिप्रिया कम्बलस्था कालदैत्यविनाशिनी॥ १०-२१॥

केतकीपुष्पशोभाढ्या कर्पूरपूर्णजिह्विका।
कर्पूराकरकाकोला कैलासगिरिवासिनी॥ १०-२२॥

कुशासनस्था कादम्बा कुञ्जरेशी कुलानना।
खर्बा खड्गधरा खड्गा खलहा खलबुद्धिदा॥ १०-२३॥

खञ्जना खररूपा च क्षाराम्लतिक्तमध्यगा।
खेलना खेटककरा खरवाक्या खरोत्कटा॥ १०-२४॥

खद्योतचञ्चला खेला खद्योता खगवाहिनी।
खेटकस्था खलाखस्था खेचरी खेचरप्रिया॥ १०-२५॥

खचरा खरप्रेमा खलाढ्या खचरानना।
खेचरेशी खरोग्रा च खेचरप्रियभाषिणी॥ १०-२६॥

खर्जूरासवसंमत्ता खर्जूरफलभोगिनी।
खातमध्यस्थिता खाता खाताम्बुपरिपूरिणी॥ १०-२७॥

ख्यातिः ख्यातजलानन्दा खुलना खञ्जनागतिः।
खल्वा खलतरा खारी खरोद्वेगनिकृन्तनी॥ १०-२८॥

गगनस्था च भीता च गभीरनादिनी गया।
गङ्गा गभीरा गौरी च गणनाथ प्रिया गतिः॥ १०-२९॥

गुरुभक्ता ग्वालिहीना गेहिनी गोपिनी गिरा।
गोगणस्था गाणपत्या गिरिजा गिरिपूजिता॥ १०-३०॥

गिरिकान्ता गणस्था च गिरिकन्या गणेश्वरी।
गाधिराजसुता ग्रीवा गुर्वी गुर्व्यम्बशाङ्करी॥ १०-३१॥

गन्धर्व्वकामिनी गीता गायत्री गुणदा गुणा।
गुग्गुलुस्था गुरोः पूज्या गीतानन्दप्रकाशिनी॥ १०-३२॥

गयासुरप्रियागेहा गवाक्षजालमध्यगा।

गुरुकन्या गुरोः पत्नी गहना गुरुनागिनी॥ १०-३३॥

गुल्फवायुस्थिता गुल्फा गर्द्दभा गर्द्दभप्रिया।

गुह्या गुह्यगणस्था च गरिमा गौरिका गुदा॥ १०-३४॥

गुदोर्ध्वस्था च गलिता गणिका गोलका गला।

गान्धर्वी गाननगरी गन्धर्वगणपूजिता॥ १०-३५॥

घोरनादा घोरमुखी घोरा घर्मनिवारिणी।

घनदा घनवर्णा च घनवाहनवाहना॥ १०-३६॥

घर्घरध्वनिचपला घटाघटपटाघटा।

घटिता घटना घोना घनरुप घनेश्वरी॥ १०-३७॥

घुण्यातीता घर्घरा च घोराननविमोहिनी।

घोरनेत्रा घनरुचा घोरभैरव कन्यका॥ १०-३८॥

घाताघातकहा घात्या घ्राणाघ्राणेशवायवी।

घोरान्धकारसंस्था च घसना घस्वरा घरा॥ १०-३९॥

घोटकेस्था घोटका च घोटकेश्वरवाहना।
घननीलमणिश्यामा घर्घरेश्वरकामिनी॥ १०-४०॥

ङकारकूटसम्पन्ना ङकारचक्रगामिनी।
ङकारी ङसंज्ञा चैव ङीपनीता ङकारिणी॥ १०-४१॥

चन्द्रमण्डलमध्यस्था चतुरा चारुहासिनी।
चारुचन्द्रमुखी चैव चलङ्गमगतिप्रिया॥ १०-४२॥

चञ्चला चपला चण्डी चेकिताना चरुस्थिता।
चलिता चानना चार्व्वी चारुभ्रमरनादिनी॥ १०-४३॥

चौरहा चन्द्रनिलया चैन्द्री चन्द्रपुरस्थिता।
चक्रकौला चक्ररूपा चक्रस्था चक्रसिद्धिदा॥ १०-४४॥

चक्रिणी चक्रहस्ता च चक्रनाथकुलप्रिया।
चक्राभेद्या चक्रकुला चक्रमण्डलशोभिता॥ १०-४५॥

चक्रेश्वरप्रिया चेला चेलाजिनकुशोत्तरा।

चतुर्वेदस्थिता चण्डा चन्द्रकोटिसुशीतला॥ १०-४६॥

चतुर्गुणा चन्द्रवर्णा चातुरी चतुरप्रिया।

चक्षुःस्था चक्षुवसतिश्चणका चणकप्रिया॥ १०-४७॥

चार्व्वङ्गी चन्द्रनिलया चलदम्बुजलोचना।

चर्व्वरीशा चारुमुखी चारुदन्ता चरस्थिता॥ १०-४८॥

चसकस्थासवा चेता चेतःस्था चैत्रपूजिता।

चाक्षुषी चन्द्रमलिनी चन्द्रहासमणिप्रभा॥ १०-४९॥

छलस्था छुद्ररूपा च छत्रच्छायाछलस्थिता।

छलज्ञा छेश्वराछाया छाया छिन्नशिवा छला॥ ५०॥

छत्राचामरशोभाढ्या छत्रिणां छत्रधारिणी।

छिन्नातीता छिन्नमस्ता छिन्नकेशा छलोद्भवा॥ १०-५१॥

छलहा छलदा छाया छन्ना छन्नजनप्रिया।

छलछिन्ना छद्मवती छद्मसद्मनिवासिनी॥ १०-५२॥

छद्मगन्धा छदाछन्ना छद्मवेशी छकारिका।

छगला रक्तभक्षा च छगलामोदरक्तपा॥ १०-५३॥

छगलण्डेशकन्या च छगलण्डकुमारिका।

छुरिका छुरिककरा छुरिकारिनिवाशिनी॥ १०-५४॥

छिन्ननाशा छिन्नहस्ता छोणलोला छलोदरी।

छलोद्वेगा छाङ्गबीजमाला छाङ्गवरप्रदा॥ १०-५५॥

जटिला जठरश्रीदा जरा जङ्गाप्रिया जया।

जन्त्रस्था जीवहा जीवा जयदा जीवयोगदा॥ ५६॥

जयिनी जामलस्था च जामलोद्भवनायिका।

जामलप्रियकन्या च जामलेशी जवाप्रिया॥ १०-५७॥

जवाकोटिसमप्रख्या जवापुष्पप्रिया जना।

जलस्था जगविषया जरातीता जलस्थिता॥ १०-५८॥

जीवहा जीवकन्या च जनार्द्दनकुमारिका।

जतुका जलपूज्या च जगन्नाथादिकामिनी॥ १०-५९॥

जीर्णाङ्गी जीर्णहीना च जीमूतात्त्यन्तशोभिता।
जामदा जमदा जृम्भा जृम्भणास्त्रादिधारिणी॥ ६०॥

जघन्या जारजा प्रीता जगदानन्दवर्द्धीनी।
जमलार्जुनदर्पघ्नी जमलार्जुनभञ्जिनी॥ १०-६१॥

जयित्रीजगदानन्दा जामलोल्लाससिद्धिदा।
जपमाला जाप्यसिद्धिर्जपयज्ञप्रकाशिनी॥ १०-६२॥

जाम्बुवती जाम्बवतः कन्यकाजनवाजपा।
जवाहन्त्री जगद्बुद्धिर्ज्जगत्कर्तृ जगद्गतिः॥ १०-६३॥

जननी जीवनी जाया जगन्माता जनेश्वरी।
झङ्कला झङ्कमध्यस्था झणत्कारस्वरूपिणी॥ १०-६४॥

झणत्झणद्वह्रिरूपा झननाझन्दरीश्वरी।
झटिताक्षा झरा झञ्झा झर्झरा झरकन्यका॥ १०-६५॥

झणत्कारी झना झन्ना झकारमालयावृता।
झङ्करी झर्झरी झल्ली झल्वेश्वरनिवासिनी॥ १०-६६॥

ञकारी ञकिराती च ञकारबीजमालिनी।
ञनयोऽन्ता ञकारान्ता ञकारपरमेश्वरी॥ १०-६७॥

ञान्तबीजपुटाकारा ञेकले ञैकगामिनी।
ञैकनेला ञस्वरूपा ञहारा ञहरीतकी॥ १०-६८॥

टुन्टुनी टङ्कहस्ता च टान्तवर्गा टलावती।
टपला टापबालाख्या टङ्कारध्वनिरूपिणी॥ १०-६९॥

टलाती टाक्षरातीता टित्कारादिकुमारिका।
टङ्कास्त्रधारिणी टाना टमोटार्णलभाषिणी॥ १०-७०॥

टङ्कारी विधना टाका टकाटकविमोहिनी।
टङ्कारधरनामाहा टिवीखेचरनादिनी॥ १०-७१॥

ठठङ्कारी ठाठरूपा ठकारबीजकारणा।
डमरूप्रियवाद्या च डामरस्था डबीजिका॥ १०-७२॥

डान्तवर्गा डमरुका डरस्था डोरडामरा।
डगरार्द्धा डलातीता डदारुकेश्वरी डुता॥ १०-७३॥

ढार्द्धनारीश्वरा ढामा ढक्कारी ढलना ढला।
ढकेस्था ढेश्वरसुता ढेमनाभावढोनना॥ १०-७४॥

णोमाकान्तेश्वरी णान्तवर्गस्था णतुनावती।
णनो माणाङ्ककल्याणी णाक्षवीणाक्षबीजिका॥ १०-७५॥

तुलसीतन्तुसूक्ष्माख्या तारल्या तैलगन्धिका।
तपस्या तापससुता तारिणी तरुणी तला॥ १०-७६॥

तन्त्रस्था तारकब्रह्मस्वरूपा तन्तुमध्यगा।
तालभक्षत्रिधामूर्त्तीस्तारका तैलभक्षिका॥ १०-७७॥

तारोग्रा तालमाला च तकरा तिन्तिडीप्रिया।
तपसः तालसन्दर्भा तर्जयन्ती कुमारिका॥ १०-७८॥

तोकाचारा तलोद्वेगा तक्षका तक्षकप्रिया।

तक्षकालङ्कृता तोषा तावद्रूपा तलप्रिया॥ १०-७९॥

तलास्त्रधारिणी तापा तपसां फलदायिनी।

तल्वल्वप्रहरालीता तलारिगणनाशिनी॥ १०-८०॥

तूला तौली तोलका च तलस्था तलपालिका

तरुणा तप्तबुद्धिस्थास्तप्ता प्रधारिणी तपा॥ १०-८१॥

तन्त्रप्रकाशकरणी तन्त्रार्थदायिनी तथा।

तुषारकिरणाङ्गी च चतुर्धा वा समप्रभा॥ १०-८२॥

तैलमार्गाभिसूता च तन्त्रसिद्धिफलप्रदा।

ताम्रपर्णा ताम्रकेशा ताम्रपात्रप्रियातमा॥ १०-८३॥

तमोगुणप्रिया तोला तक्षकारिनिवारिणी।

तोषयुक्ता तमायाची तमषोढेश्वरप्रिया॥ १०-८४॥

तुलना तुल्यरुचिरा तुल्यबुद्धिस्त्रिधा मतिः।

तक्रभक्षा तालसिद्धिः तत्रस्थास्तत्र गामिनी॥ १०-८५॥

तलया तैलभा ताली तन्त्रगोपनतत्परा।

तन्त्रमन्त्रप्रकाशा च त्रिशरेणुस्वरूपिणी॥ १०-८६॥

त्रिंशदर्थप्रिया तुष्टा तुष्टिस्तुष्टजनप्रिया।

थकारकूटदण्डीशा थदण्डीशप्रियाऽथवा॥ १०-८७॥

थकाराक्षररूढाङ्गी थान्तवर्गाथ कारिका।

थान्ता थमीश्वरी थाका थकारबीजमालिनी॥ १०-८८॥

दक्षदामप्रिया दोषा दोषजालवनाश्रिता।

दशा दशनघोरा च देवीदासप्रिया दया॥ १०-८९॥

दैत्यहन्त्रीपरा दैत्या दैत्यानां मर्द्दीनी दिशा।

दान्ता दान्तप्रिया दासा दामना दीर्घकेशिका॥ १०-९०॥

दशना रक्तवर्णा च दरीग्रहनिवासिनी

देवमाता च दुर्लभा च दीर्घाङ्गा दासकन्यका॥ १०-९१॥

दशनश्री दीर्घनेत्रा दीर्घनासा च दोषहा।

दमयन्ती दलस्था च द्वेष्यहन्त्री दशस्थिता॥ १०-९२॥

दैशेषिका दिशिगता दशनास्त्रविनाशिनी

दारिद्र्यहा दरिद्रस्था दरिद्रधनदायिनी॥ १०-९३॥

दन्तुरा देशभाषा च देशस्था देशनायिका।

द्वेषरूपा द्वेषहन्त्री द्वेषारिगणमोहिनी॥ १०-९४॥

दामोदरस्थाननादा दलानां बलदायिनी।

दिग्दर्शना दर्शनस्था दर्शनप्रियवादिनी॥ १०-९५॥

दामोदरप्रिया दान्ता दामोदरकलेवरा।

द्राविणी द्रविणी दक्षा दक्षकन्या दलदृढा॥ १०-९६॥

दृढासनादासशक्तिर्द्वन्द्वयुद्धप्रकाशिनी।

दधिप्रिया दधिस्था च दधिमङ्गलकारिणी॥ १०-९७॥

दर्पहा दर्पदा दृप्ता दर्भपुण्यप्रिया दधिः।

दर्भस्था द्रुपदसुता द्रौपदी द्रुपदप्रिया॥ १०-९८॥

धर्मचिन्ता धनाध्यक्षा धश्वेश्वरवरप्रदा।

धनहा धनदा धन्वी धनुर्हस्ता धनुःप्रिया॥ १०-९९॥

धरणी धैर्यरूपा च धनस्था धनमोहिनी।
धोरा धीरप्रियाधारा धराधारणतत्परा॥ १०-१००॥

धान्यदा धान्यबीजा च धर्माधर्मस्वरूपिणी।
धाराधरस्था धन्या च धर्मपुञ्जनिवासिनी॥ १०-१०१॥

धनाढ्यप्रियकन्या च धन्यलोकैश्च सेविता।
धर्मार्थकाममोक्षाङ्गी धर्मार्थकाममोक्षदा॥ १०-१०२॥

धराधरा धुरोणा च धवला धवलामुखी।
धरा च धामरूपा च ध्रुवा ध्रौव्या ध्रुवप्रिया॥ १०-१०३॥

धनेशी धारणाख्या च धर्मनिन्दाविनाशिनी।
धर्मतेजोमयी धर्म्म्या धैर्याग्रभर्गमोहिनी॥ १०-१०४॥

धारणा धौतवसना धत्तूरफलभोगिनी।
नारायणी नरेन्द्रस्था नारायणकलेवरा॥ १०-१०५॥

नरनारायणप्रीता धर्मनिन्दा नमोहिता।

नित्या नापितकन्या च नयनस्था नरप्रिया॥ १०-१०६॥

नाम्नी नामप्रिया नारा नारायणसुता नरा।

नवीननायकप्रीता नव्या नवफलप्रिया॥ १०-१०७॥

नवीनकुसुमप्रीता नवीनानां ध्वजानुता।

नारी निम्बस्थितानन्दानन्दिनी नन्दकारिका॥ १०-१०८॥

नवपुष्पमहाप्रीता नवपुष्पसुगन्धिका।

नन्दनस्था नन्दकन्या नन्दमोक्षप्रदायिनी॥ १०-१०९॥

नमिता नामभेदा च नाम्नार्त्तवनमोहिनी।

नवबुद्धिप्रियानेका नाकस्था नामकन्यका॥ १०-११०॥

निन्दाहीना नवोल्लासा नाकस्थानप्रदायिनी।

निम्बवृक्षस्थिता निम्बा नानावृक्षनिवासिनी॥ १०-१११॥

नाश्यातीता नीलवर्णा नीलवर्णा सरस्वती।

नभःस्था नायकप्रीता नायकप्रियकामिनी॥ १०-११२॥

नैववर्णा निराहारा निर्वीहाणां रजःप्रिया।
निम्ननाभिप्रियाकारा नरेन्द्रहस्तपूजिता॥ १०-११३॥

नलस्थिता नलप्रीता नलराजकुमारिका।
परेश्वरी परानन्दा परापरविभेदिका॥ १०-११४॥

परमा परचक्रस्था पार्वती पर्वतप्रिया।
पारमेशी पर्वनाना पुष्पमाल्यप्रिया परा॥ १०-११५॥

परा प्रिया प्रीतिदात्री प्रीतिः प्रथमकामिनी।
प्रथमा प्रथमा प्रीता पुष्पगन्धप्रिया परा॥ १०-११६॥

पौष्यी पानरता पीना पीनस्तनसुशोभना।
परमानरता पुंसां पाशहस्ता पशुप्रिया॥ १०-११७॥

पललानन्दरसिका पलालधूमरूपिणी।
पलाशपुष्पसङ्काशा पलाशपुष्पमालिनी॥ १०-११८॥

प्रेमभूता पद्ममुखी पद्मरागसुमालिनी।

पद्ममाला पापहरा पतिप्रेमविलासिनी॥ १०-११९॥

पञ्चाननमनोहारी पञ्चवक्त्रप्रकाशिनी।

फलमूलाशना फाली फलदा फाल्गुनप्रिया॥ १०-१२०॥

फलनाथप्रिया फल्ली फल्गुकन्या फलोन्मुखी।

फेत्कारीतन्त्रमुख्या च फेत्कारगणपूजिता॥ १०-१२१॥

फेरवी फेरवसुता फलभोगोद्भवा फला।

फलप्रिया फलाशक्ता फाल्गुनानन्ददायिनी॥ १०-१२२॥

फालभोगोत्तरा फेला फुलाम्भोजनिवासिनी।

वसुदेवगृहस्था च वासवी वीरपूजिता॥ १०-१२३॥

विषभक्षा बुधसुता ब्लुङ्कारी ब्लूवरप्रदा।

ब्राह्मी बृहस्पतिसुता वाचस्पतिवरप्रदा॥ १०-१२४॥

वेदाचारा वेद्यपरा व्यासवक्त्रस्थिता विभा।

बोधज्ञा वौषडाख्या च वंशीवंदनपूजिता॥ १०-१२५॥

वज्रकान्ता वज्रगतिर्बदरीवंशविवर्द्धिनी।

भारती भवरश्रीदा भवपत्नी भवात्मजा॥ १०-१२६॥

भवानी भाविनी भीमा भिषग्भार्या तुरिस्थिता।

भूर्भुवःस्वःस्वरूपा च भृशार्त्ता भेकनादिनी॥ १०-१२७॥

भौती भङ्गप्रिया भङ्गभङ्गहा भङ्गहारिणी।

भर्ता भगवती भाग्या भगीरथनमस्कृता॥ १०-१२८॥

भगमाला भूतनाथेश्वरी भार्गवपूजिता।

भृगुवंशा भीतिहरा भूमिर्भुजगहारिणी॥ १०-१२९॥

भालचन्द्राभभल्वबाला भवभूतिर्विभूतिदा।

मकरस्था मत्तगतिर्मदमत्ता मदप्रिया॥ १०-१३०॥

मदिराष्टादशभुजा मदिरा मत्तगामिनी।

मदिरासिद्धिदा मध्या मदान्तर्गतिसिद्धिदा॥ १०-१३१॥

मीनभक्षा मीनरूपा मुद्रामुद्गप्रिया गतिः।

मुषला मुक्तिदा मूर्त्ता मूकीकरणतत्परा॥ १०-१३२॥

मृषार्त्ता मृगतृष्णा च मेषभक्षणतत्परा।

मैथुनानन्दसिद्धिश्च मैथुनानलसिद्धिदा॥ १०-१३३॥

महालक्ष्मीर्भैरवी च महेन्द्रपीठनायिका।

मनःस्था माधवीमुख्या महादेवमनोरमा॥ १०-१३४॥

यशोदा याचना यास्या यमराजप्रिया यमा।

यशोराशिविभूषाङ्गी यतिप्रेमकलावती॥ १०-१३५॥

रमणी रामपत्नी च रिपुहा रीतिमध्यगा।

रुद्राणी रूपदा रूपा रूपसुन्दरधारिणी॥ १०-१३६॥

रेतःस्था रेतसः प्रीता रेतःस्थाननिवासिनी।

रेन्द्रादेवसुतारेदा रिपुवर्गान्तकप्रिया॥ १०-१३७॥

रोमावलीन्द्रजननी रोमकूपजगत्पतिः।

रौप्यवर्णा रौद्रवर्णा रौप्यालङ्कारभूषणा॥ १०-१३८॥

रङ्गिणा रङ्गरागस्था रणवह्निकुलेश्वरी।

लक्ष्मीः लाङ्गलहस्ता च लाङ्गली कुलकामिनी॥ १०-१३९॥

लिपिरूपा लीढपादा लतातन्तुस्वरूपिणी।
लिम्पती लेलिहा लोला लोमशप्रियसिद्धिदा॥ १०-१४०॥

लौकिकी लौकिकीसिद्धिर्लङ्कानाथकुमारिका।
लक्ष्मणा लक्ष्मीहीना च लप्रिया लार्णमध्यगा॥ १०-१४१॥

विवसा वसनावेशा विवस्यकुलकन्यका।
वातस्था वातरूपा च वेलमध्यनिवासिनी॥ १०-१४२॥

श्मशानभूमिमध्यस्था श्मशानसाधनप्रिया।
शवस्था परसिद्ध्यर्थी शववक्षसि शोभिता॥ १०-१४३॥

शरणागतपाल्या च शिवकन्या शिवप्रिया।
षड्चक्रभेदिनी षोढा न्यासजालदृढानना॥ १०-१४४॥

सन्ध्यासरस्वती सुन्द्या सूर्यगा शारदा सती।
हरिप्रिया हरहालालावण्यस्था क्षमा क्षुधा॥ १०-१४५॥

क्षेत्रज्ञा सिद्धिदात्री च अम्बिका चापराजिता।

आद्या इन्द्रप्रिया ईशा उमा ऊढा ऋतुप्रिया॥ १०-१४६॥

सुतुण्डा स्वरबीजान्ता हरिवेशादिसिद्धिदा।

एकादशीव्रतस्था च एन्द्री ओषधिसिद्धिदा॥ १०-१४७॥

औपकारी अंशरूपा अस्त्रबीजप्रकाशिनी।

इत्येतत् कामुकीनाथ कुमारीणां सुमङ्गलम्॥ १०-१४८॥

त्रैलोक्यफलदं नित्यमष्टोत्तरसहस्रकम्।

महास्तोत्रं धर्मसारं धनधान्यसुतप्रदम्॥ १०-१४९॥

सर्वविद्याफलोल्लासं भक्तिमान् यः पठेत् सुधीः।

स सर्वदा दिवारात्रौ स भवेन्मुक्तिमार्गगः॥ १०-१५०॥

सर्वत्र जयमाप्नोति वीराणां वल्लभो लभेत्।

सर्वे देवा वशं यान्ति वशीभूताश्च मानवाः॥ १०-१५१॥

ब्रह्माण्डे ये च शंसन्ति ते तुष्टा नात्र संशयः।

ये वशन्ति च भूर्लोके देवतुल्यपराक्रमाः॥ १०-१५२॥

ते सर्वे भृत्यतुल्याश्च सत्यं सत्यं कुलेश्वर।
अकस्मात् सिद्धिमाप्नोति होमेन यजनेन च॥ १०-१५३॥

जाप्येन कवचाद्येन महास्तोत्रार्थपाठतः।
विना यज्ञैर्वीना दानैर्वीना जाप्यैर्लभेत् फलम्॥ १०-१५४॥

यः पठेत् स्तोत्रकं नाम चाष्टोत्तरसहस्रकम्।
तस्य शान्तिर्भवेत् क्षिप्रं कन्यास्तोत्रं पठेत्ततः॥ १०-१५५॥

वारत्रयं प्रपाठेन राजानं वशमानयेत्।
वारैकपठितो मन्त्री धर्मार्थकाममोक्षभाक्॥ १०-१५६॥

त्रिदिनं प्रपठेद्विद्वान् यदि पुत्रं समिच्छति।
वारत्रयक्रमेणैव वारैकक्रमतोऽपि वा॥ १०-१५७॥

पठित्त्वा धनरत्नानामधिपः सर्ववित्तगः।
त्रिजगन्मोहयेन्मन्त्री वत्सरार्द्धं प्रपाठतः॥ १०-१५८॥

वत्सरं वाप्य यदि वा भक्तिभावेन यः पठेत्।

चिरजीवी खेचरत्त्वं प्राप्य योगी भवेन्नरः॥ १०-१५९॥

महादूरस्थितं वर्णं पश्यति स्थिरमानसः।
महिलामण्डले स्थित्त्वा शक्तियुक्तः पठेत् सुधीः॥ १०-१६०॥

स भवेत्साधकश्रेष्ठः क्षीरी कल्पद्रुमो भवेत्।
सर्वदा यः पठेन्नाथ भावोद्गतकलेवरः॥ १०-१६१॥

दर्शनात् स्तम्भनं कर्त्तुं क्षमो भवति साधकः।
जलादिस्तम्भने शक्तो वह्निस्तम्भादिसिद्धिभाक्॥ १०-१६२॥

वायुवेगी महावाग्मी वेदज्ञो भवति ध्रुवम्।
कविनाथो महाविद्यो वन्धकः पण्डितो भवेत्॥ १०-१६३॥

सर्वदेशाधिपो भूत्त्वा देवीपुत्रः स्वयं भवेत्।
कान्तिं श्रियं यशो वृद्धिं प्राप्नोति बलवान् यतिः॥ १०-१६४॥

अष्टसिद्धियुतो नाथ यः पठेदर्थसिद्धये।
उज्जटेऽरण्यमध्ये च पर्वते घोरकानने॥ १०-१६५॥

वने वा प्रेतभूमौ च शवोपरि महारणे।

ग्रामे भग्नगृहे वापि शून्यागारे नदीतटे॥ १०-१६६॥

गङ्गागर्भे महापीठे योनिपीठे गुरोर्गृहे।

धान्यक्षेत्रे देवगृहे कन्यागारे कुलालये॥ १०-१६७॥

प्रान्तरे गोष्ठमध्ये वा राजादिभयहीनके।

निर्भयादिस्वदेशेषु शिलिङ्गालयेऽथवा॥ १०-१६८॥

भूतगर्त्ते चैकलिङ्गे वा शून्यदेशे निराकुले।

अश्वत्थमूले बिल्वे वा कुलवृक्षसमीपगे॥ १०-१६९॥

अन्येषु सिद्धदेशेषु कुलरूपाश्च साधकः।

दिव्ये वा वीरभावस्थो यष्ट्वा कन्यां कुलाकुलै॥ १०-१७०॥

कुलद्रव्यैश्च विविधैः सिद्धिद्रव्यैश्च साधकः।

मांसासवेन जुहुयान्मुक्तेन रसेन च॥ १०-१७१॥

हुतशेषं कुलद्रव्यं ताभ्यो दद्यात् सुसिद्धये।

तासामुच्छिष्टमानीय जुहुयाद् रक्तपङ्कजे॥ १०-१७२॥

घृणालज्जाविनिर्मुक्तः साधकः स्थिरमानसः।

पिबेन्मांसरसं मन्त्री सदानन्दो महाबली॥ १०-१७३॥

महामांसाष्टकं ताभ्यो मदिराकुम्भपूरितम्।

तारो माया रमावह्निजायामन्त्रं पठेत् सुधीः॥ १०-१७४॥

निवेद्य विधिनानेन पठित्त्वा स्तोत्रमङ्गलम्।

स्वयं प्रसादं भुक्त्वा हि सर्वविद्याधिपो भवेत्॥ १०-१७५॥

शूकरस्योष्ट्रमांसेन पीनमीनेन मुद्रया।

महासवघटेनापि दत्त्वा पठति यो नरः॥ १०-१७६॥

ध्रुवं स सर्वगामी स्याद् विना होमेन पूजया।

रुद्ररूपो भवेन्नित्यं महाकालात्मको भवेत्॥ १०-१७७॥

सर्वपुण्यफलं नाथ क्षणात् प्राप्नोति साधकः।

क्षीराब्धिरत्नकोषेशो वियद्व्यापी च योगिराट्॥ १०-१७८॥

भक्त्याह्लादं दयासिन्धुं निष्कामत्त्वं लभेद् ध्रुवम्।

महाशत्रुपातने च महाशत्रुभयाद्दीते॥ १०-१७९॥

वारैकपाठमात्रेण शत्रूणां वधमानयेत्।
समर्दयेत् शत्रून् क्षिप्रमन्धकारं यथा रविः॥ १०-१८०॥

उच्चाटने मारणे च भये घोरतरे रिपौ।
पठनाद्धारणान्मर्त्यो देवा वा राक्षसादयः॥ १०-१८१॥

प्राप्नुवन्ति झटित् शान्तिं कुमारीनामपाठतः।
पुरुषो दक्षिणे बाहौ नारी वामकरे तथा॥ १०-१८२॥

धृत्वा पुत्रादिसम्पत्तिं लभते नात्र संशयः॥ १०-१८३॥

ममाज्ञया मोक्षमुपैति साधको।
गजान्तकं नाथ सहस्रनाम च
पठेन्मनुष्यो यहि भक्तिभावत--
स्तदा हि सर्वत्र फलोदयं लभेत् च॥ १०-१८४॥

मोक्षं सत्फलभोगिनां स्तववरं सारं परानन्ददं
ये नित्यं हि मुदा पठन्ति विफलं सार्थञ्च चिन्ताकुलाः

ते नित्याः प्रभवन्ति कीतीकमले श्रीरामतुल्यो जये

कन्दर्पायुततुल्यरूपगुणिनः क्रोधे च रुद्रोपमाः॥ १०-१८५॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने कुमार्युपचर्याविन्यासे

सिद्धमन्त्र-- प्रकरणे दिव्यभावनिर्णये

अष्टोत्तरसहस्रनाममङ्गलोल्लासे

दशमः पटलः॥ १०॥

अथैकादशः पटलः

आनन्दभैरवी उवाच

अथातः सम्प्रवक्ष्यामि दिव्यभावादिनिर्णयम्।

यमाश्रित्य महारुद्रो भुवनेश्वरनामधृक्॥ ११-१॥

यं ज्ञात्वा कमलानाथो देवतानामधीश्वरः।

चतुर्वेदाधिपो ब्रह्मा साक्षाद्ब्रह्म सनातनः॥ ११-२॥

बटुको मम पुत्रश्च शक्रः स्वर्गाधिदेवता।

अष्टसिद्धियुताः सर्वे दिक्पालाः खेचरादयः॥ ११-३॥

तत्प्रकारं महादेव आनन्दनाथभैरव।

सुरानन्द हृदयानन्द ज्ञानानन्द दयामय ॥ ११-४॥

श्रृणुस्वैकमना नाथ यदि त्वं सिद्धिमिच्छसि।

मम प्रियानन्दरूप यतो मे त्वं तनुस्थितः॥ ११-५॥

त्रिविधं दिव्यभावञ्च वेदागमविवेकजम्।

वेदार्थमधमं सम्प्रोक्तं मध्यमं चागमोद्भवम्॥ ११-६॥

उत्तमं सकलं प्रोक्तं विवेकोल्लाससम्भवम्।

तथैव त्रिविधं भावं दिव्यवीरपशुक्रमम्॥ ११-७॥

दिव्यं विवेकजं प्रोक्तं सर्वसिद्धिप्रदायकम्।

उत्तमं तद्विजानीयादानन्दरससागरम्॥ ११-८॥

मध्यमं चागमोल्लासं वीरभावं क्रियान्वितम्।

वेदोद्भवं फलार्थञ्च पशुभावं हि चाधमम्॥ ११-९॥

सर्वनिन्दा समाव्याप्तं भावानामधमं पशोः।

उत्तमे उत्तमं ज्ञानं भावसिद्धिप्रदं नृणाम्॥ ११-१०॥

मध्यमे मधुमत्याश्च मत्कुलागमसम्भवम्।

अकालमृत्युहरणं भावानामतिदुर्लभम्॥ ११-११॥

वीरभावं विना नाथ न सिध्यति कदाचन।

अधमे अधमा व्याख्या निन्दार्थवाचकं सदा॥ ११-१२॥

यदि निन्दा न करोति तदा तत्फलमाप्नुयात्।

पशुभावेऽपि सिद्धिः स्यात् यदि वेदं सदाभ्यसेत्॥ ११-१३॥

वेदार्थचिन्तनं नित्यं वेदपाठध्वनिप्रियम्।

सर्वनिन्दाविरहितं हिंसालस्यविवजीतम्॥ ११-१४॥

लोभ--मोह--काम--क्रोध--मदमात्सर्यवजीतम्।

यदि भावस्थितो मन्त्री पशुभावेऽपि सिद्धिभाक्॥ ११-१५॥

पशुभावं महाभावं ये जानन्ति महीतले।

किमसाध्यं महादेव श्रमाभ्यासेन यान्ति तत्॥ ११-१६॥

श्रमाधीनं जगत् सर्वं श्रमाधीनाश्च देवताः।

श्रमाधीनं महामन्त्रं श्रमाधीनं परन्तपः॥ ११-१७॥

श्रमाधीनं कुलाचारं पशुभावोपलक्षणम्।

वेदार्थज्ञानमात्रेण पशुभावं कुलप्रियम्॥ ११-१८॥

स्मृत्यागमपुराणानि वेदार्थविविधानि च।

अभ्यस्य सर्वशास्त्राणि तत्त्वज्ञानात्तु बुद्धिमान्॥ ११-१९॥

पललमिव धान्यार्थी सर्वशास्त्राणि सन्त्यजेत्।

ज्ञानी भूत्वा भावसारमाश्रयेत् साधकोत्तमः॥ ११-२०॥

वेदे वेदक्रिया कार्या मदुक्तवचनादृतः।

पशूनां श्रमदाहानामिति लक्षणमीरितम्॥ ११-२१॥

आगमार्थं क्रिया कार्या मत्कुलागमचेष्टया।

वीराणामुद्धतानाञ्च मत् शरीरानुगामिनाम्॥ ११-२२॥

मच्चेच्छाकुल तत्त्वानामिति लक्षणमीरितम्।

विवेकसूत्रसंज्ञाज्ञा कार्या सुदृढॅएतसाम्॥ ११-२३॥

सर्वत्र समभावानां भावमात्रं हि साधनम्।

सर्वत्र मत्पदाम्भोजसम्भवं सचराचरम्॥ ११-२४॥

पृष्ट्वा यत्कुरुते कर्म चाखण्डफलसिद्धिदम्।

अखण्डज्ञानचित्तानामिति भावं विवेकिनाम्॥ ११-२५॥

निर्मलानन्ददिव्यानामिति लक्षणमीरितम्।

दिव्ये तु त्रिविधं भावं यो जानाति महीतले॥ ११-२६॥

न नश्यति महावीरः कदाचित् साधकोत्तमः।

दिव्यभावं विना नाथ मत्पदाम्भोजदर्शनम्॥ ११-२७॥

य इच्छति महादेव स मूढः साधकः कथम्।

पशुभावं प्रथमके द्वितीये वीरभावकम्॥ ११-२८॥

तृतीये दिव्यभावञ्च दिव्यभावत्रयं क्रमात्।

तत्प्रकारं शृणु शिव त्रैलोक्यपरिपावन॥ ११-२९॥

भावत्रयविशेषज्ञः षडाधारस्य भेदनः।

पञ्चतत्त्वार्थभावज्ञो दिव्याचाररतः तदा॥ ११-३०॥

स एव भवति श्रीमान् सिद्धनामादिपारगः।
शिववद् विहरेत् सोऽपि अष्टैश्वर्यसमन्वितः॥ ११-३१॥

सर्वत्र शुचिभावेन आनन्दघनसाधनम्।
प्रातःकालादिमध्याह्नकालपर्यन्तधारणम्॥ ११-३२॥

भोजनञ्चोक्तद्रव्येण संयमादिक्रमेण वा।
यः साधयति स सिद्धो दिव्यभावे पशुक्रमात्॥ ११-३३॥

दिव्यभावे वीरभावं वदामि तत्पुनः शृणु।
मध्याह्नादिकसन्ध्यान्तं शुचिभावेन साधनम्॥ ११-३४॥

जपनं धारणं वापि चित्तमादाय यत्नतः।
एकान्तनिर्जने देशे सिद्धो भवति निश्चितम्॥ ११-३५॥

तत्कालं वीरभावार्थं भावमात्रं हि साधनम्।
भावेन लभते सिद्धिं वीरादन्यन्न कुत्रचित्॥ ११-३६॥

रात्रौ गन्धादिसम्पूर्णस्ताम्बूलपूरिताननः।

विजयानन्दसम्पन्नो जीवात्मपरमात्मनोः॥ ११-३७॥

एक्यं चित्ते समाधाय आनन्दोद्रेकसंभ्रमः।

यो जपेत् सकलां रात्रिं गतभीनीर्जने गृहे॥ ११-३८॥

स भवेत् कालिकादासो दिव्यानामुत्तमोत्तमः।

एवं भावत्रयं ज्ञात्वा यः कर्म साधयेत्ततः॥ ११-३९॥

अष्टैश्वर्ययुतो भूत्वा सर्वज्ञो भवति ध्रुवम्।

भावत्रयाणां मध्ये तु भावपुण्यार्थनिर्णयम्॥ ११-४०॥

शृणु नाथ प्रवक्ष्यामि सावधानाऽवधारय।

अकस्मात् सिद्धिमाप्नोति ज्ञात्वा सङ्केतलाञ्छितम्॥ ११-४१॥

यो जानाति महादेव तस्य सिद्धिर्न संशयः।

द्वादशे पटले सूक्ष्मसङ्केतार्थं वदामि तत्॥ ११-४२॥

आनन्दभैरवी उवाच

एकादशे च पटले शुद्धभावार्थनिर्णयम्।
भावेन लभ्यते सर्वं भावाधीनं जगत्त्रयम्॥ ११-४३॥

भावं विना महादेव न सिद्धिर्जायते क्वचित्।
पशुभावाश्रयाणाञ्च अरुणोदयकालतः॥ ११-४४॥

दशदण्डाश्रितं कालं प्रश्नार्थं केवलं प्रभो।
चक्रं द्वादशराशेश्च मासद्वादशकस्य च॥ ११-४५॥

दशदण्डे विजानीयाद् भावाभावं विचक्षणः।
अनुलोमविलोमेन पञ्चस्वरविभेदतः॥ ११-४६॥

बाल्य कैशोरसौन्दर्यं यौवनं वृद्धसञ्ज्ञकम्।
अस्त(अष्ट)मितं क्रमाज्ज्ञेयो विधिः पञ्चस्वरः स्वयम्॥ ११-४७॥

स्वकीयं नासिकाग्रस्थं पञ्चमं परिकीतीतम्।
यन्नासापुटमध्ये तु वायुर्भवति भैरव॥ ११-४८॥

तन्नासापुटमध्ये तु भावाभावं विचिन्तयेत्।
आकाशं वायुरूपं हि तैजसं वारुणं प्रभो॥ ११-४९॥

पार्थीवं क्रमशो ज्ञेयं बाल्यास्तादिक्रमेण तु।
वामोदये शुभा वामा दक्षिणे पुरुषः शुभः॥ ११-५०॥

वायूनां गमनं ज्ञेयं गगनावधिरेव च।
केवलं मध्यदेशे तु गमनं पवनस्य च॥ ११-५१॥

तदाकाशं विजानीयाद् बाल्यभावं प्रकीर्तितम्
तिर्यग्गतिस्तु नासाग्रे वायोरुदयमेव च॥ ११-५२॥

केवलं भ्रमणं ज्ञेयं सर्वमङ्गलमेव च।
किशोरं तद्विजानीयाद् वायौ तिर्यग्गतौ विभो॥ ११-५३॥

केवलोर्द्ध्वनासिकाग्रे वायुर्गच्छति दण्डवत्।
तत्तैजसं विजानीयाद् गमनं बलवद् भवेत्॥ ११-५४॥

तद्वृद्धगतभावञ्च विलम्बोऽधिकचेष्टया।
प्राप्नोति परमां प्रीतिं वरुणाम्भोदये रुजाम्॥ ११-५५॥

यदाधो गच्छति क्षिप्रं किञ्चिद् ऊर्ध्वमगोचरम्।

यदा करोति प्रश्वासं तदा रोगोल्बणोदयः॥ ११-५६॥

पृथिव्या उन्नतं भाग्यं योगातपप्रपीडितम्।
अस्तमितं महादेव अनुलोमविलोमतः॥ ११-५७॥

पवनो गच्छति क्षिप्रं वामदक्षिणभेदतः।
वामनासापुटे याति पृथिवी जलमेव च॥ ११-५८॥

सदा फलाफलं दत्ते मुदिता कुण्डमण्डले।
तयोर्वै वायवी शक्तिः फलभागं तदा लभेत्॥ ११-५९॥

यद्येवं वामभागे तु वामायाः प्रश्नकर्मणि।
यदि तत्र पुमान् प्रश्नं करोति वामगामिने॥ ११-६०॥

तदा रोगमवाप्नोति कर्महीनो भवेद् ध्रुवम्।
यदि वायूदयो वामे दक्षिणे पुरुषः स्थितः॥ ११-६१॥

तदा फलमवाप्नोति द्रव्यागमनदुर्लभम्।
अकस्माद् द्रव्यहानिः स्यान्मनोगतफलापहम्॥ ११-६२॥

सुहृद् भङ्गविवादश्च भिन्नभिन्नोदये शुभम्।
केवलं वरुणस्यैव पुरुषो दक्षिणे शुभम्॥ ११-६३॥

अशुभं पृथिवीदक्षे भेदोऽयं वरदुर्लभः।
सदोदयं दक्षिणे च वायोस्तैजस एव च॥ ११-६४॥

आकाशस्य विजानीयात् शुभाशुभफलं प्रभो।
यदि भाग्यवशादेव वायोर्मन्दा गतिर्भवेत्॥ ११-६५॥

दक्षनाशामध्यदेशे तदा वामोदयं शुभम्।
तदा वामे विचारश्च वायुतेजोद्वयस्य च॥ ११-६६॥

ज्ञात्वोदयं विजानीयाद् मित्रे हानिः सुरे भयम्।
एवं सुभवनागारे यदि गच्छति वायवी॥ ११-६७॥

तस्मिन् काले पुमान् दक्षो दक्षभागस्थसम्मुखः।
तदा कन्यादानफलं यथा प्राप्नोति मानवः॥ ११-६८॥

तदा वायुप्रसादेन प्राप्नोति धनमुत्तमम्।
देशान्तरस्थभावार्त्ता आयान्ति पुत्रसम्पदः॥ ११-६९॥

बाल्यादिकं भावत्रयं राशिभेदे शुभं दिशेत्
एतच्चक्रे फलं तस्य राशिद्वादशचक्रके॥ ११-७०॥

सूक्ष्मं फलं विजानीयात् चक्रं नाम शृणु प्रभो।
आज्ञाचक्रं कामचक्रं फलचक्रञ्च सारदम्॥ ११-७१॥

प्रश्नचक्रं भूमिचक्रं स्वर्गचक्रं ततः परम्।
तुलाचक्रं वारिचक्रं षड्चक्रं त्रिगुणात्मकम्॥ ११-७२॥

सारचक्रमुल्काचक्रं मृत्युचक्रं क्रमात्प्रभो।
षड्कोणं चात्र जानीयादनुलोमविलोमतः॥ ११-७३॥

सर्वचक्रे स्वरज्ञानं सर्वत्र वायुसङ्गतिम्।
सर्वप्रश्नादिसञ्चारं भावेन जायते यदि॥ ११-७४॥

तदा तद्दण्डमानञ्च ज्ञात्वा राश्युदयं बुधः।
कुर्यात् प्रश्नविचारञ्च यदि कीर्तीमिहेच्छति॥ ११-७५॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने भावबोधनिर्णये

पशुभावविचारे

सारसङ्केते सिद्धमन्त्रप्रकरणे भैरवीभैरवसंवादे एकादशः

पटलः॥ ११॥

अथ द्वादशः पटलः

आनन्दभैरवी उवाच

तद्वामसन्धिदेशस्थमष्टमाङ्कमथो लिखेत्।

तदधः सन्धिदेशस्थं सप्ताङ्कं विलिखेद् बुधः॥ १२-१॥

तदूर्ध्वं वामकोणे च तृतीयाङ्कं लिखेत्ततः।

तदूर्ध्वं कोणगेहे च युग्माङ्कं विलिखेत्तथा॥ १२-२॥

तद्दक्षिणे गृहे चैकमङ्कवर्णं शृणु प्रभो।

वसुभावं शून्यभावं षष्ठभावञ्च शून्यकम्॥ १२-३॥

एतन्मध्ये नास्ति वर्णं कोणाङ्कञ्च सवर्णकम्।

टतवर्गौ श श लिखेत् शरे शून्याध एव च॥ १२-४॥

वेदाङ्कस्थौ कचवर्गौ एकारसमन्वितौ।
तृतीयाङ्कस्थितं वर्णं आदिक्षान्तं टवर्गमोम्॥ १२-५॥

तपवर्गौ युगान्तस्थौ मकारं सावधानतः।
विलिखेद् दक्षिणे तस्य गेहे चैकाङ्कमध्यके॥ १२-६॥

उयुगं पतवर्गौ च अकारं युग्मशीर्षके।
एतत् चक्रं कामचक्रं प्रश्नकाले फलप्रदम्॥ १२-७॥

वामावर्त्तेन गणयेत् दशकोणस्थवर्णकान्।
अनुलोम विलोमेन पञ्चस्वरादिनामतः॥ १२-८॥

यस्मिन्गृहे स्वीयनाम प्राप्नोति वेदपारगः।
तद्गृहावधि प्रश्नार्थं गणयेद् ग्रहसिद्धये॥ १२-९॥

नवग्रहनवस्थानं वर्णं ज्ञात्वा सुबुद्धिमान्।
बाल्यभावादिकं ज्ञात्वा यत्र ग्रहस्थितिर्भवेत्॥ १२-१०॥

तन्नक्षत्रं समानीय द्वाराधिकारमानयेत्।
विना त्रिकोणयोगेन षट्कोणं लिखेद् बुधः॥ १२-११॥

तन्मध्ये अष्टकोणञ्च भित्वा देवगृहान्तरम्।

तन्मध्ये चापि षट्कोणं तन्मध्ये च त्रिकोणकम्॥ १२-१२॥

क्रमेण विलिखेद् वर्णं दक्षिणावर्त्तयोगतः।

ऊद्र्ध्ववामदेशभागे अ आ इ च कवर्गकम्॥ १२-१३॥

तद्दक्षिणे ई इ युगं टवर्गञ्च लिखेद् बुधः।

दक्षपार्श्वे अधोभागे ऋयुगं तु तवर्गकम्॥ १२-१४॥

तदधो लृ लॄ ए ए रूपञ्च पवर्गञ्च लिखेद् बुधः।

तद्वामपार्श्वभागे च ओ औ यरलवान् लिखेत्॥ १२-१५॥

शेषगेहे लिखेदं अः शादिक्षान्तं हि षड्गृहे।

मध्यस्तमादिकोणे च एकाङ्कं शार्वकं तनुम्॥ १२-१६॥

रुद्राग्निमूर्तीमनिलं अग्निकोणे लिखेद् बुधः।

यजमानः पशुपतिमूर्तीषष्ठञ्च दक्षिणे॥ १२-१७॥

महादेवं सोममूर्तीं सप्तमं नैर्ऋते लिखेत्।

जलमूर्त्तीभवं युग्मं पश्चिमे विलिखेद् बुधः॥ १२-१८॥

उग्रवीरं वायुमूर्त्तीं वायुकोणे चतुर्थकम्।
भीमरूपाकाशमूर्त्तीं पञ्चमं चोत्तरे लिखेत्॥ १२-१९॥

ईशानं सूर्यमूर्तीञ्च ईशाने षड्दलं लिखेत्।
अधः षट्कोणमध्ये च षट्कोणं विलिखेत्ततः॥ १२-२०॥

ऊर्द्ध्वकोणे ग्रीष्मकालं शिशिरञ्चापि दक्षिणे।
वर्षाकालमधस्तस्य सर्वाधश्च वसन्तकम्॥ १२-२१॥

शरत्कालं पञ्चकोशे शीतकालञ्च षष्ठके।
त्रिकोणे चापि तन्मध्ये वह्निरूपं वकारकम्॥ १२-२२॥

लिखित्वा गणयेन्मन्त्री वर्णदेवाङ्कवह्निभिः।
एतच्चक्रं महासूक्ष्मं फलचक्रं विशारदम्॥ १२-२३॥

अधुना कुलनाथेश पृष्ठचक्रं पुनः शृणु।
विना ज्ञानेन यस्यैवं पृष्ठभावो न जायते॥ १२-२४॥

यदि पृष्ठचक्रभावं जानाति साधकोत्तमः।

तदा निजफलं ज्ञात्वा सिद्धिमाप्नोति निश्चितम्॥ १२-२५॥

आनन्दभैरव उवाच

षट्कोणं कारयेन्मन्त्री विना त्रिकोणसाधनैः।

तन्मध्ये च चतुष्कोणं तन्मध्ये शादिवर्णकान्॥ १२-२६॥

लिखित्वा विलिखेत्तत्र षडङ्कमध्यदेशतः।

षडङ्कं दापयेन्मन्त्री दीर्घदीर्घक्रमेण तु॥ १२-२७॥

तदग्रे षड्गृहं कुर्यात्तत्राङ्कार्णान् लिखेत्सुधीः।

ऊद्र्ध्वप्रथमगेहे च कवर्गं विलिखेद् बुधः॥ १२-२८॥

तद्दक्षिणे मन्दिरे च चवर्गं विलिखेद् बुधः।

टवर्गं दक्षिणे चाधः सर्वाधस्तु तवर्गकम्॥ १२-२९॥

तद्वामे मन्दिरे नाथ पवर्गं वर्णमङ्गलम्।

तदूर्ध्वे यादिवान्तं च दक्षिणावर्त्तयोगतः॥ १२-३०॥

अकारादिस्वरान् तत्र मन्दिरे विलिखेद् बुधः।
यावत् स्वरस्थितिर्याति तावत्कालं विचारयेत्॥ १२-३१॥

मेषादिराशिसद्भावं वर्गलेखनमानतः।
अनुलोमविलोमेन विलिखेत् षष्ठमन्दिरे॥ १२-३२॥

यद्यद्गृहे साध्यनाम चास्ति नाथ स्वरादिकम्।
एकत्रीकृत्य हरणात् यदङ्कं प्राप्यते वरम्॥ १२-३३॥

षडङ्केन ततो नाथ हरेदनलसंख्यया।
यदङ्कं प्राप्यते तत्र स राशिस्तत् क्षणस्य च॥ १२-३४॥

आज्ञाचक्रं फलं सिद्धं विद्यानाथ वदामि तत्।
येन विज्ञातमात्रेण सर्वज्ञो भवति ध्रुवम्॥ १२-३५॥

अकस्मात् शक्तिमाप्नोति विद्यारत्नं ददामि तत्।
रव्यादिसप्तवारञ्च कृते भद्रविवर्धनम्॥ १२-३६॥

शन्यादिसप्तवारं च त्रेतायां सौख्यवर्द्धनम्।
गुर्वादिसप्तवारञ्च द्वापरे धर्मसाधनम्॥ १२-३७॥

शुक्रादिवारसप्तञ्च कलौ युगफलप्रदम्।

अतः शुक्रादिपर्यन्तं गणनीयं विचक्षणैः॥ १२-३८॥

गणयेत् सप्तवारञ्च मध्ये चतुर्द्रदले सुधीः।

पूर्वादिक्रमतो वारान् गणयेद् तन्त्रवित्तमः॥ १२-३९॥

निजवारो यत्र पत्रे समाप्तिस्तूद्भवञ्च तत्।

तद्भराशिं समानीय वर्णभेदं समानयेत्॥ १२-४०॥

सामान्यफलमूलञ्च वदार्णादिपत्रभेदतः।

आज्ञाचक्रं शुभं मन्त्री आज्ञाचक्रं विचारयेत्॥ १२-४१॥

तत्फलाफलमाहात्म्यं श्रृणु सङ्केतपण्डित॥ १२-४२॥

आनन्दभैरव उवाच

दले पूर्वभागे आकारार्ध इन्दु--।

स्फुटे राज्यलाभं हकारान्तशब्दम्।

सामानार्थभावं विशिष्टार्थयोग।

क्रतुक्षेमयुक्तं तथा पुत्रलाभम्॥ १२-४३॥

दयायुक्तभूषाश्रयत्वं जयत्व।

समाप्नोति मर्त्यो विवाहं सुवाहम्

सुखं नाथ लोकानुरागं सुभोग।

विभाधावकानां समाप्ते क्षणादिम्॥ १२-४४॥

पद्मे दक्षिणपत्रके प्रियपदा मोददहं भास्वर।

नानालक्षणदुःखदं शुचिपदा आन्दोलितस्तैरहम्।

माहेन्द्रामृतयोगरागहननं साक्षाद्यमारोपण।

चित्तानां परिचञ्चलं खलगुणाह्लादेन सामोदितम्॥ १२-४५॥

पात्रार्थलाभं यदि वाध एव प्रगच्छति क्रूरखलप्रतापः।

तथापि हन्तुं न च वर्णमध्ये क्षमः स्वसिद्धं भजते क्षमादि॥

१२-४६॥

रसार्थप्रश्नं कुरुते यदि स्याद् वारो हि चारो गृहमध्यभागे।

स्वकीय इन्दुप्रियवद् भवेद् ध्रुवम् मनोगतं सौख्यविवर्धनञ्च॥ १२-४७

॥

शत्रूणां हननं तदा कुलगतं सञ्चारवातं मुदा।
रोगाणां परिमर्दनं प्रभुपदे भक्त्यथीनां ज्ञापनम्।
आह्लादं हृदयाम्बुजेऽमृतधनं तीर्थागमं शोकह।
सूक्ष्मार्थं गणयेत्ततः प्रचपला वाग्देवतादर्शनम्॥ १२-४८॥

आथर्वे पत्रमध्ये निवसति कमला कोमला वाद्यदात्री।
आगन्तव्यादिवार्ता कथयति सहसा सर्वदा मङ्गलानि।
नित्यावश्यं प्रतापं प्रियगणहितां प्रेमभावाश्रयत्त्व।
नित्यं कान्तामुखाम्भोरुहविमलमधुप्रेमपानाभिलाषम्॥ १२-४९॥

मेषे तृप्तिमुपैति सिंह इषुभिः कुम्भेन तेषां फल।
लाभं कुञ्जरघातकेषु रजतं चौर्येण यद्यद्गत।
एवं कास्यविहारणं शतपले सूर्योदयात्तिष्ठति।
प्रातः कालफलाफलं कथयति श्रीकेशरीमध्यगः॥ १२-५०॥

पश्यादेकशतं पलेन्दुधनुषा व्याप्तं यदा भूतले।
वित्तानां हरणं तदा जलगते मित्रस्य राज्यादिकम्।
दूरस्थादिकथागतादिसमयं शत्रोर्महापीडन।
वाञ्छावर्गकुलोदयं समुदयात् सूर्यस्य चागण्यते॥ १२-५१॥

शेषे चैकशते फले समुदिते कुम्भो महादुर्बली।

दारिद्र्यस्य कथा कदा सुविषयं विद्यार्थभूषञ्च यम्।

लाभं देशविदेशकार्यगमनं शीघ्रं धनाद्यागम।

देवानां खलु दर्शनार्थकथनं व्यामोहसन्नाशनम्॥ १२-५२॥

वारे शुक्रे शनिगतदिन लवटाहौ च सूर्ये।

नित्यं ज्ञानोदयनिजपथ आयुषां निर्णयं तत्।

अष्टौ वर्गानुदयति मुदा प्राप्य वीरो महत्त्व।

लोको दोषं प्रथमखचरे चायुषां पृष्टमात्रम्॥ १२-५३॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने

भावप्रश्नार्थबोधनिर्णये

पाशवकल्पे आज्ञाचक्रसारसङ्केते सिद्धमन्त्रप्रकरणे

भैरवीभैरवसंवादे

द्वादशः पटलः॥ १२॥

अथ त्रयोदशः पटलः

आनन्दभैरवी उवाच

आज्ञाप्रश्नार्थभावञ्च वर्णविन्यासनिर्णयम्।
अधुना श्रृणु सर्वज्ञ भावज्ञानपरायण॥ १३-१॥

यदि मेषे स्वनक्षत्रं स्ववारसंयुतं शुभम्।
ज्ञात्वा शुभादिपत्रञ्च पलमानेन साधकः॥ १३-२॥

गणयेद् वर्णसारञ्च येन तत्प्रश्ननिर्णयः।
पूर्वे दले ककारस्य वर्णभेदं श्रृणु प्रभो॥ १३-३॥

मनसि सुखसमूहं प्राणसौख्यार्थचिन्ता।
वसनगमनलाभं प्रीतिपुत्रार्थयोग्यम्।
स्थिरपदमपि देशे दर्शनं प्राणबन्धोः।
सकलकलुषहानिश्चादिपत्रे ककारे॥ १३-४॥

सदा नृनासिके सुखं सुखोल्बणस्य सेवन।
सदाशिवे च भक्तिदं स्वकीयगेहसत्फलम्।
कलाधरस्य दृष्टिभिः प्रधानलोकपूजन।
हिताहितं न बाधते विवाहकेलिना सुखम्॥ १३-५॥

ऋकारं विपदां ध्वंसं धैर्ये विद्याविबोधनम्।

व्याधिपीडादुर्जनानां पीडाप्रश्नं वदेत्तदा॥ १३-६॥

उकारे वायुभावस्य वृथागमनमेव च।

दारिद्र्यहानयोर्यान्ति दूरागमनदुर्लभम्॥ १३-७॥

खकारे द्रव्यप्रश्नश्च शुभकार्ये गते भयम्।

आशु भयं समाप्नोति प्राप्य निर्धनतां व्रजेत्॥ १३-८॥

पञ्चत्वजिज्ञासनमेव सत्यं नित्यं सुखानामुदयाय चेष्टा।

शत्रोर्विनाशाय हिताय बन्धोः पकारकूटे परचौरचेष्टा॥ १३-९॥

कैवल्यादिसमापनं निजमनो दुष्टव्यापहं कामिना।

नानाभोगविनाशनं कनकरौप्यराजप्रदं स्वके।

मारीभीतिविरोधनं धनपतेरानन्दपुञ्जोदय।

गोविद्याश्रियमाशु लाभविविधं धर्मार्थचिन्ताकुलम्॥ १३-१०॥

हरिपूजा हरिध्यानं हरिपादाम्बुजे रतिः।

चौर्याहरणद्रव्यस्य न हानिर्जन्महार्दके॥ १३-११॥

आकारे तेजसो हानिर्महाशब्दे विनाशनम्।

आगतानाञ्च हानिः स्यात् पक्षपातं गतौ जयम्॥ १३-१२॥

उशतो निजगेहस्था उल्बणव्याधिपीडनम्।
उत्साहध्वंसशून्यञ्च पाठे पाण्डित्यमुल्बणम्॥ १३-१३॥

दीर्घलृकारवर्णे च लावण्यलोचनो नृपः।
लज्जानष्टक्षेमबुद्धिमीत्रतुल्यप्रियो भवेत्॥ १३-१४॥

दीर्घप्रणवमोङ्कारे निराश्रयो न जीवति।
महदाश्रयमात्रेण सर्वं चूर्णं करोति हि॥ १३-१५॥

सिंहे कार्मुकमेषलग्नसमये नित्याशिषं प्राप्नुयात्।
किञ्चिद्दाति पराक्रमी गतिमतां श्रेष्ठो भवेत् कर्मणि।
किञ्चिद्दोषकुलापहं नरपतेरुत्साहसंवर्धन।
क्रोधी नित्यपराक्रमी भवति सः शीघ्राभिलाषान्वितः॥ १३-१६॥

अथ वक्ष्ये महादेव वीराणामुत्तमोत्तम।
सर्वशास्त्रार्थतत्त्वज्ञ तत्त्वज्ञानपरायण॥ १३-१७॥

दक्षिणस्थदलस्यापि वर्णभेदार्थनिर्गमम्।

फलमत्यन्तनिष्कर्षं वाञ्छावाक्यफलप्रदम्॥ १३-१८॥

कान्ते बीजे कमलनिलया गेहभागस्थिरा या।
नानादेशभ्रमणभयदा नैव कुत्रापि सुस्था।
चण्डोद्वेगापहसति खलानाञ्च हानिः प्रबुद्धो।
वाणी वश्या वसति वदने चक्रिणां हानयः स्युः॥ १३-१९॥

चारुप्रतापं चरणे गुरूणां भक्तिर्दृढा स्याद् गमनेषु चारु।
तदागतानां नृपतिप्रियाणां सम्प्रेरणं चारुफलञ्च कूटे॥ १३-२०
॥

कान्तेषु कान्तावदनारविन्दे सुषद्वदत्वं रमणीविलासम्।
आयुः क्षयोद्वेगविनाशकरणं चाकर्षणं देशसुखं धनानाम्॥
१३-२१॥

टकारे धारणं देशे सुखं शेषे निशामुखम्।
विदेशस्थधनादीनां स्यादागमनमुत्तमम्॥ १३-२२॥

दकूटमधनं विना भवति विघ्नहानिः सदा।
जयं स्वगृहकामिनो कमलनेत्रकान्ता यथा।

सुसिद्धकरमेव हि प्रबलभावनातो भवेत्।
भवे जयति मानुषस्तु पृष्टस्य जिज्ञासने॥ १३-२३॥

व्याख्यातं मुनिभिः फलं फलमयं कालं रिपूणां सदा।
लोकानां वशकारणं कुलवरो वेदागमे पारगः।
प्राप्नोति प्रियपुत्रकं नरपतेरुत्साहसं कारण।
कार्ये दुर्जनपीडनं भयसमूहानां विनाशङ्कके॥ १३-२४॥

यशसि वयसि तेजो बुद्धिरेव यकूटे।
समयफलभूपोल्लासवृद्धिः समृद्धया।
यजनमपि सुराणां चौर्यमात्रं न भूया--
दतिशयधनवृद्धिः क्रेयविक्रेयकाले॥ १३-२५॥

शीतकाले धनप्राप्तिः स्वर्णरौप्यादिलाभकम्।
पुत्रप्राप्तिः सुखप्राप्तिः सङ्कटे वदति ध्रुवम्॥ १३-२६॥

लक्ष्मीः प्रियं धनं दातुं मुदिता भूमिमण्डले।
जलेन जायते हानिर्लयं देवे न कूटके॥ १३-२७॥

प्रश्नाद्यक्षरमित्यादिस्वरमूलं हि यो नरः।

जिज्ञासनं यदा कुर्यात् तदा स्यादुत्कटं फलम्॥ १३-२८॥

श्रृणु तत्तत् स्वरं नाथ एतत्पत्रस्थमाक्षयम्॥ १३-२९॥

इकारकूलमङ्गले धनादितृष्णयान्वितोः।
विशेषधर्मलक्षणं धनञ्च पैतृकं लभेत्॥ १३-३०॥

गतिप्रियं सुदेवता सुसम्पदं सदासुखम्।
तथा हि सूक्ष्मबुद्धिभिः परास्तमाकरोदरिम्॥ १३-३१॥

ईकारमपरप्रियं परमतध्वंससंवर्द्धनम्।
विदेशगमनं नहि प्रभवतीह बाह्यं दया॥ १३-३२॥

जगज्जनमभिप्रियं तरुणदोषसम्माननम्।
विकाररहितं सुखं भवति पृष्ट आवेदके॥ १३-३३॥

ए बीजे बद्धसन्तोषं कामनाफलसिद्धिदम्।
वायुना हरणं चैव प्राप्नोति नृपमाननम्॥ १३-३४॥

अमीत्येकाक्षरे बीजे बीजभूते जगत्पतेः।

प्राप्नोति कन्यादानादिफलं वस्त्रञ्च तैजसम्॥ १३-३५॥

गोकन्यामकरे खगे खगचरता सौन्दर्यलक्ष्मीर्भवेत्।
शेषे काञ्चनपुञ्जलाभमतुलं सन्तोषसारं गतौ।
संसारे निजदायिका स्वजनता रत्नादिकं सञ्चय।
सर्वं सञ्चयति प्रभो हितकरं प्रश्नार्थमाद्याक्षरे॥ १३-३६॥

तृतीयदलमाहात्म्यं यद् यद् वर्णे विचारयेत्।
प्रश्नाद्यक्षरवर्णेषु नीत्वा च गगनं चरेत्॥ १३-३७॥

तत्प्रकारं शृणु प्राणवल्लभ प्रेमपारग।
यज्ज्ञानात् प्रश्नसिद्धिः स्यादकालफलदं नृपम्॥ १३-३८॥

दृष्ट्वा ज्ञात्वा भावराशिमुत्तमाधममध्यमम्।
लोकभावविधानज्ञो निजविद्यादिकं तथा॥ १३-३९॥

सर्वं विषयरूपेण भावसारं विचारयेत्।
गबीजं मङ्गलं ज्ञेयं फलमत्यन्तभाग्यदम्॥ १३-४०॥

गतद्रव्यादिलाभञ्च तथा लोकवशं फलम्॥ १३-४१॥

दकारकूटे कठिनं रिपूणां विद्रावणं धर्मविनाशकस्य।

भूमिपतेर्वा मरणं विनाशनं दिव्याङ्गनाया वररत्नलाभम्॥ १३-४२

॥

टकारे दूरगानाञ्च दर्शनं भवति ध्रुवम्।

उद्वाहः पुत्रसम्पत्तिः षष्ठमासेन लभ्यते॥ १३-४३॥

टान्ते चौरभयं नास्ति तद्द्रव्यागमनं भवेत्।

विधिविद्याप्रकाशेन शिवे विष्णौ च भक्तिमान्॥ १३-४४॥

धकारकूटे धरणीपतित्त्वं व्याधेर्भयं नास्ति तथा पशोश्च।

प्रवेशमात्रेण गतौ कलापि जीवादिसम्पत्तिमुपैति लक्ष्मीम्॥ १३-४५॥

रबीजे सिद्धः सम्यक् खगकुलवरो धीरगमनम्।

वाञ्छातुल्यं विभवमतुलं राजराज्यप्रियं स्यात्।

प्रतापं साम्राज्यं सकलहितगोलोकरसता।

रसं सर्वं लोकं प्रियमतिसुखं लाभविविधम्॥ १३-४६॥

चकारे वह्निबीजे च जितं सर्वं चराचरम्।

यथा क्रमेण सर्वत्र गमने भाग्यदं फलम्॥ १३-४७॥

षकारमध्यमे देशे वार्त्तादेशादुपैति हि।
पत्रिकागमनं कार्यं यः करोति धनं लभेत्॥ १३-४८॥

क्षकारे सख्यभावञ्च मित्रभावं यदा लभेत्।
सुप्रीतिश्च भवेत्तस्मात् तदा प्रश्नभयं न च॥ १३-४९॥

स्वराज्ये च भवेत् सौख्यं पुष्पजिज्ञासकर्मणि।
हसनान्ते तथा वर्णे पाचकं देहि चादिदम्॥ १३-५०॥

यदि स्यादुच्यते नाथ विपरीतफलं न च॥ १३-५१॥

दीर्घीकारे विषयघटना नाथ पादेः मतिः स्याद्।
यद्यारम्भो भवति कुलनं दीर्घजीवी नरेन्द्रः।
बालापत्यं गमयति मुदा कालदेशाधिकारी।
लोकारण्ये सकलकलुषध्वंसहेतोर्मृगेन्द्रः॥ १३-५२॥

सुखञ्चचार चाष्टमे महाधनेशसन्निधौ।
प्रबुद्धवान् भवेन्नरः समाहितो भवेद् ध्रुवम्।

विचित्रचातुरी यदा महाकुचोरगा प्रभो।
प्रहस्यते क्षणादपि प्रभातसूर्यदर्शनात्॥ १३-५३॥

अतीव धैर्यतां लभेत् विचित्रवाग्भवेज्जयम्।
जयेन सेवितं पुरा पुराण वाक्यलाभक।
जगज्जनादिसेवनं लभेत् (वा यदि स्वयं?)॥ १३-५४॥

न चाकुलागमं गयागभीरतुल्यसत्फलम्।
सदा हि पुण्यसागरे गुरोः पदाम्बुजं लभेत्॥ १३-५५॥

विसर्जनीये सुस्वरे समाप्तिकोमलान्वितम्।
जनागमं धनागमं विशालवेदनान्वितम्॥ १३-५६॥

मनोगतं कुबुद्धिदं स्वकीयबन्धुसज्जनम्।
विसर्जनं कुलक्षणं भवेल्लभेत् कुबन्धनम्॥ १३-५७॥

सकुलं निष्कुलं कान्तं विदुः श्रेष्ठा महर्षयः।
हास्यसुखे हास्यफलं भावनायां भवेन्नहि॥ १३-५८॥

क्रोधक्रमेणैव तदैव चक्षुषो--

वीकारभावेन हरेत् समस्तम्।

शीर्षे करौ चेत् कलिकालसंयुत।

फलं हि लाभे वध एव भूषणम्॥ १३-५९॥

शेषे वेददले वराभयकरे हारावशब्दापहा।

दूरादागमनं भवेद्धि नियतं बालागणैरावृतम्।

घोरापायविसर्जनं जलगुणाह्लादेन सामोदित।

कूटे कूटघकारवर्गलहरी भासापभासारसे॥ १३-६०॥

जवर्गे जतुकं स्वर्णं जीवनोपायचिन्तनम्।

जराव्याधिसमाक्रान्तं जीर्णवस्त्रापहारणम्॥ १३-६१॥

ठकारकूटे यदि चक्रवर्ती।

भूमण्डले स्यात्पततीति निश्चितम्।

अन्तःसुखं हन्ति यदादिभावे।

ठकारमात्रेण रिपूत्तमो भवेत्॥ १३-६२॥

आद्यप्रश्नाक्षरं नाथ तकारं तरुणप्रियम्।

पापान्धकार पटलध्वंसाय कल्पयते तदा॥ १३-६३॥

नकारमाद्ये यदि प्रश्नवाग्मी जिज्ञासमानो ध्रुवमर्थसञ्चयम्।

आलापमात्रेण नरा वशा स्युः प्रवेशनं राजकुलेन्द्रसन्निधौ॥ १३-६४

॥

भीतो भवति देशे च भयस्थाने न दुःखभाक्।

भूषासम्पत्तिवृद्धिश्च भकारकूटमङ्गले॥ १३-६५॥

लोकानुरागं सर्वत्र आद्यक्षरविचारतः।

लकारस्यापि लोकेश भार्यादुःखं विमुञ्चति॥ १३-६६॥

सकारे मैथुनं कान्ताकुलस्य कुलवर्द्धनम्।

धनवृद्धिर्वंशवृद्धिः सरस्वतीकृपा भवेत्॥ १३-६७॥

वेदपत्रे अकारस्य फलमाहात्म्यनिर्णयम्।

शृणु नाथ प्रवक्ष्यामि सावधानाऽवधारय॥ १३-६८॥

ककारादि क्षकारान्तं व्याप्त तिष्ठति तत्त्वतः।

अकारेण विना शक्तिर्ज्ञायते कुत्र न प्रभो॥ १३-६९॥

अकारे ग्रथितं सर्वं चराचरकलेवरम्।

यद्यकारमाद्यभागे प्रश्नजिज्ञासने भवेत्॥ १३-७०॥

कुफलेऽपि सत्फलानां सञ्चयं भवति ध्रुवम्।
शत्रूणां वासहेतोर्धनादीनाञ्चैव सञ्चये॥ १३-७१॥

अन्तर्यजनविद्यासु लोकस्यागमने तथा।
निजदुःखानुतापे स्याद्यकारविधिरुच्यते॥ १३-७२॥

उकारफलमाहात्म्यं शृणु प्रश्नार्थपण्डित।
उषाकाले चौर्यप्रश्नमुल्लासं मानसोद्भमम्॥ १३-७३॥

उत्तमस्थलवासञ्च उत्कृष्टभोजनादिकम्।
उल्बणाबुद्धिरुत्पत्तिरुमादेवीपदे मतिः॥ १३-७४॥

रकारलक्षणं चक्षुः शब्दस्य वचनं भवेत्।
लोचने दर्शनं स्त्रीणां लिखनं दूरसम्भवम्॥ १३-७५॥

प्राप्नोति परमां लक्ष्मीं लोकवश्याय केवलम्।
लाङ्गलानां सञ्चयश्च भूमिलाभो भवेद् ध्रुवम्॥ १३-७६॥

ओकारे राज्यवृद्धिः स्यात् पुत्रवृद्धिस्तथैव च।

सदा सन्तोषमाप्नोति प्रणवः सर्वसिद्धिदः॥ १३-७७॥

मीने कर्कटराशिवृश्चिकतुले धर्माग्निभानूदये।

गेहे वेदविचारणे शुभफलं श्रीलाभगत्युन्नतिम्।

विद्यावेदकथादिकं जयवतामानन्दसिन्धोः फल।

प्राप्नोति प्रतिपत्तिसिद्धपदवीं मर्त्यो मुदा हर्षणम्॥ १३-७८॥

पत्रप्रमाणं कथितं हीनविद्याविनिर्गमम्।

पुनः श्रृणु महाकालकलिकालस्य उद्भवम्॥ १३-७९॥

यद्यन्मासस्य प्रथमे तथा चाह्नोऽर्भकस्य च।

दण्डद्वये शुभफलं प्रथमस्य महेश्वर॥ १३-८०॥

तृतीयैकदण्डमात्रं विपरीतफलप्रदम्।

तत्र दण्डेषु नक्षत्रं यदि चेन्नाशुभं भवेत्॥ १३-८१॥

अश्विन्याद्यष्टनक्षत्रं पूर्वप्रथमपत्रके।

तत्सुतारं विजानीयात् दुष्टदोषे सुखं भवेत्॥ १३-८२॥

आश्लेषाभादिचित्रान्तं द्वितीये दक्षिणे दले।
तत्फलं विपरीताख्यं सफलेऽपि फलापहम्॥ १३-८३॥

स्वात्यादिवसुनक्षत्रं तृतीयाधोदले लिखेत्।
तत्सुतारं क्रमाज्ज्ञेयं नान्यथाशुभमानयेत्॥ १३-८४॥

तत्फलार्थं कुत्सितञ्च विपरीतफलस्थले।
अशुभं तत्फलस्थाने कुफले सुफलं भवेत्॥ १३-८५॥

उत्तराषाढकातारादिरेवत्यन्तमेव च।
तत्फलं तु भवेद् मर्त्यो यदि कर्मपरो भवेत्॥ १३-८६॥

अथ वक्ष्ये महादेव अश्विन्यादिफलं प्रभो।
यज्ज्ञात्वा देवताः सर्वा दिग्विदिक्ष्वादिरक्षकाः॥ १३-८७॥

तत्प्रकारं महापुण्यं देवदेव फलोद्भवम्॥ १३-८८॥

त्रैलोक्ये सौख्यपूजां त्रिभुवनविदितां त्रैगुणाह्लादसिद्धा।
सिद्धभ्रान्तो विशालो वरदविदलितां वेदनार्द्रापशङ्काम्।
मन्दानां मन्दभाग्योपहगुणहननं हीनदीनापदाहा।

लोकानां सत्फलानां फलगतवपुषा साश्विनी सा ददौ चेत्॥ १३-८९॥

एवं क्रमेण देवेश तारकाणां फलाफलम्।
पुनः पुनः श्णु प्राण--वल्लभ प्रेमभावक॥ १३-९०॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने भावनिर्णये
पाशवकल्पे आज्ञाचक्र-- सारसङ्केते सिद्धमन्त्रप्रकरणे
भैरवीभैरवसंवादे त्रयोदशः पटलः॥ १३॥

अथ चतुर्दशः पटलः

आनन्दभैरवी उवाच

अथातः सम्प्रवक्ष्यामि योगमार्गेण शङ्कर।
भरण्यादिसप्तविंशान् नक्षत्रार्थं सुसत्फलम्॥ १४-१॥

तत्फलाफलमाहात्म्यं साक्षात्कारकलेः फलम्।
फलार्थं भरणीक्षेत्रं धर्मविद्यादिनिर्णयम्॥ १४-२॥

धर्मचिन्ताविनिर्बोधं गमनाभावमङ्गलम्।

मकारादिवर्णजातां प्राप्नोति भरणीं भके॥ १४-३॥

कृत्तिकायां शादिवर्णं व्याधिशङ्करसंक्षयम्।
आरोग्याय धनस्यार्थे तत्र सूर्यं न चाचरेत्॥ १४-४॥

या रोहिणी धनवतां धनहानयोर्न।
प्राणप्रियं गणसुबुद्धविबुद्धिशुद्धिम्।
नागादिदोषशमनं क्षितिचक्रमध्ये।
राजश्रियं विबुधशुद्धिमुपैति वृद्धिम्॥ १४-५॥

गृगेन्द्रशीर्षगामिनी नरेन्द्र मन्दिरे निधि।
ददाति पापनिर्मले जले घन्यशून्यके।
भयं विवाहकालके कुले शुभं शुभेक्षणा।
स्वकीयकिल्बिषं दहेदनन्तबुद्धिसञ्चयम्॥ १४-६॥

आर्द्राविद्रुमरूपिणी रतिकलाकोलाहलोल्लासिनी।
सा मत्यार्पणमेव सम्प्रकुरुते काले फलालापनम्।
सौख्यं मुख्यसमृद्धिदा दरदलाम्भोजच्छटालिम्पटा।
सा धीरं परिरक्ष्यति प्रतिदिनं शान्तं दृशान्तं दहेत्॥ १४-७॥

पुनर्वसुसुतारिका तरुणरूपकूपा कृपा--।
विशिष्टफलभावनारहितचित्तदोषापहा।
धनमन्तपरिमाणगं प्रचुरशोकसङ्घापहा।
प्रक्षति महाग्रहः परमपीडितं मानुषम्॥ १४-८॥

पुण्या पौषमाकरोति सहसा तेजस्विनां कान्तिदा।
कान्तायाः कनकादि--लाभविपदां ध्वंसेन वंशादिदा।
बाधायां फलदा मृगा मृगपतेरानन्दतुल्यं श्रियम्।
काद्या पञ्चमवर्णज्ञानललिता पातीह पुत्रं यथा॥ १४-९॥

एतद्धि पूर्वपत्रान्ते तारा मङ्गलदायिकाः।
प्रतिभान्ति यथा चक्रे ग्रहाणां भ्रामणे शुभे॥ १४-१०॥

विपरीतफलं नाथ प्राप्नोति पातके बहु।
पुष्यायां स भवेत् क्रूरः कर्कटस्थोऽपि भास्करः॥ १४-११॥

एतासां तारकाणाञ्च राशिदेवान् शृणु प्रभो।
मेषः सिंहो धनुश्चैव अश्विन्यादिकदेवताः॥ १४-१२॥

येषां राशिस्थितं वर्णं न हानिर्विषयास्पदे।

सर्वत्र जयमाप्नोति ग्रहे क्रूरेऽपि सौख्यदः॥ १४-१३॥

विभिन्नराशौ संभिन्नो धर्मनिन्दाविवजीतः।
स्वनक्षत्रफलं ज्ञात्वा प्रश्नार्थं कोमलं वदेत्॥ १४-१४॥

तत्तन्नक्षत्रसुफलं कुफलं वा भवेद्यदि।
तदा वर्णविचारञ्च कृत्वा पुष्पं तदा वदेत्॥ १४-१५॥

अक्षमालाक्रमेणैव तद्वर्णानां विचारतः।
तत्तद्वर्णविचारे तु यद्यत् सौख्यं प्रवर्त्तते॥ १४-१६॥

अधिके दोषजाले तु अधिकं दुःखमेव च।
बहुसौख्यं नित्यसौख्यं प्राप्नोति साधकोत्तमः॥ १४-१७॥

एतासां तारकाणां तु वारान् शृणु यथाक्रमम्।
रव्यादिरविवारान्तं ताराणामधिपं शुभम्॥ १४-१८॥

अशुभञ्च तथा रुद्र ज्ञात्वा प्रश्नार्थमावदेत्।
तद्वारनिर्णयं वक्ष्ये पूर्वपङ्केरुहे दले॥ १४-१९॥

रवौ राज्यं बालकानां यदि प्रश्नं प्रियं फलम्।
धर्मार्थलाभमेवं हि त्रयोविंशाधिके नरे॥ १४-२०॥

संहितं परमानन्दं योगेन तत्त्वचिन्तनम्।
इत्यादि रविवारस्य वृद्धानामशुभं शुभे॥ १४-२१॥

सोमे रत्नमुपैति देवकुसुमामोदेन पूर्ण सुखम्।
बालायां नवकन्यका शुभफलं मुद्रामयार्थ लभेत्।
कैवल्यार्थविचेष्टनं नृपवधूप्रेमाभिलापः सदा।
वाञ्छा पुण्यसुखास्पदेषु विमला भक्तिश्च सोमे दिने॥ १४-२२॥

पृथ्वीपुत्रो रुधिरवदनो बालबाली विशेषो।
मुख्यं कार्यं दहति सहसा साहसं वासनायाम्।
हन्ति प्रायो विफलघटितं शोकसन्तानसार।
मोक्षं पुण्यं घटयति सदा मङ्गले भूमिवारे॥ १४-२३॥

बुधे वारमुख्ये महापुण्यपुञ्ज।
समाप्नोति मर्त्यस्तथा दुर्बलञ्च।
सदा कालदोषं महाघोरदुःख।
रिपूणां धनीनां महावीर्यदर्पम्॥ १४-२४॥

सुराणां देवानां विविध धनलाभं वितरण।

प्रतापं सत्कीर्त्ती क्रतुफलविशेषं विधिगतम्।

जनानामानन्दं समर वसगतानन्द हृदये।

प्रतिष्ठा सद्धर्मं गमयति मुदा वासनगुरौ॥ १४-२५॥

मन्दारमालान्वित देहधारी नाकस्थले गच्छति देवनिष्ठः।

हरेः पदे भक्तिमुपैति सत्यं प्रसाधनात् शुक्रसुवारकाले॥ १४-२६॥

शनैश्चरदिने भयं भुवनदोषमोहान्वित।

क्षितिप्रियसुतप्रियं परमतारकं स्त्रीसुखम्।

विशिष्टधननीरदं वयसि सिद्धिर्ऋद्ध्यर्कज।

भजन्ति यदि मानुषाः सकलकामनादेः प्रभोः॥ १४-२७॥

पुनश्च रविवारगं फलमतीव दुःखास्पद।

प्रचण्डकिरणं सदा विकललोकरोगापहम्।

तमेव परिभावनं परिकरोति यो वा नरो।

न नश्यति कदाचन प्रचुरतापशापाकरम्॥ १४-२८॥

कलाधरफलं श्रृणु प्रणवबाह्यसूक्ष्माश्रय।

समग्रखचराफलं फलवतां हि सञ्ज्ञाफलम्।
गभीरवचनं नृपप्रियकरस्य रक्षाकर।
यदीन्दुभजनं यदा कलिशुभादिशम्भोऽकरोत्॥ १४-२९॥

द्वितीयदलमाहात्म्यं नक्षत्रमण्डलावृतम्।
तत्तत्ताराफलं वक्ष्ये येन प्रश्नार्थनिर्णयः॥ १४-३०॥

अश्लेषा बहुदुःखवादनगतं व्यामोहशोभावृत।
नानाभृङ्गनिषेवणं धनवतां हानिः पदे सम्पदे।
भूपानां परिवर्ज्जनं खलजनैराच्छादितं तापित।
सन्दद्यात् क्षितिजातिभाति नियतं कोलाहले नारके॥ १४-३१॥

मघायां महेशि धनं हन्ति मध्ये महोल्लासवृद्धिं भयं तस्य
शत्रोः।
क्षितिक्षोभहन्तारमेत्यन्तभावं कुकामातुराणां सदा सङ्गकारम्॥
१४-३२॥

पूर्वफल्गुनिनक्षत्रे दूरगानां फलं पठेत्।
अतिधैर्यं शत्रुपक्षे हानयो यान्ति निश्चितम्॥ १४-३३॥

फलमुत्तरफल्गुन्या दीयते गतिरीश्वरी।
यदि देवपरो नाथ तदा सर्वत्र सुन्दरम्॥ १४-३४॥

हस्तामस्तकक्रीडया शुभविलोकत्रये भाग्यदा।
रक्ताङ्गीगतिचञ्चलामलगुणाह्लादेन कल्याणदा।
सा नित्यं प्रददाति रुक्मशतकं भक्ताय यज्ञार्थीने।
नानाव्यञ्जनभोजनैरतिसुखी संज्ञासमूहं ददेत्॥ १४-३५॥

ददाति वित्तं जगतीह चित्रा मनोरथं व्याकुलतामलङ्कृता।
कदाचिदेवं हि शरीरदुःखदं न प्राप्नुयादीश्वरभक्तिमालभेत्॥
१४-३६॥

अश्लेषानाथ शुक्रो विपदमपि कदा नो ददाति प्रदुःख।
दक्षे पत्रे विहारोत्तरभयहराचण्डतापं न हन्ति।
जीवः श्रीमानमोघाशाधनमपि विविधं ब्राह्मणः पीतवर्णः।
पूर्वान्तःफल्गुनीशो विधुतनुजवरो नीलवर्णः स्वपत्रम्॥ १४-३७॥

कुरुते बहुसुखवित्तं उत्तरफल्गुनीनाथो मङ्गलेन।
हस्तायाः पतिश्चन्द्रो विभवमनन्तं चित्रेशो रविः॥ १४-३८॥

अधस्तृतीयपत्रस्य नक्षत्राणि श्रृणु प्रभो।

यासां वारविशिष्टानां प्रश्ननिष्कर्षसत्फलम्॥ १४-३९॥

स्वातीं रविः पाति महोग्र तेजसा।

विनाशकाले विपरीतबुद्धिदः।

इन्दुवीशाखां सुखदः सरस्वती।

कुजोऽनुराधां विपदां प्रबाधाम्॥ १४-४०॥

बुधो हि पायात् सकलार्थसाधिनी।

तथा हि मूलां सुखदाञ्च जीवः।

तदा धनार्थं प्रददाति शुक्रः।

पूर्वान्विताऽऽषाढिकयाऽन्वितः सुखम्॥ १४-४१॥

चतुर्थपत्रं वामस्थं महामङ्गलकारणम्।

अथर्ववेदरूपं तत् सर्वप्रश्नकथावृतम्॥ १४-४२॥

विपरीते महद्दुखं वर्णसौख्येऽपि हानयः।

भवन्ति तारकाणाञ्च शुभदृष्ट्या महोदयाः॥ १४-४३॥

तत्तारकानाथगुणं शुभाशुभफलप्रदम्।

प्रश्नवर्णसमूहानां मतमालोक्य निर्णयम्॥ १४-४४॥

शनिः पात्युत्तराषाढां हानिरूपां विपाकदाम्।
दुःखदारिद्र्यसंयुक्तां देवनिष्ठेन बाधते॥ १४-४५॥

रविः प्रपाति श्रवणां धनादिभिः प्रधानदेवाश्रयनिवीकल्पाम्।
तथा धनिष्ठां फलदां सुधांशुः कुजो विपत्तिं
शतभिग्गणेशः॥ १४-४६॥

पूर्वभाद्रपदानाथो बुधः काञ्चनवर्धनः।
तथा लोकं महादेवोत्तरभाद्रपदापतिः॥ १४-४७॥

बृहस्पतिः सुखोल्लासं रेवती शस्तथा भृगुः।
ददाति परमाह्लादं स्वस्व पत्रस्थराशिभिः॥ १४-४८॥

अभिजित्तारकं पाति शनिः श्रीमान् धनप्रदः।
फलभागं मुदा दातुं शनी राजमृगान्तिके॥ १४-४९॥

तच्चन्द्रोच्चस्थमिति के वदन्ति परमप्रियम्।
राहुराजा ग्रहाः क्षेत्रे अभिजित् कालवेष्टितः॥ १४-५०॥

तत्कालं सूक्ष्मतद्रूपं यो जानाति महीतले।

सन्ध्याकालमिति ज्ञेयं शनिराहू सुखान्तयोः॥ १४-५१॥

तत्सन्धिकालमेवं हि सत्त्वगुणमहोदयम्।

तत्कुम्भकं विजानीयान्मदीय देहसम्भवम्॥ १४-५२॥

महासूक्ष्मक्षणं तद्धि कुण्डलीमण्डलं यथा।

तस्याः प्रथमभागे च धारणाख्यः शनिः प्रभुः॥ १४-५३॥

स्वयं ब्रह्मा मुदा भाति निरञ्जनकलेवरः।

तस्याः शेषे रेचनाख्यः संहारविग्रहः शुचिः॥ १४-५४॥

राहुरूपी स्वयं शम्भुः पञ्चतत्त्वविधानवित्।

कालरूपी महादेवो विकटास्यो भयङ्करः॥ १४-५५॥

सर्वपापानलं हन्ति चन्द्ररूपी सुधाकरः।

कृष्णवर्णः कालयमः पुण्यापुण्यनिरूपकः॥ १४-५६॥

द्वयोर्मध्ये सूक्ष्मरूपा तडित्कोटिसमप्रभा।

महासत्त्वाश्रिता देवी विष्णुमायाग्रहाश्रिता॥ १४-५७॥

अभिजित्तारका सूक्ष्मा सन्धिकाललया जया।

कुम्भकाक्रान्तहृदया ग्रहचक्रपुरोगमा॥ १४-५८॥

नक्षत्रमण्डलग्राममध्यस्था तिथिषोडशी।

असामयी सूक्ष्मकला तरुणानन्दनिर्भरा॥ १४-५९॥

अस्या आद्यभागसंस्थो ब्रह्मरूपी रजोगुणः।

अस्याः शेषः कालरूपी तमोगुणलयप्रियः॥ १४-६०॥

चन्द्रो ब्रह्मा शिवः सूर्यो महामायातनूत्तरः।

आत्रेयी परमा शक्तिः सुषुम्नान्तरगामिनी॥ १४-६१॥

मध्यस्था ब्रह्मशिवयोवीधिशास्त्रस्य सिद्धिदा।

यैर्ज्ञायते सर्वसंस्था सर्वानन्दहृदि स्थिता॥ १४-६२॥

तैरानन्दफलोपेतैः सत्त्वसम्भोगकारिणी।

महाविष्णुर्महामाया चन्द्रतारास्वरूपिणी॥ १४-६३॥

मुक्तिदा भोगदा भोग्या शम्भोराद्या महेश्वरी।

अज्ञानावृतता घोरान्धकारकालसंहारहंसिनी॥ १४-६४॥

मन्दवायुप्रिया यस्य कल्पनार्थे च वीरहा।

सा पाति जगतां लोकान् तस्याधीनमिदं जगत्॥ १४-६५॥

नाकाले मिरयते कश्चिद् यदि जानाति वायवीम्।

वायवी परमा शक्तिरिति तन्त्रार्थ निर्णयः॥ १४-६६॥

सूक्ष्मागमनरूपेण सूक्ष्मसिद्धिं ददाति या।

नराणां भजनार्थाय अष्टैश्वर्यजयाय च॥ १४-६७॥

कथितं ब्रह्मणा पूर्वं शिष्याय तनुजाय च।

लोभमोहकामक्रोधमदमात्सर्यहाय च॥ १४-६८॥

तत्क्रमं परमं प्रीतिवर्धनं भूतले प्रभो।

आज्ञाचक्रस्य मध्ये तु वायवी परितिष्ठति॥ १४-६९॥

चन्द्रसूर्याग्निरूपा सा धर्माधर्मविवजीता।

मनोरूपा बुद्धिरूपा शरीरं व्याप्यं तिष्ठति॥ १४-७०॥

आज्ञा द्विदलमध्ये तु चतुर्द्दशमुदाहृतम्।
वेददले वेदवर्णं वादिसान्तं महाप्रभम्॥ १४-७१॥

तदग्निरूप सम्पन्नम् ऋग्वेदादिसमन्वितम्।
शृणु तद्वेदमाहात्म्यं क्रमशः क्रमशः प्रभो॥ १४-७२॥

इति श्री रुद्रयामले उत्तरतन्त्रे भावप्रश्नार्थनिर्णये
आज्ञाचक्रसङ्केते
वेदप्रकरणे भैरवी भैरवसंवादे चतुर्दशः पटलः॥ १४॥

अथ पञ्चदशः पटलः

आनन्दभैरवी उवाच

देवकार्यं वेदशाखापल्लवं प्रणवं परम्।
वदामि परमानन्द भैरवाह्लादमाशृणु॥ १५-१॥

आद्यपत्रे अकारञ्च ऋग्वेदं परमाक्षरम्।
ब्रह्माणं तं विजानीयाद् आद्यवेदार्थनिर्णयम्॥ १५-२॥

वेदेन लभ्यते सर्वं वेदाधीनमिदं जगत्।

वेदमन्त्रविहीनो यः शक्तिविद्यां समभ्यसेत्॥ १५-३॥

स भवेद्धि कथं योगी कौलमार्गपरायणः।

श्रीनन्दभैरव उवाच

ब्रह्मस्तोत्रं हि किं देवि ब्रह्मविद्या च कीदृशी?॥ १५-४॥

ब्रह्मज्ञानी च को वा स्यात् को वा ब्रह्मशरीरधृक्।

तत्प्रकारं कुलानन्दकारिणि प्रियकौलिनि॥ १५-५॥

वद शीघ्रं यदि स्नेहदृष्टिश्चेन्मयि सुन्दरि।

श्री आनन्दभैरवी उवाच

तदेव ब्रह्मणः स्तोत्रं वायवीशक्तिसेवनम्॥ १५-६॥

सूक्ष्मरूपेण मग्ना या ब्रह्मविद्या प्रकीतीता।

सदा वायू प्राणरससूक्ष्मोन्मत्तप्रसन्नधीः॥ १५-७॥

एकान्तभक्तिः श्रीनाथे ब्रह्मविद्या प्रकीतीता।

अष्टाङ्गन्यासनिहतः सूक्ष्मसञ्चारहृत् शुचिः॥ १५-८॥

सदा विवेकमाकुर्याद् ब्रह्मज्ञानी प्रकीतीतः।

ब्रह्मानन्दं हृदि श्रीमान् शक्तिमाधाय वायवीम्॥ १५-९॥

सदा भजति यो ज्ञानी ब्रह्मज्ञानी प्रकीतीतः।

विजयारससारेण बिना बाह्यासवेन च॥ १५-१०॥

वायव्यानन्दसंयुक्तो ब्रह्मज्ञानी प्रकीतीतः।

सदानन्दरसे मग्नः परिपूर्णकलेवरः॥ १५-११॥

आनन्दाश्रुजलोन्मत्तो ज्ञातो ब्रह्मशरीरधृक्।

शक्तिः कुण्डलिनी देवी जगन्मातास्वरूपिणी॥ १५-१२॥

प्राप्यते यैः सदा भक्तैः मुक्तिरेवागमं फलम्।

आद्यपत्रे प्रतिष्ठन्ति वर्णजालसमाश्रिताः॥ १५-१३॥

वायवीशक्तयः कान्ता ब्रह्माण्डमण्डलस्थिताः।

राशिनक्षत्रतिथिभिः सर्वदोज्ज्वलनायिकाः॥ १५-१४॥

भवानी ब्रह्मशक्तिस्था साऽवश्यमेवमाश्रयेत्।

मासेन जायते सिद्धिः खेचरी वायुशोषणी॥ १५-१५॥

द्विमासे वज्रदेहः स्यात् क्रमेण वर्धयेत् पुमान्।
द्विमासे कल्पसंयुक्तो यस्य सम्बन्धरूपतः॥ १५-१६॥

चैतन्या कुण्डली शक्तिर्वायवी बलतेजसा।
चैतन्यसिद्धिहेतुस्था ज्ञानमात्रं ददाति सा॥ १५-१७॥

ज्ञानमात्रेण मोक्षः स्याद् वायवी ज्ञानमाश्रयेत्।
महाबली महावाग्ग्मी वर्धते च दिने दिने॥ १५-१८॥

आयुर्वृद्धिः सदा तस्य जरामृत्युविवजीतः।
कुण्डलीकृपया नाथ विना किञ्चिन्न सिध्यति॥ १५-१९॥

ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरञ्च सदाशिवः।
ततः परशिवो देव वायवी परिकल्पिता॥ १५-२०॥

एते षड्ङ्कराः सर्वसिद्धिदाः चित्तसंस्थिताः।
सर्वे तिष्ठन्ति पत्राग्रेऽमृतधारारसाप्लुताः॥ १५-२१॥

अधोमुखाः सूक्ष्मरूपाः कोटिसूर्यसमप्रभाः।

ब्रह्ममार्गस्थिताः सर्वे सन्ति षड्वक्रमण्डले॥ १५-२२॥

आज्ञया अध एवं हि चक्रं द्वादशकं स्मरेत्।

गलितामृतधाराभिराप्लुतं कुण्डलीप्रियम्॥ १५-२३॥

आग्नेयीं कुण्डलीं मत्त्वा अधोधाराभितर्पणम्।

प्रकुर्वन्ति परानन्दरसिकाः षड्शिवाः सदा॥ १५-२४॥

चन्द्रमण्डलसञ्जाता जीवरूपधरा यथा।

आत्मज्ञानसमाशक्ताः शक्तितर्पणतत्पराः॥ १५-२५॥

द्वितीयदलरूपं हि यजुर्वेदं कुलेश्वर।

अकस्मात् सिद्धिकरणं विष्णुना परिमीलितम्॥ १५-२६॥

वज्रकोटिमहाध्वानघोरनादसमाकुलम्।

हरिमीश्वरमीशानं वासुदेवं सनातनम्॥ १५-२७॥

सत्वाधिष्ठान विनयं चतुर्वर्गफलप्रदम्।

वाञ्छातिरिक्तदातारं कृष्णं योगेश्वरं प्रभुम्॥ १५-२८॥

राधिका राकिणी देवी वायवीशक्तिलालितम्।

महाबलं महावीरं शङ्खचक्रगदाधरम्॥ १५-२९॥

पीताम्बरं सारभूतं यौवनामोदशोभितम्।

श्रुतिकन्यासमाक्रान्तं श्रीविद्याराधिका प्रभुम्॥ १५-३०॥

दैत्यदानवहन्तारं शरीरस्य सुखावहम्।

भावदं भक्तिनिलयं यदा सागर चन्द्रकम्॥ १५-३१॥

गरुडासनसमारूढं मनोरूपं जगन्मयम्।

यज्ञकर्मविधानज्ञं आज्ञाचक्रोपरि स्थितम्॥ १५-३२॥

अधः परामृतरसपानोन्मत्तकलेवरः।

साधको योगनिरतः स्वाधिष्ठानगतं यथा॥ १५-३३॥

तदाकारं विभाव्याशु सिद्धिमाप्नोति शङ्कर।

को वैष्णवो वाजिकः को धामीको वापि को भुवि॥ १५-३४॥

को वा भवति योगी च तन्मे वद सुरेश्वरि।

आनन्दभैरवी उवाच

शङ्कर शृणु वक्ष्यामि कालनिर्णयलक्षणम्॥ १५-३५॥

वैष्णवानां वैष्णवत्वं आज्ञाचक्रे फलाफलम्।

आज्ञाचक्रं महाचक्रं यो जानाति महीतले॥ १५-३६॥

तस्याऽसाध्यं त्रिभुवने न किञ्चिदपि वर्तते।

सदा शुचिर्ध्याननिष्ठो मुहुर्जाप्यपरायणः॥ १५-३७॥

स्मृतिवेदक्रियायुक्तो विधिश्रुतिमनुप्रियः।

सर्वत्र समभावो यो वैष्णवः परिकीतीतः॥ १५-३८॥

समता शत्रुमित्रेषु कृष्णभक्तिपरायणः।

योगशिक्षापरो नित्यं वैष्णवः परिकीतीतः॥ १५-३९॥

यजुर्वेदाभ्यासरतः सदाचारविचारवान्।

सदा साधुषु संसर्गो वैष्णवः परिकीतीतः॥ १५-४०॥

विवेकधर्मविद्यार्थी कृष्णे चित्तं निधाय च।

शिववत् कुरुते कर्म वैष्णवः परिकीतीतः॥ १५-४१॥

यज्ञिको ब्राह्मणो धीरो भवः प्रेमाभिलाषवान्।
वनस्थो घोरविपिने नवीनतरुशोभिते॥ १५-४२॥

एकाकी कुरुते योगं जीवात्मपरमात्मनोः।
वाय्वग्नी रेचकः सूर्यः पूरकश्चन्द्रमा तथा॥ १५-४३॥

ज्वलच्छिखा सूर्यरूपा न च योजनमेव च।
पुनः पूरकयोगश्च चन्द्रस्य तेजसा हविः॥ १५-४४॥

ऊर्द्ध्वविषा ज्वलद्वह्नौ वायवीबलचञ्चले।
योऽनिशं कुरुते होमं मौनी याज्ञिक उच्यते॥ १५-४५॥

जीवसूर्याग्निकिरणे आत्मचन्द्राद्यपूरकैः।
काये यः कुरुते होमं याज्ञिकः परिकीतीतः॥ १५-४६॥

सुरा शक्तिः शिवो मांसं तद्भोक्ता भैरवः स्वयम्।
शक्त्यग्नौ जुहुयान्मांसं याज्ञिकः परिकीतीतः॥ १५-४७॥

विधिवत् कुलकुण्डे च कुलवह्नौ शिवात्मकैः।

पूर्णहोमं यः करोति याज्ञिकः परिकीतीतः॥ १५-४८॥

भूमण्डले धर्मशालो निर्जने कामवेश्मनि।
दृढभक्त्या जीवसारं यो जपेत् स हि धामीकः॥ १५-४९॥

मणौ लोष्ठे समं ध्यानं धर्मेऽधर्मे जयेऽजये।
कृत्वा त्यागी भवेद्यस्तु ब्रह्मज्ञानी स साधकः॥ १५-५०॥

सदा ईश्वरचिन्ता च गुरोराज्ञा व्यवस्थितिः।
सुशीलो दीनबन्धुश्च धामीकः परिकीतीतः॥ १५-५१॥

कालज्ञो विधिवेत्ता च अष्टाङ्गयोगविग्रहः।
पर्वते कन्दरे मौनी भक्तो योगी प्रकीतीतः॥ १५-५२॥

ब्रह्मज्ञानी चावधूतः पुण्यात्मा सुकृती शुचिः।
वाञ्छाविहीनो धर्मात्मा स योगी परिकीतीतः॥ १५-५३॥

वाग्वादिनीकृपापात्रः षडाधारस्य भेदकः।
ऊर्ध्वरेता स्त्रीविहीनः स योगी परिकीतीतः॥ १५-५४॥

यजुर्वेदपुरोगामी यजुःपत्रस्थवर्णधृक्।
वर्णमालाचित्तजापो भावुकः स हि योगिराट्॥ १५-५५॥

मासद्वादशकग्रस्तं राशिद्वादशकान्वितम्।
तिथिवारं तु नक्षत्रयुक्तमाज्ञाम्बुजं भजेत्॥ १५-५६॥

दिक्कालदेशप्रश्नार्थं वायवीशक्तिनिर्णयम्।
बालवृद्धास्तादिदण्डपलनिश्वाससंख्यया॥ १५-५७॥

व्याप्तमाज्ञाचक्रसारं भजेत् परमपावनम्।
चक्रे सर्वत्र सुखदं सतां हानिर्न च प्रभो॥ १५-५८॥

खलानां विपरीतञ्च निन्दकानां पदे पदे।
दुःखानि प्रभवन्तीह पापिनाञ्च फलाफलम्॥ १५-५९॥

पापी पञ्चत्त्वमाप्नोति ज्ञानी याति परं पदम्।
यः श्वासकालवेत्ता च स ज्ञानी परिकीतीताः॥ १५-६०॥

श्वासकालं न जानाति स पापी परिकीतीतः।
यजुर्वेदं सत्त्वगुणं सत्त्वाधिष्ठाननिर्मलम्॥ १५-६१॥

गुरोराज्ञाक्रमेणैव अधस्तत्त्वेन कुण्डलीम्।

महाशक्तिं समाप्नोति ऊद्र्ध्वाधः क्रमयोगतः॥ १५-६२॥

यजुर्वेद् महापात्रसत्त्वाधिष्ठानसेवया।

ललाटामृतधाराभिश्चैतन्या कुण्डली भवेत्॥ १५-६३॥

विभाव्य द्विदलं चक्रं होमं कुर्यादहनीशम्।

शुद्धाज्यैर्जुहुयान्मन्त्री अधस्तुण्डे च कुण्डलीम्॥ १५-६४॥

भजन्ति रुद्धेन्द्रियशुद्धयोग।

प्रचण्डरश्मिप्रगताङ्गसुन्दराः।

आम्बुजं चक्रवरं चतुद्र्दल।

यन्मध्यदेशे शतकोटितेजसम्॥ १५-६५॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने भावनिर्णये

पाशवकल्पे आज्ञा-- चक्रसारसङ्केते सिद्धमन्त्रप्रकरणे

वेदप्रकरणोल्लासे भैरवभैरवीसंवादे।

पञ्चदशः पटलः॥ १५॥

## अथ षोडशः पटलः

आनन्दभैरवी उवाच

श्रृणुष्वानन्दरुद्रेश तृतीयदललक्षणम्।
सामवेदमधश्चक्रं तमोगुणनिराकुलम्॥ १६-१॥

वर्णजालादिनाक्रान्तं रुद्ररूपं महेश्वरम्।
लयस्थानं कामरूपं परमानन्दमन्दिरम्॥ १६-२॥

वह्निवृत्तिसुस्थानं विभाव्य योगिराड् भवेत्।
तत्स्थानं योगिनां धर्मो गुरोराज्ञाफलप्रदम्॥ १६-३॥

तत्पदाब्जं श्रीगुरूणां भ्रूमध्ये द्विदलाम्बुजे।
मुहुर्मुहुः शनैर्ध्यायेत् समीरास्पदभास्वरम्॥ १६-४॥

विभाव्य मनसा वाचा कर्मणा सूक्ष्मवायुना।
लीनं कृत्वा सदा ध्यायेत् सदा हर्षकलेवरः॥ १६-५॥

सहस्रारे यथा ध्यानं तद्ध्यानं द्विदलाम्बुजे।

गुरुमात्मानमीशानं देवदेवं सनातनम्॥ १६-६॥

अकस्मात् सिद्धिदातारं योगाऽष्टाङ्गफलप्रदम्॥ १६-७॥

नित्यं शब्दमयं प्रमाणविषयं नित्योपमेयं गुरु।
चन्द्रोल्लासतनुप्रभं शतविधूल्लास्साय पङ्केरुहम्।
सर्वप्राणगतं गतिस्थमचलं ज्ञानाधिनिर्लेपन।
रूढालास्यगुणालयं लयमयं स्वात्मोपलब्धिं भजे॥ १६-८॥

यदि भजेज्जगताममलेश्वरं स्मरहरं गुरुमीश्वरमात्मनि।
परमसुन्दरचन्द्रसामाकुलं निपतिताद्यकुलानलसञ्चयम्॥ १६-९॥

प्रणमतां समतां कुरुते गुरो यदि भवान् विफलं परिहन्ति मे।
तव पदाम्बुजमद्भुतलीलया परिभजे भवसागरपारगम्॥ १६-१०॥

गुरुपदं सितपङ्कजराजितं कनकनूपुरसुन्दरसञ्जनम्।
रचितचित्रितचारुनखेन्दुकं भुवनभावनपावनमाश्रये॥ १६-११॥

सकलसत्फल पालनकोमलं विमलशोणित पङ्कज मण्डितम्।
पदतलं खनिग्रहपालनं खचितरत्नधराचलनं भजे॥ १६-१२॥

सुकनकाजडितासनपङ्कजे परिभवं भवसागरसम्भवम्।
यदि कृपा विभवेन्मयि पामरे व्यवतु मां तव पादतलं भजे॥ १६-१३
॥

परमहंसमनुं हररूपिणं सकलमक्षवशङ्गुरुमीश्वरम्।
सकललक्षणचन्द्रमसःकरं तरुगुरोर्मुखपङ्कजमाश्रये॥ १६-१४॥

गुरोराज्ञाचक्रं भुवनकरणं केवलमय।
सकारं नादेन्दुकुमुदहृदयं कामकलया।
लयस्थाने वायोर्नवमधुरसमोदमिलिते।
दले वेदक्षेत्रे विधुविरहिते तत्र पदके॥ १६-१५॥

तमोगुणसमाक्रान्ते अधोमण्डलमण्डिते।
द्विबिन्दुनिलये स्थाने द्विदले श्रीगुरोः पदम्॥ १६-१६॥

महावह्निशिखाकारं तन्मध्ये चिन्तयेत् सुधीः।
एतद्योगप्रसादेन बीजवाग्भवकूटकैः॥ १६-१७॥

चिरजीवी भवेत् क्षुद्रो वागीशत्वमवाप्नुयात्।

श्रीगुरोश्चरणाम्भोजनिःसृतं यत् परामृतम्॥ १६-१८॥

तत्परामृतधाराभिः सन्तर्प्य कुलनायिकाम्।

पुनः पुनः समाकुञ्च्य प्रबुद्धां तां स्मरेत् सदा॥ १६-१९॥

पर्यायत्त्वापररसं धारयेन्मारुतं सुधीः।

तत्परामृतधाराभिः सन्तर्प्य कुलनायिकाम्॥ १६-२०॥

ततः पुनः पुनः पात्यं सर्वपुण्यफलं प्रिये।

धनरत्नमहालक्ष्मीः प्राप्नोति साधकोत्तमः॥ १६-२१॥

सर्वत्र जयमाप्नोति युद्धे क्रोधे महाभये।

महायुधि स्थितो याति सुशीलो मोक्षमाप्नुयात्॥ १६-२२॥

इति ते कथितं नाथ ब्रह्मज्ञानमनुत्तमम्।

आज्ञाचक्रत्रिखण्डस्य दलस्य कामरूपतः॥ १६-२३॥

सत्फलं समवाप्नोति विचार्य भावयेद्यदि।

आज्ञाचक्रे त्रिखण्डे च कामरूपं महेश्वरम्॥ १६-२४॥

चीनाचारसमाक्रान्तं श्मशानाधिपवेष्टितम्।

कालं कालकरं चक्रं महाकालं कलानिधिम्।

पलानुपलविपलद्दण्डतिथ्यातिपदपक्षकैः॥ १६-२५॥

मासवत्सरादियुगैर्महाकालैः समन्वितम्।

उल्काकोटिसमं नेत्रं तीक्ष्णदंष्ट्रं सुरेश्वरम्॥ १६-२६॥

कोटिकोटिनेत्रजालशोभिताननपङ्कजम्।

चिद्रूपं सदसन्मुक्तिरूपिणं बहुरूपिणम्॥ १६-२७॥

ध्यात्वा त्वतिसुखेनैव कालरुद्रं परेश्वरम्।

नासिकोद्र्ध्वे भ्रुवोर्मध्ये आज्ञाचक्रे महाप्रभो॥ १६-२८॥

विभाव्य परमं स्थानं तत्क्षणात्तन्मयो भवेत्।

हाकिनीं भावयेन्मन्त्री रौरवादिविनाशिनीम्॥ १६-२९॥

कोटिसौदामिनीभासाममृतानन्दविग्रहाम्।

अमातत्त्वपूर्णशोभां हेमवाराणसीस्थिताम्॥ १६-३०॥

नानालङ्कार शोभाङ्गीं नवयौवनशालिनीम्।

पीनस्तनीं बलोन्मत्तां सर्वाधारस्वरूपिणीम्॥ १६-३१॥

दीर्घप्रणवजापेन तोषयन्तीं त्रिविक्रमम्।
मौनां मनोमयीं देवीं सर्वविद्यास्वरूपिणीम्॥ १६-३२॥

महाकालीं महानीलां पीतवर्णां शशिप्रभाम्।
त्रिपुरां सुन्दरीं वामां वामकामदुघां शिवाम्॥ १६-३३॥

ध्यायेदेकासने वामे परनाथस्य पावनीम्।
सर्वाधारात्मिकां शक्तिं दुनीवार्यां दुरत्ययाम्॥ १६-३४॥

श्वासमात्रेण वसयेत् कुलमार्गं न पण्डितः।
कुलाकुलविभागेन आत्मानं नीयते परे॥ १६-३५॥

श्वासाभ्यासं विना नाथ अष्टाङ्गाभ्यसनेन च।
विना दमेन धैर्येण कुलमार्गो न सिद्ध्यति॥ १६-३६॥

तथा पूरकयोगेन रेचकेनापि तिष्ठति।
विना कुम्भकसत्त्वेन यथैतौ नापि तिष्ठतः॥ १६-३७॥

तथा योगं विना नाथ अष्टाङ्गाभ्यसनं विना।

कुलमार्गो महातत्त्वो न सिद्ध्यति कदाचन॥ १६-३८॥

कुलमार्गं विना मोक्षं कः प्राप्नोति महीतले।

कुलमार्गं न जानाति योगवाक्यागमाकुलम्॥ १६-३९॥

स कथं पूजयेद्देवीं तस्य योगः कृतः प्रभो।

अज्ञात्वा वीरनाथानामाचारं यः करोति हि॥ १६-४०॥

तेषां बहुदिने योगशिक्षा भवति निश्चितम्।

प्राणायामं महाधर्मं वेदानामप्यगोचरम्॥ १६-४१॥

सर्वपुण्यस्य सारं हि पापराशितुलानलम्।

महापातककोटीनां तत्कोटीनाञ्च दुष्कृतम्॥ १६-४२॥

पूर्वजन्मार्जितं पापं नानादुष्कर्मपातकम्।

नश्यत्येव महादेव षण्मासाभ्यासयोगतः॥ १६-४३॥

सन्ध्याकाले प्रभाते च यः करोत्यप्यहर्निशम्।

वशी षोडशसंख्याभिः प्राणायामान् पुनः पुनः॥ १६-४४॥

संवत्सरं वशी ध्यात्त्वा खेचरो योगिराड् भवेत्।
योगी भूत्वा कौलमार्गं समाश्रित्यामरो भवेत्॥ १६-४५॥

महाविद्यापतिर्भूत्वा विचारात् साधकोत्तमः॥ १६-४६॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने भावार्थबोधनिर्णये
पाशवकल्पे
आज्ञा-- चक्रसारसङ्केते सिद्धमन्त्रप्रकरणे भैरवीभैरवसंवादे
षोडशः पटलः॥ १६॥

अथ सप्तदशः पटलः

आनन्दभैरवी उवाच

अथ वक्ष्ये महादेव अथर्ववेदलक्षणम्।
सर्ववर्णस्य सारं हि शक्त्याचारसमन्वितम्॥ १७-१॥

अथर्ववेदादुत्पन्नं सामवेदं तमोगुणम्।
सामवेदाद्यजुर्वेदं महासत्त्वसमुद्भवम्॥ १७-२॥

रजोगुणमयं ब्रह्मा ऋग्वेदं यजुषः स्थितम्।
मृणालसूत्रसदृशी अथर्ववेदरूपिणी॥ १७-३॥

अथर्वे सर्ववेदाश्च जलखेचरभूचराः।
निवसन्ति महा विद्या कुलविद्या महर्षयः॥ १७-४॥

समाप्तिपत्रशेषार्थं समीपं लोकमण्डले।
शक्तिचक्रसमाक्रान्तं दिव्यभावात्मकं शुभम्॥ १७-५॥

तत्रैव वीरभावञ्च तत्रैव पशुभावकम्।
सर्वभावात् परं तत्त्वमथर्वं वेदपत्रकम्॥ १७-६॥

द्विबिन्दुनिलयस्थानं ब्रह्माविष्णुशिवात्मकम्।
चतुर्वेदान्वितं तत्त्वं शरीरं दृढणिमीतम्॥ १७-७॥

चतुर्वींशतितत्त्वानि सन्ति गात्रे मनोहरे।
ब्रह्मा रजोगुणाक्रान्तः पूरकेणाभिरक्षति॥ १७-८॥

विष्णुः सत्त्वगुणाक्रान्तः कुम्भकैः स्थिरभावनैः।

हरस्तमोगुणाक्रान्तो रेचकेणापि विग्रहम्॥ १७-९॥

अथर्ववेदचक्रस्था कुण्डली परदेवता।

एतन्माया तु यो नैव ब्रह्मविष्णुशिवेन च॥ १७-१०॥

शरीरं देवनिलयं भक्तं ज्ञात्वा प्रवक्ष्यति।

सर्ववेदमयी देवी सर्वमन्त्रस्वरूपिणी॥ १७-११॥

सर्वयन्त्रात्मिका विद्या वेदविद्याप्रकाशिनी।

चैतन्या सर्वधर्मज्ञा स्वधर्मस्थानवासिनी॥ १७-१२॥

अचैतन्या ज्ञानरूपा हेमचम्पकमालिनी।

अकलङ्का निराधारा शुद्धज्ञानमनोजवा॥ १७-१३॥

सर्वसङ्कटहन्त्री च सा शरीरं प्रपाति हि।

तस्याः कार्यमिदं विश्वं तस्याः पुण्यानि हन्ति हि॥ १७-१४॥

तस्याश्चैतन्यकरणे सदा व्याकुलचेतसः।

महात्मानः प्रसिध्यन्ति यदि कुर्वन्ति चेतनाम्॥ १७-१५॥

तस्या अनुग्रहादेव किं न सिध्यति भूतले।
षण्मासाभ्यासयोगेन चैतन्या कुण्डली भवेत्॥ १७-१६॥

सा देवी वायवी शक्तिः परमाकाशवाहिनी।
तारिणी वेदमाता च बहिर्याति दिने दिने॥ १७-१७॥

द्वादशाङ्गुलमानेन आयुः क्षरति नित्यशः।
द्वादशाङ्गुलवायुश्च क्षयं कुर्याद्दिने दिने॥ १७-१८॥

यावद् यावद् बहिर्याति कुण्डली परदेवता।
तावत्तावत्खण्डलयं भवेद्धि पापमोक्षणम्॥ १७-१९॥

यदा यदा न क्षरति वायवी सूक्ष्मरूपिणी।
बाह्यचन्द्रे महादेव आग्नेयी सोममण्डले॥ १७-२०॥

मूलाधारे कामरूपे ज्वलन्ती चण्डिका शिखा।
यदा शिरोमण्डले च सहस्त्रदलपङ्कजे॥ १७-२१॥

तेजोमयी सदा याति शिवं कामेश्वरं प्रभुम्।
अच्युताख्यं महादेवं तदा ज्ञानी स योगिराट्॥ १७-२२॥

यदि क्षरति सा देवी बाह्यचन्द्रे मनोलये।

तदा योगं समाकुर्यात् यावत् शीर्षेण गच्छति॥ १७-२३॥

यदि शीर्षे समागम्यामृतपानं करोति सा।

वायवी सूक्ष्मदेहस्था सूक्ष्मालयप्रिया सती॥ १७-२४॥

तदेव परमा सिद्धिर्भक्तिमार्गो न संशयः।

चतुर्वेद ज्ञानसारं अथर्वं परिकीतीतम्॥ १७-२५॥

अथर्ववेदविद्या च देवता वायवी मता।

तस्याः सेवनमात्रेण रुद्ररूपो भवेन्नरः॥ १७-२६॥

केवलं कुम्भकस्था सा एका ब्रह्मप्रकाशिनी।

भैरव उवाच

केन वा वायवी शक्तिः कृपा भवति पार्वति॥ १७-२७॥

स्थिरचेता भवेत् केन विवेकी वा कथं भवेत्।

मन्त्रसिद्धिर्भवेत् केन कायसिद्धिः कथं भवेत्॥ १७-२८॥

विस्तार्य वद चामुण्डे आनन्दभैरवेश्वरी।

आनन्दभैरवी उवाच

श्रृणुष्वैकमनाः शम्भो मम प्राणकुलेश्वर॥ १७-२९॥

एकवाक्येन सकलं कथयामि समासतः।
श्रद्धया परया भक्त्या मनोनियमतत्परः॥ १७-३०॥

स प्राप्नोति पराशक्तिं वायवीं सूक्ष्मरूपिणीम्।
धैर्यक्षमामिताहारी शान्तियुक्तो यतिर्महान्॥ १७-३१॥

सत्यवादी ब्रह्मचारी दयाधर्मसुखोदयः।
मनसः संयमज्ञानी दिगम्बरकलेवरः॥ १७-३२॥

सर्वत्र समबुद्धिश्च परमार्थविचारवित्।
शरशाया भूमितले वायवीं परमामृतम्॥ १७-३३॥

य एवं पिबति क्षिप्रं तत्रैव वायवी कृपा।
गुरुसेवापरे धीरे शुद्धसत्त्वतनुप्रभे॥ १७-३४॥

भक्ते अष्टाङ्गनिरते वायवी सुकृपा भवेत्।
अतिथिं भोजयेद्यस्तु न भुक्ता स्वयमेव च॥ १७-३५॥

सर्वपापविनिर्मुक्तो वायवी सुकृपा ततः।
अन्तरात्मा महात्मा यः कुरुते वायुधारणम्॥ १७-३६॥

देवगुरौ सत्यबुद्धिर्वायवी सुकृपा ततः।
एककालो वृथा याति नैव यस्य महेश्वर॥ १७-३७॥

वायव्यां चित्तमादाय तत्रानिलकृपा भवेत्।
विचरन्ति महीमध्ये योगशिक्षानिबन्धनम्॥ १७-३८॥

प्राणायामेच्छुको यो वा वायवी सुकृपा ततः।
प्रतिवत्सरमानेन पीठे पीठे वसन्ति ये॥ १७-३९॥

वायवीं प्रजपन्तीह वायवी सुकृपा ततः।
अल्पाहारी निरोगी च विजयानन्दनन्दितः॥ १७-४०॥

वायवीं भजतो योगी वायवी सुकृपा भवेत्।

अन्तर्यागे पीठचक्रे चित्तमाधाय यत्नतः॥ १७-४१॥

नामनिष्ठो धारणाख्यो वायवी सुकृपा ततः।

पशुभाव समाक्रान्तः सदा रेतोविवजीतः॥ १७-४२॥

शुक्रमैथुनहीनश्च वायवी सुकृपा ततः।

अकालेऽपि सकालेऽपि नित्यं धारणतत्परः॥ १७-४३॥

योगिनामपि सङ्गी यो वायवी सुकृपा ततः।

बन्धुबान्धवहीनश्च विवेकाक्रान्तमानसः॥ १७-४४॥

शोकाशोकसमं भावं वायवी सुकृपा ततः।

सर्वदानन्दहृदयः कालज्ञो भौतसाधनः॥ १७-४५॥

मौनधारणजापश्च वायवी सुकृपा ततः।

निर्जनस्थाननिरतो निश्चेष्टो दीनवत्सलः॥ १७-४६॥

बहुजल्पनशून्यश्च स्थिरचेताः प्रकीतीतः।

हास्य सन्तोषहिंसादिरहितः पीठपारगः॥ १७-४७॥

योगशिक्षासमाप्त्यर्थी स्थिरचेताः प्रकीतीतः।
मत्कुलागमभावो ज्ञो महाविद्यादिमन्त्रवित्॥ १७-४८॥

शुद्धभक्तियुतः शान्तः स्थिरचेताः प्रकीतीतः।
मूलाधारे कामरूपे हृदि जालन्धरे तथा॥ १७-४९॥

ललाटे पूर्णगिर्याख्ये उड्डीयाने तदूर्ध्वके।
वाराणस्यां भ्रुवोर्मध्ये ज्वलन्त्यां लोचनत्रये॥ १७-५०॥

मायावत्यां सुखवृत्ते कण्ठे चाष्टपुरे तथा।
अयोध्यायां नाभिदेशे कट्यां काञ्च्यां महेश्वर॥ १७-५१॥

पीठेष्वेतेषु भूलोके चित्तमाधाय यत्नतः।
उदरे पूरयेद् वायुं सूक्ष्मसङ्केतभाषया॥ १७-५२॥

पादाङ्गुष्ठे च जङ्घायां जानुयुग्मे च मूलके।
चतुर्दले षड्दले च तथा दशदले तथा॥ १७-५३॥

दले द्वादशके चैव सिद्धिसिद्धान्तनिर्मले।
कण्ठे षोडशपत्रे च द्विदले पूर्णतेजसि॥ १७-५४॥

कैलासाख्ये ब्रह्मरन्ध्रपदे निर्मलतेजसि।
सहस्त्रारे महापद्मे कोटिकोटिविधुप्रभे॥ १७-५५॥

चालयित्वा महावायुं कुम्भयित्वा पुनः पुनः।
पूरयित्वा रेचयित्वा रोमकूपाद्विनिर्गतम्॥ १७-५६॥

तिस्त्रः कोट्यर्धकोटि च यानि लोमानि मानुषे।
नाडीमुखानि सर्वाणि धर्मबिन्दुं च्यवन्ति हि॥ १७-५७॥

यावत्तद्बिन्दुपातश्च तावत्कालं लयं स्मृतम्।
तावत्कालं प्राणयोगात् प्रस्वेदाधमसिद्धिदम्॥ १७-५८॥

सूक्ष्मवायुसेवया च किन्न सिद्ध्यति भूतले।
लोमकूपे मनो दद्यात् लयस्थाने मनोरमे॥ १७-५९॥

स्थिरचेता भवेत् शीघ्रं नात्र कार्या विचारणा।
वायुसेवां विना नाथ कथं सिद्धिर्भवेद् भवे॥ १७-६०॥

स्थिरचित्तं बिना नाथ मध्यमापि न जायते।
स्थाने स्थाने मनो दत्वा वायुना कुम्भकेन च॥ १७-६१॥

धारयेन्मारुतं मन्त्री कालज्ञानी दिवानिशम्।
एकान्तनिर्जने स्थित्वा स्थिरचेता भवेद् ध्रुवम्॥ १७-६२॥

स्थिरचित्तं विना शम्भो सिद्धिः स्यादुत्तमा कथम्॥ १७-६३॥

निवार्ह्य पञ्चेन्द्रियसञ्ज्ञकानि यत्नेन धैर्यायतिरीश्वरस्त्वम्।
प्राप्नोति मासत्रयसाधनेन विषासवं भोक्तुमसौ समर्थः॥ १७-६४॥

मासत्रयाभ्यास--सुसञ्चयेन स्थिरेन्द्रियः स्यादधमादिसिद्धिः।
सा खेचरी सिद्धिरत्र प्रबुद्धा चतुर्थये मासे तु भवेद्विकल्पनम्॥ १७-
६५॥

तदाधिकारी पवनाशनोऽसौ स्थिरासनानन्दसुचेतसा भुवि।
प्रकल्पने सिद्धिं यथार्थगामिनीमुपेति शीघ्रं वरवीरभावम्॥ १७-
६६॥

सा वयवी शक्तिरनन्तरूपिणी लोभावलीनां कुहरे महासुखम्।

ददाति सौख्यं गतिचञ्चलं जयं स्थिराशयत्वं सति शास्त्रकोविदम्

॥ १७-६७॥

षण्मासयोगासननिष्ठदेहा वायुश्रमानन्दरसाप्तविग्रहः।

विहाय कल्पान्वितयोगभावं श्रुत्यागमान् कर्तुमसौ समर्थः॥ १७-६८॥

स्थिरचेता महासिद्धिं प्राप्नोति नात्र संशयः।

संवत्सरकृताभ्यासे महाखेचरतां व्रजेत्॥ १७-६९॥

यावन्निर्गच्छति प्रीता वायवी शक्तिरुत्तमा।

नासाग्रमववार्यैव स्थिरचेता महामतिः॥ १७-७०॥

चण्डवेगा यदा क्षिप्रमन्तरालं न गच्छति।

सर्वत्रगामी स भवेत् तावत्कालं विचक्षणः॥ १७-७१॥

यदि शीर्षादूर्ध्वदेशे द्वादशाङ्गुलकोपरि।

गन्तुं समर्थो भगवान् शिवतुल्यो गणेश्वरः॥ १७-७२॥

सर्वत्रगामी प्रभवेत् खेचरो योगिराड् वशी।

इति सिद्धिर्वत्सरे स्यात् स्थिरचित्तेन शङ्कर॥ १७-७३॥

योगी भूत्वा मनःस्थैर्यं न करोति यदा भुवि।
कृच्छ्रेर्ण पदमारुह्य प्रपतेन्नारकी यथा॥ १७-७४॥

अत एव महाकाल स्थिरचेता भव प्रभो।
तदा मां प्राप्स्यसि क्षिप्रं वायवीमष्टसिद्धिदाम्॥ १७-७५॥

यदि सिद्धो भवेद् भूमौ वायवीसुकृपादिभिः।
सदा कामस्थिरो भूत्वा गोपयेन्मातृजारवत्॥ १७-७६॥

यदा यदा महादेव योगाभ्यासं करोति यः।
शिष्येभ्योऽपि सुतेभ्योऽपि दत्वा कार्यं करोति यः॥ १७-७७॥

तदैव स महासिद्धिं प्राप्नोति नात्र संशयः।
संवत्सरं चरेद्धर्मं योगमार्गं हि दुर्गमम्॥ १७-७८॥

प्रकाशयेन्न कदापि कृत्वा मृत्युमवाप्नुयात्।
योगयोगाद् भवेन्मोक्षो मन्त्रसिद्धिरखण्डिता॥ १७-७९॥

न प्रकाश्यमतो योगं भुक्तिमुक्तिफलाय च।

नित्यं सुखं महाधर्मं प्राप्नोति वत्सराद् बहिः॥ १७-८०॥

आत्मसुखं नित्यसुखं मन्त्रं यन्त्रं तथागमम्।

प्रकाशयेन्न कदापि कुलमार्गं कुलेश्वर॥ १७-८१॥

यद्येवं कुरुते धर्मं तदा मरणमाप्नुयात्।

योगभ्रष्टो विज्ञानज्ञोऽजड। मृत्युमवाप्नुयात्॥ १७-८२॥

येन मृत्युवशो याति तत्कार्यं नापि दर्शयेत्।

दत्तात्रेयो महायोगी शुको नारद एव च॥ १७-८३॥

येन कृतं सिद्धिमन्त्रं वर्णजालं कुलार्णवम्।

एकेन लोकनाथेन योगमार्गपरेण च॥ १७-८४॥

तथा मङ्गलकार्येण ध्यानेन साधकोत्तमः।

उत्तमां सिद्धिमाप्नोति वत्सराद् योगशासनात्॥ १७-८५॥

आदौ वै ब्रह्मणो ध्यानं पूरकाष्टाङ्गलक्षणैः।

कुर्यात् सकलसिद्ध्यर्थमम्बिकापूजनेन च॥ १७-८६॥

ऋग्वेदं चेतसि ध्यात्वा मूलाधारे चतुर्द्दले।
वायुना चन्द्ररूपेण धारयेन्मारुतं सुधीः॥ १७-८७॥

अथर्वान्निर्गतं सर्वं ऋग्वेदादि चराचरम्।
तेन पूर्णचन्द्रमसा जीवेनार्यामृतेन च॥ १७-८८॥

जुहुयादेकभावेन कुण्डलीसूर्यगोऽनले।
कुम्भकं कारयेन्मन्त्री यजुर्वेदपुरःसरम्॥ १७-८९॥

सर्वसत्त्वाधिष्ठितं तत् सर्वविज्ञानमुत्तमम्।
वायव्याः पूर्णसंस्थानं योगिनामभिधायकम्॥ १७-९०॥

पुनः पुनः कुम्भयित्वा सत्त्वे निर्मलतेजसि।
महाप्रलयसारज्ञो भवतीति न संशयः॥ १७-९१॥

रेचकं शम्भुना व्याप्तं तमोगुणमनोलयम्।
सर्वमृत्युकुलस्थानं व्याप्तं धर्मफलाफलैः॥ १७-९२॥

पुनः पुनः क्षोभनिष्ठो रेचकेन निवर्तते।

रेचकेन लयं याति रेचनेन परं पदम्॥ १७-९३॥

प्राप्नोति साधकश्रेष्ठो रेचकेनापि सिद्धिभाक्।
रेचकं वह्निरूपञ्च कोटिवह्निशिखोज्ज्वलम्॥ १७-९४॥

द्वादशाङ्गुलमध्यस्थं ध्यात्वा बाह्ये लयं दिशेत्।
चन्द्रव्याप्तं सर्वलोकं सर्वपुण्यसमुद्भवम्॥ १७-९५॥

रेचकाग्निर्दहतीह वायुसख्यो महाबली।
तत् शशाङ्कजीवरूपं पीत्वा जीवति वायवी॥ १७-९६॥

आग्नेयी दह्यति क्षिप्रं एष होमः परो मतः।
एतत् कार्यं यः करोति स न मृत्युवशो भवेत्॥ १७-९७॥

एतयोः सन्धिकालञ्च कुम्भकं तत्त्वसाधनम्।
तदेव भावकानाञ्च परमस्थानमेव च॥ १७-९८॥

महाकुम्भकलाकृत्या स्थिरं स्थित्त्वा च कुम्भके।
अथर्वगामिनीं देवीं भावयेदमरो महान्॥ १७-९९॥

अनन्तभावनं शम्भोरशेषसृष्टिशोभितम्।

अथर्वं भावयेन्मन्त्री शक्तिचक्रक्रमेण तु॥ १७-१००॥

आज्ञाचक्रे वेददले चतुर्दलसुमन्दिरे।

अथर्वयोगिनीं ध्यायेत् समाधिस्थेन चेतसा॥ १७-१०१॥

ततोऽच्युताख्यं जगतामीश्वरं शीर्षपङ्कजे।

प्रपश्यति जगन्नाथं नित्यसूक्ष्मसुखोदयम्॥ १७-१०२॥

आज्ञाचक्रे शोधनमशेषदलमथर्वं परिकीतीतम्।

ज्योतिश्चक्रे तन्मध्ये योगमार्गेण सद्बिलम्॥ १७-१०३॥

प्रपश्यति महाज्ञानी बाह्यदृष्ट्या यथाम्बुजम्।

कालेन सिद्धिमाप्नोति ब्रह्मज्ञानी च साधकः॥ १७-१०४॥

ततो भजेत् कौलमार्गं ततो विद्यां प्रपश्यति।

महाविद्यां कोटिसूर्यज्वालामालासमाकुलम्॥ १७-१०५॥

एतत्तत्त्वं विना नाथ न पश्यति कदाचन।

वसिष्ठो ब्रह्मपुत्रोऽपि चिरकालं सुसाधनम्॥ १७-१०६॥

चकार निर्जने देशे कृच्छ्रेर्ण तपसा वशी।

शतसहस्रं वत्सरं च व्याप्य योगादिसाधनम्॥ १७-१०७॥

तथापि साक्षाद्विज्ञानं न बभूव महीतले।

ततो जगाम क्रुद्धोऽसौ तातस्य निकटे प्रभुः॥ १७-१०८॥

सर्वं तत् कथयामास स्वीयाचारक्रमं प्रभो।

अन्यमन्त्रं देहि नाथ एषा विद्या न सिद्धिदा॥ १७-१०९॥

अन्यथा सुदृढं शापं तवाग्रे प्रददामि हि।

ततस्तं वारयामास एवं न कुरु भो सुत॥ १७-११०॥

पुनस्तां भज भावेन योगमार्गेण पण्डित।

ततः सा वरदा भूत्वा आगमिष्यति तेऽग्रतः॥ १७-१११॥

सा देवी परमा शक्तिः सर्वसङ्कटतारिणी।

कोटिसूर्यप्रभा नीला चन्द्रकोटिसुशीतला॥ १७-११२॥

स्थिरविद्युल्लताकोटिसदृशी कालकामिनी।

सा पाति जगतां लोकान् तस्याः कर्म चराचरम्॥ १७-११३॥

भज पुत्र स्थिरानन्द कथं शप्तुं समुद्यतः।

एकान्तचेतसा नित्यं भज पुत्र दयानिधे॥ १७-११४॥

तस्या दर्शनमेवं हि अवश्यं समवाप्स्यसि।

एतत् श्रुत्वा गुरोर्वाक्यं प्रणम्य च पुनः पुनः॥ १७-११५॥

जगाम जलधेस्तीरे वशी वेदान्तवित् शुचिः।

सहस्रवत्सरं सम्यक् जजाप परमं जपम्॥ १७-११६॥

आदेशोऽपि न बभूव ततः क्रोधपरो मुनिः।

व्याकुलात्मा महाविद्यां वसिष्ठः शप्तुमुद्यतः॥ १७-११७॥

द्विराचम्य महाशापः प्रदत्तश्च सुदारुणः।

तेनैव मुनिना नाथ मुनेरग्रे कुलेश्वरी॥ १७-११८॥

आजगाम महाविद्या योगिनामभयप्रदा।

अकारणमरे विप्र शापो दत्तः सुदारुणः॥ १७-११९॥

मम सेवां न जानाति मत्कुलागम चिन्तनम्।
कथं योगाभ्यासवशात् मत्पदाम्भोजदर्शनम्॥ १७-१२०॥

प्राप्नोति मानुषो देवे मनध्यानमदुःखदम्।
यः कुलार्थी सिद्धमन्त्री मद्वेदाचार निर्मलः॥ १७-१२१॥

ममैव साधनं पुण्यं वेदानामप्यगोचरम्।
बौद्धदेशेऽथर्ववेदे महाचीने तदा व्रज॥ १७-१२२॥

तत्र गत्वा महाभावं विलोक्य मत्पदाम्बुजम्।
मत्कुलज्ञो महर्षे त्वं महासिद्धो भविष्यसि॥ १७-१२३॥

एतद्वाक्यं कथयित्वा सा वायव्याकाशवाहिनी।
निराकाराऽभवत् शीघ्रं ततः साकाशवाहिनी॥ १७-१२४॥

ततो मुनिवरः श्रुत्वा महाविद्यां सरस्वतीम्।
जगाम चीनभूमौ च यत्र बुद्धः प्रतिष्ठति॥ १७-१२५॥

पुनः पुनः प्रणम्यासौ वसिष्ठः क्षितिमण्डले।
रक्ष रक्ष महादेव सूक्ष्मरूपधराव्यय॥ १७-१२६॥

अतिदीनं वसिष्ठं मां सदा व्याकुलचेतसम्।

ब्रह्मपुत्रो महादेवीसाधनायाजगाम च॥ १७-१२७॥

सिद्धिमार्गं न जानामि वेदमार्गपरो हर।

तवाचारं समालोक्य भयानि सन्ति मे हृदि॥ १७-१२८॥

तन्नाशय मम क्षिप्रं दुर्बुद्धिं भेदगामिनीम्।

वेदबहिष्कृतं कर्म सदा ते चालये प्रभो॥ १७-१२९॥

कथमेतत् प्रकारञ्च मद्यं मांसं तथाङ्गनाम्।

सर्वे दिगम्बराः सिद्धा रक्तपानोद्यता वराः॥ १७-१३०॥

मुहुर्मुहुः प्रपिबन्ति रमयन्ति वराङ्गनाम्।

सदा मांसासवैः पूर्णा मत्ता रक्तविलोचनाः॥ १७-१३१॥

निग्रहानुग्रहे शक्ताः पूर्णान्तःकरणोद्यताः।

वेदस्यागोचराः सर्वे मद्यस्त्रीसेवने रताः॥ १७-१३२॥

इत्युवाच महायोगी दृष्ट्वा वेदबहिष्कृतम्।

प्राञ्जलिर्विनयाविष्टो वद चैतत् कुलं प्रभो॥ १७-१३३॥

मनःप्रवृत्तिरेतेषां कथं भवति पावन।
कथं वा जायते सिद्धिर्वेदकार्यं बिना प्रभो॥ १७-१३४॥

श्रीबुद्ध उवाच

वसिष्ठ शृणु वक्ष्यामि कुलमार्गमनुत्तमम्।
येन विज्ञातमात्रेण रुद्ररूपी भवेत् क्षणात्॥ १७-१३५॥

साक्षेपेण सर्वसारं कुलसिद्ध्यर्थमागमम्।
आदौ शुचिर्भवेद् धीरो विवेकाक्रान्तमानसः॥ १७-१३६॥

पशुभावस्थिरचेताः पशुसङ्गविवर्जितः।
एकाकी निर्जने स्थित्वा कामक्रोधादिवर्जितः॥ १७-१३७॥

दमयोगाभ्यासरतो योगशिक्षादृढव्रतः।
वेदमार्गाश्रयो नित्यं वेदार्थनिपुणो महान्॥ १७-१३८॥

एवं क्रमेण धर्मात्मा शीलो दार्ढ्यगुणान्वितः।

धारयेन्मारुतं नित्यं श्वासमार्गे मनोलयम्॥ १७-१३९॥

एवमभ्यासयोगेन वशी योगी दिने दिने।
शनैः क्रमाभ्यासाद् दहेद् स्वेदोद्गमोऽधमः॥ १७-१४०॥

मध्यमः कल्पसंयुक्तो भूमित्यागः परो मतः।
प्राणायामेन सिद्धिः स्यान्नरो योगेश्वरो भवेत्॥ १७-१४१॥

योगी भूत्वा कुम्भकज्ञो मौनी भक्तो दिवानिशम्।
शिवे कृष्णे ब्रह्मपदे एकान्तभक्तिसंयुतः॥ १७-१४२॥

ब्रह्मविष्णुशिवा एते वायवीगतिचञ्चला।
एवं विभाव्य मनसा कर्मणा वचसा शुचिः॥ १७-१४३॥

आदौ चित्तं समाधाय चिद्रूपायां स्थिराशयः।
ततो महावीरभावं कुलमार्गं महोदयम्॥ १७-१४४॥

शक्तिचक्रं सत्त्वचक्रं वैष्णवं नवविग्रहम्।
समाश्रित्य भजेन्मन्त्री कुलकात्यायनीं पराम्॥ १७-१४५॥

प्रत्यक्षदेवतां श्रीदां चण्डोद्वेगनिकृन्तिनीम्।

चिद्रूपां ज्ञाननिलयां चैतन्यानन्दविग्रहाम्॥ १७-१४६॥

कोटिसौदामिनीभासां सर्वतत्त्वस्वरूपिणीम्।

अष्टादशभुजां रौद्रीं शिवमांसाचलप्रियाम्॥ १७-१४७॥

आश्रित्य प्रजपेन्मन्त्रं कुलमार्गाश्रयो नरः।

कुलमार्गात् परं मार्गं को जानाति जगत्त्रये॥ १७-१४८॥

एतन्मार्गप्रसादेन ब्रह्मा स्रष्टा स्वयं महान्।

विष्णुश्च पालने शक्तो निर्मलः सत्त्वरूपधृक्॥ १७-१४९॥

सर्वसेव्यो महापूज्यो यजुर्वेदाधिपो महान्।

हरः संहारकर्त्ता च वीरेशोत्तममानसः॥ १७-१५०॥

सर्वेषामन्तकः क्रोधी क्रोधराजो महाबली।

वीरभावप्रसादेन दिक्पाला रुद्ररूपिणः॥ १७-१५१॥

वीराधीनमिदं विश्वं कुलाधीनञ्च वीरकम्।

अतः कुलं समाश्रित्य सर्वसिद्धीश्वरो जडः॥ १७-१५२॥

मासेनाकर्षणं सिद्धिर्द्वीमासे वाक्पतिर्भवेत्।

मासत्रयेण संयोगाज्ज्ञायते सुखवल्लभः॥ १७-१५३॥

एवं चतुष्टये मासि भवेद् दिक्पालगोचरः।

पञ्चमे पञ्चबाणः स्यात्षष्ठे रुद्रो भवेद् ध्रुवम्॥ १७-१५४॥

एतदाचारसारं हि सर्वेषामप्यगोचरम्।

एतन्मार्गं कौलमार्ग कौलमार्गं परं नहि॥ १७-१५५॥

योगिनां दृढचित्तानां भक्तानामेकमासतः।

कार्यसिद्धिर्भवेन्नारी कुलमार्गप्रसादतः॥ १७-१५६॥

पूर्णयोगी भवेद् विप्रः षण्मासाभ्यासयोगतः।

शक्तिं बिना शिवोऽशक्तः किमन्ये जडबुद्धयः॥ १७-१५७॥

इत्युक्त्वा बुद्धरूपी च कारयामास साधनम्।

कुरु विप्र महाशक्तिसेवनं मद्यसाधनम्॥ १७-१५८॥

महाविद्यापदाम्भोजदर्शनं समवाप्स्यसि।

एतच्छ्रुत्वा गुरोर्वाक्यं स्मृत्वा देवीं सरस्वतीम्॥ १७-१५९॥

मदिरासाधनं कर्त्तुं जगाम कुलमण्डले।
मद्यं मांसं तथा मांसं मुद्रा मैथुनमेव च॥ १७-१६०॥

पुनः पुनः साधयित्वा पूर्णयोगी बभूव सः।
योगमार्गं कुलमार्गमेकाचारक्रमं प्रभो॥ १७-१६१॥

योगी भूत्वा कुलं ध्यात्वा सर्वसिद्धीश्वरो भवेत्।
सन्धिकालं कुलपथं योगेन जडितं सदा॥ १७-१६२॥

भगसंयोगमात्रेण सर्वसिद्धीश्वरो भवेत्।
एतद्योगं विजानीयाज्जीवात्मपरमात्मनोः॥ १७-१६३॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने
भावप्रश्नार्थनिर्णये सिद्धमन्त्रप्रकरणे चतुर्वेदोल्लासे
भैरवभैरवीसंवादे सप्तदशः पटलः॥ १७॥

अथाष्टादशः पटलः

आनन्दभैरवी उवाच

श्रृणु नाथ प्रवक्ष्यामि असाध्यसाधनं परम्।

कामचक्रस्य वर्णानां वर्णनं प्रश्ननिर्णयम्॥ १८-१॥

आज्ञाचक्रमध्यभागे नाडीकोटिरसालिनी।

तन्मध्ये भावयेन्मन्त्री कामचक्रं मनोरमम्॥ १८-२॥

कामचक्रे च पूर्वोक्तवर्णमालोक्य साधकः।

न्यासमन्त्रे पुटीकृत्य जपित्वा योगिराड् भवेत्॥ १८-३॥

एको मन्दिरमध्यस्थो मन्त्रमाश्रित्य यत्नतः।

निजनामाक्षरं तत्र तत्कोष्ठमनुमाश्रयेत्॥ १८-४॥

आनन्दभैरव उवाच

एतेषां कोष्ठसंस्थानां वर्णानां हि फलाफलम्।

वद कान्ते रहस्यं मे कामचक्रफलोद्भवम्॥ १८-५॥

आनन्दभैरवी उवाच

कामचक्रं कालरूपं ततो वाराणसीपुरम्।
तत्र सर्वपीठचक्रं चक्राणामुत्तमोत्तमम्॥ १८-६॥

एतच्चक्रप्रसादेन ते पादाम्बुजदर्शनम्।
प्राप्नोति साधकान् सत्यं सर्वं जानाति साधकः॥ १८-७॥

कामनाफलसिद्ध्यर्थं मन्त्रार्थादिविचारणाम्।
वृद्धमस्तमितं त्यक्त्वा गृह्णीयान्मन्त्रमुत्तमम्॥ १८-८॥

( आनन्दभैरवी उवाच )।

शृणु वर्णफलं नाथ असाध्यप्रश्ननिर्णयम्।
वर्णानाञ्च नाथ राशिभेदेन संशृणु प्रभो॥ १८-९॥

बाल्यादिषु स्थितान् वर्गान् आश्रयेत् साधकोत्तमः।
वर्जयेद् वृद्धभावञ्च तथास्तमितमेव च॥ १८-१०॥

आश्रयेद् राशिभावेन बाल्यकैशोरयौवन।
अथ बाल्यं वर्गभेदं विचारे वामयोगतः॥ १८-११॥

मन्त्राणाञ्चापि गणयेत् प्रश्नकर्माणि दक्षिणात्।

मध्यकोणावधिं नाथ गणनीयं विचक्षणैः॥ १८-१२॥

ऊर्द्ध्वदक्षिणयोगेन गणयेत् प्रश्नकर्मणि।

वामयोगेन गणयेद् मन्त्रादीनां विचारणे॥ १८-१३॥

श्रृणु तद्वर्गवर्गाणां फलमत्यन्तसुन्दरम्।

वदामि परमानन्दरससिन्धुमधुव्रतः(त)॥ १८-१४॥

कवर्गं कामाख्याभवनमणिपीठे त्रिजगता।

धरित्री सा धात्री वसति सततं सिद्धिनवके।

हुताशेष्वाकाशे जलदतनुसाकाशजननी।

गभीरा खड्गाभा करहर(भयवर)करा घोरमुखरा॥ १८-१५॥

अभ्यासयोगात् कलिकालपावनी।

कालीं कुलानन्दमयीं रमेशीम्।

महारसोल्लाससुवक्रलोचना।

कामेश्वरीं कूर्मपदं(दं) भजेज्जयी॥ १८-१६॥

कालागुरोरुत्तमसिद्धसेविता।

मनोहरा खेचरसारशाखिनी।

उल्कासमग्रा भवदीपवृत्ति--

स्तेज(ः)(प्र)कूटामलनीलदेहा॥ १८-१७॥

खड्गायुधा खर्परधारिणी सा।

चण्डोद्गमा वायुपथस्थ खेचरी।

विद्याभयाखञ्जनलोचना गतिः।

क्षितिक्षये खेचरवर्गधारिणी॥ १८-१८॥

खारी विहारी खलखेलनेन।

खराखरोन्मत्तगतिप्रिया खगा।

महाखगारूपखलस्थिता सदा।

प्रपाति विद्याबलविक्रमस्थिता॥ १८-१९॥

व्यापारनिद्रागहनार्थचिन्ताखरप्रभाभाति यदा यदा॥ १८-२०॥

गायत्री गणनायिका मतिगतिग्लानिरगूढाशया।

गीता गोकुलकामिनी गुरुतरा गार्ह्याग्निजेयोदया।

गोरूपा गयहा गया गुणवती गाथापथस्थायिनी।

श्रीगुर्वी प्रतिपालनं त्रिजगतां गायन्ति यां तां भजेत्॥ १८-२१॥

वायोर्घर्मकरानन्दमोहिनी घर्घरा घना।
निद्रामाध्याति घटना नीला घोटकवाहिनी॥ १८-२२॥

बिन्दुस्था विषभोजनानलकथा बीजश्रमायोप्रिया।
पञ्चाढ्यामनुनासिका सुखमयी वेदक्रिया षण्मुखी॥ १८-२३॥

विचित्रवस्त्राचरणाब्जचालनम्।
विचारचेष्टां मयि देहि चञ्चले॥ १८-२४॥

इति वर्णं चवर्गस्य महापातकनाशनम्।
कामचक्रे स्थितं यद्यत् प्रश्ने मन्त्रगृहे यथा॥ १८-२५॥

चवर्गफलमत्यन्तनिष्कर्षं सूक्ष्मभावनम्।
धिया सर्वाक्षरश्रेणीं भावयन्ति पुनः पुनः॥ १८-२६॥

सर्वं जानाति शम्भो त्वं परं किं कथयामि ते।
तथापि वर्गमाहात्म्यं कामचक्रस्थनिर्मलम्॥ १८-२७॥

यो जानाति कामचक्रं यमो हन्ति न तं जनम्।

तत्प्रकारं भावयुक्तं भावनाध्याननिर्मलम्॥ १८-२८॥

ध्यात्वा कामरूपस्था मूलाधारनिवासिनः।

देवताः पाथीवाः सर्वे आत्मानं परमेष्ठिनः॥ १८-२९॥

न जानन्ति बालका मे तेषां योगादिसिद्धये।

कामचक्रं कामरूपं कामनाफलसिद्धिदम्॥ १८-३०॥

तन्मन्त्रग्रहणादेव साक्षादीशो भवेन्नरः।

श्रुतिशास्त्राणि सर्वाणि करे तस्य न संशयः॥ १८-३१॥

योगशिक्षादिकं सर्वं जानाति कामचक्रतः।

कामचक्रप्रसादेन कामरूपी भवेद् ध्रुवम्॥ १८-३२॥

तद्वर्णस्थं तदन्तःस्थं दशकोणस्थमेव च।

अष्टदलस्थं तत्रापि विचार्य साधकोत्तमः॥ १८-३३॥

अनुलोमविलोमेन शास्त्रस्यानुक्रमेण च।

बाल्यं कैशोरमुल्लासं वृद्धिः सिद्धिश्च यौवने॥ १८-३४॥

वृद्धो वृद्धत्वमाप्नोति अस्ते च निधनं भवेत्।

नवग्रहास्तत्र मध्ये पञ्चप्राणाश्च सन्ति वै॥ १८-३५॥

अनुलोमविलोमेन गणयेद्दशकोणके।

दशकोणे सर्वसिद्धिरष्टसिद्धिश्च तत्र वै॥ १८-३६॥

अष्टपत्रे प्रशंसन्ति अधोऽनन्तमध्ये गृहे।

ब्राह्मणमूर्ध्वगेहे च मन्त्रवर्णांश्च तत्तु तान्॥ १८-३७॥

समाश्रित्य जपेद्विद्यां सूरयः क्रमरूपिणीम्।

ह्रस्वदेवीं ह्रस्वबुद्धिं ददाति साधकाय च॥ १८-३८॥

यदि क्रोधपरा विद्या भक्षयेत् साधकं लघु।

अतः समवयोरूपां देवतामष्टसिद्धिदाम्॥ १८-३९॥

देवो भूत्वा यजेद्देवं तदा मोक्षं समाप्नुयात्।

यदि वर्णं न जानाति कौलपुत्रोऽप्यधो व्रजेत्॥ १८-४०॥

डाकिनी तं भक्षयति दीक्षामन्त्रार्णहीनकम्।

ततो वर्णविचारञ्च प्रवक्ष्यामि समासतः॥ १८-४१॥

चापान् धृत्वा नरेन्द्रस्तमपि मनुजकं पालयन्तीह लोके।
सर्व चन्द्रो विघातं प्रचुरमयभयं भास्करो हन्ति शोकान्।
चातुर्थ्या चक्रपाणेः पदमपि चपला सन्ददातीह माया--।
योगोद्योगी चरुगतमनसा साधकायाऽऽशु योगम्॥ १८-४२॥

छत्राशा कमले स्थिता स्थितिलये वाञ्छाफलश्रीधरा।
छायामण्डपमध्यगाच्छलगता छत्रञ्छटा तेजसा।
त्रैलोक्यं प्रतिपाति पाशुपतिभिः क्षेत्राधिपैः श्रीधरैः।
प्राणप्रेमविहारिणी भगवतीच्छत्रेण तं साधकम्॥ १८-४३॥

जातिख्यातिरनुत्तमा प्रभवति प्रीतायमाभ्यासता।
जीवानामतिदुःखराशिहननात् एकार्थसञ्चारिणी।
वज्रा जीवनमध्यगा गतिमती विद्या जया यामिनी।
जाता जातनिवारिणी जनमनःसंहारचिन्तावतु॥ १८-४४॥

झं झंत्वादविवादं झटिति झरझरा झारयाबीजझङ्का।
गङ्गा हन्ति हताशुभा धनमुखी कैवल्यमुक्तिप्रदा।
कृत्वा रक्षति साधकं झरझनत्कारेण सूक्ष्मानिला।

कामक्रोधविनाशिनी शशिमुखी झङ्कारशब्दप्रिया॥ १८-४५॥

ञकारबीजामलभावसारैः बाणस्य पुञ्जं प्रतिहन्ति योगिनी।
खड्गायुधा सा रसपानमत्ता संहारनिद्राकुलसाधुदुःखहा॥ १८-४६
॥

चन्द्रातपस्निग्धसुकान्त विग्रहा टङ्कास्त्र वज्रास्त्रहतारिपुङ्गवाः।
टिं टिं महामन्त्रजपेन सिद्धिदा हन्ति श्रियं कापुरुषस्य पातकम्॥
१८-४७॥

विशालनेत्रा यदि चारुकाङ्गी ठं ठं स्वबीजं परिपाति कक्षरी।
मनोगतं दुःखसमूहमुर्वशी रत्नाकरा सैन्यकुलं निहन्ति॥ १८-४८॥

डामरा जगतामाद्या डं डां डिं डीं स्वरूपिणी।
कामचक्रे सुखं दत्वा सारयैवं तनोति सा॥ १८-४९॥

ढं ढां बीजात्मिका विद्या रत्नमन्दिरस्ंस्थिता।
ढक्कारी पाशहस्ता च साधक पाति सुन्दरी॥ १८-५०॥

णं णां णिं णीं जपति सुजनो जीवनीमध्यसंस्था।

अष्टैश्वर्या प्रभवति हृदि क्षोभपुञ्जापहाय।
वाराणस्यां सकलभयहा सन्ददातीह लक्ष्मी।
सूक्ष्मात्यन्तानलपथमुखी कालजालं निहन्ति॥ १८-५१॥

तारारूपा तरुस्था त्रिनयन कुटिला तारकाख्या।
निहन्त्री तन्वश्रेणी तरुवरकलात्राणहेतोरतीता।
तालक्षेत्रा तडिदिव कलाकोटिसूर्यप्रकाशा।
तोकादीनां बहलतरुणी तारकं पाति भक्तम्॥ १८-५२॥

कालक्रमेणैव विमुक्तिदायिनी मनोरमा नीरजनेत्र कोमला।
स्थिता क्ष(थ)काराक्षरमालिनीस्थला प्रपाति मुख्यं वरसाधकं
शिवा॥ १८-५३॥

दाली दरिद्रातिनिकृष्टदुःखहा दान्तप्रिया दैत्यविदारिणी दहा।
दानस्थलस्था दयिता जगत्पतेर्दयां ददाति द्रवदेवदारा॥ १८-५४॥

धात्री धराधारणतत्परा धनी धनप्रदा धर्मगतिर्धरित्री।
दधार धीरं धनबीजमालिनी ध्यानस्थिता धर्मनिरूपणाय॥ १८-५५
॥

नन्दस्य प्रतिपालनाय जगतामानन्दपुञ्जोदया।
योगिन्यो नयनाम्बुजोज्ज्वलशिखाशोभा प्रमालाक्षरा।
नीता नावपथस्थिता मतिमती याः पालयन्तीह ताः।
पान्तु श्रीमुखतेजसा खलु यथा कालक्रमात् साधकम्॥ १८-५६॥

पीता प्रेमविलासिनी वरपथज्ञानाश्रया पालनात्।
पूज्या पायसपा परापरपदा पीताम्बरा पोषणा।
प्रौढा प्रेमवती पुराणकथना पायात् पुरा पावनी।
या कामेश्वरपावनं परजनं श्री साधकं प्रस्थिता॥ १८-५७॥

फुत्फणिवरमाला फेरवी फेरुरूपा।
फणधरमुखकुल्याम्भोजवाक्यामृताब्धौ।
निरवधिहरिकण्ठे वाक्यरूपा फलस्था।
फलगतफणिचूडा पातु फुल्लारविन्दे॥ १८-५८॥

वज्राख्यां वशकारिणीं यदि जपेत् श्रीपादसंसेवनात्।
बाल्यं वेदविनिर्गतां भगवतीं श्रीरामदेवोर्व्वराम्।
वश्या तस्य कराम्बुजे वसति सा वीरासनःस्था वशा।
वक्राम्भोरुह कोमले भगवती भूतेश्वरी भूतगा॥ १८-५९॥

माता मन्दिरमालिनी मतिमतामानन्दमालामला।

मिथ्यामैथुनमोहिनी मनसि या(जा) मि(मे)ला महन्मेलनी।

मानी तं वदते महेश्वरमहित्वं तस्य वक्षःस्थले।

स्थित्वा सा मरणं निहन्ति सहसा मौनावलम्बी भवेत्॥ १८-६०॥

यातप्रिया या प्रतिभाति योगिनी।

यामास्थिता योगमुखास्पदा यथा।

योनिस्थले सा यतिसाधक।

यशोयात्रा सदा पाति यमादिकं दहेत्॥ १८-६१॥

रत्नस्था रतिराजिता रणमुखे राज्ञः प्रियाभीतिहा--।

रुक्ष्मा(क्या)लङ्कृतरङ्गिणी रसवती रागापहा रोगहा।

राजेन्द्रं रजनीस्थे प्रकुपिता राधामृता पाति त।

स्वाहारूपमनोरमा सुरमणी रामा रकाराक्षरी॥ १८-६२॥

लक्ष्मीर्लाङ्गलिलक्षणा सुललना लोलामला निर्भया।

बालामूलमिवासतां लवणाकुला सिन्धूल्लासलीलाकुला।

लोलाकोलकुलान्नजानलमुखी लग्नालघूराकुला।

कौलार्काकुललोचना लयकरी लीलालयं पाति माम्॥ १८-६३॥

विषासवस्थानरणस्थवासना।
वश्यावहन्ती ललनावशार्थम्।
सा पाति वीरं यदि तां भजेद् वशी।
विषाशनं ते निवसन्ति वारुणीम्॥ १८-६४॥

शीतां शशीशोक विशेषनाशिनी।
भजेत् सुशीलां स भवेद्दिवाकरः।
शिवां शचीं शौचशुभां शवप्रिया।
शवस्थितां शीतलदेशशोभिताम्॥ १८-६५॥

षट्चक्रे षट्पदाषाढी षडङ्गस्था षडानना।
षट्चक्रे सिद्धिदा पाति साधकं षोडशी मुदा॥ १८-६६॥

सा मा सूक्ष्मा वहति सुजलं सप्तनाकस्थलाढ्या।
सारा साक्षात् सुखसमरसोज्ज्वालसाह्लादसाम्या।
साकारा साम्बुजमधुगिरा पूरयन्ती महार्थं।
वेदा सौरा सुरमतिनिवहा सामवेदान्तरस्था॥ १८-६७॥

हठात्कारेण सहारा हरति प्राणहं जनम्।
निहारिणं न सा हन्ति हिरण्याहारमालिनी॥ १८-६८॥

आलोका लक्षजपदा लाक्षरंल्लक्षणा समा।

आलग्दानाल सालापा ? पाति तं यो भजेल्लघु॥ १८-६९॥

क्षयं क्षितौ याति सुसूक्ष्मभावन।

विहाय मन्त्री क्षयरोगहारिणी।

सूक्ष्मातिसूक्ष्मान्यतमं विचिन्तयेत्।

क्षोभादिकं पक्षकलाक्षयन्ती॥ १८-७०॥

षोडशस्वरभेदेन फलं श्णु महाप्रभो।

संक्षेपेण प्रवक्तव्यमुत्कृष्टं फलकाङ्क्षणाम्॥ १८-७१॥

श्लोकत्रयेण(द्वयेन) तत्सर्वं फलमत्यन्तसाधनम्।

ये कुर्वन्ति महादेव कामचक्रोत्सवं यथा॥ १८-७२॥

अ आ इ ई उ ऊ ऋ ॠ।

आद्याष्टस्वरमङ्गलं जपति यः श्रीनाथवक्राम्बुजा।

प्राप्य श्रीधरनायकः क्षितितले सिद्धो भवेत् तत्क्षणात्।

राजा राजकुलेश्वरो जयपथे दीपोज्वलामालया।

सम्पश्येत् परमां कलां जयति सः कामानलं ताडयेत्॥ १८-७३॥

ऌ ॡ ए ए ओ औ अं अः।

शेषाष्टौ स्वरपावनी प्रियजनानन्देन मन्दोदरी।

मन्त्रं हन्ति मदानना त्रिजगतां साधूत्तमानां सुखम्।

दत्त्वा पालयति प्रभा प्रलयके कौटिल्यविद्यापहा।

भक्तये क्षितिपालनं निजजपध्यानाकुलामङ्गलम्॥ १८-७४॥

इति वर्णफलं ज्ञात्वा यो गृह्णाति मनूत्तमम्।

स भवेत् कुलयोगार्थी सिद्धज्ञानी महीतले॥ १८-७५॥

वर्गे वर्गे फलं नाथ श्रृणु वक्ष्यामि अद्भुतम्।

प्रश्नादीनाञ्च कथनं यो जानाति स साधकः॥ १८-७६॥

कवर्गे कामसम्पत्तिं श्रिया व्याप्तं सुमन्दिरम्।

प्राप्नोति कामचक्रार्थं राशिनक्षत्रसम्मतम्॥ १८-७७॥

चवर्गे दीर्घजीवी स्यात् दृढसम्पदमेव च।

वृत्तिं प्राप्नोति गमनादनुद्दश्य शरीरिणः॥ १८-७८॥

समाचारं समाप्नोति गमने सर्वमुत्तमम्।

टवर्गे सम्भवे नाथ महदुच्चाटनादिकम्॥ १८-७९॥

पुत्राणामपि वृद्धिः स्यात् तवर्गे धनलाभकम्।
पवर्गे मरणं नाथ यादि--क्षान्ते महागुणी॥ १८-८०॥

कामचक्रफलं नाथ राशिदण्डेन योजयेत्।
निजगेहस्थितं राशिं ज्ञात्वा हि दिनदण्डतः॥ १८-८१॥

गणयित्वाशुभं ज्ञानी अनुलोमविलोमतः।
घटस्थं सकलं सन्धिकोणस्थं पार्श्वके शुभम्॥ १८-८२॥

शुभमन्त्रं गृहीत्वा तु सिद्धिमाप्नोति साधकः॥ १८-८३॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने
भावप्रश्नार्थनिर्णये पाशवकल्पे
कामचक्रसारसङ्केते सिद्धिमन्त्रप्रकरणे चतुर्वेदोल्लासे भैरवभैरवी
।
संवादे अष्टादशः पटलः॥ १८॥

अथोनविंशः पटलः

आनन्दभैरवी उवाच

इदं तु श्रृणु वक्ष्यामि सर्वतन्त्रार्थगोपनम्।

तत्सर्वं प्रश्नचक्रे च षडाधारस्य भेदनम्॥ १९-१॥

कालचक्रफलं तत्र निर्वीकल्पादिसाधनम्।

प्रश्नचक्रं कामरूपं चैतन्यं सर्वदात्मनोः॥ १९-२॥

षड्मन्दिरे षड्कलापं कैवल्यसाधनादिकम्।

नानाभोगं योगसिद्धिं हित्वा यो मन्त्रमाजपेत्॥ १९-३॥

स भवेद् देवताद्रोही कोटिकल्पेन सिध्यति।

हृदि यस्य महाभक्तिः प्रतिभाति महोदया॥ १९-४॥

क्षणादेव हि सिद्धिः स्यात् किं जपैर्मन्त्रसाधनैः।

अतो भक्तिं सदा कुर्याद् देवताभावसिद्धये॥ १९-५॥

भैरव उवाच

एतच्चक्रप्रसादेन को वा किं सिद्धिमाप्नुयात्।
एतस्य भावनादेव किं फलं भावनं शुभम्॥ १९-६॥

को वा प्रश्नादिकथने क्षमो भवति सुन्दरि।
तत्प्रकारं विधानेन वद मे फलसिद्धये॥ १९-७॥

आनन्दभैरवी उवाच

यः करोति पूर्णहोमं पुत्रार्थं योगसिद्धये।
कुण्डलीक्रमयोगेन पुनः पुनः क्रमेण च॥ १९-८॥

एतच्चक्रार्थभावज्ञः स एव नात्र संशयः।
यः करोति सदा नाथ वायुनिर्गमलक्षणम्॥ १९-९॥

ऊर्ध्वं संस्थाप्य विधिवद् भावनां कुरुते नरः।
स एव सिद्धिमाप्नोति सिद्धमार्गो(र्गे) न संशयः॥ १९-१०॥

फलमेतद्भावनार्थं कामक्रोधादिवजीतः।
भावनाफलसिद्ध्यर्थं वायुसंयोगसंक्रमात्॥ १९-११॥

लेपयित्वा शोधयित्वा मन्त्रयित्वा पुनः पुनः।

धर्माधर्मविरोधेन सूक्ष्मवायुक्रमेण च॥ १९-१२॥

प्राप्नोति महतीं सिद्धिमेतच्चक्रस्य तत्फलम्।

फलञ्च द्विविधं प्रोक्तं स्थूलसूक्ष्मपरस्थितम्॥ १९-१३॥

स्थूलं त्यक्त्वा महासूक्ष्मे मनो याति यदा यदा।

तदा हि महती सिद्धिरमरस्तत्क्षणाद् भवेत्॥ १९-१४॥

एकबारं भावयेद्यः सिद्धचक्रस्य वर्णकान्।

तस्यैव भावसिद्धिः स्याद् भावेन किं न सिध्यति॥ १९-१५॥

महद्भावं विना नाथ कः सिद्धिफलकग्रही।

योगभ्रष्टः स्थूलफले परजन्मनि सिद्धिभाक्॥ १९-१६॥

एहिके सिद्धिमाप्नोति सूक्ष्मफलक्रमेण च।

यो जानाति सूक्ष्मफलं स योगी भवति ध्रुवम्॥ १९-१७॥

स एव प्रश्नकथने योग्यो भवति साधकः।

यः सूक्ष्मफलभोक्ता स्यात् क्रियागोपनतत्परः॥ १९-१८॥

निरन्तरं प्रश्नचक्रं आज्ञाचक्रोपरि स्थितम्।
विभाव्य कालसिद्धिः स्यात् सर्वज्ञो वेदपारगः॥ १९-१९॥

कालज्ञानी च सर्वज्ञ इति तत्त्वार्थ निर्णयः।
प्रश्नचक्रस्थितं वर्णं सूक्ष्मकालफलावहम्॥ १९-२०॥

मनोरूपं दण्डभेदं मासभेदं सवर्गकम्।
मनसो भ्रम एवं हि काल एको न संशयः॥ १९-२१॥

मृत्यु(त्युं)वशं करोत्येव कालज्ञानी स योगिराट्।
कालेन लीयते सर्वं त्रैलोक्यं सचराचरम्॥ १९-२२॥

कालाधीनमिदं विश्वं तस्मात् काल(लं)वशं नयेत्।
तत्कालं सूक्ष्मनिलयं दुर्वाच्यं प्रश्नकं श्रृणु॥ १९-२३॥

मेषं तुलाराशिमनुत्तमं सदा।
वैशाखमासे फलसिद्धिकारणम्।
कवर्गमावाप्य स्वरान् स एव।
विभावयेत् स क्षितिनाथ आभवेत्॥ १९-२४॥

आज्ञाचक्रोपरि ध्यात्वा सर्वचक्रं महाप्रभो।

एकक्षणेन सिद्धिः स्यात् परभावेन हेतुना॥ १९-२५॥

सिद्धेशचक्रचैतन्यं यो जानाति महीतले।

वाक्सिद्धिर्जायते मासाद्दिवारात्रिक्रमेण च॥ १९-२६॥

वर्णमालासमाक्रान्तं राशिनक्षत्रसंयुतम्।

ग्रहचक्रं भावयित्वा सर्वं जानाति साधकः॥ १९-२७॥

च वर्गं वृषमीनस्थं कैशोरसिद्धिकारणम्।

द्विमाससाधनादेव सर्वज्ञो भवति ध्रुवम्॥ १९-२८॥

योगिनी खेचरी भूत्वा प्रयाति निकटे सताम्।

ग्रहचक्रप्रसादेन जीवन्मुक्तस्तु साधकः॥ १९-२९॥

यदि कर्म करोत्येव एकान्तचित्तनिर्मलः।

तस्याऽसाध्यं त्रिभुवने न किञ्चिदपि वर्तते॥ १९-३०॥

प्रश्नचक्र प्रसादेन सर्वे वै योगिनो भुवि।

यदि योगी भवेद् भूमौ तदा मोक्षमवाप्नुयात्॥ १९-३१॥

विना योगसाधनेन कः सिद्धो भूमिमण्डले।
साधनेन विना सिद्धिः कस्य भक्तस्य जायते॥ १९-३२॥

भक्तानां निकटे सर्वे प्रतिष्ठन्ति महर्षयः।
अतो भक्तिं सदा कुर्यात् सर्वधर्मान् विहाय च॥ १९-३३॥

तत्कालं भक्तिमाप्नोति प्रश्नचक्रप्रसादतः।
तत्प्रकारं महाधर्मं को वक्तुं क्षम एव हि॥ १९-३४॥

कश्चित्तद्भावसारञ्च प्रश्नचक्रे वदाम्यहम्।
चवर्गभावनादेव भक्तिं प्राप्नोति साधकः॥ १९-३५॥

समाधाय परं देवमाज्ञाचक्रोपरि प्रभो।
विभाव्य नित्यभावं हि प्राप्नोति तत्कुलाद(कलाम)पि॥ १९-३६॥

आनन्दाश्रूणि पुलको देहावेशमनोलयम्।
सर्वकर्म स्वयं--त्यागी यः करोति स योगिराट्॥ १९-३७॥

टवर्गे वासनासिद्धिः संसाररहितो भवेत्।
बलवान् सर्वविज्ञानी त्रिमासे खेचरो भवेत्॥ १९-३८॥

खेचरीमेलनं तस्य परं प्राप्नोति चक्रतः।
टवर्गं व्याप्य तिष्ठन्ति मिथुनं कुम्भयोनयः॥ १९-३९॥

स्वनक्षत्रस्वयोगञ्च विभाव्य योगिराड् भवेत्।
चतुर्मासे पूर्णयोगी तवर्गसाधनादपि॥ १९-४०॥

वेतालादिमहासिद्धिमिन्द्रसिद्धिं समाप्नुयात्।
तवर्गं व्याप्य तिष्ठन्ति मकरवृश्चिककर्कटाः॥ १९-४१॥

चिरजीवी भवेदीश इन्द्रतुल्यप्रियो भवेत्।
तिष्ठेत् प्रलयपर्यन्तं महाप्रलयरूपवान्॥ १९-४२॥

कृत्वा काल(ल्◌ं)वशं मन्त्री महावायौ महालयम्।
महाचक्रे सूर्यमध्ये वह्निमण्डलमध्यगे॥ १९-४३॥

वाग्देवता तस्य साक्षाद्भवतीति न संशयः।
पवर्गं व्याप्य तिष्ठन्ति धनुःसिंहास्तु चित्कलाः॥ १९-४४॥

विभाव्य परमस्थानं स(न) नश्यति महानिलम्।

त्रैलोक्यमष्टवर्गं च षड्चक्रं चक्षुषा क्षणात्॥ १९-४५॥

यदि वान्तं ब्रह्मरूपं सर्वतीर्थपदाश्रय।

महासत्त्वगुणाक्रान्तं मत्वा निर्मलचक्षुषा॥ १९-४६॥

कन्यावृश्चिकराशिभ्यां ब्रह्ममार्गं विलोकयेत्।

षण्मासेन सिद्धिः स्याद् महाकौलो भवेद् ध्रुवम्॥ १९-४७॥

मौनी एकान्तभक्तः स्यात् श्रीपादाम्भोजदर्शनम्।

प्राप्नोति साधकश्रेष्ठः सायुज्यपदवीं लभेत्॥ १९-४८॥

ततो मध्ये प्रगच्छन्ति योगिनस्तत्त्वचिन्तकाः।

शादिक्षान्ते चतुष्कोणे सर्वयोगाश्रये पदे॥ १९-४९॥

विभाव्य याति शीघ्रं सः श्री देवीलोकमण्डले।

महाकालो भवेद् धीमान् प्रश्नचक्रस्य भावकः॥ १९-५०॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने

भावप्रश्नार्थनिर्णये

पाशवकल्पे प्रश्नचक्रसारसङ्केते सिद्धमन्त्रप्रकरणे चतुर्वेदोल्लासे

भैरवभैरवीसंवादे। ऊनविंशः पटलः॥ १९॥

अथ विंशः पटलः

आनन्दभैरवी उवाच

अथ वक्ष्ये महादेव सिद्धमन्त्रविचारणम्।

जपित्वा भावयित्वा च नरो मुच्येत सङ्कटात्॥ २०-१॥

आनन्दभैरव उवाच

फलचक्रे सर्वमन्त्रं सर्वसारं तनुप्रियम्।

क्रियायोगाद् भवेत् सिद्धिर्वायवीशक्तिसेवनात्॥ २०-२॥

वह्निबीजं त्रिकोणस्थं षट्कोणं तद् बहिः प्रभो।

षट्कोणे षण्मनुं(नून्) ध्यात्वा षण्मासाद्रुद्ररूपिणः॥ २०-३॥

अष्टकोणे स्थितान् वर्णान् अङ्कभेदेन पण्डितः।

अङ्कसंख्याक्रमेणैव ध्यात्वा तद् बहिरेव च॥ २०-४॥

तत्संख्यासु गतान् वर्णान् विभाव्य खेचरो भवेत्।
विना त्रिकोणयोगेन षटकोणं तत्र वर्णकान्॥ २०-५॥

आज्ञाचक्रमध्यदेशे कामचक्रं मनोरमम्।
कामचक्रं(क) मध्यदेशे महासूक्ष्मफलोदयम्॥ २०-६॥

प्रश्नचक्रं षद्दार्थं षट्चक्रफलसाधनम्।
प्रश्नचक्रे फलचक्रं योगाष्टाङ्गफलप्रदम्॥ २०-७॥

फलचक्रस्योद्र्ध्वभागे वर्णमालाक्रमेण तु।
तद्वर्णान् मौनजापेन फलसारं समाप्नुयात्॥ २०-८॥

फलचक्रप्रसादेन तत्त्वचिन्तापरो(रा) मतिः।
स्थित्वा भ्रू(भ्रू)मध्यकुहरे सदा भावयतीश्वरम्॥ २०-९॥

भावज्ञानी भवेत् शीघ्रं मूढोऽपि भावनावशात्।
आदौ सूक्ष्मफलं वक्ष्ये वर्णभेदेन शङ्कर॥ २०-१०॥

वह्निर्भाति निरन्तरं त्रिजगतां नाशाय रक्षाकरो।
जीवः सर्वचला चलस्थदहनं श्रीकालिकाविग्रहः।
सर्वव्यापक ईश्वरः क्षयति यः कामान् मनःपल्लव।
ध्यात्वा तं समरूपवान् परशिवज्ञानी भवेत्तत्क्षणात्॥ २०-११॥

वह्निबीजं सूक्ष्मफलं साक्षात् प्रत्यक्षकारणम्।
त्रिकोणस्थं वह्निबीजं विधिविद्याप्रकाशकम्॥ २०-१२॥

अकस्मात् सिद्धिदातारं यो भजेत् स भवेत् सुखी।
षट्कोणस्थवर्णमन्त्रान् शृणुष्वानन्दभैरव॥ २०-१३॥

यज्ज्ञात्वा देवताः सर्वा दिग्विदिक्षु प्रपालकाः।
तद्भेदं रमणीयार्थं सङ्केतशुद्धिलाञ्छितम्॥ २०-१४॥

वह्निबीजस्योद्र्ध्वदेशे चन्द्रबीजमनुत्तमम्।
तत्र यो भावयेन्मन्त्री स सिद्धो नात्र संशयः॥ २०-१५॥

विधोर्बीजं सूक्ष्मं विमलकमलं कान्तकिरण।
सदा जीवस्थानं प्रलयनिलयं वायुजडितम्।
ततो वामे सूर्यं सकलविफलध्वंसनिकर।

महावह्निस्थानं भजति सुजनो भावविधिना॥ २०-१६॥

तदधः कोणगेहे च श्रीबीजं पञ्चमस्वरम्।
भावकल्पलतासारमकारादिकुलाक्षरम्॥ २०-१७॥

चतुःपञ्चाशदङ्कस्थं वायुबीजमधस्ततः।
विभाव्य वायवीसिद्धिमवाप्नोति नराधिपः॥ २०-१८॥

तदङ्गं दक्षिणे नाथ भवानीबीजमण्डलम्।
युग्मस्वरसमाक्रान्तं विभाव्य योगिराड् भवेत्॥ २०-१९॥

तद्दक्षिणोर्ध्वकोणे च सोमबीजमनुत्तमम्।
विभाव्य जगतामीशदर्शनं प्राप्नुयान्नरः॥ २०-२०॥

तदूर्ध्वे परमं बीजं साक्षात्कारफलप्रदम्।
मासैकभावनादेव देवलोके गतिर्भवेत्॥ २०-२१॥

तदूर्ध्वकोणगेहे च रुक्मिणीबीजमद्भुतम्।
साधनादेव सिद्धिः स्याल्लक्ष्मीनाथो भवेदिह॥ २०-२२॥

अङ्गक्रमेण सर्वत्र ज्ञेयं स्वरविधानकम्।

येन तेन स्वरेणापि वेष्टितं फलबीजकम्॥ २०-२३॥

भवत्येव महादेव वायुसिद्ध्यादिकारणम्।

अष्टकोणं(ण)तले नाथ षट्कोणे योनि सन्ति वै॥ २०-२४॥

तद्बीजानि सत्फलानि ध्यात्वा वाक्सिद्धिमाप्नुयात्।

रेफोर्द्ध्वे कमलाबीजं भावकल्पद्रुमाकरम्॥ २०-२५॥

सर्वत्र तेजसा व्याप्तं विभाव्य योगिनीपतिः।

तदधः शीतलाबीजं वामभागक्रमेण तु॥ २०-२६॥

विभाव्य परमानन्दरसे मग्नो महासुखी।

तदधः कामबीजञ्च कामनाफलसिद्धिदम्॥ २०-२७॥

यो जपेत् परमानन्दो नित्यज्ञानी च वायुना।

तदग्रे वेदकोणे च वारुणं बीजमुत्तमम्॥ २०-२८॥

विभाव्य भावको भूत्वा चिरजीवी स जीवति।

तदूर्ध्वे पञ्चमे कोणे वज्रबीजं वकारकम्॥ २०-२९॥

पृष्ठदेशे महादण्डे मेरुमूले महाप्रभे॥ २९-२०॥

मूलादिब्रह्मरन्ध्राधः सदास्थिररूपधारकः।

कनकाचलनाम्ना च प्रतिभाति जगत्त्रये॥ २९-२१॥

तन्मध्ये परमा सूक्ष्मा सुषुम्ना बहुरूपिणी।

मनोमुनिस्वरूपा च मनश्चैतन्यकारिणी॥ २९-२२॥

तन्मध्ये भाति वज्राख्याघोरपातकनाशिनी।

सिद्धिदाभावविज्ञानां मोक्षदा कुलरूपिणाम्॥ २९-२३॥

तन्मध्ये चित्रिणी देवी देवताप्रीतिवर्द्धिनी।

हितैषिणी महामाया कालजालविनाशिनी॥ २९-२४॥

सा पाति सकलान् चक्रान् पद्मरूपधरान् परान्।

त्रैलोक्यमण्डलगतान् साक्षादमृतविग्रहान्॥ २९-२५॥

स्वयं दधार सा देवी चित्राख्या चारुतेजसी।

तले पृष्ठे ऊद्र्ध्वदेशे शीर्षे वक्षसि नाभिषु॥ २९-२६॥

कण्ठकूपे चक्रमध्ये ब्रह्माण्डं पाति सर्वदा।

शरीरात्मकमीशार्थं त्रैलोक्यं सचराचरम्॥ २९-२७॥

चित्रासुग्रथनं पद्मं योऽवभाव्यति भावकः।

भावेन लभ्यते योगं भावेन भाव्यते शिवः॥ २९-२८॥

भावेन शक्तिमाप्नोति तस्माद्भावं समाश्रयेत्।

षट्चक्रभावनां कृत्वा महायोगी भवेन्नरः॥ २९-२९॥

सर्वधर्मान्वितो भूत्वा राजते क्षितिमण्डले।

सर्वत्रगामी स भवेत् यदि पद्मे मनोलयम्॥ २९-३०॥

पद्मभावनमात्रेण आकाशसदृशो भवेत्।

महापद्मे मनो दत्वा महाभक्तो भवेद्ध्रुवम्॥ २९-३१॥

यदि भक्तो भवेन्नाथ तदा मुक्तो न संशयः।

यदि मुक्तो महीमध्ये ध्यानयोगपरायणः॥ २९-३२॥

तदा कालपरां ज्ञात्वा सर्वदर्शी च सर्ववित्।

सर्वज्ञः सर्वतोभद्रो भवतीति न संशयः॥ २९-३३॥

चित्रिणी मध्यदेशे च ब्रह्मनाडी महाप्रभा।

सर्वसिद्धिप्रदा नित्या सा देवी सकला कला॥ २९-३४॥

व्योमरूपा भगवती सर्वचैतन्यरूपिणी।

एकरूपं परं ब्रह्म ब्रह्मातीतं जगत्त्रयम्॥ २९-३५॥

यदा जगत्त्रयं ब्रह्म तदा सत्त्वालयं प्रभो।

महालये मनो दत्वा सर्वकालजयो भवेत्॥ २९-३६॥

मृत्युञ्जयो महावीरो महाच्छत्रो महागतिः।

सर्वव्यापकरूपेण ईश्वरत्वेन भाषते॥ २९-३७॥

सर्वदा मन्त्रसम्भूतो विशालाक्षः प्रसन्नधीः।

एकस्थानस्थितो याति नक्षत्रं स हि शङ्कर॥ २९-३८॥

एकदृष्टिः क्षुधातृष्णारहितो वाक्यवजीतः।

निराकारे मनो दद्यात्तदा महानयं प्रभो॥ २९-३९॥

किन्तु नाथाज्ञानिनां हि नापि नापि महालयः।

महाप्रलय एवं हि योगिनां नात्र संशयः॥ २९-४०॥

यदा मनोयोग विशुद्धये मनोलयं यः कुरुतेऽप्यहनीशम्।

स एव मोक्षो गुणसिन्धुरूपी कालाग्निरूपी निजदैवदैवतः॥ २९-४१॥

महामनोयोग विकारवजीतः।

कामक्रिया काण्डविशुद्धमण्डितः।

हितो गतीनां मतिमान्निरस्तो।

महालयस्थोऽमर एव भक्तः॥ २९-४२॥

मानी विचारार्थविवेकचित्तश्--

चातुर्य चित्तोल्बणताविवजीतः।

योगी भवेत्साधक चक्रवर्ती।

व्योमाम्बुजे चित्तविसर्जनं सदा॥ २९-४३॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने षट्चक्र प्रकाशे भैरवीभैरवसंवादे

महाप्रलयनामा एकोनत्रिंशः पटलः॥ २९॥

अथ त्रिंशः पटलः

आनन्दभैरवी उवाच

अथ वक्ष्ये महाकाल मूलपद्मविवेचनम्।

यत् कृत्वा अमरो भूत्वा वसेत् कालचतुष्टयम्॥ ३०-१॥

अथ षट्चक्रभेदार्थे भेदिनीशक्तिमाश्रयेत्।
छेदिनीं सर्वग्रन्थीनां योगिनीं समुपाश्रयेत्॥ ३०-२॥
तस्या मन्त्रान् प्रवक्ष्यामि येन सिद्धो भवेन्नरः।
आदौ शृणु महामन्त्रं भेदिन्याः परं मनुम्॥ ३०-३॥
आदौ कालींसमुत्कृत्य ब्रह्ममन्त्रं ततः परम्।
देव्याः प्रणवमुद्धृत्य भेदनी तदनन्तरम्॥ ३०-४॥
ततो हि मम गृह्णीयात् प्रापय द्वयमेव च।
चित्तचञ्चीशब्दान्ते मां रक्ष युग्ममेव च॥ ३०-५॥
भेदिनी मम शब्दान्ते अकालमरणं हर।
हर युग्मं स्वं महापापं नमो नमोऽग्निजायया॥ ३०-६॥
एतन्मन्त्रं जपेत्तत्र डाकिनीरक्षसि प्रभो।
आदौ प्रणवमुद्धृत्य ब्रह्ममन्त्रं ततः परम्॥ ३०-७॥
शाम्भवीति ततश्चोक्त्वा ब्राह्मणीति पदं ततः।
मनोनिवेशं कुरुते तारयेति द्विधापदम्॥ ३०-८॥
छेदिनीपदमुद्धृत्य मम मानसशब्दतः।
महान्धकारमुद्धृत्य छेदयेति द्विधापदम्॥ ३०-९॥
स्वाहान्तं मनुमुद्धृत्य जपेन्मूलाम्बुजे सुधीः।
एतन्मन्त्रप्रसादेन जीवन्मुक्तो भवेन्नरः॥ ३०-१०॥
तथा स्त्रीयोगिनीमन्त्रं जपेत्तत्रैव शङ्कर।
ओं घोररूपिणिपदं सर्वव्यापिनि शङ्कर॥ ३०-११॥

महायोगिनि मे पापं शोकं रोगं हरेति च।

विपक्षं छेदयेत्युक्त्वा योगं मय्यर्पय द्वयम्॥ ३०-१२॥

स्वाहान्तं मनुमुद्धृत्य जपाद्योगी भवेन्नरः।

खेचरत्वं समाप्नोति योगाभ्यासेन योगिराट्॥ ३०-१३॥

डाकिनीं ब्रह्मणा युक्तां मूले ध्यात्वा पुनः पुनः।

जपेन्मन्त्रं सदायोगी ब्रह्ममन्त्रेण योगवित्॥ ३०-१४॥

ब्रह्ममन्त्रं प्रवक्ष्यामि तज्जापेनापि योगिराट्।

ब्रह्ममन्त्रप्रसादेन जडो योगी न संशयः॥ ३०-१५॥

प्रणवत्रयमुद्धृत्य दीर्घप्रणवयुग्मकम्।

तदन्ते प्रणवत्रीणि ब्रह्म ब्रह्म त्रयं त्रयम्॥ ३०-१६॥

सर्वसिद्धिपदस्यान्ते पालयेति च मां पदम्।

सत्त्वं गुणो रक्ष रक्ष मायास्वाहापदं जपेत्॥ ३०-१७॥

डाकिनीमन्त्रराजञ्च शृणुष्व परमेश्वर।

यज्जप्त्वा डाकिनी वश्या त्रैलोक्यस्थितिपालकाः॥ ३०-१८॥

यो जपेत् डाकिनीमन्त्रं चैतन्या कुण्डली झटित्।

अनायासेन सिद्धिः स्यात् परमात्मप्रदर्शनम्॥ ३०-१९॥

मायात्रयं समुद्धृत्य प्रणवैकं ततः परम्।

डाकिन्यन्ते महाशब्दं डाकिन्यम्बपदं ततः॥ ३०-२०॥

पुनः प्रणवमुद्धृत्य मायात्रयं ततः परम्।

मम योगसिद्धिमन्ते साधयेति द्विधापदम्॥ ३०-२१॥

मनुमुद्धृत्य देवेशि जपाद्योगी भवेज्जडः।

जप्त्वा सम्पूजयेन्मन्त्री पुरश्चरणसिद्धये॥ ३०-२२॥

सर्वत्र चित्तसाम्येन द्रव्यादिविविधानि च।

पूजयित्वा मूलपद्मे चित्तोपकरणेन च॥ ३०-२३॥

ततो मानसजापञ्च स्तोत्रञ्च कालिपावनम्।

पठित्वा योगिराट् भूत्वा वसेत् षट्चक्रवेश्मनि॥ ३०-२४॥

शक्तियुक्तं विधिं यस्तु स्तौति नित्यं महेश्वर।

तस्यैव पालनार्थाय मम यन्त्रं महीतले॥ ३०-२५॥

तत् स्तोत्रं श्रृणु योगार्थं सावधानावधारय।

एतत्स्तोत्रप्रसादेन महालयवशो भवेत्॥ ३०-२६॥

ब्रह्माणं हंससङ्घायुतशरणवदावाहनं देववक्त्र।

विद्यादानैकहेतुं तिमिचरनयनाग्नीन्दुफुल्लारविन्दम्

वागीशं वाग्गतिस्थं मतिमतविमलं बालार्कं चारुवर्णं।

डाकिन्यालिङ्गितं तं सुरनरवरदं भावयेन्मूलपद्मे॥ ३०-२७॥

नित्यां ब्रह्मपरायणां सुखमयीं ध्यायेन्मुदा डाकिनी।

रक्तां गच्छविमोहिनीं कुलपथे ज्ञानाकुलज्ञानिनीम्।

मूलाम्भोरुहमध्यदेशनिकटे भूविम्बमध्ये प्रभा।

हेतुस्थां गतिमोहिनीं श्रुतिभुजां विद्यां भवाह्लादिनीम्॥ ३०-२८॥

विद्यावास्तवमालया गलतलप्रालम्बशोभाकरा।

ध्यात्वा मूलनिकेतने निजकुले यः स्तौति भक्त्या सुधीः।

नानाकारविकारसारकिरणां कर्त्रीं विधो योगिना।

मुख्यां मुख्यजनस्थितां स्थितिमतिं सत्त्वाश्रितामाश्रये॥ ३०-२९॥

या देवी नवडाकिनी स्वरमणी विज्ञानिनी मोहिनी।

मां पातु पिरयकामिनी भवविधेरानन्दसिन्धूद्भवा।

मे मूलं गुणभासिनी प्रचयतु श्रीः कीतीचक्रं हि मा।

नित्या सिद्धिगुणोदया सुरदया श्रीसंज्ञया मोहिता॥ ३०-३०॥

तन्मध्ये परमाकला कुलफला बाणप्रकाण्डाकरा

राका राशषसादृशा शशिघटा लोलामला कोमला।

सा माता नवमालिनी मम कुलं मूलाम्बुजं सर्वदा।

सा देवी लवराकिणी कलिफलोल्लासैकबीजान्तरा॥ ३०-३१॥

धात्री धैर्यवती सती मधुमती विद्यावती भारती।

कल्याणी कुलकन्यकाधरनरारूपा हि सूक्ष्मास्पदा।

मोक्षस्था स्थितिपूजिता स्थितिगता माता शुभा योगिना।

नौमि श्रीभविकाशयां शमनगां गीतोद्गतां गोपनाम्॥ ३०-३२॥

कल्केशीं कुलपण्डितां कुलपथग्रन्थिक्रियाच्छेदिनी।

नित्यां तां गुणपण्डितां प्रचपलां मालाशताकारुणाम्।

विद्यां चण्डगुणोदयां समुदयां त्रैलोक्यरक्षाक्षरा।

ब्रह्मज्ञाननिवासिनीं सितशुभानन्दैकबीजोद्गताम्॥ ३०-३३॥

गीतार्थानुभवपिरयां सकलया सिद्धप्रभापाटलाम्।

कामाख्यां प्रभजामि जन्मनिलयां हेतुपिरयां सत्क्रियाम्।

सिद्धौ साधनतत्परं परतरं साकाररूपायिताम्॥ ३०-३४॥

ब्रह्मज्ञानं निदानं गुणनिधिनयनं कारणानन्दयानम्।

ब्रह्माणं ब्रह्मबीजं रजनिजयजनं यागकार्यानुरागम्॥ ३०-३५॥

शोकातीतं विनीतं नरजलवचनं सर्वविद्याविधिज्ञम्।

सारात् सारं तरुं तं सकलतिमिरहं हंसगं पूजयामि॥ ३०-३६॥

एतत्सम्बन्धमार्गं नवनवदलगं वेदवेदाङ्गविज्ञम्।

मूलाम्भोजप्रकाशं तरुणरविशशिप्रोन्नताकारसारम्॥ ३०-३७॥

भावाख्यं भावसिद्धं जयजयदविधिं ध्यानगम्यं पुराणम्

पाराख्यं पारणायं परजनजनितं ब्रह्मरूपं भजामि॥ ३०-३८॥

डाकिनीसहितं ब्रह्मध्यानं कृत्वा पठेत् स्तवम्।

पठनाद् धारणान्मन्त्री योगिनां सङ्गतिर्भवेत्॥ ३०-३९॥

एतत्पठनमात्रेण महापातकनाशनम्।

एकरूपं जगन्नाथं विशालनयनाम्बुजम्॥ ३०-४०॥

एवं ध्यात्वा पठेत् स्तोत्रं पठित्वा योगिराड् भवेत्॥ ३०-४१॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे। षट्चक्रसिद्धिसाधने भैरवभैरवीसंवादे डाकिनी। स्तोत्रं नाम त्रिंशः पटलः॥ ३०॥

अथैकत्रिंशः पटलः

आनन्दभैरवी उवाच

अथ नाथ प्रवक्ष्यामि भेदिन्याः साधनं परम्।

येन साधनमात्रेण योगी स्यात् कलिकालहा॥ ३१-१॥

कलिकाले महायोगं साधय त्वं महाप्रभो।

यदि न साधितः कालः स कालो देहभक्षकः॥ ३१-२॥

भेदिनीसाधनेनैव ग्रन्थीनां भेदनं भवेत्।

डाकिनीं हृदये ध्यायेत् परमानन्दरूपिणीम्॥ ३१-३॥

अष्टहस्तां विशालाक्षीं शशाङ्कावयवाङ्किताम्।

त्रैलोक्यमोहिनीं विद्यां भयदां वरदां सताम्॥ ३१-४॥

शुक्लवर्णां त्रिनयनां चारुरूपमनोहराम्।

ध्यात्वा मूलाम्बुजे योगी पाद्याद्यैः परिपूजयेत्॥ ३१-५॥

तत्र मनोलयं कृत्वा योगी भवति भूतले।

यदा मनोलयं याति तदा तस्याः स्तवं पठेत्॥ ३१-६॥

स्तोत्रं पठनमात्रेण सर्वसत्त्वाश्रितो भवेत्।

ध्यानमाकृत्य प्रपठेत् सर्वसिद्धिमयो भवेत्॥ ३१-७॥

या भेदिनी सकलग्रन्थिविनाशनाना।

धर्मान्तरे सकलशत्रुविनाशनस्था।

सा मे सदा प्रतिदिनं परिपातु देह।

कालात्मिका भगवती शुभकार्यकर्त्री॥ ३१-८॥

या कान्ता करुणामयी त्रिजगतामानन्दसिद्धिस्थिता।

नित्या सा परिपालिका कुलकला नीलामलाकोमला।

वाणी सिद्धिकरी कृतार्थनिगडे शीघ्रोदया शाङ्करी।

संज्ञाभेदनभेदिका शुभकरी वेदान्तसिद्धान्तदा॥ ३१-९॥

वाणी बाला कुलाला कलकलचरणा यामलासंख्यमाला।

हेलाभालान्तराला कुलकमलचला चञ्चला देहकाला॥ ३१-१०॥

भेदाख्या भेद्यभेदा वरनदनिनदा नादबिन्दुप्रकाशा।

सा मे शीर्षं ललाटं मुखहृदयकटिं मुख्यपद्मं प्रपायात्॥ ३१-११॥

काञ्चीपीठप्रकाशा निजपदविलया योगिनीनेत्रवक्षा।

नातियोगप्रकाश्या चरुशतघटिता घोरसंहारकारा॥ ३१-१२॥

ब्रह्मानन्दस्वरूपा विगतिमतिहरा हीरका भाति नेत्रा।

हारश्रेण्यादिभूषा शशिशतकिरणा पातु मां भेद्यदेहम्॥ ३१-१३॥

या भेदिनी सकलपापरिपुपिरयाणां स्वर्गापवर्गविरला बगलामुखी सा।

मे पातु देहघटितं सकलेप्सितार्थं भावप्रभावपटला सहदेहसंस्था॥ ३१-१४॥

कामाश्रिता विविधदोषविनाशलेषा।

सौन्दर्यवेशकरणी क्रतुकर्मरक्षा।

दीक्षा सतां मतिमतां निजयोगदात्री।

सा मे सदा सकलदेहमिहाशु भेद्या॥ ३१-१५॥

कान्ता शान्तगुणोदया मम धनं देहस्य नित्याशया

पायात् श्रीकुलदैवतस्य जयदा या योगसारं परम्।

साक्षादीश्वरपूजिता समुचिता चित्ताथीता चाथीता।

यन्मे घोरतरे जये निजकुले कालाकुले व्याकुले॥ ३१-१६॥

भेदाभेदविवजीता सुरवरश्रीहस्तपद्मार्चीते।

मे मेढंर् खलु लिङ्ग मूलकमलं कालपिरया पातु सा।

सप्तस्वर्गतलं ममैव वपुषा मिथ्यावमानापहा।

हेडम्बासुरसुन्दर पिरयवती हेमावती भारती॥ ३१-१७॥

एतत् स्तोत्रं पठित्वा यः स्तौति मूलाम्बुजे च माम्।

स एव योगमाप्नोति स भवेद् योगिवल्लभः॥ ३१-१८॥

मनः स्थिरं भवेत् क्षिप्रं राजत्वं लभते झटित्।

अनायासेन सिद्धिः स्यात् तस्य वायुर्वशो भवेत्॥ ३१-१९॥

योगिनीनां दर्शनं हि अनायासेन लभ्यते।

भावसिन्धुयुतो भूत्वा विचरेदमरो यथा॥ ३१-२०॥

मूलपद्मे वसेद्देवी मूलाम्भोजप्रकाशिनी।

मालती मालवी मौना मालिनी च मनोहरा॥ ३१-२१॥

मानसी मदना मान्या मुद्रामैथुनतत्परा।

मेरुस्था माद्यकुसुमा मण्डिता मण्डलस्थिता॥ ३१-२२॥

मनःस्थैर्यकरी देवी भाव्यते यैः कुमारकैः।

अकस्मात् सिद्धिमाप्नोति कालेन परमेश्वर॥ ३१-२३॥

अथ वक्ष्ये महादेव्याः छेदिन्याः स्तवमुत्तमम्।

छेत्ता त्वं सर्वग्रन्थीनां मत्प्रसादाद् यतीश्वरः॥ ३१-२४॥

यत्प्रसादादनन्तो हि योगी संसारमण्डले॥ ३१-२५॥

देशानन्दा सकलगुणदा छेदिनी छेदनस्था।

हव्यस्था सा विभवनिरता या निधिस्था निशायाम्।

सा मे नित्यं कुलकमलगा गोपनीया विधिज्ञा।

श्रीवागेशी गगनवसना सर्वयोगं प्रपायात्॥ ३१-२६॥

कामानन्दा मदननिरता भाविता भावसिन्धौ

कामानन्दोद्भवरसवती योगियोगस्थधात्री।

देहक्लेदे निरसनरता ... ... ... ... ... ... .

सा मे धौतं प्रकुरु वपुषो धर्मपुञ्जं प्रपायात्॥ ३१-२७॥

कालाकालं कमलकलिकावासिनी कालिका मे।

ग्रन्थिच्छेदं स्थिरगृहगता गात्रनाडीपथस्था।

वक्राम्भोजे वचनमधुरं धारयन्ती जनाना।

सा मे रन्ध्रं मम रुचिरतनोः पातु पञ्चानना या॥ ३१-२८॥

योगाङ्गस्था स्थितिलयविभवा लोमकूपाम्बुजस्था।

माता गौरी गिरिपतिसुता भासुरास्त्रप्रदीप्ता।

सम्पायान्मे हृदयविवरं छेदिनीमूलपूरे।

कैलासस्था मममनुगिरिं पातु रुद्रप्रसादा॥ ३१-२९॥

नादान्तःस्था मनगुणधरणासन्नसिद्धान्तपारा।

भोगानन्दा भगनगबिले काशयन्ती जनानाम्।

विद्याविद्या विविधगगना छेदिनी छन्नरूपा।

सा सर्वान्तःकरणनिलया लाकिनी प्रेमभावा॥ ३१-३०॥

योगं स्वर्गेऽर्पयसि मनसि प्रेमभावं परेशे।

या या यात्रा त्रिविधकरणा कारणा सर्वजन्तोः।

माता ज्ञात्री गणेशे गृहिगणसदया सर्वकर्त्री मनो मे।

रक्षा रक्षाक्षरगतकला केवला निष्कला या॥ ३१-३१॥

सा योगेन्द्रा समवतु मुदा मे गुदं कुण्डलिन्या।

जह्नोः कन्या कमलनिलया राकिणी प्रेमभावान्।

मोक्षप्राणान् तपनरहिता पातु मे वेदवक्त्रा।

सिद्धा मूलाम्बुजदलगता पावनी पातु तुण्डम्॥ ३१-३२॥

हेरम्बाज्ञा प्रलयघटिता काकिनी क्रोधरूपा॥ ३१-३३॥

यदि भजति कुलीनः कामिनीं क्रोधविद्या।

स भवति परयोगी छेदिनीस्तोत्रपाठात्।

सकलदुरितनाशः क्षालनादिप्रसिद्धिः।

सकलजनवशः स्यात् तस्य नित्यं सुराज्यम्॥ ३१-३४॥

एतत् स्तोत्रं पठेद्विद्वान् महासंयमतत्परः।

मूले मनः स्थिरो याति सर्वानिष्टविनाशनः॥ ३१-३५॥

सर्वसिद्धिः करे तस्य यो भावं समुपाश्रयेत्

श्रृणुष्व परमानन्द रससागरसम्भव॥ ३१-३६॥

योगिनीस्तोत्रसारं च श्रवणाद्धारणाद् यतिः।

अप्रकाश्यमिदं रत्नं नृणामिष्टफलप्रदम्॥ ३१-३७॥

यस्य विज्ञानमात्रेण शिवो भवति साधकः॥ ३१-३८॥

कङ्काली कुलपण्डिता कुलकला कालानला श्यामला।
योगेन्द्रेन्द्रसुराज्यनाथयजिताऽन्या योगिनीं मोक्षदा।
मामेकं कुजडं सुखास्तमधनं हीनं च दीनं खल।
यद्येवं परिपालनं करोषि नियतं त्वं त्राहि तामाश्रये॥ ३१-३९॥
यज्ञेशी शशिशेखरा स्वमपरा हेरम्बयोगास्पदा।
दात्री दानपरा हराहरिहराऽघोरामराशङ्करा।
भद्रे बुद्धिविहीन देहजडितं पूजाजपावजीतं
मामेकार्भमकिञ्चनं यदि सरत्त्वं योगिनी रक्षसि॥ ३१-४०॥
भाव्या भावनतत्परस्य करणा सा चारणा योगिनी।
चन्द्रस्था निजनाथदेहसुगता मन्दारमालावृता।
योगेशी कुलयोगिनी त्वममरा धाराधराच्छादिनी
योगेन्द्रोत्सवरागयागजडिता या मातृसिद्धिस्थिता॥ ३१-४१॥
त्वं मां पाहि परेश्वरी सुरतरी श्रीभास्करी योगग।
मायापाशविबन्धनं तव कथालापामृतावजीतम्।
नानाधर्मविवजीतं कलिकुले संव्याकुलालक्षण।
मय्येके यदि दृष्टिपातकमला तत् केवलं मे बलम्॥ ३१-४२॥
मायामयी हृदि यदा मम चित्तलग्न।
राज्यं तदा किमु फलं फलसाधनं वा।
इत्याशया भगवती मम शक्तिदेवी।
भाति पिरये श्रुतिदले मुखरार्पणं ते॥ ३१-४३॥

या योगिनी सकलयोगसुमन्त्रणाढ्या।

देवी महद्गुणमयी करुणानिधाना।

सा मे भयं हरतु वारणमत्तचित्ता।

संहारिणी भवतु सोदरवक्षहारा॥ ३१-४४॥

यदि पठति मनोज्ञो गोरसामीश्वरं यो।

वशयति रिपुवर्गं क्रोधपुञ्जं विहन्ति।

भुवनपवनभक्षो भावुकः स्यात् सुसङ्गी।

रतिपतिगुणतुल्यो रामचन्द्रो यथेशः॥ ३१-४५॥

एतत्स्तोत्रं पठेद्यस्तु स भक्तो भवति पिरयः।

मूलपद्मे स्थिरो भूत्वा षट्चक्रे राज्यमाप्नुयात्॥ ३१-४६॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने षट्चक्रप्रकाशे सिद्धिमन्त्रप्रकरणे भैरवभैरवीसंवादे भेदिन्यादिस्तोत्रं नाम एकत्रिंशः पटलः॥ ३१॥

## अथ द्वात्रिंशः पटलः

श्रीनन्दभैरवी उवाच

अथ कान्त प्रवक्ष्यामि श्रृणुष्व मम तत्त्वतः।

शक्तिः कुण्डलिनी देवी सर्वभेदनभेदिनी॥ ३२-१॥

कलिकल्मषहन्त्री च जगतां मोक्षदायिनी।

तस्याः स्तोत्रं तथा ध्यानं न्यासं मन्त्रं शृणु प्रभो॥ ३२-२॥

यस्य विज्ञानमात्रेण मूलपद्मे मनोलयः।

चैतन्यानन्दनिरतो भवेत् कुण्डलिसङ्गमात्॥ ३२-३॥

आकाशगामिनीं सिद्धिं ददाति कुण्डली भृशम्।

अमृतानन्दरूपाभ्यां करोषि पालनं नृणाम्॥ ३२-४॥

श्वासोच्छ्वासकलाभ्यां च शरीरं त्रिगुणात्मकम्।

पञ्चभूतावृता नित्यं पञ्चानिला भवेद् ध्रुवम्॥ ३२-५॥

कोटिसूर्यप्रतीकाशां निरालम्बां विभावयेत्।

सर्वस्थितां ज्ञानरूपां श्वासोच्छ्वासनिवासिनीम्॥ ३२-६॥

स्वयम्भूकुसुमोत्पन्नां ध्यानज्ञानप्रकाशिनीम्।

मोक्षदां शक्तिदां नित्यां नित्यज्ञानस्वरूपिणीम्॥ ३२-७॥

लोलां लीलाधरां सर्वां शुद्धज्ञानप्रकाशिनीम्।

कोटिकालानलसमां विद्युत्कोटिमहौजसाम्॥ ३२-८॥

तेजसा व्याप्तकिरणां मूलादूर्ध्वप्रकाशिनीम्।

अष्टलोकप्रकाशाढ्यां फुल्लेन्दीवरलोचनाम्॥ ३२-९॥

सर्वमुखीं सर्वहस्तां सर्वपादाम्बुजस्थिताम्।

मूलादिब्रह्मरन्ध्रान्तस्थानलोकप्रकाशिनीम्॥ ३२-१०॥

त्रिभाषां सर्वभक्षां च श्वासनिर्गमपालिनीम्।

ललितां सुन्दरीं नीलां कुण्डलीं कुण्डलाकृतिम्॥ ३२-११॥

अभूमण्डलबाह्यस्थां बाह्यज्ञानप्रकाशिनीम्।

नागिनीं नागभूषाढ्यां भयानककलेवराम्॥ ३२-१२॥

योगिज्ञेयां शुद्धरूपां विरलामूर्ध्वगामिनीम्।

एवं ध्यात्वा मूलपद्मे कुण्डलीं परदेवताम्॥ ३२-१३॥

भावसिद्धिर्भवेत् क्षिप्रं कुण्डलीभावनादिह।

ततो मानसजापं हि मानसं होमतर्पणम्॥ ३२-१४॥

अभिषेकं मुदा कृत्वा प्रातः काले पुनः पुनः

प्राणायामं ततः कृत्वा स्तोत्रं च कवचं पठेत्॥ ३२-१५॥

एतत्स्तोत्रस्य पाठेन स्वयं सिद्धान्तविद् भवेत्।

कुण्डली सुकृपा तस्य मासाद् भवति निश्चितम्॥ ३२-१६॥

निद्रादोषादिक्ं त्यक्त्वा प्रकाश्याहं शरीरके।

अहं दात्री सुयोगानामधिपाहं जगत्त्रये॥ ३२-१७॥

अहं कर्म अहं धर्मः अहं देवी च कुण्डली।

यो जानाति महावीर कुण्डलीरूपसेवनात्॥ ३२-१८॥

इति तं पात्रकं कर्तुमवतीर्णास्मि सर्वदा।

अत एव परं मन्त्रं कुण्डलिन्याः स्तवं शुभम्॥ ३२-१९॥

प्रपठेत् सर्वदा देहे यदि वश्या न कुण्डली।

तावत् कालं जपं कुर्याद् यावत् सिद्धिर्न जायते॥ ३२-२०॥

आधारे परदेवता भवनताधोकुण्डली देवता।

देवानामधिदेवता त्रिजगतामानन्दपुञ्जस्थिता॥ ३२-२१॥

मूलाधारनिवासिनी त्रिरमणी या ज्ञानिनी मालिनी।

सा मे मातृमनुस्थिता कुलपथानन्दैकबीजानना॥ ३२-२२॥

सर्वाङ्गस्थितिकारिणी सुरगणानन्दैकचिन्हा शिवा।

वीरेन्द्रा नवकामिनी वचनदा श्रीमानदा ज्ञानदा॥ ३२-२३॥

सानन्दा घननन्दिनी घनगणा छिन्ना भवा योगिनी।

धीरा धैर्यवती समाप्तविषया श्रीमङ्गली कुण्डली॥ ३२-२४॥

सर्वाकारनिवासिनी जयधराधाराधरस्थागया।

गीता गोधनवर्द्धीनी गुरुमयी ज्ञानपिरया गोधना॥ ३२-२५॥

गार्हाग्निस्थिति चन्द्रिका सुलतिका जाड्यापहा रागदा।

दारा गोधनकारिणी मृगमना ब्रह्माण्डमार्गोज्ज्वला॥ ३२-२६॥

माता मानसगोचरा हरिचरा सिंहासनेकारणा।

यामा दासगणेश्वरी गुणवती छायापथस्थायिनी॥ ३२-२७॥

निद्रा क्षुब्धजनपिरया वरतृषा भाषाविशेषस्थिता।

स्थित्यन्तप्रलयापहा नरशिरोमालाधरा कुण्डली॥ ३२-२८॥

गाङ्गेशी यमुनेश्वरी गुरुतरी गोदावरी भास्करी।

भक्तातीक्षयकारिणी समशिवं यद्येकभावान्विता॥ ३२-२९॥

त्वं शीघ्रं कुरु कौलिके मम शिरोरन्ध्रं तदब्जं मुदा।

तत्पत्रस्थितदैवतं कुलवती मातृस्थलं पाहिकम्॥ ३२-३०॥

भालोद्र्ध्वे धवला कलारसकला कालाग्निजालोज्ज्वला।

फेरुप्राणनिकेतने गुरुतरा गुर्वी सुगुर्वी सुरा॥ ३२-३१॥

हालोल्लाससमोदया यतिनया माया जगत्तारिणी।

निद्रामैथुननाशिनी मम हरा मोहापहा पातुकम्॥ ३२-३२॥

भालं नीलतनुस्थिता मतिमतामर्थपिरया मैथिली।

भालानन्दकरा महापिरयजना पद्मानना कोमला॥ ३२-३३॥

नानारङ्गसुपीठदेशवसना सिद्धासना घोषणा।

त्राणस्थावररूपिणी कलिहनी श्रीकुण्डली पातुकम्॥ ३२-३४॥

भ्रूमध्यं बगलामुखी शशिमुखी विद्यामुखी सम्मुखी।

नागाख्या नगवाहिनी महिषहा पञ्चाननस्थायिनी॥ ३२-३५॥

पारावार विहारहेतुसफरी सेतुप्रकारा परा।

काशीवासिनमीश्वरं प्रतिदिनं श्रीकुण्डली पातुकम्॥ ३२-३६॥

या कुण्डोद्भवसारपाननिरता मोहादिदोषापहा।

सा नेत्रत्रयमम्बिका सुवलिका श्रीकालिका कौलिका॥ ३२-३७॥

काकस्था द्विकचञ्चुपारणकरी संज्ञाकरी सुन्दरी।

मे पातु पिरयया तया विशदया सच्छायया छादिता॥ ३२-३८॥

श्रीकुण्डे रणचण्डिका सुरतिका कङ्कालिका बालिका।

साकाशा परिवजीता सुगतिका ज्ञानोमीका चोत्सुका॥ ३२-३९॥

सौकासूक्ष्मसुखपिरया गुणनिका दीक्षा च सूक्ष्माख्यका।

मामन्द्यं मम कन्दवासिनि शिवे सन्त्राहि सन्त्राहिकम्॥ ३२-४०॥

एतत्स्तोत्रं पठित्वा त्रिभुवनपवनं पावनं लौकिकानाम्।

राजा स्यात् किल्विषाग्निः क्रतुपतिरिह यः क्षेमदं योगिनां वा॥ ३२-४१॥

सर्वेशः सर्वकर्ता भवति निजगृहे योगयोगाङ्गवक्ता।

शाक्तः शैवः स एकः परमपुरुषगो निर्मलात्मा महात्मा॥ ३२-४२॥

प्रणवेन पुटितं कृत्वा यः स्तौति नियतः शुचिः।

स भवेत् कुण्डलीपुत्रो भूतले नात्र संशयः॥ ३२-४३॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने मूलचक्रसारसङ्केते

भैरवभैरवीसंवादे कन्दवासिनीस्तोत्रं नाम द्वात्रिंशः पटलः॥ ३२॥

## अथ त्रयस्त्रिंशः पटलः

श्री आनन्दभैरवी उवाच

अथ वक्ष्ये महादेव कुण्डलीकवचं शुभम्।

परमानन्ददं सिद्धं सिद्धवृन्दनिषेवितम्॥ ३३-१॥

यत्कृत्वा योगिनः सर्वं धर्माधर्मप्रदर्शकाः।

ज्ञानिनो मानिनो धर्मा विचरन्ति यथामराः॥ ३३-२॥

सिद्धयोऽप्यणिमाद्याश्च करस्थाः सर्वदेवताः।

एतत् कवचपाठेन देवेन्द्रो योगिराड् भवेत्॥ ३३-३॥

ऋषयो योगिनः सर्वे जटिलाः कुलभैरवाः।

प्रातःकाले त्रिवारं च मध्याह्ने वारयुग्मकम्॥ ३३-४॥

सायाह्ने वारमेकं तु पठेत् कवचमेव च।

पठेदेवं महायोगी कुण्डलीदर्शनं भवेत्॥ ३३-५॥

कुलकुण्डलीकवचस्य ब्रह्मेन्द्र ऋषिर्गायत्री छन्दः, कुलकुण्डली देवता सर्वाभीष्टसिद्ध्यर्थे विनियोगः॥

ओं ईश्वरी जगतां धात्री ललिता सुन्दरी परा।
कुण्डली कुलरूपा च पातु मां कुलचण्डिका॥ ३३-६॥
शिरो मे ललिता देवी पातूग्राख्या कपोलकम्।
ब्रह्ममन्त्रेण पुटिता भ्रूमध्यं पातु मे सदा॥ ३३-७॥
नेत्रत्रयं महाकाली कालाग्निभक्षिका शिखाम्।
दन्तावलीं विशालाक्षी ओष्ठमिष्टानुवासिनी॥ ३३-८॥
कामबीजात्मिका विद्या अधरं पातु मे सदा।
लृयुगस्था गण्डयुग्मं माया विश्वा रसपिरया॥ ३३-९॥
भुवनेशी कर्णयुग्मं चिबुकं क्रोधकालिका।
कपिला मे गलं पातु सर्वबीजस्वरूपिणी॥ ३३-१०॥
मातृकावर्णपुटिता कुण्डली कण्ठमेव च।
हृदयं कालपृथ्वी च कङ्काली पातु मे मुखम्॥ ३३-११॥
भुजयुग्मं चतुर्वर्गा चण्डदोर्द्दण्डखण्डिनी।
स्कन्धयुग्मं स्कन्दमाता हालाहलगता मम॥ ३३-१२॥
अङ्गुल्यग्रं कुलानन्दा श्रीविद्या नखमण्डलम्।
कालिका भुवनेशानी पृष्ठदेशं सदावतु॥ ३३-१३॥
पार्श्वयुग्मं महावीरा वीरासनधराभया।
पातु मां कुलदर्भस्था नाभिमुदरमम्बिका॥ ३३-१४॥

कटिदेशं पीठसंस्था महामहिषघातिनी।

लिङ्गस्थानं महामुद्रा भगं मालामनुपिरया॥ ३३-१५॥

भगीरथपिरया धूम्रा मूलाधारं गणेश्वरी।

चतुर्दलं कक्ष्यपूज्या दलाग्रं मे वसुन्धरा॥ ३३-१६॥

शीर्षं राधा रणाख्या च ब्रह्माणी पातु मे मुखम्।

मेदिनी पातु कमला वाग्देवी पूर्वगं दलम्॥ ३३-१७॥

छेदिनी दक्षिणे पातु पातु चण्डा महातपा।

चन्द्रघण्टा सदा पातु योगिनी वारुणं दलम्॥ ३३-१८॥

उत्तरस्थं दलं पातु पृथिवीमिन्द्रपालिता।

चतुष्कोणं कामविद्या ब्रह्मविद्याब्जकोणकम्॥ ३३-१९॥

अष्टशूलं सदा पातु सर्ववाहनवाहना

चतुर्भुजा सदा पातु डाकिनी कुलचञ्चला॥ ३३-२०॥

मेढ्रस्था मदनाधारा पातु मे चारुपङ्कजम्।

स्वयम्भूलिङ्ग चार्वाका कोटराक्षी ममासनम्॥ ३३-२१॥

कदम्बवनमापातु कदम्बवनवासिनी।

वैष्णवी परमा माया पातु मे वैष्णवं पदम्॥ ३३-२२॥

षड्दलं राकिणी पातु राकिणी कामवासिनी।

कामेश्वरी कामरूपा श्रीकृष्णं पीतवाससम्॥ ३३-२३॥

वनमालां वनदुर्गा शङ्खं मे शङ्खिनी शिवा।

चक्रं चक्रेश्वरी पातु कमलाक्षी गदां मम॥ ३३-२४॥

पद्मं मे पद्मगन्धा च पद्ममाला मनोहरा।

रादिलान्ताक्षरं पातु लाकिनी लोकपालिनी॥ ३३-२५॥

षड्दले स्थितदेवांश्च पातु कैलासवासिनी।

अग्निवर्णा सदा पातु गणं मे परमेश्वरी॥ ३३-२६॥

मणिपूरं सदा पातु मणिमालाविभूषणा।

दशपत्रं दशवर्णं डादिफान्तं त्रिविक्रमा॥ ३३-२७॥

पातु नीला महाकाली भद्रा भीमा सरस्वती।

अयोध्यावासिनी देवी महापीठनिवासिनी॥ ३३-२८॥

वाग्भवाद्या महाविद्या कुण्डली कालकुण्डली।

दशाच्छदगतं पातु रुद्रं रुद्रात्मकं मम॥ ३३-२९॥

सूक्ष्मात् सूक्ष्मतरा पातु सूक्ष्मस्थाननिवासिनी।

राकिणी लोकजननी पातु कूटाक्षरस्थिता॥ ३३-३०॥

तैजसं पातु नियतं रजकी राजपूजिता।

विजया कुलबीजस्था तवर्गं तिमिरापहा॥ ३३-३१॥

मन्त्रात्मिका मणिग्रन्थिं भेदिनी पातु सर्वदा।

गर्भदाता भृगुसुता पातु मां नाभिवासिनी॥ ३३-३२॥

नन्दिनी पातु सकलं कुण्डली कालकम्पिता।

हृत्पद्मं पातु कालाख्या धूम्रवर्णा मनोहरा॥ ३३-३३॥

दलद्वादशवर्णं च भास्करी भावसिद्धिदा।

पातु मे परमा विद्या कवर्गं कामचारिणी॥ ३३-३४॥

चवर्गं चारुवसना व्याघ्रास्या टङ्कधारिणी।

चकारं पातु कृष्णाख्या काकिनीं पातु कालिका॥ ३३-३५॥

टकुराङ्गी टकारं मे जीवभावा महोद्या।

ईश्वरी पातु विमला मम हृत्पद्मवासिनी॥ ३३-३६॥

कणीकां कालसन्दर्भा योगिनी योगमातरम्।

इन्द्राणी वारुणी पातु कुलमाला कुलान्तरम्॥ ३३-३७॥

तारिणी शक्तिमाता च कण्ठवाक्यं सदावतु।

विप्रचित्ता महोग्रोग्रा प्रभा दीप्ता घनासना॥ ३३-३८॥

वाक्स्तम्भिनी वज्रदेहा वैदेही वृषवाहिनी।

उन्मत्तानन्दचित्ता च क्षणोशीशा भगान्तरा॥ ३३-३९॥

मम षोडशपत्राणि पातु मातृतनुस्थिता।

सुरान् रक्षतु वेदज्ञा सर्वभाषा च कणीकाम्॥ ३३-४०॥

ईश्वरार्द्धासनगता प्रपायान्मे सदाशिवम्।

शाकम्भरी महामाया साकिनी पातु सर्वदा॥ ३३-४१॥

भवानी भवमाता च पायाद् भ्रूमध्यपङ्कजम्।

द्विदलं व्रतकामाख्या अष्टाङ्गसिद्धिदायिनी॥ ३३-४२॥

पातु नासामखिलानन्दा मनोरूपा जगत्पिरया।

लकारं लक्षणाक्रान्ता सर्वलक्षणलक्षणा॥ ३३-४३॥

कृष्णाजिनधरा देवी क्षकारं पातु सर्वदा।

द्विदलस्थं सर्वदेवं सदा पातु वरानना॥ ३३-४४॥

बहुरूपा विश्वरूपा हाकिनी पातु संस्थिता।

हरापरशिवं पातु मानसं पातु पञ्चमी॥ ३३-४५॥

षड्चक्रस्था सदा पातु षड्चक्रकुलवासिनी।

अकारादिक्षकारान्ता बिन्दुसर्गसमन्विता॥ ३३-४६॥

मातृकार्णा सदा पातु कुण्डली ज्ञानकुण्डली।

देवकाली गतिप्रेमा पूर्णा गिरितटं शिवा॥ ३३-४७॥

उड्डीयानेश्वरी देवी सकलं पातु सर्वदा।

कैलासपर्वतं पातु कैलासगिरिवासिनी४८॥

पातु मे डाकिनीशक्तिर्लाकिनी राकिणी कला।

साकिनी हाकिनी देवी षड्चक्रादीन् प्रपातु मे॥ ३३-४९॥

कैलासाख्यं सदा पातु पञ्चानन तनूद्भवा।

हिरण्यवर्णा रजनी चन्द्रसूर्याग्निभक्षिणी॥ ३३-५०॥

सहस्रदलपद्मं मे सदा पातु कुलाकुला।

सहस्रदलपद्मस्था दैवतं पातु खेचरी॥ ३३-५१॥

काली तारा षोडशाख्या मातङ्गी पद्मवासिनी।

शशिकोटिगलद्रूपा पातु मे सकलं तमः॥ ३३-५२॥

वने घोरे जले देशे युद्धे वादे श्मशानके।

सर्वत्र गमने ज्ञाने सदा मां पातु शैलजा॥ ३३-५३॥

पर्वते विविधायासे विनाशे पातु कुण्डली।

पादादिब्रह्मरन्ध्रान्तं सर्वाकाशं सुरेश्वरी॥ ३३-५४॥

सदा पातु सर्वविद्या सर्वज्ञानं सदा मम।

नवलक्षमहाविद्या दशदिक्षु प्रपातु माम्॥ ३३-५५॥

इत्येतत् कवचं देवि कुण्डलिन्याः प्रसिद्धिदम्।

ये पठन्ति ध्यानयोगे योगमार्गव्यवस्थिताः॥ ३३-५६॥

ते यान्ति मुक्तिपदवीमैहिके नात्र संशयः।

मूलपद्मे मनोयोगं कृत्वा हृदासनस्थितः॥ ३३-५७॥

मन्त्रं ध्यायेत् कुण्डलिनीं मूलपद्मप्रकाशिनीम्।

धर्मोदयां दयारूढामाकाशस्थानवासिनीम्॥ ३३-५८॥

अमृतानन्दरसिकां विकलां सुकलां शिताम्।

अजितां रक्तरहितां विशक्तां रक्तविग्रहाम्॥ ३३-५९॥

रक्तनेत्रां कुलक्षिप्तां ज्ञानाञ्जनजयोज्ज्वलाम्।

विश्वाकारां मनोरूपां मूले ध्यात्वा प्रपूजयेत्॥ ३३-६०॥

यो योगी कुरुते एवं स सिद्धो नात्र संशयः।

रोगी रोगात् प्रमुच्येत बद्धो मुच्येत बन्धनात्॥ ३३-६१॥

राज्यं श्रियमवाप्नोति राज्यहीनः पठेद्यदि।

पुत्रहीनो लभेत् पुत्रं योगहीनो भवेद्वशी॥ ३३-६२॥

कवचं धारयेद्यस्तु शिखायां दक्षिणे भुजे।

वामा वामकरे धृत्वा सर्वाभीष्टमवाप्नुयात्॥ ३३-६३॥

स्वर्णे रौप्ये तथा ताम्रे स्थापयित्वा प्रपूजयेत्।

सर्वदेशे सर्वकाले पठित्वा सिद्धिमाप्नुयात्॥ ३३-६४॥

स भूयात् कुण्डलीपुत्रो नात्र कार्या विचारणा॥ ३३-६५॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धिविद्याप्रकरणे षट्चक्रप्रकाशे भैरवीभैरवसंवादे कन्दवासिनीकवचं नाम त्रयस्त्रिंशः पटलः॥ ३३॥

## अथ चतुस्त्रिंशः पटलः

आनन्दभैरवी उवाच

अथ भेदान् प्रवक्ष्यामि हिताय जगतां प्रभो।

निर्मलात्मा शुचिः श्रीमान् ध्यानात्मा च सदाशिवः॥ ३४-१॥

स मोक्षगो ज्ञानरूपी स षट्चक्रार्थभेदकः।

त्रिगुणज्ञानविकलो न पश्यति दिवानिशम्॥ ३४-२॥

दिवारात्र्यज्ञानहेतोर्न पश्यति कलेवरम्।

इति कृत्वा हि मरणं नृणां जन्मनि जन्मनि॥ ३४-३॥

तज्जन्मक्षयहेतोश्च मम योगं समभ्यसेत्।

पञ्चस्वरं महायोगं कृत्वा स्यादमरो नरः॥ ३४-४॥

तत्प्रकारं श्रृणुष्वाथ वल्लभ पिरयदर्शन।

तव भावेन कथये न कुत्र वद शङ्कर॥ ३४-५॥

यदि लोकस्य निकटे कथ्यते योगसाधनम्।

विघ्ना घोरा वसन्त्येव गात्रे योगादिकं कथम्॥ ३४-६॥

योगयोगाद् भवेन्मोक्षः तत्प्रकाशाद्विनाशनम्।

अतो न दर्शयेद् योगं यदीच्छेदात्मनः शुभम्॥ ३४-७॥

कृत्वा पञ्चामरा योगं प्रत्यहं भक्तिसंयुतः।

पठेत् श्रीकुण्डलीदेवीसहस्रनाम चाष्टकम्॥ ३४-८॥

महायोगी भवेन्नाथ षण्मासे नात्र संशयः।

पञ्चमे वा योगविद्या सर्वविद्याप्रकाशिनी॥ ३४-९॥

कृत्वा पञ्चस्वरा सिद्धिं ततोऽष्टाङ्गादिधारणा।

आदौ पञ्चस्वरा सिद्धिस्ततोऽन्या योगधारणा॥ ३४-१०॥

तत्प्रकारं प्रवक्ष्यामि सावधानावधारय।

अहं जानामि संसारे केवलं योगपण्डितान्॥ ३४-११॥

तत् साक्षिणी ह्यहं नाथ भक्तानामुदयाय च।

इदानीं कथये तेऽहं मम वा योगसाधनम्॥ ३४-१२॥

एवं कृत्वा नित्यरूपी योगानामष्टधा यतः।

ततः कालेन पुरुषः सिद्धिमाप्नोति निश्चितम्॥ ३४-१३॥

पञ्चामरा विधानानि क्रमेण श्णु शङ्कर।

नेतीयोगं हि सिद्धानां महाकफविनाशनम्॥ ३४-१४॥

दन्तियोगं प्रवक्ष्यामि पश्चाद् हृदयभेदनात्।

धौतीयोगं ततः पश्चात् सर्वमलविनाशनात्॥ ३४-१५॥

नेलीयोगमपरं सर्वाङ्गोदरचालनात्।

क्षालनं परमं योगं नाडीनां क्षालनात् स्मृतम्॥ ३४-१६॥

एतत् पञ्चामरायोगं यमिनामतिगोचरम्।

यमनियमकाले तु पञ्चामराक्रियां यजेत्॥ ३४-१७॥

अमरा साधनादेव अमरत्वं लभेद् ध्रुवम्।

एतत्करणकाले च तथा पञ्चामरासनम्॥ ३४-१८॥

पञ्चामराभक्षणेन अमरो योगसिद्धिभाक्।

तानि द्रव्याणि वक्ष्यामि तवाग्रे परमेश्वर॥ ३४-१९॥

येन हीना न सिध्यन्ति कल्पकोटिशतेन च।

एका तु अमरा दूर्वा तस्या ग्रन्थिं समानयेत्॥ ३४-२०॥

अन्या तु विजया देवी सिद्धिरूपा सरस्वती।

अन्या तु बिल्वपत्रस्था शिवसन्तोषकारिणी॥ ३४-२१॥

अन्या तु योगसिद्ध्यर्थे निर्गुण्डी चामरा मता।

अन्या तु कालितुलसी श्रीविष्णोः परितोषिणी॥ ३४-२२॥

एताः पञ्चस्वराः ज्ञेया योगसाधनकर्मणि।

एतासां द्विगुणं ग्राह्यं विजयापत्रमुत्तमम्॥ ३४-२३॥

ब्राह्मणी क्षत्रिया वैश्या शूद्राः सर्वत्र पूजिताः।

एतद्द्रव्याणि सङ्ग्राह्य भक्षयेच्चूर्णमुत्तमम्॥ ३४-२४॥

तच्चूर्णभक्षसमये एतन्मन्त्रादिपञ्चमम्।

पठित्वा भक्षणं कृत्वा नरो मुच्येत सङ्कटात्॥ ३४-२५॥

ओं त्वं दूर्वेऽमरपूज्ये त्वं अमृतोद्भवसम्भवे।

अमरं मां सदा भद्रे कुरुष्व नृहरिपिरये॥ ३४-२६॥

ओं दूर्वायै नमः स्वाहा इति दूर्वायाः।

पुनवीजयामन्त्रेण शोधयेत् सर्वकन्यकाः।

ओं संविदे ब्रह्मसम्भूते ब्रह्मपुत्रि सदाऽनघे।

भैरवाणां च तृप्त्यर्थे पवित्रा भव सर्वदा॥ ३४-२७॥

ओं ब्राह्मण्यै नमः स्वाहा।

ओं सिद्धिमूलकरे देवि हीनबोधप्रबोधिनि।

राजपुत्रीवशङ्करि शूलकण्ठत्रिशूलिनि॥ ३४-२८॥

ओं क्षत्रियायै नमः स्वाहा।

ओं अज्ञानेन्धनदीप्ताग्नि ज्ञानाग्निज्वालरूपिणि।

आनन्दाद्याहुतिं कृत्वा सम्यक्ज्ञानं प्रयच्छ मे॥ ३४-२९॥

ह्रीं ह्रीं वैश्यायै नमः स्वाहा।

ओं नमस्यामि नमस्यामि योगमार्गप्रदर्शीनि।

त्रैलोक्यविजये मातः समाधिफलदा भव॥ ३४-३०॥

श्रीं शूद्रायै नमः स्वाहा।

ओं काव्यसिद्धिकरी देवी बिल्वपत्रनिवासिनि।

अमरत्वं सदा देहि शिवतुल्यं कुरुष्व माम्॥ ३४-३१॥

ओं शिवदायै नमः स्वाहा।

निर्गुण्डि परमानन्दे योगानामधिदेवते।

सा मां रक्षतु अमरे भावसिद्धिप्रदे नमः॥ ३४-३२॥

ओं शोकापहायै नमः स्वाहा।

ओं        विष्णोः पिरये महामाये महाकालनिवारिणी।

तुलसी मां सदा रक्ष मामेकममरं कुरु॥ ३४-३३॥

ओं        ह्रीं श्रीं एं क्लीं अमरायै नमः स्वाहा।

पुनरेव समाकृत्य सर्वासां शोधनञ्चरेत्॥ ३४-३४॥

ओं अमृते अमृतोद्भवेऽमृतवर्षीणि अमृतमाकर्षय।

आकर्षय सिद्धिं देहि स्वाहा।

धेनुमुद्रां योनिमुद्रां मत्स्यमुद्रां प्रदर्शयेत्।

तत्त्वमुद्राक्रमेणैव तर्पणं कारयेद् बुधः॥ ३४-३५॥

अमन्त्रकं सप्तवारं गुरोर्नाम्ना शिवेऽर्पयेत्।

सप्तकञ्च स्वेष्टदेव्या नाम्ना शुद्धिं प्रदापयेत्॥ ३४-३६॥

ततस्तर्पणमाकुर्यात्तर्पयामि नमो नमः।

एतद्वाक्यस्य पूर्वे च इष्टमन्त्रं समुच्चरेत्॥ ३४-३७॥

परदेवतां समुद्धृत्य सर्वाद्यप्रणवं स्मृतम्।

ततो मुखे प्रजुहुयात् कुण्डलीनामपूर्वकम्॥ ३४-३८॥

ओं एं वद वद वाग्वादिनि मम जिह्वाग्रे स्थिरीभव।

सर्वसत्त्ववशङ्करि शत्रुकण्ठत्रिशूलिनि स्वाहा।

एतज्जप्त्वा साश्रमी च वशी साधकसत्तमः।

पञ्चामरा शासनज्ञः कुलाचारविधिपिरयः॥ ३४-३९॥

स्थिरचेता भवेद्योगी यदि पञ्चामरागतः।

नेतीयोगविधानानि शृणु कैलासपूजिते॥ ३४-४०॥

येन सर्वमस्तकस्थकफानां दहनं भवेत्।

सूक्ष्मसूत्रं दृढतरं प्रदद्यात् नासिकाबिले॥ ३४-४१॥

मुखरन्ध्रे समानीय सन्धानेन समानयेत्।

पुनः पुनः सदा योगी यातायातेन घर्षयेत्॥ ३४-४२॥

क्रमेण वर्द्धनं कुर्यात् सूत्रस्य परमेश्वर।

नेतीयोगेन नासाया रन्ध्रं निर्मलकं भवेत्॥ ३४-४३॥

वायोर्गमनकाले तु महासुखमिति प्रभो।

दन्तीयोगं ततः पश्चात्कुर्यात् साधकसत्तमः॥ ३४-४४॥

दन्तधावनकाले तु योगमेतत् प्रकाशयेत्।

दन्तधावनकाष्ठञ्च सार्धहस्तैकसम्भवम्॥ ३४-४५॥

नातिस्थूलं नातिसूक्ष्मं नवीनं नम्रमुत्तमम्।

अपक्वं यत्नतो ग्राह्यं मृणालसदृशं तरुम्॥ ३४-४६॥

गृहीत्वा दन्तकाष्ठं वै योगी नित्यं प्रभक्षयेत्।

दन्तकाष्ठाग्रभागञ्च कनिष्ठाङ्गुलिपर्वतः॥ ३४-४७॥

एवं दन्तावलिभ्याञ्च चर्वणं सुन्दरं चरेत्।

ततः प्रक्षाल्य तोयेन शनैर्गीलनमाचरेत्॥ ३४-४८॥

शनैः शनैः प्रकर्त्तव्यं कायावाक्चित्तशोधनम्।

यावदभिन्नकाष्ठाग्रं नाभिमूले त्वनाक्षतम्॥ ३४-४९॥

तावत् सूक्ष्मतरं ग्राह्यमवश्यं प्रत्यहञ्चरेत्।

हृदये जलचक्रञ्च यावत् खण्डं न जायते॥ ३४-५०॥

तावत्कालं सर्वदिने प्रभाते दन्तधावनम्।

हृदये कफभाण्डस्य खण्डनं जायते ध्रुवम्॥ ३४-५१॥

पवनागमने सौख्यं प्रयाति योगनिर्भरम्।

खेचरत्वं स लभताम् अम्लानञ्च कटूद्भवम्॥ ३४-५२॥

मिष्टान्नं शाकदध्यन्नं द्विवारं रात्रिभोजनम्।

अवश्यं सन्त्यजेद्योगी यदि योगमिहेच्छति॥ ३४-५३॥

एकभागं मुद्गबीजं द्विभागं तण्डुलं मतम्।

उत्तमं पाकमाकृत्य घृतदुग्धेन भक्षयेत्॥ ३४-५४॥

अथवा केवलं दुग्धं तर्पणं कारयेद् बुधः।

कुण्डलीं कुलरूपाञ्च दुग्धेन परितर्पयेत्॥ ३४-५५॥

कुण्डलीतर्पणं योगी यदि जानाति शङ्कर।

अनायासेन योगी स्यात् स ज्ञानीन्द्रो भवेद्ध्रुवम्॥ ३४-५६॥

यमनियमपरो यः कुण्डलीसेवनस्थो

विभवविरहितो वा भूरिभाराश्रितो वा।

स भवति परयोगी सर्वविद्यार्थवेद्यो।

गुणगणगगनस्थो मुक्तरूपी गणेशः॥ ३४-५७॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने षट्चक्रप्रकाशे भैरवभैरवीसंवादे

पञ्चामरासाधनं नाम चतुस्त्रिंशः पटलः॥ ३४॥

## अथ पञ्चत्रिंशः पटलः

आनन्दभैरवी उवाच

अथ वक्ष्ये महाकाल रहस्यं चातिदुर्लभम्।

यस्य विज्ञानमात्रेण नरो ब्रह्मपदं लभेत्॥ ३५-१॥

आकाशे तस्य राज्यञ्च खेचरेशो भवेद् ध्रुवम्।

धनेशो भवति क्षिप्रं ब्रह्मज्ञानी भवेन्नरः॥ ३५-२॥

योगानामधिपो राजा वीरभद्रो यथाकविः।

विरिञ्चिगणनाथस्य कृपा भवति सर्वदा॥ ३५-३॥

यः करोति पञ्चयोगं स स्यादमरविग्रहः।

धौतीयोगं प्रवक्ष्यामि यत्कृत्वा निर्मलो भवेत्॥ ३५-४॥

अत्यन्तगुह्यं योगं च समाधिकरणं नृणाम्।

यदि न कुरुते योगं तदा मरणमाप्नुयात्॥ ३५-५॥

धौतीयोगं विना नाथ कः सिध्यति महीतले।

सूक्ष्मात्सूक्ष्मतरं वस्त्रं द्वात्रिंशद्धस्तमानतः॥ ३५-६॥

एकहस्तक्रमेणैव यः करोति शनैः शनैः।

यावद् द्वात्रिंशद्धस्तञ्च तावत्कालं क्रियाञ्चरेत्॥ ३५-७॥

एतत्क्रिया प्रयोगेण योगी भवति तत्क्षणात्।

क्रमेण मन्त्रसिद्धिः स्यात् कालजालवशं नयेत्॥ ३५-८॥

एतन्मध्ये चासनानि शरीरस्थानि चाचरेत्।

दृढासने योगसिद्धिरिति तन्त्रार्थनिर्णयः॥ ३५-९॥

सिद्धे मनौ परावाप्तिः पञ्चयोगासनेन च।

पार्श्वे चाष्टाङ्गुलं वस्त्रं दीर्घे द्वात्रिंशदीश्वर॥ ३५-१०॥

एतत् सूक्ष्मं सुवसनं गृहीत्वा कारयेद् यतिः।

जितेन्द्रियः सदा कुर्याद् ज्ञानध्याननिषेवणः॥ ३५-११॥

कुलीनः पण्डितो मानी विवेकी सुस्थिराशयः।

धौतीयोगं सदा कुर्यात्तदैव शुचिगो भवेत्॥ ३५-१२॥

अनाचारेण हानिः स्यादिन्द्रियाणां बलेन च।

महापातकमुख्यानां सङ्गदोषेण हानयः॥ ३५-१३॥

सम्भवन्ति महादेव कालयोगं सुकर्म च।

वृद्धो वा यौवनस्थो वा बालो वा जड एव च॥ ३५-१४॥

करणाद्दीर्घजीवी स्यादमरो लोकवल्लभः।

मन्त्रसिद्धिरष्टसिद्धिः स सिद्धीनामधीश्वरः॥ ३५-१५॥

शनैः शनैः सदा कुर्यात् कालदोषविनाशनात्।

हृदयग्रन्थिभेदेन सर्वावयववर्धनम्॥ ३५-१६॥

तदा महाबलो ज्ञानी चारुवर्णो महाशयः।

धौतीयोगोद्भवं कामं महामरणकारणम्॥ ३५-१७॥

तस्य त्यागं यः करोति स नरो देवविक्रमः।

श्वासं त्यक्त्वा स्तम्भनञ्च मनो दद्यान्महानिले॥ ३५-१८॥

श्वासादीनाञ्च गणनमवश्यं भावयेद् गृहे।

प्राणायामविधानेन सर्वकालं सुखी भवेत्॥ ३५-१९॥

वायुपानं सदा कुर्यात् ध्यानं कुर्यात्सदैव हि।

प्रत्याहारं सदा कुर्यात् मनोनिवेशनं सदा॥ ३५-२०॥

मानसादिप्रजाप्यञ्च सदा कुर्यान्मनोलयम्।

धौतीयोगान्तरं हि नेलीङ्कर्म चाचरेत्॥ ३५-२१॥

नेलीयोगमात्रेण आसने नेलोपमः।

नेलीसाधनादेव चिरजीवी निरामयः॥ ३५-२२॥

अन्तरात्मा सदा मौनी निर्मलात्मा सदा सुखी।

सर्वदा समयानन्दः कारणानन्दविग्रहः॥ ३५-२३॥

योगाभ्यासं सदा कुर्यात् कुण्डली साधनादिकम्।

कृत्वा मन्त्री खेचरत्वं प्राप्नोति नात्र संशयः॥ ३५-२४॥

तत्प्रकारं प्रवक्ष्यामि सावधानावधारय।

भुक्त्वा मुद्गान्नपक्वञ्च बारैकं प्रतिपालयेत्॥ ३५-२५॥

प्रपालयेत्सोदरञ्च कटिनासाविवजीतः।

पुनः पुनश्चालनञ्च कुर्यात् स्वोदरमध्यकम्॥ ३५-२६॥

कुलालचक्रवत् कुर्यात् भ्रामणञ्चोदरस्य च।

सर्वाङ्गचालनादेव कुण्डलीचालनं भवेत्॥ ३५-२७॥

चालनात् कुण्डलीदेव्याश्चैतन्या सा भवेत् प्रभो।

एतस्यानन्तरं नाथ क्षालनं परिकीतीतम्॥ ३५-२८॥

नाडीनां क्षालनादेव सर्वविद्यानिधिर्भवेत्।

सर्वत्र जयमाप्नोति कालिकादर्शनं भवेत्॥ ३५-२९॥

वायुसिद्धिर्भवेत्तस्य पञ्चभूतस्य सिद्धिभाक्।

तस्य कीतीस्त्रिभुवने कामदेवबलोपमः॥ ३५-३०॥

सर्वत्रगामी स भवेदिन्द्रियाणां पतिर्भवेत्।

मुण्डासनं हि सर्वत्र सर्वदा कारयेद् बुधः॥ ३५-३१॥

ऊद्र्ध्वे मुण्डासनं कृत्वा अधोहस्ते जपं चरेत्।

यदि त्रिदिनमाकर्तुं समर्थो मुण्डिकासनम्॥ ३५-३२॥

तदा हि सर्वनाड्यश्च वशीभूता न संशयः।

नाडीक्षालनयोगेन मोक्षदाता स्वय भवेत्॥ ३५-३३॥

नाडीयोगेन सर्वार्थसिद्धिः स्यान्मुण्डिकासनात्।

मुण्डासन यः करोति नेलि--सिद्धिगो यदि॥ ३५-३४॥

नेलीसाधनगतो नेलीसाधनोत्तमः।

तदा क्षालनयोगेन सिद्धिमाप्नोति साधकः॥ ३५-३५॥

नेलीं यो न जानाति स कथं कर्त्तुमुत्तमः।

स धीरो मानसचरो मतिमान् स जितेन्द्रियः॥ ३५-३६॥

यो नेली योगसारं कर्त्तुमुत्तमपारगः।

स चावश्य क्षालनञ्च कुर्यात् नाड्यादिशोधनात्॥ ३५-३७॥

नेलीयोगमार्गेण नाडीक्षालनपारगः।

भवत्येव महाकाल राजराजेश्वरो यथा॥ ३५-३८॥

पृथिवीपालनरतो विग्रहस्ते प्रपालनम्।

केवलं प्राणवायोश्च धारणात् क्षालनं भवेत्॥ ३५-३९॥

विना क्षालनयोगेन देहशुद्धिर्नजायते।

क्षालनं नाडिकादीनां कफपित्तमलादिकम्॥ ३५-४०॥

करोति यत्नतो योगी मुण्डासननिषेवणात्।

वायुग्रहणमेवं हि नेलीवशकालके॥ ३५-४१॥

न कुर्यात् केवलं नाथ अन्यकाले सदा चरेत्।

यावन्नेलीं न जानाति तावत् वायुं न संपिबेत्॥ ३५-४२॥

बहुतरं न सङ्ग्राह्यं वायोरागमनादिकम्।

केवलं श्वासगणनं यावन्नेली न सिध्यति॥ ३५-४३॥

पञ्चस्वरा प्रकथिता योगिनी सिद्धिदायिका।

पञ्चस्वरसाधनादेव पञ्चवायुर्वशो भवेत्॥ ३५-४४॥

प्रतापे सूर्यतुल्यः स्यात् शोकदोषापहारकः।

सर्वयोगस्थिरतरं संप्राप्य योगिराड् भवेत्॥ ३५-४५॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने षट्चक्रप्रकाशे भैरवभैरवी संवादे

पञ्चस्वरयोगसाधनं नाम पञ्चत्रिंशः पटलः॥ ३५॥

अथ षडस्त्रिंशः पटलः

श्रीनन्दभैरवी उवाच

अथ कान्त प्रवक्ष्यामि कुण्डलीचेतनादिकम्।

सहस्रनामसकलं कुण्डलिन्याः प्रियं सुखम्॥ ३६-१॥

अष्टोत्तरं महापुण्यं साक्षात् सिद्धिप्रदायकम्।

तव प्रेमवशेनैव कथयामि श‍ृणुष्व तत्॥ ३६-२॥

विना यजनयोगेन विना ध्यानेन यत्फलम्।

तत्फलं लभते सद्यो विद्यायाः सुकृपा भवेत्॥ ३६-३॥

या विद्या भुवनेशानी त्रैलोक्यपरिपूजिता।

सा देवी कुण्डली माता त्रैलोक्यं पाति सर्वदा॥ ३६-४॥

तस्या नाम सहस्राणि अष्टोत्तरशतानि च।

श्रवणात्पठनान्मन्त्री महाभक्तो भवेदिह॥ ३६-५॥

एहिके स भवेन्नाथ जीवन्मुक्तो महाबली॥ ३६-६॥

अस्य श्रीमन्महाकुण्डलीसाष्टोत्तरसहस्रनामस्तोत्रस्य ब्रह्मर्षीर्जगतीच्छन्दो भगवती

श्रीमन्महाकुण्डलीदेवता सर्वयोगसमृद्धिसिद्ध्यर्थे विनियोगः॥

कुलेश्वरी कुलानन्दा कुलीना कुलकुण्डली।

श्रीमन्महाकुण्डली च कुलकन्या कुलप्रिया॥ ३६-७॥

कुलक्षेत्रस्थिता कौली कुलीनार्थप्रकाशिनी।

कुलाख्या कुलमार्गस्था कुलशास्त्रार्थपातिनी॥ ३६-८॥

कुलज्ञा कुलयोग्या च कुलपुष्पप्रकाशिनी

कुलीना च कुलाध्यक्षा कुलचन्दनलेपिता॥ ३६-९॥

कुलरूपा कुलोद्भूता कुलकुण्डलिवासिनी।

कुलाभिन्ना कुलोत्पन्ना कुलाचारविनोदिनी॥ ३६-१०॥

कुलवृक्षसमुद्भूता कुलमाला कुलप्रभा।

कुलज्ञा कुलमध्यस्था कुलकङ्कणशोभिता॥ ३६-११॥

कुलोत्तरा कौलपूजा कुलालापा कुलक्रिया।

कुलभेदा कुलप्राणा कुलदेवी कुलस्तुतिः॥ ३६-१२॥

कौलिका कालिका काल्या कलिभिन्ना कलाकला।

कलिकल्मषहन्त्री च कलिदोषविनाशिनी॥ ३६-१३॥

कङ्काली केवलानन्दा कालज्ञा कालधारिणी।

कौतुकी कौमुदी केका काका काकलयान्तरा॥ ३६-१४॥

कोमलाङ्गी करालास्या कन्दपूज्या च कोमला।

कैशोरी काकपुच्छस्था कम्बलासनवासिनी॥ ३६-१५॥

कैकेयीपूजिता कोला कोलपुत्री कपिध्वजा।

कमला कमलाक्षी च कम्बलाश्वतरप्रिया॥ ३६-१६॥

कलिकाभङ्गदोषस्था कालज्ञा कालकुण्डली।

काव्यदा कविता वाणी कालसन्दर्भभेदिनी॥ ३६-१७॥

कुमारी करुणाकारा कुरुसैन्यविनाशिनी।

कान्ता कुलगता कामा कामिनी कामनाशिनी॥ ३६-१८॥

कामोद्भवा कामकन्या केवला कालघातिनी।

कैलासशिखरारूढा कैलासपतिसेविता॥ ३६-१९॥

कैलासनाथनमिता केयूरहारमण्डिता।

कन्दर्पा कठिनानन्दा कुलगा कीचकृत्यहा॥ ३६-२०॥

कमलास्या कठोरा च कीटरूपा कटिस्थिता।

कन्देश्वरी कन्दरूपा कोलिका कन्दवासिनी॥ ३६-२१॥

कूटस्था कूटभक्षा च कालकूटविनाशिनी।

कामाख्या कमला काम्या कामराजतनूद्भवा॥ ३६-२२॥

कामरूपधरा कम्रा कमनीया कविप्रिया।

कञ्जानना कञ्जहस्ता कञ्जपत्रायतेक्षणा॥ ३६-२३॥

काकिनी कामरूपस्था कामरूपप्रकाशिनी।

कोलाविध्वंसिनी कङ्का कलङ्कार्ककलङ्किनी॥ ३६-२४॥

महाकुलनदी कर्णा कर्णकाण्डविमोहिनी।

काण्डस्था काण्डकरुणा कर्मकस्था कुटुम्बिनी॥ ३६-२५॥

कमलाभा भवा कल्ला करुणा करुणामयी।

करुणेशी कराकर्त्री कर्तृहस्ता कलोदया॥ ३६-२६॥

कारुण्यसागरोद्भूता कारुण्यसिन्धुवासिनी।

कार्त्तीकेशी कार्त्तीकस्था कार्त्तीकप्राणपालनी॥ ३६-२७॥

करुणानिधिपूज्या च करणीया क्रिया कला।

कल्पस्था कल्पनिलया कल्पातीता च कल्पिता॥ ३६-२८॥

कुलया कुलविज्ञाना कर्षीणी कालरात्रिका।

कैवल्यदा कोकरस्था कलमञ्जीररञ्जनी॥ ३६-२९॥

कलयन्ती कालजिह्वा किङ्करासनकारिणी।

कुमुदा कुशलानन्दा कौशल्याकाशवासिनी॥ ३६-३०॥

कसापहासहन्त्री च कैवल्यगुणसम्भवा।

एकाकिनी अर्करूपा कुवला कर्कटस्थिता॥ ३६-३१॥

कर्कोटका कोष्ठरूपा कूटवह्निकरस्थिता।

कूजन्ती मधुरध्वानं कामयन्ती सुलक्षणम्॥ ३६-३२॥

केतकी कुसुमानन्दा केतकीपुण्यमण्डिता।

कर्पूरपूररुचिरा कर्पूरभक्षणप्रिया॥ ३६-३३॥

कपालपात्रहस्ता च कपालचन्द्रधारिणी।

कामधेनुस्वरूपा च कामधेनुः क्रियान्विता॥ ३६-३४॥

कश्यपी काश्यपा कुन्ती केशान्ता केशमोहिनी।

कालकर्त्री कूपकर्त्री कुलपा कामचारिणी॥ ३६-३५॥

कुङ्कुमाभा कज्जलस्था कमिता कोपघातिनी।

केलिस्था केलिकलिता कोपना कर्पटस्थिता॥ ३६-३६॥

कलातीता कालविद्या कालात्मपुरुषोद्भवा।

कष्टस्था कष्टकुष्ठस्था कुष्ठहा कष्टहा कुशा॥ ३६-३७॥

कालिका स्फुटकर्त्री च काम्बोजा कामला कुला।

कुशलाख्या काककुष्ठा कर्मस्था कूर्ममध्यगा॥ ३६-३८॥

कुण्डलाकारचक्रस्था कुण्डगोलोद्भवा कफा।

कपित्थाग्रवसाकाशा कपित्थरोधकारिणी॥ ३६-३९॥

काहोड। काहड। काड। कङ्कला भाषकारिणी।

कनका कनकाभा च कनकाद्रिनिवासिनी॥ ३६-४०॥

कार्पासयज्ञसूत्रस्था कूटब्रह्मार्थसाधिनी।

कलञ्जभक्षिणी क्रूरा क्रोधपुञ्जा कपिस्थिता॥ ३६-४१॥

कपाली साधनरता कनिष्ठाकाशवासिनी।

कुञ्जरेशी कुञ्जरस्था कुञ्जरा कुञ्जरागतिः॥ ३६-४२॥

कुञ्जस्था कुञ्जरमणी कुञ्जमन्दिरवासिनी।

कुपिता कोपशून्या च कोपाकोपविवजीता॥ ३६-४३॥

कपिञ्जलस्था कापिञ्जा कपिञ्जलतरूद्भवा

कुन्तीप्रेमकथाविष्टा कुन्तीमानसपूजिता॥ ३६-४४॥

कुन्तला कुन्तहस्ता च कुलकुन्तललोहिनी।

कान्ताङ्गसेविका कान्तकुशला कोशलावती॥ ३६-४५॥

केशिहन्त्री ककुत्स्था च ककुत्स्थवनवासिनी।

कैलासशिखरानन्दा कैलासगिरिपूजिता॥ ३६-४६॥

कीलालनिर्मलाकारा(?) कीलालमुग्धकारिणी।

कुतुना कुट्टही कुट्ठा कूटना मोदकारिणी॥ ३६-४७॥

क्रौङ्कारी क्रौङ्करी काशी कुहुशब्दस्था किरातिनी।

कूजन्ती सर्ववचनं कारयन्ती कृताकृतम्॥ ३६-४८॥

कृपानिधिस्वरूपा च कृपासागरवासिनी।

केवलानन्दनिरता केवलानन्दकारिणी॥ ३६-४९॥

कृमिला कृमिदोषघ्नी कृपा कपटकुट्टिता।

कृशाङ्गी क्रमभङ्गस्था किङ्करस्था कटस्थिता॥ ३६-५०॥

कामरूपा कान्तरता कामरूपस्य सिद्धिदा।

कामरूपपीठदेवी कामरूपाङ्कुजा कुजा॥ ३६-५१॥

कामरूपा कामविद्या कामरूपादिकालिका।

कामरूपकला काम्या कामरूपकुलेश्वरी॥ ३६-५२॥

कामरूपजनानन्दा कामरूपकुशाग्रधीः।

कामरूपकराकाशा कामरूपतरुस्थिता॥ ३६-५३॥

कामात्मजा कामकला कामरूपविहारिणी।

कामशास्त्रार्थमध्यस्था कामरूपक्रियाकला॥ ३६-५४॥

कामरूपमहाकाली कामरूपयशोमयी।

कामरूपपरमानन्दा कामरूपादिकामिनी॥ ३६-५५॥

कूलमूला कामरूपपद्ममध्यनिवासिनी।

कृताञ्जलिप्रिया कृत्या कृत्यादेवीस्थिता कटा॥ ३६-५६॥

कटका काटका कोटिकटिघण्टविनोदिनी।

कटिस्थूलतरा काष्ठा कात्यायनसुसिद्धिदा॥ ३६-५७॥

कात्यायनी काचलस्था कामचन्द्रानना कथा।

काश्मीरदेशनिरता काश्मीरी कृषिकर्मजा॥ ३६-५८॥

कृषिकर्मस्थिता कौर्मा कूर्मपृष्ठनिवासिनी।

कालघण्टा नादरता कलमञ्जीरमोहिनी॥ ३६-५९॥

कलयन्ती शत्रुवर्गान् क्रोधयन्ती गुणागुणम्

कामयन्ती सर्वकामं काशयन्ती जगत्त्रयम्॥ ३६-६०॥

कौलकन्या कालकन्या कौलकालकुलेश्वरी

कौलमन्दिरसंस्था च कुलधर्मविडम्बिनी॥ ३६-६१॥

कुलधर्मरताकारा कुलधर्मविनाशिनी।

कुलधर्मपण्डिता च कुलधर्मसमृद्धिदा॥ ३६-६२॥

कौलभोगमोक्षदा च कौलभोगेन्द्रयोगिनी।

कौलकर्मा नवकुला श्वेतचम्पकमालिनी॥ ३६-६३॥

कुलपुष्पमाल्याकान्ता कुलपुष्पभवोद्भवा।

कौलकोलाहलकरा कौलकर्मप्रिया परा॥ ३६-६४॥

काशीस्थिता काशकन्या काशी चक्षुःप्रिया कुथा

काष्ठासनप्रिया काका काकपक्षकपालिका॥ ३६-६५॥

कपालरसभोज्या च कपालनवमालिनी।

कपालस्था च कापाली कपालसिद्धिदायिनी॥ ३६-६६॥

कपाला कुलकर्त्री च कपालशिखरस्थिता।

कथना कृपणश्रीदा कृपी कृपणसेविता॥ ३६-६७॥

कर्महन्त्री कर्मगता कर्माकर्मविवजीता।

कर्मसिद्धिरता कामी कर्मज्ञाननिवासिनी॥ ३६-६८॥

कर्मधर्मसुशीला च कर्मधर्मवशङ्करी।

कनकाब्जसुनिर्माणमहासिंहासनस्थिता॥ ३६-६९॥

कनकग्रन्थिमाल्याढ्या कनकग्रन्थिभेदिनी।

कनकोद्भवकन्या च कनकाम्भोजवासिनी॥ ३६-७०॥

कालकूटादिकूटस्था किटिशब्दान्तरस्थिता।

कङ्कपक्षिनादमुखा कामधेनूद्भवा कला॥ ३६-७१॥

कङ्कणाभा धरा कर्द्दा कर्द्दमा कर्द्दमस्थिता।

कर्द्दमस्थजलाच्छन्ना कर्द्दमस्थजनप्रिया॥ ३६-७२॥

कमठस्था कार्मुकस्था कम्रस्था कंसनाशिनी।

कंसप्रिया कंसहन्त्री कंसाज्ञानकरालिनी॥ ३६-७३॥

काञ्चनाभा काञ्चनदा कामदा क्रमदा कदा।

कान्तभिन्ना कान्तचिन्ता कमलासनवासिनी॥ ३६-७४॥

कमलासनसिद्धिस्था कमलासनदेवता।

कुत्सिता कुत्सितरता कुत्सा शापविवर्जिता॥ ३६-७५॥

कुपुत्ररक्षिका कुल्ला कुपुत्रमानसापहा।

कुजरक्षकरी कौजी कुब्जाख्या कुब्जविग्रहा॥ ३६-७६॥

कुनखी कूपदीक्षुस्था कुकरी कुधनी कुदा।

कुप्रिया कोकिलानन्दा कोकिला कामदायिनी॥ ३६-७७॥

कुकामिना कुबुद्धिस्था कूर्पवाहन मोहिनी।

कुलका कुललोकस्था कुशासनसुसिद्धिदा॥ ३६-७८॥

कौशिकी देवता कस्या कन्नादनादसुप्रिया।

कुसौष्ठवा कुमित्रस्था कुमित्रशत्रुघातिनी॥ ३६-७९॥

कुज्ञाननिकरा कुस्था कुजिस्था कर्जदायिनी।

ककर्जा कर्ज्जकरिणी कर्जवद्धविमोहिनी॥ ३६-८०॥

कर्जशोधनकर्त्री च कालास्त्रधारिणी सदा।

कुगतिः कालसुगतिः कलिबुद्धिविनाशिनी॥ ३६-८१॥

कलिकालफलोत्पन्ना कलिपावनकारिणी।

कलिपापहरा काली कलिसिद्धिसुसूक्ष्मदा॥ ३६-८२॥

कालिदासवाक्यगता कालिदाससुसिद्धिदा।

कलिशिक्षा कालशिक्षा कन्दशिक्षापरायणा॥ ३६-८३॥

कमनीयभावरता कमनीयसुभक्तिदा।

करकाजनरूपा च कक्षावादकरा। करा॥ ३६-८४॥

कञ्चुवर्णा काकवर्णा क्रोष्टुरूपा कषामला।

क्रोष्टूनादरता कीता कातरा कातरप्रिया॥ ३६-८५॥

कातरस्था कातराज्ञा कातरानन्दकारिणी।

काशमर्द्दतरूद्भूता काशमर्द्दविभक्षिणी॥ ३६-८६॥

कष्टहानिः कष्टदात्री कष्टलोकविरक्तिदा।

कायागता कायसिद्धिः कायानन्दप्रकाशिनी॥ ३६-८७॥

कायगन्धहरा कुम्भा कायकुम्भा कठोरिणी।

कठोरतरुसंस्था च कठोरलोकनाशिनी॥ ३६-८८॥

कुमार्गस्थापिता कुप्रा कार्पासतरुसम्भवा।

कार्पासवृक्षसूत्रस्था कुवर्गस्था करोत्तरा॥ ३६-८९॥

कर्णाटकर्णसम्भूता कार्णाटी कर्णपूजिता।

कर्णास्त्ररक्षिका कर्णा कर्णहा कर्णकुण्डला॥ ३६-९०॥

कुन्तलादेशनमिता कुटुम्बा कुम्भकारिका।

कर्णासरासना कृष्टा कृष्णहस्ताम्बुजाजीता॥ ३६-९१॥

कृष्णाङ्गी कृष्णदेहस्था कुदेशस्था कुमङ्गला।

क्रूरकर्मस्थिता कोरा किरात कुलकामिनी॥ ३६-९२॥

कालवारिप्रिया कामा काव्यवाक्यप्रिया क्रुधा।

कञ्जलता कौमुदी च कुज्योत्स्ना कलनप्रिया॥ ३६-९३॥

कलना सर्वभूतानां कपित्थवनवासिनी।

कटुनिम्बस्थिता काख्या कवर्गाख्या कवर्गीका॥ ३६-९४॥

किरातच्छेदिनी कार्या कार्याकार्यविवजीता।

कात्यायनादिकल्पस्था कात्यायनसुखोदया॥ ३६-९५॥

कुक्षेत्रस्था कुलाविघ्ना करणादिप्रवेशिनी।

काङ्काली किङ्कला काला किलिता सर्वकामिनी॥ ३६-९६॥

कीलितापेक्षिता कूटा कूटकुङ्कुमचर्चीता।

कुङ्कुमागन्धनिलया कुटुम्बभवनस्थिता॥ ३६-९७॥

कुकृपा करणानन्दा कवितारसमोहिनी।

काव्यशास्त्रानन्दरता काव्यपूज्या कवीश्वरी॥ ३६-९८॥

कटकादिहस्तिरथहयदुन्दुभिशब्दिनी।

कितवा क्रूरधूर्तस्था केकाशब्दनिवासिनी॥ ३६-९९॥

कें केवलाम्बिता केता केतकीपुष्पमोहिनी।

कैं कैवल्यगुणोद्वास्या कैवल्यधनदायिनी॥ ३६-१००॥

करी धनीन्द्रजननी काक्षताक्षकलङ्किनी।

कुडुवान्ता कान्तिशान्ता कांक्षा पारमहंस्यगा॥ ३६-१०१॥

कर्त्री चित्ता कान्तवित्ता कृषणा कृषिभोजिनी।

कुङ्कुमाशक्तहृदया केयूरहारमालिनी॥ ३६-१०२॥

कीश्वरी केशवा कुम्भा कैशोरजनपूजिता।

कलिकामध्यनिरता कोकिलस्वरगामिनी॥ ३६-१०३॥

कुरदेहहरा कुम्बा कुडुम्बा कुरभेदिनी।

कुण्डलीश्वरसंवादा कुण्डलीश्वरमध्यगा॥ ३६-१०४॥

कालसूक्ष्मा कालयज्ञा कालहारकरी कहा।

कहलस्था कलहस्था कलहा कलहाङ्करी॥ ३६-१०५॥

कुरङ्गी श्रीकुरङ्गस्था कोरङ्गी कुण्डलापहा।

कुकलङ्की कृष्णबुद्धिः कृष्णा ध्याननिवासिनी॥ ३६-१०६॥

कुतवा काष्ठवलता कृतार्थकरणी कुसी।

कलनकस्था कस्वरस्था कलिका दोषभञ्जजा॥ ३६-१०७॥

कुसुमाकारकमला कुसुमस्त्रग्विभूषणा।

किञ्जल्का कैतवार्कशा कमनीयजलोदया॥ ३६-१०८॥

ककारकूटसर्वाङ्गी ककाराम्बरमालिनी।

कालभेदकरा काटा कर्पवासा ककुत्स्थला॥ ३६-१०९॥

कुवासा कबरी कर्वा कूसवी कुरुपालनी।

कुरुपृष्ठा कुरुश्रेष्ठा कुरूणां ज्ञाननाशिनी॥ ३६-११०॥

कुतूहलरता कान्ता कुव्याप्ता कष्टबन्धना।

कषायणतरुस्था च कषायणरसोद्भवा॥ ३६-१११॥

कतिविद्या कुष्ठदात्री कुष्ठिशोकविसर्जनी।

काष्ठासनगता कार्याश्रया का श्रयकौलिका॥ ३६-११२॥

कालिका कालिसन्त्रस्ता कौलिकध्यानवासिनी।

क्लृप्तस्था क्लृप्तजननी क्लृप्तच्छन्ना कलिध्वजा॥ ३६-११३॥

केशवा केशवानन्दा केश्यादिदानवापहा।

केशवाङ्गजकन्या च केशवाङ्गजमोहिनी॥ ३६-११४॥

किशोरार्चनयोग्या च किशोरदेवदेवता।

कान्तश्रीकरणी कुत्या कपटा प्रियघातिनी॥ ३६-११५॥

कुकामजनिता कौञ्चा कौञ्चस्था कौञ्चवासिनी।

कूपस्था कूपबुद्धिस्था कूपमाला मनोरमा॥ ३६-११६॥

कूपपुष्पाश्रया कान्तिः क्रमदाक्रमदाक्रमा।

कुविक्रमा कुक्रमस्था कुण्डलीकुण्डदेवता॥ ३६-११७॥

कौण्डिल्यनगरोद्भूता कौण्डिल्यगोत्रपूजिता।

कपिराजस्थिता कापी कपिबुद्धिबलोदया॥ ३६-११८॥

कपिध्यानपरा मुख्या कुव्यवस्था कुसाक्षिदा।

कुमध्यस्था कुकल्पा च कुलपङ्क्तिप्रकाशिनी॥ ३६-११९॥

कुलभ्रमरदेहस्था कुलभ्रमरनादिनी।

कुलासङ्गा कुलाक्षी च कुलमत्ता कुलानिला॥ ३६-१२०॥

कलिचिन्हा कालचिन्हा कण्ठचिन्हा कवीन्द्रजा।

करीन्द्रा कमलेशश्रीः कोटिकन्दर्पदर्पहा॥ ३६-१२१॥

कोटितेजोमयी कोट्या कोटीरपद्ममालिनी।

कोटीरमोहिनी कोटिः कोटिकोटिविधूद्भवा॥ ३६-१२२॥

कोटिसूर्यसमानास्या कोटिकालानलोपमा।

कोटीरहारललिता कोटिपर्वतधारिणी॥ ३६-१२३॥

कुचयुग्मधरा देवी कुचकामप्रकाशिनी।

कुचानन्दा कुचाच्छन्ना कुचकाठिन्यकारिणी॥ ३६-१२४॥

कुचयुग्ममोहनस्था कुचमायातुरा कुचा।

कुचयौवनसम्मोहा कुचमर्द्दनसौख्यदा॥ ३६-१२५॥

काचस्था काचदेहा च काचपूरनिवासिनी।

काचग्रस्था काचवर्णा कीचकप्राणनाशिनी॥ ३६-१२६॥

कमला लोचनप्रेमा कोमलाक्षी मनुप्रिया।

कमलाक्षी कमलजा कमलास्या करालजा॥ ३६-१२७॥

कमलाङ्घ्रिद्वया काम्या कराख्या करमालिनी।

करपद्मधरा कन्दा कन्दबुद्धिप्रदायिनी॥ ३६-१२८॥

कमलोद्भवपुत्री च कमला पुत्रकामिनी।

किरन्ती किरणाच्छन्ना किरणप्राणवासिनी॥ ३६-१२९॥

काव्यप्रदा काव्यचित्ता काव्यसारप्रकाशिनी।

कलाम्बा कल्पजननी कल्पभेदासनस्थिता॥ ३६-१३०॥

कालेच्छा कालसारस्था कालमारणघातिनी।

किरणक्रमदीपस्था कर्मस्था क्रमदीपिका॥ ३६-१३१॥

काललक्ष्मीः कालचण्डा कुलचण्डेश्वरप्रिया।

काकिनीशक्तिदेहस्था कितवा किन्तकारिणी॥ ३६-१३२॥

करञ्चा कञ्चुका क्रौञ्चा काकचञ्चुपुटस्थिता।

काकाख्या काकशब्दस्था कालाग्निदहनाथीका॥ ३६-१३३॥

कुचक्षनिलया कुत्रा कुपुत्रा क्रतुरक्षिका।

कनकप्रतिभाकारा करबन्धाकृतिस्थिता॥ ३६-१३४॥

कृतिरूपा कृतिप्राणा कृतिक्रोधनिवारिणी।

कुक्षिरक्षाकरा कुक्षा कुक्षिब्रह्माण्डधारिणी॥ ३६-१३५॥

कुक्षिदेवस्थिता कुक्षिः क्रियादक्षा क्रियातुरा।

क्रियानिष्ठा क्रियानन्दा क्रतुकर्मा क्रियाप्रिया॥ ३६-१३६॥

कुशलासवसंशक्ता कुशारिप्राणवल्लभा।

कुशारिवृक्षमदिरा काशीराजवशोद्यमा॥ ३६-१३७॥

काशीराजगृहस्था च कर्णभ्रातृगृहस्थिता।

कर्णाभरणभूषाढ्या कण्ठभूषा च कण्ठिका॥ ३६-१३८॥

कण्ठस्थानगता कण्ठा कण्ठपद्मनिवासिनी।

कण्ठप्रकाशकरिणी कण्ठमाणिक्यमालिनी॥ ३६-१३९॥

कण्ठपद्मसिद्धिकरी कण्ठाकाशनिवासिनी

कण्ठपद्मसाकिनीस्था कण्ठषोडशपत्रिका॥ ३६-१४०॥

कृष्णाजिनधरा विद्या कृष्णाजिनसुवाससी।

कुतकस्था कुखेलस्था कुण्डवालङ्कृताकृता॥ ३६-१४१॥

कलगीता कालघजा कलभङ्गपरायणा।

कालीचन्द्रा कला काव्या कुचस्था कुचलप्रदा॥ ३६-१४२॥

कुचौरघातिनी कच्छा कच्छादस्था कजातना।

कञ्जाछदमुखी कञ्जा कञ्जतुण्डा कजीवली॥ ३६-१४३॥

कामराभार्सुरवाद्यस्था कियधंकारनादिनी।

कणादयज्ञसूत्रस्था कीलालयज्ञसञ्ज्ञका॥ ३६-१४४॥

कटुहासा कपाटस्था कटधूमनिवासिनी।

कटिनादघोरतरा कुट्टला पाटलिप्रिया॥ ३६-१४५॥

कामचाराब्जनेत्रा च कामचोद्गारसंक्रमा।

काष्ठपर्वतसंदाहा कुष्ठाकुष्ठ निवारिणी॥ ३६-१४६॥

कहोडमन्त्रसिद्धस्था काहला डिण्डिमप्रिया।

कुलडिण्डिमवाद्यस्था कामडामरसिद्धिदा॥ ३६-१४७॥

कुलामरवध्यस्था कुलकेकानिनादिनी।

कोजागरढोलनादा कास्यवीररणस्थिता॥ ३६-१४८॥

कालादिकरणच्छिद्रा करुणानिधिवत्सला।

क्रतुश्रीदा कृतार्थश्रीः कालतारा कुलोत्तरा॥ ३६-१४९॥

कथापूज्या कथानन्दा कथना कथनप्रिया।

कार्थचिन्ता कार्थविद्या काममिथ्यापवादिनी॥ ३६-१५०॥

कदम्बपुष्पसङ्काशा कदम्बपुष्पमालिनी।

कादम्बरी पानतुष्टा कायदम्भा कदोद्यमा॥ ३६-१५१॥

कुङ्कुलेपत्रमध्यस्था कुलाधारा धरप्रिया।

कुलदेवशरीरार्धा कुलधामा कलाधरा॥ ३६-१५२॥

कामरागा भूषणाढ्या कामिनीरगुणप्रिया।

कुलीना नागहस्ता च कुलीननागवाहिनी॥ ३६-१५३॥

कामपूरस्थिता कोपा कपाली बकुलोद्भवा।

कारागारजनापाल्या कारागारप्रपालिनी॥ ३६-१५४॥

क्रियाशक्तिः कालपङ्क्तिः कार्णपङ्क्तिः कफोदया।

कामफुल्लारविन्दस्था कामरूपफलाफला॥ ३६-१५५॥

कायफला कायफेणा कान्ता नाडीफलीश्वरा।

कमफेरुगता गौरी कायवाणी कुवीरगा॥ ३६-१५६॥

कबरीमणिबन्धस्था कावेरीतीर्थसङ्गमा।

कामभीतिहरा कान्ता कामवाकुभ्रमातुरा॥ ३६-१५७॥

कविभावहरा भामा कमनीयभयापहा।

कामगर्भदेवमाता कामकल्पलतामरा॥ ३६-१५८॥

कमठप्रियमांसादा कमठा मर्कटप्रिया।

किमाकारा किमाधारा कुम्भकारमनस्थिता॥ ३६-१५९॥

काम्ययज्ञस्थिता चण्डा काम्ययज्ञोपवीतिका।

कामयागसिद्धिकरी काममैथुनयामिनी॥ ३६-१६०॥

कामाख्या यमलाशस्था कालयामा कुयोगिनी।

कुरुयागहतायोग्या कुरुमांसविभक्षिणी॥ ३६-१६१॥

कुरुरक्तप्रियाकारी किङ्करप्रियकारिणी।

कर्त्रीश्वरी कारणात्मा कविभक्षा कविप्रिया॥ ३६-१६२॥

कविशत्रुप्रष्ठलग्ना कैलासोपवनस्थिता।

कलित्रिधा त्रिसिद्धिस्था कलित्रिदिनसिद्धिदा॥ ३६-१६३॥

कलङ्करहिता काली कलिकल्मषकामदा।

कुलपुष्परङ्ग सूत्रमणिग्रन्थिसुशोभना॥ ३६-१६४॥

कम्बोजवङ्गदेशस्था कुलवासुकिरक्षिका।

कुलशास्त्रक्रिया शान्तिः कुलशान्तिः कुलेश्वरी॥ ३६-१६५॥

कुशलप्रतिभा काशी कुलषट्चक्रभेदिनी।

कुलषट्पद्ममध्यस्था कुलषट्पद्मदीपिनी॥ ३६-१६६॥

कृष्णमार्जारकोलस्था कृष्णमार्जारषष्ठिका।

कुलमार्जारकुपिता कुलमार्जारषोडशी॥ ३६-१६७॥

कालान्तकवलोत्पन्ना कपिलान्तकघातिनी।

कलहासा कालहश्री कलहार्था कलामला॥ ३६-१६८॥

कक्षपपक्षरक्षा च कुक्षेत्रपक्षसंक्षया।

काक्षरक्षासाक्षिणी च महामोक्षप्रतिष्ठिता॥ ३६-१६९॥

अर्ककोटिशतच्छाया आन्वीक्षिकिकराचीता।

कावेरीतीरभूमिस्था आग्नेयार्कास्त्रधारिणी॥ ३६-१७०॥

इं किं श्रीं कामकमला पातु कैलासरक्षिणी।

मम श्रीं ईं बीजरूपा पातु काली शिरस्थलम्॥ ३६-१७१॥

उरुस्थलाब्जं सकलं तमोल्का पातु कालिका।

ऊडुम्बन्यर्करमणी उष्ट्रेग्रा कुलमातृका॥ ३६-१७२॥

कृतापेक्षा कृतिमती कुङ्कारी किंलिपिस्थिता।

कुंदीर्घस्वरा क्लृप्ता च कें कैलासकराचीका॥ ३६-१७३॥

कैशोरी कैं करी कैं कें बीजाख्या नेत्रयुग्मकम्।

कोमा मतङ्गयजिता कौशल्यादि कुमारिका॥ ३६-१७४॥

पातु मे कर्णयुग्मन्तु क्रौं क्रौं जीवकरालिनी।

गण्डयुग्मं सदा पातु कुण्डली अङ्कवासिनी॥ ३६-१७५॥

अर्ककोटिशताभासा अक्षराक्षरमालिनी।

आशुतोषकरी हस्ता कुलदेवी निरञ्जना॥ ३६-१७६॥

पातु मे कुलपुष्पाढ्या पृष्ठदेशं सुकृत्तमा।

कुमारी कामनापूर्णा पार्श्वदेशं सदावतु॥ ३६-१७७॥

देवी कामाख्यका देवी पातु प्रत्यङ्गिरा कटिम्।

कटिस्थदेवता पातु लिङ्गमूलं सदा मम॥ ३६-१७८॥

गुह्यदेशं काकिनी मे लिङ्गाधः कुलसिंहिका।

कुलनागेश्वरी पातु नितम्बदेशमुत्तमम्॥ ३६-१७९॥

कङ्कालमालिनी देवी मे पातु चारुमूलकम्।

जंघायुग्मं सदा पातु कीतीः चक्रापहारिणी॥ ३६-१८०॥

पादयुग्मं पाकसंस्था पाकशासनरक्षिका।

कुलालचक्रभ्रमरा पातु पादाङ्गुलीर्मम॥ ३६-१८१॥

नखाग्राणि दशविधा तथा हस्तद्वयस्य च।

विंशरूपा कालनाक्षा सर्वदा परिरक्षतु॥ ३६-१८२॥

कुलच्छत्राधाररूपा कुलमण्डलगोपिता।

कुलकुण्डलिनी माता कुलपण्डितमण्डिता॥ ३६-१८३॥

काकाननी काकतुण्डी काकायुः प्रखरार्कजा।

काकज्वरा काकजिह्वा काकाजिह्वा सनस्थिता॥ ३६-१८४॥

कपिध्वजा कपिक्रोशा कपिबाला हिकस्वरा।

कालकाञ्ची विंशतिस्था सदा विंशनखाग्रहम्॥ ३६-१८५॥

पातु देवी कालरूपा कलिकालफलालया।

वाते वा पर्वते वापि शून्यागारे चतुष्पथे॥ ३६-१८६॥

कुलेन्द्रसमयाचारा कुलाचारजनप्रिया।

कुलपर्वतसंस्था च कुलकैलासवासिनी॥ ३६-१८७॥

महादावानले पातु कुमार्गे कुत्सितग्रहे।

राज्ञोऽप्रिये राजवश्ये महाशत्रुविनाशने॥ ३६-१८८॥

कलिकालमहालक्ष्मीः क्रियालक्ष्मीः कुलाम्बरा।

कलीन्द्रकीलिता कीला कीलालस्वर्गवासिनी॥ ३६-१८९॥

दशदिक्षु सदा पातु इन्द्रादिदशलोकपा।

नवच्छिन्ने सदा पातु सूर्यादिकनवग्रहा॥ ३६-१९०॥

पातु मां कुलमांसाढ्या कुलपद्मनिवासिनी।

कुलद्रव्यप्रिया मध्या षोडशी भुवनेश्वरी॥ ३६-१९१॥

विद्यावादे विवादे च मत्तकाले महाभये।

दुर्भीक्षादिभये चैव व्याधिसङ्करपीडिते॥ ३६-१९२॥

कालीकुल्ला कपाली च कामाख्या कामचारिणी।

सदा मां कुलसंसर्गे पातु कौले सुसङ्गता॥ ३६-१९३॥

सर्वत्र सर्वदेशे च कुलरूपा सदावतु।

इत्येतत् कथितं नाथ मातुः प्रसादहेतुना॥ ३६-१९४॥

अष्टोत्तरशतं नाम सहस्रं कुण्डलीप्रियम्।

कुलकुण्डलिनीदेव्याः सर्वमन्त्रसुसिद्धये॥ ३६-१९५॥

सर्वदेवमनूनाञ्च चैतन्याय सुसिद्धये।

अणिमाद्यष्टसिद्ध्यर्थं साधकानां हिताय च॥ ३६-१९६॥

ब्राह्मणाय प्रदातव्यं कुलद्रव्यपराय च।

अकुलीनेऽब्राह्मणे च न देयः कुण्डलीस्तवः।

प्रवृत्ते कुण्डलीचक्रे सर्वे वर्णा द्विजातयः॥ ३६-१९७॥

निवृत्ते भैरवीचक्रे सर्वे वर्णाः पृथक्--पृथक्।

कुलीनाय प्रदातव्यं साधकाय विशेषतः॥ ३६-१९८॥

दानादेव हि सिद्धिः स्यान्ममाज्ञाबलहेतुना।

मम क्रियायां यस्तिष्ठेत्स मे पुत्रो न संशयः॥ ३६-१९९॥

स आयाति मम पदं जीवन्मुक्तः स वासवः।

आसवेन समांसेन कुलवह्नौ महानिशि॥ ३६-२००॥

नाम प्रत्येकमुच्चार्य जुहुयात् कायसिद्धये।

पञ्चाचाररतो भूत्त्वा ऊद्र्ध्वरेता भवेद्यतिः॥ ३६-२०१॥

संवत्सरान्मम स्थाने आयाति नात्र संशयः।

एहिके कायसिद्धिः स्यात् दैहिके सर्वसिद्धिदः॥ ३६-२०२॥

वशी भूत्त्वा त्रिमार्गस्थाः स्वर्गभूतलवासिनः।

अस्य भृत्याः प्रभवन्ति इन्द्रादिलोकपालकाः॥ ३६-२०३॥

स एव योगी परमो यस्यार्थेऽयं सुनिश्चलः।

स एव खेचरो भक्तो नारदादिशुकोपमः॥ ३६-२०४॥

यो लोकः प्रजपत्येवं स शिवो न च मानुषः।

स समाधिगतो नित्यो ध्यानस्थो योगिवल्लभः॥ ३६-२०५॥

चतुर्व्यूहगतो देवः सहसा नात्र संशयः।

यः प्रधारयते भक्त्या कण्ठे वा मस्तके भुजे॥ ३६-२०६॥

स भवेत् कालिकापुत्रो विद्यानाथः स्वयंभुवि।

धनेशः पुत्रवान् योगी यतीशः सर्वगो भवेत्॥ ३६-२०७॥

वामा वामकरे धृत्त्वा सर्वसिद्धीश्वरो भवेत्॥ ३६-२०८॥

यदि पठति मनुष्यो मानुषी वा महत्या।

सकलधनजनेशी पुत्रिणी जीववत्सा।

कुलपतिरिह लोके स्वर्गमोक्षैकहेतुः

स भवति भवनाथो योगिनीवल्लभेशः॥ ३६-२०९॥

पठति य इह नित्यं भक्तिभावेन मर्त्यो

हरणमपि करोति प्राणविप्राणयोगः।

स्तवनपठनपुण्यं कोटिजन्माघनाश।

कथितुमपि न शक्तोऽहं महामांसभक्षा॥ ३६-२१०॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षट्चक्रप्रकाशे भैरवीभैरवसंवादे महाकुलकुण्डलिनी अष्टोत्तरसहस्रनामस्तवकवचं नाम षट्त्रिंशत्तमः पटलः॥ ३६॥

अथ सप्तत्रिंशः पटलः

आनन्दभैरव उवाच

श्रुतञ्च परमं ज्ञानं धर्माधर्मविवेचनम्।

सर्ववेदान्तसारं च सारात्सारं परात्परम्॥ ३७-१॥

कुण्डलीस्तवनं श्रुत्वा पूर्णोऽहं जगदीश्वरि।

ईदानीं श्रोतुमिच्छामि स्वाधिष्ठानं प्रकाशकम्॥ ३७-२॥

यदि मे सुकृपादृष्टिरानन्दघनसञ्चये

वद श्रीकुण्डलीयोगं स्वाधिष्ठानविभेदनम्॥ ३७-३॥

येन क्रमेण भेदं स्यात्तत्प्रकारं विनिर्णय।

आनन्दभैरवी उवाच

महाकाल महावीर आनन्दसागरपिरय॥ ३७-४॥

योग्योऽसि योगमार्गाणामत एव प्रकथ्यते।

येन क्रमेण चक्रस्य भेदः स्यादमरो भवेत्॥ ३७-५॥

अमरो जितचित्तारिः क्रोधजित् प्रबलो बली।

धर्माधर्मज्ञानवांश्च योगी भवति सज्जनः॥ ३७-६॥

परकालदर्शी विज्ञः स्यात् क्रतुश्रद्धापरायणः।

अहङ्कारविहीनो यः स योगी भवति ध्रुवम्॥ ३७-७॥

महावीरसुसङ्गिनी च सङ्गदोषविवजीतः।

महात्मापरमं ब्रह्मज्ञानी भवति योगिराट्॥ ३७-८॥

विख्यातः सर्वदेशे च किन्तु स्वाश्रयवजीतः।

बालको विक्रमी धन्वी धनुर्बाणधरोऽव्ययः॥ ३७-९॥

स भवेत् योगमार्गेशो विवेकी पापवजीतः।

अविद्याग्रन्थिनिश्चेष्टो विवेकधर्मचातकः॥ ३७-१०॥

चतुरो विषमज्ञानवजीतो यज्ञकृत् शुचिः।

स भवेद् योगिनीपुत्रो योगानामधिपो भवेत्॥ ३७-११॥

यदि योगस्थितो मन्त्री वायवीशक्तिनिर्भरः।

स एव योगी षण्मासादिति मे तन्त्रनिर्णयः॥ ३७-१२॥

यो मे तन्त्राणि जानाति सदर्थज्ञानजानि च।

स एव चतुरो योगी मम भक्तो न संशयः॥ ३७-१३॥

यदि वायुपानरतो मन्त्री भवति साधकः॥ ३७-१४॥

अथ स्वाधिष्ठानं कुलवरगतं षड्दलगत।

प्रभाकारं विष्णोरतिशयपदं कामनिलयम्।

महायोगेन्द्राणां मनसि निलयं चारुकिरण।

शरच्चन्द्रज्योत्स्नायुतमतिधनं भव्यविषयम्॥ ३७-१५॥

सदाभावक्षेत्रे सकलसुधियो वेद ... ...

यदामापक्षेमे सकलसुधियो वेदपथगाः।

विचारं कुर्वन्ति क्षितिगतरताः श्रीप्रभृतयः।

महाविष्णोः पीताम्बर नरपते श्यामलतनोः।

( प्रकाशस्यान्तःपटस्थ नटवरस्यातिनिलयम्)।

विटच्छायामध्ये निवसति यथा गोकुलकुले॥ ३७-१६ ॥

हरिध्यानं कुर्यान्निरवधिमहानन्दरसिकः।

स एवात्मा साक्षादिह नववरः षोडशयुवा

महासर्पारिस्थं स्थितिकरणगं नागगमन।

मुखं वंशीनादध्वनिगुणधरं भावयति कः॥ ३७-१७॥

स एवात्मा नित्यो यतिरिह दले कोमलकुले।

कुलागारे सारे सरसिजयुते षड्दलवरे।

सुरानन्दश्रीदं दिवि दमनकर्त्तारममद।

सुधाकान्तं कृष्णं परमपुरुषं भावयति कः॥ ३७-१८॥

महाविद्यासिद्धं कुलपतिमनोमान्ययजित।

मुकुन्दं श्रीकृष्णं रसदलगतं स्वागमगत।

मुरारिं पापारिं नवयुवतिहृत्पद्मसुगत।

हृषीकेशं विष्णुं विषयकरणं भावयति कः॥ ३७-१९॥

स योगेन्द्रो ज्ञानी जयति सुकृतौ कौतुकवता।

रमेशं श्रीकृष्णं रसविषहरं मानसचरम्।

सरस्वत्या युक्तं कुलरसमयं मुक्तिजडित।

भजेच्चैतन्यान्तं सुरगुरुवरं मोक्षमयते॥ ३७-२०॥

यतीन्द्रः सश्रीकः प्रचयति निजं भाव्यविषय।

पुराणं योगीन्द्रं हरिमखिलपं कामनिलयम्।

महासूक्ष्मं द्वारं कुलवधुरतं वामकिरण।

विशालाक्षं कृष्णं निजरसकुले कान्तममरम्॥ ३७-२१॥

कृपासाक्षीज्ञानं गुणगदितदेहं दाहरहित।

महाशौलं सत्यं कुवलयकरिं हन्ति मरणम्।

अघावीशं श्रीशं शशिमुखिकराम्भोजयजित।

तमात्मानं कृष्णं निजकुलदले योऽपि भजति॥ ३७-२२॥

महाशब्दोत्पन्नं प्रकृतिविकृतिं कारणकृति।

कृपासिन्धुं कृष्णं कुलवधुशतामोदमिलितम्।

जगन्नाथं स्तौति क्षितिपतिवशायोपकरण।

विराटं ब्रह्माण्डं करणगमहाविष्णुमरणम्॥ ३७-२३॥

विनोदं व्याकर्तुं त्रिभुवनपतिः श्रीपतिरहो।

प्रचण्डे संसारे उदयति सदाभावसदने।

महामेघश्यामस्त्रिफलकरुणासागरकुले।

अमूल्ये सञ्चारे विषयरसनासञ्चय विषम्॥ ३७-२४॥

स कृष्णः श्री विष्णुः प्रकृतिगदया हन्ति सतत।

अतः कृष्णो ध्येयः सुरनरगणैः पञ्चसुमुखैः।

कुलाम्भोजे षट्के मनरसदले ध्यानफलितः।

किराती राकिण्या नयन कमलापानमधुरम्॥ ३७-२५॥

धराधारं पूर्णं गगननिलयं कालपुरुष।

मनोगम्यं रम्यं नव नयनलावण्यरसिकम्।

सदा ध्यायेत् कृष्णं कुरुगणरिपुं यः कुलपतिः।

निरालम्बः श्यामः प्रकृतियमुनातीरतरुगः॥ ३७-२६॥

कुलीना गोपीभिः परिमिलितपार्श्वस्थलसुखः।

प्रधानः क्षेत्रज्ञः क्षितिपतिकराम्भोजयजितः।

प्रकाशात्मा नाथः प्रचयकरुणो ध्येय इरया।

मनोधर्मं च्छत्रं त्रिविधगुणगानाश्रितकरम्॥ ३७-२७॥

त्रिकाण्डस्थं खण्डोद्भववनरसं प्राणरसिक।

यदा स्तौति प्रातः समयमफले चारुवरदम्।

महामोक्षक्षेत्रं कुलवधुयुतं कृष्णपरम।

गुणेशं राधेशं रजनिविधुनितं वेदनिलयम्॥ ३७-२८॥

क्रियादक्षं सूक्ष्मं समयगुणयोगाङ्कजडित।

त्रिकोणस्थं गङ्गाजलगलितसारं तारकतनुम्।

महाकालानन्दं गगनघनवर्णं सजलक।

प्रभावारं भावं तरुणनववपुः श्रीधरमलम्॥ ३७-२९॥

वनोत्फुलाम्भोजा मनविरचना भालकलया।

महाशोभारूपं कुलपुरुषगं व्याश्रयति यः।

स योगी संसारे भवति रसनायोगनिरतः।

मनो यो व्याधाय प्रचुरफलदं कृष्णमखिलम्॥ ३७-३०॥

महाज्ञानोत्साहं गतिगुणवहिः प्राणनिचय।

जगत्तारं ब्रह्म निरवधिमहायोगकिरणम्।

यदा लोकस्तौति प्रतिदिनमिहानन्दघटित।

विकारं सर्वेषां ग्रहणनिलनं भास्करविधोः॥ ३७-३१॥

महाराहुग्रासं शतशतमहापुण्यनिकरं।

कुलानन्दं विष्णुं शशिशतघटारामकिरणम्।

मनोगम्यं सूक्ष्मं त्रिगुणजडितं भावयति कः॥ ३७-३२॥

कृष्णभक्तिं मुदा कृष्णं ध्यात्वा कृत्वा यतिर्भवेत्।

श्रीकृष्णचरणाम्भोजे तस्य भक्तिर्न संशयः॥ ३७-३३॥

कृष्णब्रह्म कृष्णब्रह्मा च त्रिध्यानपरायणः।

स कृष्णस्तं जनं नीत्वा ददाति अपि शङ्कर॥ ३७-३४॥

विना कृष्णपदाम्भोजं स्वाधिष्ठानं कुतो जयम्।

कृष्णध्यानान्महापद्मभेदं प्राप्नोति शङ्कर॥ ३७-३५॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने षट्चक्रप्रकाशे भैरवीभैरवसंवादे

स्वाधिष्ठानश्रीकृष्णराकिणीसाधनं नाम सप्तत्रिंशत्तमः पटलः॥ ३७॥

## अथाष्टात्रिंशः पटलः

आनन्दभैरवी उवाच

श्रृणु नाथ प्रवक्ष्यामि श्रीकृष्णसाधनोत्तमम्।

येन क्रमेण भक्तिः स्यात्कालजालवशो भवेत्॥ ३८-१॥

मम पादाम्बुजे भक्तिर्भवत्येव न संशयः।

भक्तिमान् यः साधकेन्द्रो महाविष्णुं भजेद्यदि॥ ३८-२॥

शिवतुल्यो भवेन्नाथ मम भक्तो महीतले॥ ३८-३॥

श्रीकृष्णं जगदीश्वरं त्रिजगतामानन्दमोक्षात्मक।

सम्पूर्णं त्रिगुणावृतं गुणधरं सत्त्वाधिदैवं परम्।

लिङ्गाधः स्थितिराज्यपालपुरुषं पञ्चाननस्थायिन।

श्रीविष्णुं शुभदं जनो यदि भजेल्लोकः सशक्तिं सुखी॥ ३८-४॥

आदौ कामं त्रिसर्गं कुलवधुनियुतं कामबीजं त्रिसर्गं।

श्रीकृष्णं वारयुग्मं प्रणययुगलकं चन्द्रिकाकाशयुक्तम्।

ब्रह्मद्वन्द्वं भजामि प्रकृति पुरुषिकां काकिनीं तत्परे च।

भूयो भूयो भजामि श्रवणगलयनं वह्निजायाविलग्नम्॥ ३८-५॥

एतन्मन्त्रं जपित्वा प्रणवमिति नमोऽन्तं तथाद्ये मिलित्वा।

भूयो भूयो नमोऽन्तं त्रिभुवनसहितं क्षोभयेत्तत् क्षणेन।

राजश्रीस्तस्य शीर्षे निरवधि वसुधा मन्दिरे संस्थिरा स्यात्।

कालच्छेदं प्रकृत्य प्रवसति सुमुखी ब्रह्मदण्डे च काले॥ ३८-६॥

ततः प्राणे दैवनाथ मम सन्तोषवर्द्धन।

इदानीं नरसिंहस्य मन्त्रं शृणु महाप्रभो॥ ३८-७॥

कान्तबीजं समुद्धृत्य युगलं युगलं स्मृतम्।

महानृसिंहमन्त्रेण पूजयामि नमो नमः॥ ३८-८॥

स्वाधिष्ठाने महापद्मे मनोनिष्पापहेतुना।

मनो विधाय यो योगी जपेन्मन्त्रं पुनः पुनः॥ ३८-९॥

एतन्मन्त्रजपेनापि सिद्धो भवति साधकः।

एतन्मन्त्रप्रभावेण भावसिद्धिं क्षणाल्लभेत्॥ ३८-१०॥

साधको यदि भूमिस्थः साधयेत्तु हरेर्मनुम्।

रेणुसंख्या क्रमेणैव सिद्धिं प्राप्नोति वीर्यतः॥ ३८-११॥

अथ वक्ष्ये महादेव सर्ववर्णसुसारकम्।

वर्णमालास्वसंशक्तो जप्त्वा सिद्धिमवाप्नुयात्॥ ३८-१२॥

सिद्धिमन्त्रं प्रार्थयते यदि मर्त्यो निराश्रयः।

निर्जने संस्थिरो भूत्त्वा एकाकी दीपवजीतः॥ ३८-१३॥

निःशङ्कं प्रजपेन्मन्त्रं स्वाधिष्ठानाब्जसङ्गते।

वशीकृतं जगत्सर्वं येन तत्क्रममाश्रृणु॥ ३८-१४॥

प्रणवं पूर्वमुच्चार्य नान्तबीजं तथोद्धरेत्।

वह्निबीजसमालग्नमधोदन्तस्वरान्वितम्॥ ३८-१५॥

नादबिन्दुसमायुक्तं पुनर्वारद्वयं वदेत्।

नरसिंहाय शब्दान्ते पुनर्वारत्रयं वदेत्॥ ३८-१६॥

देवीबीजं शक्तिबीजं स्वाहान्तं मनुमुद्धरेत्।

एतन्मन्त्रप्रयोगेण कुण्डलीवशमानयेत्॥ ३८-१७॥

स्वाधिष्ठाने स्थिरीभावं प्राप्नोति साधकाग्रणीः।

सर्वेषां प्राणगो भूत्वा प्रबलोऽसौ महीतले॥ ३८-१८॥

शीतं रौद्रं समं तस्य पापापापं जयाजयम्।

धर्माधर्मः सदा ज्ञानं नित्यज्ञानं समाप्नुयात्॥ ३८-१९॥

पुनः श्रीकृष्णमन्त्राश्च सर्वदेवनिषेवकाः।

यज्ज्ञात्वा देवताः सर्वा सर्वदिङ्मुखपालकाः॥ ३८-२०॥

तत्प्रयोगं महादेव श्रृणु सिद्धेश्च लक्षणम्।

विना कृष्णाश्रयेणापि ब्रह्मा तुष्टो न कुत्रचित्॥ ३८-२१॥

न तुष्टा कुण्डली देवी पशुभावं विना प्रभो।

पशुभावे ज्ञानसिद्धिर्वीरभावे हि मोक्षभाक्॥ ३८-२२॥

दिव्यभावे समाधिस्थो जीवन्मुक्तः स उच्यते।

कान्तबीजं समुद्धृत्य शक्रवामस्वरान्वितम्॥ ३८-२३॥

नादबिन्दुसमाक्रान्तं कृष्णसम्बोधनं पदम्।

पुनः पूर्वमनुं युक्ता त्र्यक्षरात्मा महामनुः॥ ३८-२४॥

एतन्मन्त्रजपं कृत्वा योगी भवति योगिराट्।

योगोऽयं परमाह्लादकारकोऽनन्तरूपकः॥ ३८-२५॥

बहुभिः किं कथनीयं यः करोति फलं लभेत्।

ध्यायेत् श्रीगोपिकानाथं राकिणीमण्डलेश्वरम्॥ ३८-२६॥

जगतां सत्त्वनिलयं श्रीकृष्णं गोकुलेश्वरम्

स्वाधिष्ठानस्थितं श्यामं यजेद् भुजचतुष्टयम्॥ ३८-२७॥

शङ्खचक्रगदापद्म -- महाशोभामनोरमम्।

सर्वविद्यागतं काम्यं श्रीगोविन्दं सुशीतलम्॥ ३८-२८॥

महामोहहरं नाथं वनमालाविभूषितम्।

कोटिकन्याकराम्भोजजयितं सर्वसङ्गतम्॥ ३८-२९॥

किरीटिनं महावीरं बालेन्दुं चूडयान्वितम्।

गुञ्जामाला शोभिताङ्गं श्रीनाथं परमेश्वरम्॥ ३८-३०॥

पीताम्बरं मन्दहास्यं षड्पद्मदलमध्यगम्।

कामिनीप्राणनिलयं वसुदेवसुतं हरिम्॥ ३८-३१॥

एवं ध्यात्वा षड्दले च सदा वक्षःस्थकौस्तुभम्।

राजराजेश्वरं शौरिं भाव्यं श्रीवत्सलाञ्छनम्॥ ३८-३२॥

स्वाधिष्ठानगतं ध्यायेन्मुरारिसिद्धिगो नरः।

एवं ध्यात्वा पुरा ब्रह्मा नारायणगुणोदयः॥ ३८-३३॥

मनः कल्पितद्रव्यैश्च पूजयेत्परमेश्वरम्।

षड्दले च महापद्मे संध्यायेत् हरिमायजेत्॥ ३८-३४॥

षोडशोपचारयुक्तैर्मानसक्षेत्रसम्भवैः।

मनः कल्पितपीठे च स्थापयित्वा हरिं गुरुम्॥ ३८-३५॥

योगेश्वरं कृष्णमीशं राधिकाराकिणीश्वरम्।

एकान्तचित्ते चारोप्य कृष्णं पीठे प्रपूजयेत्॥ ३८-३६॥

तत्र दलाष्टकं पद्मं तत्र षट्कोणकर्णीकम्।

वेदद्वारोपशोभञ्च स्ंनिर्म्माय मनोहरम्॥ ३८-३७॥

पुनः पुनर्यदा ध्यायेत् षड्दलेषु दलेष्टकम्।

पञ्चोपचारैर्दशकैः श्रीविष्णुं परिपूजयेत्॥ ३८-३८॥

गन्धादयो नैवेद्यान्ता पूजापञ्चोपचारिका

आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम्॥ ३८-३९॥

मधुपर्काचमनस्नान--वसनाभरणानि च

सुगन्धिसुमनो धूपदीपनैवेद्यवन्दनम्॥ ३८-४०॥

प्रयोजयेदर्चनायामुपचारांस्तु षोडश

विष्णोराराधने कुर्यात् सर्वत्र विधिरेष यः॥ ३८-४१॥

विधिः स्यात् कृष्णविश्वेश समुद्भूतस्य सत्पतेः।

दशोपचारकथनं श्रूयतां वल्लभ प्रभो॥ ३८-४२॥

पाद्यमर्घ्यं तथाचामं मधुपर्काचमनं तथा।

गन्धादयो नैवेद्यान्ता उपचारा दशक्रमात्॥ ३८-४३॥

विष्णुं सम्पूज्य धीमान् हविष्याशीजीतेन्द्रियः।

सर्वदा परमानन्दः कालिकावशसेवकः॥ ३८-४४॥

सर्वज्ञानधरो वीरो विवेकी सर्वदर्शकः।

संभावयेत् स्वाधिष्ठाने निरन्तरं महाशुचिः॥ ३८-४५॥

बालकक्रियया व्याप्तो भावज्ञानी निरामयः।

स भवेत् कालिकापुत्रो यः कृष्णभावतत्परः॥ ३८-४६॥

कृष्णं सञ्चिन्तयेन्मूलकमलोद्र्ध्वे कुलात्मकम्।

स भवेत्कालिकापुत्रोऽष्टाङ्गसिद्धिगुणान्वितः॥ ३८-४७॥

मानसैः पूजनं कृत्वा शङ्खस्थापनमाचरेत्।

यत्कृत्वा मानसं योगं न कुर्याद्बहिरर्चनम्॥ ३८-४८॥

मूलमन्त्रदेवतायाः साधने दैवतं यजेत्।

देवस्य दक्षिणस्थांश्च पूर्वोपास्यसुसंस्थितान्॥ ३८-४९॥

पूजयेद् गन्ध पुष्पाद्यैस्तुल्यमन्त्रेण मन्त्रवित्।

ततः श्रीकृष्णपादाब्जं ध्यानं कुर्यान्मनोलयम्॥ ३८-५०॥

एवं क्रमेण तत्पद्मे स्थिरो भवति योगिराट्।

यः करोति शुद्धभावं महामोहहरं हरिम्॥ ३८-५१॥

स्थापयित्वा च षट्पद्मे महामोक्षमवाप्नुयात्।

यः प्रधानगुणज्ञश्च स मे शास्त्रार्थमाश्रयेत्॥ ३८-५२॥

इहकाले शत्रुलोके निवसत्येव योगिराट्।

पादाम्भोजे मनो दद्यान्मखकिञ्जल्कचित्रिते॥ ३८-५३॥

जङ्घायुगे चारुरामकदलीकाण्डमण्डिते।

ऊरुद्वये मत्तगजकरदण्डसमप्रभे॥ ३८-५४॥

गङ्गावर्तगभीरे तु नाभौ शुद्धविलेऽमले।

उदरे वक्षसि तथा हरौ श्रीवत्सकौस्तुभे॥ ३८-५५॥

पूर्णचन्द्रायुतपक्षे ललाटे चारुकुण्डले।

शङ्खचक्रगदाम्भोजे दोर्दण्डोपरिमण्डिते॥ ३८-५६॥

सहस्रादित्यसङ्काशे सकिरीटकुलद्वयम्।

स्थानेष्वेषु यजेन्मन्त्री विशुद्धः शुद्धचेतसा॥ ३८-५७॥

मनो निवेश्य कृष्णे वै तन्मयो भवति ध्रुवम्।

यावन्मनोलयं याति कृष्णे स्वात्मनि चिन्मये॥ ३८-५८॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षट्चक्रप्रकाशे भैरवभैरवीसंवादे श्रीकृष्णस्वाधिष्ठानप्रवेशो नाम अष्टात्रिंशत्तमः पटलः॥ ३८॥

अथैकोनचत्त्वारिंशः पटलः

आनन्दभैरवी उवाच

अथ नाथ प्रवक्ष्येऽहं संसारसाधनोत्तमम्।

येन साधनमात्रेण योगी भवति तत्क्षणात्॥ ३९-१॥

अनायासेन सिद्धिः स्याद् यद्यन्मनसि वर्त्तते।

त्रैलोक्यं मोहयेत्क्षिप्रं त्रैलोक्यं वशमानयेत्॥ ३९-२॥

रामेण सहितं नित्यं जगतां साक्षिणं वरम्।

जामदग्न्यकराम्भोजसेवितं सर्वसेवितम्॥ ३९-३॥

अनन्तसत्त्वनिलयं वासुकी सङ्गमाकुलम्।

अष्टहस्ताग्रसुश्रीदं नानालङ्कारशोभितम्॥ ३९-४॥

स्वाधिष्ठानगतं ध्यात्वा शीतलो जायते वशी।

तत्स्तोत्रं शृणु मे नाथ यत्पाठात् सिद्धिमाप्नुयात्॥ ३९-५॥

ब्रह्मादयः सुराधीशा मुनयः क्रतुरक्षकाः।

एतत् स्तोत्रं पुरा कृत्वा जीवन्मुक्तो महीतले॥ ३९-६॥

अतः श्रीकालिकानाथ स्तोत्रं शृणु महत्फलम्॥ ३९-७॥

श्रीविष्णोरद्भुतकर्मणो ब्रह्मषीस्त्रिष्टुप्छन्दः श्रीविष्णुः श्रीकृष्णः श्रीनारायणो देवता सर्वस्तोत्रसारकवचमन्त्रसिद्ध्यर्थे विनियोगः॥

श्री कृष्णं जगतामधीशमनघं ध्यानात्सिद्धिप्रद।

गोविन्दं भवसिन्धुपारकरणं सन्तारणं कारणम्।

श्री विष्णुं वनमालिनं नरहरिं नारायणं गोकुल।

योगेन्द्रं नरनाथमादिपुरुषं वृन्दावने भावयेत्॥ ३९-८॥

मोक्षश्रीसहितं कृतान्तविकृतं धर्मार्णवं सुन्दर।

श्रीरामं बलरामभावविमलं नित्याकुलं सत्कुलम्।

श्रीश्यामं कनकादिहारविलसत्लम्बोदरं श्रीधर।

तं वन्दे हरिमीश्वरं गुणवतीमायाश्रयं स्वाश्रयम्॥ ३९-९॥

वैकुण्ठेशमशेषदोषरहितं सायुज्यमोक्षात्मक।

नानारत्नविनिमीता मम पूजा राजेन्द्रचूडामणिम्।

शोभामण्डलमण्डितं सुरतरुच्छायाकरं योगिन।

विद्यागोपसुतावृतं गुणमयं वाक्सिद्धये भावयेत्॥ ३९-१०॥

स्वाधिष्ठाननिकेतनं परजनं विद्याधनं मायिन।

श्रीनाथं कुलयोगिनं त्रिभुवनोल्लासैकबीजं प्रभुम्।

संसारोत्सवभावलाभनिरतं सर्वादिदेशं सुख।

वन्देऽहं वरसर्पशत्रुसफले पृष्ठे स्थिरानन्ददम्॥ ३९-११॥

भावाष्टं भवभावयोगजडितं जाड्यापहं भास्वर।

नित्यं शुद्धगुणं गभीरधिषणामोदैकहेतुं पतिम्।

कीतीक्षेमकरं महाभयहरं कामाधिदैवं शिव।

तत्तत्षड्दलमध्यगेहरुचिरानन्दैकदेशास्पदम्॥ ३९-१२॥

वन्दे श्रीपतिमच्युतं नरहरिं दैत्यारिशिक्ष्याकुल।

गन्धर्वप्रभृतेः सुगायनरतं वंशीधरं भावदम्।

रत्नानामधिपं गतिस्थमचलं गोवर्धनाधारण।

विश्वामित्रतपोधनादि मुनिभिः संसेवितं तैजसम्॥ ३९-१३॥

वन्दे गोविन्दपादाम्बुजमजमजितं राजितं भक्तिमार्गे।

सत्त्वोत्पन्नं प्रभुत्वं परगणनमितं चारुमञ्जीरहारम्।

हंसाकारं धवलगरुडानन्दपृष्ठे निमग्न।

बन्धूकारक्तसारान्वितचरणतलं सर्वदाशान्तरालम्॥ ३९-१४॥

राकिण्याः प्रेमसिद्धं नववयसिगतं गीतवाद्यादिराग।

रागोत्पन्नं सुफलगुणदं गोकुलानन्दचन्द्रम्।

वाणी--लक्ष्मी--पिरयं तं त्रिभुवनसुजनाह्लादकर्तारमाद्य।

वन्दे सिद्धान्तसारं गतिनतिरहितं सारसङ्केतिताप्तम्॥ ३९-१५॥

कामं कामात्मकं तं विधुगतशिरसं कृष्णसम्बोधनान्त।

बीजं कामं पुनस्तत् पुरुषसुरतरुं भावयित्वा भजेऽहम्।

श्रीकृष्णं कृष्णकृष्णं निरवधिसुखदं सुप्रकाशं प्रसन्न।

स्वाधिष्ठानाख्यपद्मेमनसि गतो भवे सिद्धिस्थलस्थम्॥ ३९-१६॥

आकाशे चारुपद्मे रसभयवलगं रक्तवर्णं प्रकाण्ड।

आत्मारामं नरेन्द्रं सकलरतिकरं कंसहन्तारमादिम्।

आद्यन्तस्थानहीनं विधिहरगमनं सेन्द्रनीलामलाभ।

भावोत्साहं त्रिसर्गस्थितिपरममरं भावये भावसिद्ध्यै॥ ३९-१७॥

सर्वेषां ज्ञानदानं रसदलकमले सर्वदा त्वं करोषि।

आत्मानन्दं सुधादिपिरयधनगुणिनामेकयोगप्रधानम्।

मायापूर्णः प्रचयनवरसः प्रीतिदेशः प्रभेकः।

श्रीराजाख्यः प्रपूर्णः मयि धनरहिते दृष्टिपातं भवादौ॥ ३९-१८॥

काली श्रीकुण्डलिन्याः परगृहनिरतं भावकब्रह्मरूपं

मुक्तिच्छत्रं पुरेशं निजधनसुखं भार्यया क्रीडयन्तम्

सभाक्षेत्रं नेत्रं नयमानमयमत्पुरसंस्थाभिषेकम्॥ ३९-१९॥

ध्यात्वाऽहं प्रणमामि सूक्ष्मकमले लोकाधिपं व्याधिप।

वैकुण्ठं कृष्णमीडे कुरुभवविभवक्षेमहन्तारमन्तम्।

शान्तानां ज्ञानगम्यं स्वनयनकमले पालयन्तं त्रिमार्गं

वज्रारिं पूतनारिं द्वयवकनरकध्वान्तसंहारसूरम्॥ ३९-२०॥

मान्यं लोकेषु सर्वेष्वतिशयमनसं केवलं निर्मलञ्च।

ओङ्कारं कारणाख्यं सुगतिमतिमतां मातृकामन्त्रसिद्धम्।

सिद्धानामादिसिद्धं सुररिपुशमनं कालरूपं रिपूणा।

मूलोर्ध्वे षड्दलान्ते मनसि सुविमले पूरयित्वा मुकुन्दम्॥ ३९-२१॥

नित्यं सम्भावयेऽहं निजतनुसमता सिद्धये पूजयामि

त्वं साक्षादखिलेश्वरः पिरयकरः श्रीलोकहस्ताचीतः।

क्षोणीशः प्रलयात्मकः प्रतिगुणी ज्ञानी त्वमेको महान्॥ ३९-२२॥

यद्येवं मम पामरस्य कलुषं श्रीधर्महीनान्दित।

कृत्वा पादतले यदीह नियतं व्यारक्ष रक्षात्मगम्।

राधाकृष्णपदामलाम्बुजतलं चैतन्यमुक्त्याकुलं

सर्वत्रादिगमागमं त्रिगमनं निर्वाणमोक्षाश्रयम्॥ ३९-२३॥

बालं वैरिविनाशनं सुखमयं कैवल्यमोक्षास्पद।
दैवं देवगणाचीतं रसदले चारोपयामि प्रभो।
निर्द्दिष्टं भुवनाश्रयं यतिपतिं निर्वाणमोक्षस्थितं
निर्वाणादिकमोदने प्रचपलं श्रीचञ्चलासङ्कुलम्॥ ३९-२४॥
वन्देऽहं परमेश्वरं सकलदैत्यानां बलप्राणह।
हंसारूढनिरक्षणं क्षणगतं वाणीपतिं भूपतिम्।
वाञ्छाकल्पलतापतिं कुलपतिं विद्यापतिं गोपतिम्॥ ३९-२५॥
श्रीविद्यापतिमादिदेवपुरुषं विश्वेश्वरप्रेमग।
श्रीकुम्भोद्भवकालसत्वनिकरं त्वां भास्करं भावये।
सिद्धानामभिचिन्हयोगनिरतं रक्ष त्वमादौ हि माम्॥ ३९-२६॥
प्रभो निःसङ्केतं गुणमणिमतं श्रेयसि मत।
मतामन्तः सुस्थं विगलितमहाप्रेमसुरसम्।
मुदा वन्दे कृष्णं हरकरतलाम्भोजयजितम्॥ ३९-२७॥
प्रभापुञ्जं रामाश्रयपदमदं कामकुशल।
महामन्त्रच्छायां रजनिमिलितं ध्वान्तजडितम्।
त्रिकोणस्थं कुस्थं कुगतिसुगतिं कारणगति।
प्रलीनं संस्थानं जगति जगतां धर्ममुदयम्॥ ३९-२८॥
रमेशं वाणीशं विधिगतपदं शम्भुनिगत।
त्रिकालं योगानां नयनकमलं शब्दनिरतम्।
कुलानन्दं गोपीजनहृदयगं गोपियजितं

विधानं त्वामिन्द्रं गुरुतरमुपेन्द्रं हरिरिपुम्॥ ३९-२९॥

मुदा त्वां वन्देऽहं चपलं तां मे नवहवे।

कुलालापश्रद्धामय मखिलसिद्धिप्रदमनम्।

मलातीतं नीतं सुरनरसतां शास्त्रभवनम्॥ ३९-३०॥

विनोदं नारीणां हृदयरसिकं शोकरहितम्।

विराजं यज्ञानां हितमतिगुणं यामि शरणम्॥ ३९-३१॥

एतत्सम्बन्धमात्री मम कुलशिरसि स्थायिनं पातु नित्यं

गोपीनां प्राणनाथः प्रतिदिनमनिशं भालदेशं प्रपायात्।

भालाधोदेशसंस्थं समवतु सहसा राजराजेश्वरेशः।

( गोपान्वन्वो सुरेशः ? )

स्थित्यन्तेशस्त्रिनेत्रं सुखमखिलभवः कण्ठच्छत्राभिसंस्थम्॥ ३९-३२॥

पृष्ठस्थं पातु शौरिः प्रतिदिनममरो लिङ्गबाह्यं कटिस्थं

शम्भुप्रेमाभिलाषी मम तु कुलपदं गुह्यदेशं प्रपायात्

आनन्दोद्रेककारी सकलतनुगतं पातु नित्यं मुरारिः।

दैत्यारिश्चोरुमूलं नृहरिरवतु मे जङ्घया पादपद्मम्॥ ३९-३३॥

एतत्स्तोत्रं पठेद्विद्वान् नियतो भक्तिमान् शुचिः।

स्थिरो भवति मासेन षड्दले सर्वसिद्धिभाक्॥ ३९-३४॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षड्चक्रप्रकाशे भैरवभैरवीसंवादे श्रीकृष्णस्तवनकवचं नामैकोनचत्वारिंशत्तमः पटलः॥ ३९॥

## अथ चत्त्वारिंशः पटलः

आनन्दभैरवी उवाच

अथ नाथ प्रवक्ष्यामि शृणुष्वावहितो मम।

येन क्रमेण लोकानां योगकार्यं दृढं भवेत्॥ ४०-१॥

सर्वत्र भावग्रस्तः सः सिद्धो भवति भैरव।

यो भवेद्भैरवो देवो भुवने सर्वगो हि सः॥ ४०-२॥

क्रियादक्षो महावीरो वीरवल्लभभावकः।

भावयित्वा वर्णमालां मध्ये जप्त्वा दिवानिशम्॥ ४०-३॥

हविष्याशी प्राणवायुरतो वेदान्तपारगः।

सिद्धान्तवेत्ता सर्वेषां शास्त्राणां निर्णयपिरयः॥ ४०-४॥

गाथाज्ञानी परानन्दो विवेकी भावतत्परः।

भाववेत्ता रहस्यार्थज्ञानी कोविदवेदवित्॥ ४०-५॥

वाक्यसिद्धिज्ञानपरः सत्यवादी दृढासनः।

भावयेत् षड्गतं वर्णं ध्यानं कुर्यात् पृथक् पृथक्॥ ४०-६॥

षद्दद्मस्थो भावयेद्दै षड्वर्णं ध्यानपूर्वकम्।

वादिलान्ताक्षरं ध्यायेन्महाविद्यानिषेवकः॥ ४०-७॥

बकारं सौन्दर्यं स्वकिरणमयं भाव्यमतुल।

मुकुन्दश्रीभक्तिपिरयरमणकं पूर्वदलगम्।

विशिष्टज्ञानान्तं सुखरनतं कोटिकिरण।

विभाव्य श्रीलक्ष्मीं गमयति झटित् कालपुरुषम्॥ ४०-८॥

द्विवर्णं श्रीनाथं सुखयति भकारं रसदले।

त्रिकोणापार्श्वस्थां चपलशकलं शम्भुनिलयम्।

महारक्ताकारं तरुणविगतं भीममकुल।

कुलागारस्थानं कुलरमणीरक्तायुतमिति॥ ४०-९॥

यदा ध्यायेत् ज्ञानी निरवधि मुदा शोकविषह।

त्रिलोकानां स्थानं भुवनशरणं प्रातविसुखी।

महामोक्षद्वारे भवति स महान् सर्वजडितो।

विलासी सर्वेषां नवनववधूनां पिरयपतिः॥ ४०-१०॥

महाकालस्थानं स जयति सकारं यदि भजे

दरीणां व्याहस्ता रुधिरकिरणं कोट्यरुणकम्।

महाकालस्थानं (.....) शरणं प्रागपि सुखी।

त्रिकोणां दक्षाङ्गे निगमनयनो योगयजितः॥ ४०-११॥

विनोदी सौख्यानां सुरतरुसमानो भुवि दिवि।

यकारं यो ध्यायेदमरपदवीव्याधिरहितः।

महावाणीनाथं प्रणयजडितं त्वक् सुरतरु।

मुकुन्दानन्दान्तः पवनमिलितं कामकरणम्॥ ४०-१२॥

तदा लोकोऽकामी भवति नितरां काकपवनी।

महाग्नेः संस्थानं परजलधरं सूर्यशतकम्।

यदानन्दैर्ध्यायेत् परमधनदं यज्ञसुधया।

सुधापानज्ञानी हवनकरणं काम्यफलदम्।

पिरयं तद्बेरत्याः कमलगभुजङ्गेश्वरनुत।

त्रिकोणापृष्ठस्थं विधिहरिहरस्य पिरयमिति॥ ४०-१३॥

विधानं वह्नीनां कुलविमलबीजं सकरुण।

असृङ् मायाखण्डं खगगणमनोरञ्जनवरम्।

यदि ध्यायेदेको विभवविविधं याति सहसा।

महेन्द्रः स्थानाङ्गं कमलसुखदं कृष्णनिलयम्॥ ४०-१४॥

पिरयं सिद्धक्षेत्रं यदि सुखमयं भावयति यः।

लकारं चन्द्रस्थं विधुशतकरं बिन्दुनिलयम्।

विशालाक्षी राधा मधुरवचनालापकलितं

रमामोदे पत्रे तरणकरणं सापहरणम्॥ ४०-१५॥

सुवामे राकिण्या नवरसमयं मोहहरण।

विभाव्य श्रीनाथं भजति स नरो ध्याननिपुणो।

महामोक्षं प्राप्य प्रथमरजसं सङ्गमयति॥ ४०-१६॥

ततो ध्येया महाविद्या राकिणीशक्तिरुत्तमा।

श्रीविष्णुसहिता नित्यं योगैर्भोगविवर्जीतः॥ ४०-१७॥

अकलङ्की कुलानन्दो मन्दहास्यावृतो महान्।

स योगी परमं राज्यं प्राप्नोति नात्र संशयः॥ ४०-१८॥

यावन्मूलाधारयोगं तावद् यमादिकं प्रभो।

यमनियमासने काले योगं पञ्चामरान्वितम्॥ ४०-१९॥

तावत्कुर्यान्महादेव यावत्तत् सिद्धिमाप्नुयात्।

यदि पञ्चामरा सिद्धिस्तदा मायादिसिद्धिभाक्॥ ४०-२०॥

पञ्चासवा सिद्धिकाले प्राणादिवायुपञ्चमम्।

धृत्वा धृत्वा पुनर्धृत्वा कुम्भयेदनिशं शनैः॥ ४०-२१॥

शरीरे निर्मले याते वायुनिर्मलता भवेत्।

सर्वरूपी महावायुनीर्मलात्मानमात्मनि॥ ४०-२२॥

सिद्धिं ददाति योगेश यदि स्वकार्यमाश्रयेत्॥ ४०-२३॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धिमन्त्रप्रकरणे आनन्दभैरवी-- भैरवसंवादे षड्दलवर्णप्रकाशो नाम चत्वारिंशत्तमः पटलः॥ ४०॥

## अथैकचत्त्वारिंशः पटलः

आनन्दभैरवी उवाच

कृतान्तसंहारविहारभोगं

रसाप्लुतश्रीकर शङ्कर प्रभो।

तवाज्ञयाऽहं कथयामि सिद्धये।

मयागमानन्दवशाद्धि तन्त्रम्॥ ४१-१॥

प्रेमाभिलाषी सुजनो मुनीन्द्रो।

जानाति तन्त्रार्थमनन्तसाधनम्।

महाप्रभाते चराणाब्जभक्तो।

गोविन्दशम्भोर्यदि भक्तिभाजनः॥ ४१-२॥

षड्चक्रभेदार्थविशेषसाधन।

जानाति यो वा स जनोऽतिदुर्लभः।

स एव संसारनिषेधसाधन।

सदा विहायाचल भक्तिमाप्नुयात्॥ ४१-३॥

आनन्दभैरव उवाच

यदि वा कथिता कान्ते षड्दलप्रक्रिया शुभा।

राकिण्या मिलनं देव्याः कुण्डलिन्याः पराक्रमम्॥ ४१-४॥

सार्द्धं श्रीविष्णुना कालरूपिणा बहुरूपिणा।

शुद्धनिर्मलतत्त्वेन परिवारगणैः सह॥ ४१-५॥

न तद्धि कथितं सर्वं श्रीकृष्णस्य पराक्रमम्।

स्तवनं देवराकिण्या सहितं कृष्णसाधनम्॥ ४१-६॥

मङ्गलं परमं ब्रह्मसाधनं कुलवर्द्धनम्।

कृष्णप्रकाशस्तवनं राकिणीशक्तिसंयुतम्॥ ४१-७॥

कथयस्व महाकालि यदि स्नेहोऽस्ति मां प्रति।

अत्यन्तगुह्यं कथनं सहस्रनाममङ्गलम्॥ ४१-८॥

अष्टोत्तरं महाविष्णो राकिण्या सहितं पिरये।

इदानीं राकिणीस्तोत्रं वद भामिनी कामदे॥ ४१-९॥

आनन्दभैरवी उवाच

योगेन्द्र परमानन्दसिन्धो श्रीचन्द्रशेखर।

श्रृणुष्व राकिणीस्तोत्रं परमानन्दवर्धनम्॥ ४१-१०॥

सर्वत्र सुखदं प्रोक्तं सिद्धानामपि साधनम्।

एतत् स्तवनपाठेन योगी योगेन्द्रभाक् भवेत्॥ ४१-११॥

वैष्णवीसाधने यस्तु पञ्चाचारं करोति वा।

सर्वेषां साधनोत्कृष्टं जातिभ्रष्टोऽपि नो भवेत्॥ ४१-१२॥

समता शत्रुमित्रेषु कर्माकर्मसु तत्त्ववित्।

यदि वा वैष्णवे नाथ समभावः प्रजायते॥ ४१-१३॥

पञ्चाचारक्रमेणैव सिद्धो भवति नान्यथा।

राधादिगोपिकाभिश्च गोपवृन्दैः समन्ततः॥ ४१-१४॥

पञ्चाचारं मुदा कृत्वा सर्वेषां परिपालनम्।

चकार कमलानाथोऽतः पञ्चाचारमाश्रयेत्॥ ४१-१५॥

पञ्चाचारक्रमेणैव चैतन्या कुण्डली भवेत्।

कृष्णचैतन्यहेतोश्च राकिण्याश्च तथा प्रभो॥ ४१-१६॥

चैतन्याय षड्दलस्थदेव चैतन्यहेतुना।

कुण्डलीवधुराकिण्याः स्तोत्रं श्रृणु कुलार्णव॥ ४१-१७॥

आन्दोलिता रसनिधौ कुलचञ्चला या।

मायामयो सकलदुःखविनाशवीरा।

वीरासना स्थितिगता सुलभा मुनीना।

भव्या प्रपातु भविका कुलराकिणी माम्॥ ४१-१८॥

आनन्दसिन्धु जडिताखिलसारपाना

बाला कुलीननमिता दलषड्कुलस्था।

कालीकलामलगुणा धनिनां धनस्था।

कृष्णेश्वरी समुदयं कुरु राकिणी मे॥ ४१-१९॥

या राकिणी त्रिजगतामुदयाय चेष्टा।

संज्ञामयी कुलवती कुलवल्लभस्था।

विश्वेश्वरी स्मरहरपिरयकर्मनिष्ठा।

कृष्णपिरया मम सुखं परिपातु देवी॥ ४१-२०॥

षड्वर्गनाथकरपद्मनिषेविता या।

राधेश्वरी पिरयकरी सुरसुन्दरी सा।

माता कुलेशजननी जगतां मनुस्था।

विद्या परा रिपुहरावत मे शरीरम्॥ ४१-२१॥

गोविन्दरामरमणी नवमालिनी या।

राज्येश्वरी स्मरहरा नवकामिनी वा।

मे षड्दलाश्रितसुरं परिपातु नित्य।

श्रीकुण्डली सुविमला कुलराकिणी सा॥ ४१-२२॥

श्रीसुन्दरी कुलपरा कुलवृन्दवन्द्या

सन्ध्याविधि प्रभवतामतिकामतीर्था।

श्रीदायिनी कुलगणामलभावदात्री।

नित्यं प्रपातु विषयं कुलषड्दलानाम्॥ ४१-२३॥

चैतन्यदाननिरतां त्रिगुणाभिरामा।

श्यामां नितम्बधृतसुन्दररत्नघण्टाम्।

नीलाचलस्थितकरां वरदानहस्ता।

श्रीकृष्णवामकमलोपरि पूजयामि॥ ४१-२४॥

तां राकिणीं त्रिरमणीं समलापहन्त्री।

सर्वस्थितां गगनमातरमम्बुजस्थाम्।

पद्मासनां श्रुतिभुजां गुरुजामनन्ता।

शान्तां षडम्बुजदलोपरि पूजयामि॥ ४१-२५॥

शान्तिं कृपाकपटकोपरि नाशमुक्ति।

शिवां परमवैष्णवपूजिताङ्गम्।

राधां सुधां वरमयीं जगतां गुणस्था।

धर्मार्णवां रसदले परिपूजयामि॥ ४१-२६॥

कर्त्तीकरां सकरुणां रमणीं त्रिसर्गा।

तां राकिणीमतिदयाममलार्थचिन्ताम्।

भ्रान्तिं भ्रमागमवरां स्मृतिमादिपूज्या।

भार्यां हरेरतिसुखां परिपूजयामि॥ ४१-२७॥

या कातरं निरवधिप्रणयस्ववस्था

वागीश्वरी भगवती यतिकोटिनम्रा।

ताम्राकृतिप्रकृतिचेतसि रक्तवर्णा।

मायामयी सुरकलावति पातु मेऽङ्गम्॥ ४१-२८॥

कल्पद्रुमाशयलता फलरूपिणी या।

भर्गास्थिता पुरुषकोटिमुनिस्तुवन्ती।

सा मे कुलेश्वररसं हरिहस्तपूज्या।

क्षान्तिः सदा मम धनं परिपातु राधा॥ ४१-२९॥

क्षेमङ्करी वरकरी सुकरी हरिस्था।

या सौकरी भवकरी त्रिपुरा महेशी।

वायुस्थिता लयमयी स्थितिमार्गसङ्गा।

भङ्गपिरया सकलका परिपातु राधा॥ ४१-३०॥

गङ्गा निर्मलभावदा ममशिरोदेशं सदा रक्षतु।

श्रीराधा कुलराकिणी मम कपालोर्ध्वं महावाक्पिरया।

मन्त्रस्था जयदा मुदा कुमुदिनी भालं भ्रुवोरन्तर।

विद्या वाग्भवकुण्डलीफलवलाबाला च नेत्रत्रयम्॥ ४१-३१॥

गण्डं चण्डसरस्वती श्रुतिकुलं कैलासशैलस्थिता।

मेधा टं घटवासिनी शशीमुखी सूक्ष्मातिसूक्ष्माशया।

जिह्वाग्रं चिबुकं रदावधिवहा कण्ठं गलं स्कन्धगं

स्कन्देशी दशनप्रभामलमति -- वैकुण्ठधामेश्वरी॥ ४१-३२॥

नानावर्णविलासिनी मृदुरसं शम्भोर्भवानी शिवा।

पृष्ठं कर्मसु पृष्ठगा गतिकरी नित्योल्बणी भास्वती।

पार्श्वं मे कुलमालिनी मम कटिं लिङ्गं नितम्बाम्बर।

कामाख्या धनदायिनी सकरुणा पादद्वयं पातु सा॥ ४१-३३॥

मातृक्रोधनिवारिणी मम शिवं षड्वत्रशोभाकर।

पातु श्रीचरुवासिनी कुलतरुं गौरी परानन्ददा।

चैतन्यस्थलवासिनी मम गता गोविन्दमातृपिरया।

चैतन्यं सततं प्रपातु धरणी धात्री वरक्षेत्रगा॥ ४१-३४॥

धन्या पिङ्गललोचनाम्बुजमुखी चैतन्यकर्मपिरया।

सर्वत्र पिरयमाकरोतु नियतं शक्तिः क्षमाकर्तृका।

कीतीस्था मम कीतीचक्रनिलयं लाक्षारुणा बल्वरी।

नीचा चक्रनिवासिनी मम जया जीवं मुदा पातु माम्॥ ४१-३५॥

एतत्स्तोत्रं पठेन्नित्यं प्राणवायुवराशुभे।

षड्चक्रभेदसमये सदा पाठ्यं सुयोगिभिः॥ ४१-३६॥

कुलविन्याससमये कुलचक्रप्रवेशने।

अवश्यं प्रपठेद्विद्वान् राकिणीराधिकास्तवम्॥ ४१-३७॥

त्रिसन्ध्यं चेदमाकुर्यात् पठित्वा च पुनः पुनः।

ध्यात्वा भावपरो भूत्वा मुच्यते भवबन्धनात्॥ ४१-३८॥

अचलां भक्तिमाप्नोति विश्वामित्रो यथा वशी।

पठनात् पामरो याति ब्रह्मलोकं कुलाधिप॥ ४१-३९॥

एतत्पठनमात्रेण शीतलो गुणवान् भवेत्।

अप्रकाश्यमिदं स्तोत्रं सर्वान्तकविनाशनम्॥ ४१-४०॥

समभावं समाकृत्य जीवन्मुक्तो भवेद्वशी।

पञ्चाचाररतो भूत्वा साधयेद् यदि साधनम्॥ ४१-४१॥

कुण्डलीयोगकाले च कुलाचारं न वर्जयेत्।

कुलाचारवर्जनेन महाहानिः प्रजायते॥ ४१-४२॥

ब्राह्मणः क्षत्रियो वापि वैश्यो वा शूद्र एव च।

समभावं सदा कृत्वा कुलाचारं समाश्रयेत्॥ ४१-४३॥

कुण्डली पृथिवी देवी राकिणी स्वारिदेवता।

तद्देहगामिनी देवी राधिका राज्यकामिनी॥ ४१-४४॥

अस्याः साधनकाले च समयाचारमाश्रयेत्।

समभावे महामोक्ष इति तन्त्रार्थनिर्णयः॥ ४१-४५॥

समभावार्थकथनं त्यक्त्वा योगी भवेत्कृती॥ ४१-४६॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धिमन्त्रप्रकरणे षट्चक्रप्रकाशे भैरवीभैरवसंवादे स्वाधिष्ठानराकिणी--स्तोत्रं नामैकचत्वारिंशत्तमः पटलः॥ ४१॥

## अथ द्विचत्त्वारिंशः पटलः

आनन्दभैरवी उवाच

कथयामि महाकाल परमाद्भुतसाधनम्।

कुण्डलीरूपिणी देवी राकिण्याः कुलवल्लभ॥ ४२-१॥

मानसं द्रव्यमानीय चाथवा बाह्यद्रव्यकम्।

अनष्टहृष्टचित्तश्च पूजयेत् सावधानतः॥ ४२-२॥

भक्त्या जपेन्मूलमन्त्रं मानसं सर्वमेव च।

पूजयित्वा ततो जप्त्वा होमं कुर्यात् परामृतैः॥ ४२-३॥

समासैः पक्वनैवेद्यैः सुगन्धिकुसुमैस्तथा।

स्वयम्भूकुसुमैर्नीत्यमर्घ्यं कृत्त्वा निवेदयेत्॥ ४२-४॥

सुमुखं पूजयेन्नित्यं मधुमांसेन शंकर।

हुत्वा हुत्वा पुनर्हुत्वा प्राणवाय्वग्निसंगमैः॥ ४२-५॥

भ्रामयित्त्वा मनो बाह्ये स्थापयित्त्वा पुनः पुनः।

पुनरागम्यगमनं कारयित्त्वा सुमङ्गलम्॥ ४२-६॥

वाचयित्त्वा सुवाणीभिर्याचयित्त्वा सवापिकम्।

तर्पणं चाभिषेकञ्च केवलासवमिश्रितैः॥ ४२-७॥

मांसैर्मुद्रादिभिर्मत्स्यैः सारद्रव्यैः सपिष्टकैः।

घृतादिसुफलैर्वापि यद् यदायाति कौलिके॥ ४२-८॥

अचलां भक्तिमाप्नोति विश्वामित्रो यथा वशी।

तत्तद्द्रव्यैः साधकेन्द्रो नित्यं सन्तर्प्य संजपेत्॥ ४२-९॥

एतन्मन्त्रं पाठित्त्वा च तर्पणञ्च समाचरेत्।

तर्पणान्ते चाभिषेकं सदा कुर्याच्च तान्त्रिकः॥ ४२-१०॥

मूलान्ते चाभिषिञ्चामि नमः स्वाहा पदं ततः।

ततो हि प्रणमेद्भक्त्या अष्टाङ्गनतिभिः प्रभो॥ ४२-११॥

सहस्रनाम्ना स्तवनमष्टोत्तरसमन्वितम्।

अर्धाङ्ग राकिणीयुक्तं राकिणीकेशवस्तवम्॥ ४२-१२॥

शृणु तं सकलं नाथ यत्र श्रद्धा सदा तव।

श्रवणार्थं बहूक्तं तत् कृपया ते वदाम्यह॥ ४२-१३॥

एतत् श्रवणमात्रेण सर्वपापक्षयो भवेत्।

राकिणीसङ्गमं नाथ स्तवनं नाम पावनम्॥ ४२-१४॥

ये पठन्ति श्रद्धया चाश्रद्धया वा पुनः पुनः।

तस्य सर्वः पापराशिः क्षयं याति क्षणादिह॥ ४२-१५॥

काले काले महावीरो भवत्येव हि योगिराट्।

संसारोत्तारणे युक्तो महाबलपराक्रमः॥ ४२-१६॥

ओं श्रीकृष्णो महामाया यादवो देवराकिणी।

गोविन्दो विश्वजननी महाविष्णुर्महेश्वरी॥ ४२-१७॥

मुकुन्दो मालती माला विमला विमलाकृतिः।

रमानाथो महादेवी महायोगी प्रभावती॥ ४२-१८॥

वैकुण्ठो देवजननी दहनो दहनप्रिया।

दैत्यारिर्दैत्यमथिनी मुनीशो मौनभाविता॥ ४२-१९॥

नारायणो जयकला करुणो करुणामयी।

हृषीकेशः कौशिकी च केशवः केशिघातिनी॥ ४२-२०॥

किशोरापि कैशोरी महाकाली महाकला।

महायज्ञो यज्ञहर्त्री दक्षेशो दक्षकन्यका॥ ४२-२१॥

महाबली महाबाला बालको देवबालिका।

चक्रधारी चक्रकरा चक्राङ्गः चक्रमदीका॥ ४२-२२॥

अमरो युवती भीमो भया देवो दिविस्थिता।

श्रीकरो वेशदा वैद्यो गुणा योगी कुलस्थिता॥ ४२-२३॥

समयज्ञो मानसज्ञा क्रियाविज्ञः क्रियान्विता।

अक्षरो वनमाला च कालरूपी कुलाक्षरा॥ ४२-२४॥

विशालाक्षो दीर्घनेत्रा जयदो जयवाहना।

शान्तः शान्तिकरी श्यामो विमलश्याम विग्रहा॥ ४२-२५॥

कमलेशो महालक्ष्मी सत्यः साध्वी शिशुः प्रभा।

विद्युताकारवदनो विद्युत्पुञ्जनभोदया॥ ४२-२६॥

राधेश्वरो राकिणी च कुलदेवः कुलामरा।

दक्षिणो दक्षिणी श्रीदा क्रियादक्षो महालया॥ ४२-२७॥

वशिष्ठगमनो विद्या विद्येशो वाक्सरस्वती।

अतीन्द्रियो योगमाता रणेशी रणपण्डिता॥ ४२-२८॥

कृतान्तको बालकृष्णा कमनीयः सुकामना।

अनन्तो अनन्तगुणदा वाणीनाथो विलक्षणा॥ ४२-२९॥

गोपालो गोपवनिता गोगोप कुलात्मजा।

मौनी मौनकरोल्लासा मानवो मानवात्मजा॥ ४२-३०॥

सर्वाच्छिन्नो मोहिनी च मायी माया शरीरजा।

अक्षुण्णो वज्रदेहस्था गरुडस्थो हि गारुडी॥ ४२-३१॥

सत्यप्रिया रुक्मिणी च सत्यप्राणोऽमृतापहा।

सत्यकर्मा सत्यभामा सत्यरूपी त्रिसत्यदा॥ ४२-३२॥

शशीशो विधुवदना कृष्णवर्णो विशालधीः।

त्रिविक्रमो विक्रमस्था स्थितिमार्गः स्थितिप्रिया॥ ४२-३३॥

श्रीमाधवो माधवी च मधुहा मधुसूदनी।

वैकुण्ठनाथो विकला विवेकस्थो विवेकिनी॥ ४२-३४॥

विवादस्थो विवादेशी कुम्भकः कुम्भकारिका।

सुधापानः सुधारूपा सुवेशो देवमोहिनी॥ ४२-३५॥

प्रक्रियाधारको धन्या धन्यार्थो धन्यविग्रहा।

धरणीशो महानन्ता सानन्तो नन्दनप्रिया॥ ४२-३६॥

प्रियो विप्रियहरा च विप्रपूज्यो द्विजप्रिया।

कान्तो विधुमुखी वेद्यो विद्या वागीश्वरोऽरुणा॥ ४२-३७॥

अकामी कामरहिता कम्रो विलचरप्रिया।

पुण्डरीको विकुण्डस्था वैकुण्ठो बालभाविनी॥ ४२-३८॥

पद्मनेत्र पद्ममाला पद्महस्तोऽम्बुजानना।

पद्मनाभिः पद्मनेत्रा पद्मस्थः पद्मवाहना॥ ४२-३९॥

वासुदेवो बृहद्गर्भा महामानी महाञ्जना।

कारुण्यो बालगर्भा च आकाशस्थो विभाण्डजा॥ ४२-४०॥

तेजोराशिस्तैजसी च भयाच्छन्नो भयप्रदा।

उपेन्द्रो वर्णजालस्था स्वतन्त्रस्थो विमानगा॥ ४२-४१॥

नगेन्द्रस्थो नागिनी च नगेशो नागनन्दिनी।

सार्वभौमो महाकाली नगेन्द्रः नन्दिनीसुता॥ ४२-४२॥

कामदेवाश्रयो माया मित्रस्थो मित्रवासना।

मानभङ्गकरो रावा वारणारिप्रियः प्रिया॥ ४२-४३॥

रिपुहा राकिणी माता सुमित्रो मित्ररक्षिका।

कालान्त कलहा देवी पीतवासाम्बरप्रिया॥ ४२-४४॥

पापहर्ता पापहन्त्री निष्पापः पापनाशिनी।

परानन्दप्रियो मीना मीनरूपी मलापहा॥ ४२-४५॥

इन्द्रनीलमणिश्यामो महेन्द्रो नीलरूपिणी।

नीलकण्ठप्रियो दुर्गा दुर्गादुर्गतिनाशिनी॥ ४२-४६॥

त्रिकोणमन्दिरश्रीदो विमाया मन्दिरस्थिता।

मकरन्दरसोल्लासो मकरन्दरसप्रिया॥ ४२-४७॥

दारुणारिनिहन्ता च दारुणारिविनाशिनी।

कलिकालकुलाचारः कलिकालफलावहा॥ ४२-४८॥

कालक्षेत्रस्थितो रौद्री व्रतस्थो व्रतधारिणी।

विशालाक्षो विशालास्या चमत्कारो करोद्यमा॥ ४२-४९॥

लकारस्थो लाकिनी च लाङ्गली लोलयान्विता।

नाकस्थो नाकपद्का नाकाक्षो नाकरक्षका॥ ४२-५०॥

कामगो नामसम्बन्धा सामवेदविशोधिका।

सामवेदः सामसन्ध्या सामगो मांसभक्षिणी॥ ४२-५१॥

सर्वभक्षो रात्रभक्षा रेतस्थो रेतपालिनी।

रात्रिकारी महारात्रिः कालरात्रो महानिशा॥ ४२-५२॥

नानादोषहरो मात्रा मारहन्ता सुरापहा।

चन्दनाङ्गी नन्दपुत्री नन्दपालः विलोपिनी॥ ४२-५३॥

मुद्राकारी महामुद्रा मुद्रितो मुद्रिता रतिः।

शाक्तो लाक्षा वेदलाक्षी लोपामुद्रा नरोत्तमा॥ ४२-५४॥

महाज्ञानधरोऽज्ञानी नीरा मानहरोऽमरा।

सत्कीतीस्थो महाकीतीः कुलाख्यो कुलकीतीता॥ ४२-५५॥

आशावासी वासना सा कुलवेत्ता सुगोपिता।

अश्वत्थवृक्षनिलयो वृक्षसारनिवासिनी॥ ४२-५६॥

नित्यवृक्षो नित्यलता क्लृप्तः क्लृप्तपदस्थितः।

कल्पवृक्षो कल्पलता सुकालः कालभक्षिका॥ ४२-५७॥

सर्वालङ्कारभूषाढ्यो सर्वालङ्कारभूषिता।

अकलङ्की निराहारा दुनीरीक्ष्यो निरापदा॥ ४२-५८॥

कामकर्ता कामकान्ता कामरूपी महाजवा।

जयन्तो याजयन्ती च जयाख्य जयदायिनी॥ ४२-५९॥

त्रिजीवनो जीवमाता कुशलाख्यो विसुन्दरा।

केशधारी केशिनी च कामजो कामजाड्यदा॥ ४२-६०॥

किङ्करस्थो विकारस्था मानसंज्ञो मनीषिणी।

मिथ्याहरो महामिथ्या मिथ्यासर्गो निराकृति॥ ४२-६१॥

नागयज्ञोपवीतश्च नागमालाविभूषिता।

नागाख्यो नागकुलपा नायको नायिका वधूः॥ ४२-६२॥

नायकक्षेमदो नारी नरो नारायणप्रिया।

किरातवर्णो रासज्ञी तारको गुणतारिका॥ ४२-६३॥

शङ्कराख्योऽम्बुजाकारा कृपणः कृपणावती।

देशगो देशसन्तोषा दर्शो दर्शनिवासिनी॥ ४२-६४॥

दर्शनज्ञो दर्शनस्था दृग् दृग्दिक्षा सुरोऽसुराः।

सुरपालो देवरक्षा त्रिरक्षो रक्षदेवता॥ ४२-६५॥

श्रीरामसेवी सुखदा सुखदो व्यासवासिनी।

वृन्दावनस्थो वृन्दा च वृन्दावन्यो महत्तनू॥ ४२-६६॥

ब्रह्मरूपी त्रितारी च तारकाक्षो हि तारिणी।

तन्त्रर्थज्ञः तन्त्रविद्या सुतन्त्रज्ञः सुतन्त्रिका॥ ४२-६७॥

तृप्तः सुतृप्ता लोकानां तर्पणस्थो विलासिनी।

मयूरा मन्दिररतो मथुरा मन्दिरेऽमला॥ ४२-६८॥

मन्दिरो मन्दिरादेवी निर्मायी मायसंहरा।

श्रीवत्सहृदयो वत्सा वत्सलो भक्तवत्सला॥ ४२-६९॥

भक्तप्रियो भक्तगम्या भक्तो भक्तिः प्रभुः प्रभा।

जरो जरा वरो रावा हविर्हेमा क्षमः क्षिति॥ ४२-७०॥

क्षोणीपो विजयोल्लासा विजयोजयरूपिणी।

जयदाता दातृजाया बलिपो बलिपालिका॥ ४२-७१॥

कृष्णमार्जाररूपी च कृष्णमार्जाररूपिणी।

घोटकस्थो हयस्था च गजगो गजवाहना॥ ४२-७२॥

गजेश्वरो गजाधारा गजो गर्जनतत्परा।

गयासुरो गयादेवी गजदर्पो गजापीता॥ ४२-७३॥

कामनाफलसिद्ध्यर्थी कामनाफलसिद्धिदा।

धर्मदाता धर्मविद्या मोक्षदो मोक्षदायिनी॥ ४२-७४॥

मोक्षाश्रयो मोक्षकर्त्री नन्दगोपाल ईश्वरी।

श्रीपतिः श्रीमहाकाली किरणो वायुरूपिणी॥ ४२-७५॥

वाय्वाहारी वायुनिष्ठा वायुबीजयशस्विनी।

जेता जयन्ती यागस्थो यागविद्या शिवः शिवा॥ ४२-७६॥

वासवो वासवस्थी च वासाख्यो धनविग्रहा।

आखण्डलो विखण्डा च खण्डस्थो खण्डखञ्जनी॥ ४२-७७॥

खड्गहस्तो बाणहस्ता बाणगो बाणवाहना।

सिद्धान्तज्ञो ध्वान्तहन्त्री धनस्थो धान्यवर्द्धीनी॥ ४२-७८॥

लोकानुरागो रागस्था स्थितः स्थापकभावना।

स्थानभ्रष्टोऽपदस्था च शरच्चन्द्रनिभानना॥ ४२-७९॥

चन्द्रोदयश्चन्द्रवर्णा चारुचन्द्रो रुचिस्थिता।

रुचिकारी रुचिप्रीता रचनो रचनासना॥ ४२-८०॥

राजराजो राजकन्या भुवनो भुवनाश्रया।

सर्वज्ञः सर्वतोभद्रा वाचालो लयधातिनी॥ ४२-८१॥

लिङ्गरूपधरो लिङ्गा कलिङ्गः कालकेशरी।

केवलानन्दरूपाख्यो निर्वाणमोक्षदायिनी॥ ४२-८२॥

महामेघगाढ। महानन्दरूपा।

महामेघजालो महाघोररूपा।

महामेघमालः सदाकारपाला।

महामेघमालामलालोलकाली॥ ४२-८३॥

वियद्व्यापको व्यापिका सर्वदेहे

महाशूरवीरो महाधर्मवीरा।

महाकालरूपी महाचण्डरूपा।

विवेकी मदैकी कुलेशः कुलेशी॥ ४२-८४॥

सुमार्गी सुगीता शुचिस्वो विनिता।

महार्को वितर्का सुतर्कोऽवितर्का।

कृतीन्द्रो महेन्द्री भगो भाग्यचन्द्रा।

चतुर्थो महार्था नगः कीतीचन्द्रा॥ ४२-८५॥

विशिष्टो महेष्टिर्मनस्वी सुतुष्टि--।

र्महाषड्गलस्थो महासुप्रकाशा।

गलच्चन्द्रधारामृतस्निग्धदेहो।

गलत्कोटिसूर्यप्रकाशाभिलाषा॥ ४२-८६॥

महाचण्डवेगो महाकुण्डवेगी।

महारुण्डखण्डो महामुण्डखण्डा।

कुलालभ्रमच्चक्रसारः प्रकारा।

कुलालो मलाका रचक्रप्रसारी॥ ४२-८७॥

कुलालक्रियावान् महाघोरखण्डः

कुलालक्रमेण भ्रमज्ज्ञानखण्डा।

प्रतिष्ठः प्रतिष्ठा प्रतीक्षः प्रतीक्षा।

महाख्यो महाख्या सुकालोऽतिदीक्षा॥ ४२-८८॥

महापञ्चमाचारतुष्टः प्रचेष्टा।

महापञ्चमा प्रेमहा कान्तचेष्टा।

महामत्तवेशो महामङ्गलेशी।

सुरेशः क्षपेशी वरो दीर्घवेशा॥ ४२-८९॥

चरो बाह्यनिष्ठा चरश्चारुवर्णा।

कुलाद्योऽकुलाद्या यतिर्योगवाद्या।

कुलोकापहन्ता महामानहन्त्री।

महाविष्णुयोगी महाविष्णुयोगा॥ ४२-९०॥

क्षितिक्षोभहन्ता क्षितिक्षुब्धबाधा।

महार्घो महार्घा धनी राज्यकार्या।

महारात्रि सान्द्रान्धकारप्रकाशो।

महारात्रि सान्द्रान्धकारप्रवेशा॥ ४२-९१॥

महाभीमगम्भीरशब्दप्रशब्दो।

महाभीमगम्भीरशब्दापशब्दा।

कुला ज्ञानदात्री यमो यामयात्रा।

वशी सूक्ष्मवेशाश्वगो नाममात्रा॥ ४२-९२॥

हिरण्याक्षहन्ता महाशत्रुहन्त्री।

विनाशप्रियो बाणनाशप्रिया च।

महाडाकिनीशो महाराकिणीशो।

महाडाकिनी सा महाराकिणी सा॥ ४२-९३॥

मुकुन्दो महेन्द्रो महाभद्रचन्द्रा।

क्षितित्यागकर्ता महायोगकर्त्री।

हितो मारहन्त्री महेशेश इन्द्रा।

गतिक्षोभभावो महाभावपुञ्जा॥ ४२-९४॥

शशीनां समूहो विधोः कोटिशक्तिः।

कदम्बाश्रितो वारमुख्या सतीना।

महोल्लासदाता महाकालमाता।

स्वयं सर्वपुत्रः स्वयं लोकपुत्री॥ ४२-९५॥

महापापहन्ता महाभावभर्त्री।

हरिः कातीकी कातीको देवसेना।

जयाप्तो विलिप्ता कुलाप्तो गणाप्ता।

सुवीर्यो सभाषा क्षितीशोऽभियाता॥ ४२-९६॥

भवान् भावलक्ष्मीः प्रियः प्रेमसूक्ष्मा।

जनेशो धनेशी कृपो मानभङ्गा।

कठोरोत्कटानां महाबुद्धिदाता।

कृतिस्था गुणज्ञो गुणानन्दविज्ञा॥ ४२-९७॥

महाकालपूज्यो महाकालपूज्या।

खगाख्यो नगाख्या खरः खड्गहस्ता।

अथर्वोऽथर्वान्दोलितस्थः महार्था।

खगक्षोभनाशा हविः कूटहाला॥ ४२-९८॥

महापद्म मालाधृतो गाणपत्या।

गणस्थो गभीरा गुरुः ज्ञानगम्या।

घटप्राणदाता घनाकाररूपा।

भयार्थोऽङबीजाङवारीङकर्ता॥ ४२-९९॥

भवो भावमाता नरो यामध्याता।

चलान्तोऽचलाख्या चयोऽञ्जालिका च

छलज्ञश्छलाढ्या छकारश्छकारा।

जयो जीवनस्था जलेशो जलेशा॥ ४२-१००॥

जपञ्जापकारी जगज्जीवनीशा

जगत्प्राणनाथो जगद्ध्लादकारी।

झरो झर्झरीशा झनत्कारशब्दो।

झनञ्झञ्झनानादझङ्काररावा॥ ४२-१०१॥

ञचैतन्यकारी ञकैवल्यनारी।

हनोल्लासधारी टनत्टङ्कहस्ता।

ठरेशो पविष्टश्ठकारादिकोटी।

डरो डाकिनीशो डरेशो डमारा॥ ४२-१०२॥

ढमेशो हि ढक्का वरस्थानबीजो।

णवर्णा तमालतनुः स्थाननिष्ठा।

थकारार्णमानस्थनिस्थोऽसंख्या।

दयावान् दयार्द्रा धनेशो धनाढ्या॥ ४२-१०३॥

नवीनो नगेभागतीर्णाङ्गहारो।

नगेशी परः पारणी सादिपाला।

फलात्मा फला फाल्गुनी फेणनाशः।

फलाभूषणाढ्या वशी वासरम्या॥ ४२-१०४॥

भगात्मा भवस्त्री महाबीजमानो।

महाबीजमाला मुकुन्दः सुसूक्ष्मा।

यतिस्था यशस्था रतानन्दकर्ता।

रतिर्लाकिनीशो लयार्थ प्रचण्डा॥ ४२-१०५॥

प्रवालाङ्गधारी प्रवालाङ्गमाला।

हलोहालहेलापदः पादताला।

वशीन्द्रः प्रकाशो वरस्थानवासा।

शिवः श्रीधराङ्गः शलाका शिला च॥ ४२-१०६॥

षडाधारवासी षडाधारविद्या।

षडाम्भोजसंस्थः षडब्जोपविष्टा।

सदा साधरोग्रोपविष्टाऽपरागी।

सुसूक्तापयस्था पलाश्रयस्थिता॥ ४२-१०७॥

हरस्थोग्रकर्मा हरानन्दधारा लघुस्थो।

लिपिस्था क्षयीक्षुब्धक संख्या।

अनन्तो निर्वाणाहराकारबीजा।

उरस्थोऽप्युरुस्था उरा ऊर्ध्वरूपा॥ ४२-१०८॥

ऋचस्थो हि ऋगालसो दीर्घलृस्था।

त्वमेको हि चैंबीजगुर्वी गुणस्था।

सदौङ्कारवर्णा ह्सौंकारबीजा।

असङ्कारचन्द्रो ह्युसः कारवीरा॥ ४२-१०९॥

हरीन्द्रो हरीशा हरिः कृष्णरूपा।

शिवो वेदभाषा च शौरिः प्रसङ्गा।

गणाध्यक्षरूपी परानन्दभक्षा।

परेशो गणेशी रसो वासपूज्या॥ ४२-११०॥

चकोरि कुलप्राणबुद्धिस्थितिस्था।

स्वयं कामधेनुस्वरूपी विरूपा।

श्रीहिरण्यप्रभः श्री हिरण्यप्रभाङ्गी।

प्रभातार्कवर्णोऽरुणाकारणाङ्गी॥ ४२-१११॥

विभा कोटिधारा धराधार कोषा।

रणीशो प्रत्यादिकूटोऽधरो॥ धारणा शौरिरार्या।

महायज्ञसंस्थो महायज्ञनिष्ठा।

सदाकर्मसङ्गः सदामङ्गरङ्गा॥ ४२-११२॥

किरातीपति राकिणी कालपुत्री।

शिलाकोट निर्माणदोहा विशाला।

कलार्ककलस्थो कलाकिङ्किणीस्था।

किशोरः किशोरी कुरुक्षेत्रकन्या॥ ४२-११३॥

महालाङ्गलिश्री बलोद्धामकृष्णः।

कुलालादिविद्याऽभयो भावशून्या।

महालाकिनी काकिनी शाकिनीशो।

महासुप्रकाशा परो हाकिनीशा॥ ४२-११४॥

कुरुक्षेत्रवासी कुरुप्रेममूर्ती।

र्महाभूतिभोगी महायोगिनी च।

कुलाङ्गारकारो कुलाङ्गीशकन्या।

तृतीयस्तृतीयाऽद्वितीयोऽद्वितीया॥ ४२-११५॥

महाकन्दवासी महानन्दकाशी।

पुरग्रामवासी महापीठदेशा।

जगन्नाथ वक्षः स्थलस्थो वरेण्या--।

च्युतानन्दकर्ता रसानन्दकर्त्री॥ ४२-११६॥

जगद्दीपकलो जगद्दीपकाली।

महाकामरूपी महाकामपीठा।

महाकामपीठस्थिरो भूतशुद्धि --।

र्महाभूतशुद्धिः महाभूतसिद्धिः॥ ४२-११७॥

प्रभान्तः प्रवीणा गुरुस्थो गिरिस्था।

गलद्धारधारी महाभक्तवेषा।

क्षणक्षुन्निवृत्तिनीवृत्तान्तरात्मा।

सदन्तर्गतस्था लयस्थानगामी॥ ४२-११८॥

लयानन्दकाम्या विसर्गाप्तवर्गो।

विशालाक्षमार्गा कुलार्णः कुलार्णा।

मनस्था मनःश्रीः भयानन्ददाता सदा।

लाणगीता गजज्ञानदाता महामेरुपाया॥ ४२-११९॥

तरोर्मूलवासी तरज्ञोपदर्शा सुरेशः।

समेशः सुरेशा सुखी खङ्गनिष्ठा।

भयत्राणकर्ता भयज्ञानहन्त्री।

जनानां मखस्थो मखानन्दभङ्गा॥ ४२-१२०॥

महासत्पथस्थो महासत्पथज्ञा।

महाबिन्दुमानो महाबिन्दुमाना।

खगेन्द्रोपविष्टो विसर्गान्तरस्था।

विसर्गप्रविष्टो महाबिन्दुनादा॥ ४२-१२१॥

सुधानन्दभक्तो विधानन्दमुक्तिः।

शिवानन्दसुस्थो विनानन्दधात्री।

महावाहनाह्लादकारी सुवाहा।

सुरानन्दकारा गिरानन्दकारी॥ ४२-१२२॥

हयानन्दकान्तिः मतङ्गस्थदेवो।

मतङ्गाधिदेवी महामत्तरूपः।

तदेको महाचक्रपाणिः प्रचण्डा--।

खिलापस्थलस्थोऽविहम्नीशपत्नी॥ ४२-१२३॥

शिखानन्दकर्ता शिखासारवासी।

सुशाकम्भरी क्रोष्टरी वेदवेदीसुगन्धा।

युगो योगकन्या दवो दीर्घकन्या शरण्यः शरण्या।

मुनिज्ञानगम्या सुधन्यः सुधन्या॥ ४२-१२४॥

शशी वेदजन्या यमी यामवामा।

ह्यकामो ह्यकामा सदा ग्रामकामा।

धृतीशः धृतीशा सदा हाटकस्थाऽ--।

यनेशोऽयनेशी भकारो भगीरा॥ ४२-१२५॥

चलत्खञ्जनस्थः खलत्खेलनस्था।

विवाती किराती खिलाङ्गोऽखिलाङ्गी।

बृहत्खेचरस्थो बृहत्खेचरी च।

महानागराजो महानागमाला॥ ४२-१२६॥

हकारार्द्धसंज्ञा वृतोहारमाला।

महाकालनेमिप्रहा पार्वती च।

तमिस्रा तमिस्रावृतो दुःखहत्या।

विपन्नो विपन्ना गुणानन्दकन्या॥ ४२-१२७॥

सदा दुःखहन्ता महादुःखहन्त्री।

प्रभातार्क वर्णः प्रभातारुणश्रीः।

महापर्वतप्रेमभावोपपन्नो।

महादेवपत्नीशभावोपपन्ना॥ ४२-१२८॥

महामोक्षनीलप्रिया भक्तिदाता।

नयानन्द भक्तिप्रदा देवमाता॥ ४२-१२९॥

इत्येतत्कथितं नाथ महास्तोत्रं मनोरम।

सहस्रनामयोगाऽङ्गमष्टोत्तरसमन्वितमम्॥ ४२-१३०॥

यः पठेत् प्रातरुत्थाय शुचिर्वाशुचिमानसः।

भक्त्या शान्तिमवाप्नोति अनायासेन योगिराट्॥ ४२-१३१॥

प्रत्यहं ध्यानमाकृत्य त्रिसन्ध्यं यः पठेत् शुचिः।

षण्मासात् परमो योगी सत्यं सत्यं सुरेश्वर॥ ४२-१३२॥

अकालमृत्युहरणं सर्वव्याधिविनाशनम्।

अपमृत्य्वादिहरणं वारमेकं पठेद्यदि॥ ४२-१३३॥

पठित्त्वा ये न गच्छन्ति विपत्काले महानिशि।

अनायासेन ते यान्ति महाघोरे भयार्णवे॥ ४२-१३४॥

अकाले यः पठेन्नित्यं सुकालस्तत्क्षणाद्भवेत्।

राजस्वहरणे चैव सुवृत्तिहरणादिके॥ ४२-१३५॥

मासैकपठनादेव राजस्वं स लभेद् ध्रुवम्।

विचरन्ति महावीराः स्वर्गे मर्त्ये रसातले॥ ४२-१३६॥

गणेशतुल्यवलिनो महाक्रोधशरीरिणः।

एतत्स्तोत्रप्रसादेन जीवन्मुक्तो महीतले॥ ४२-१३७॥

महानामस्तोत्रसारं धर्माधर्मनिरूपणम्।

अकस्मात् सिद्धिदं काम्यं काम्यं परमसिद्धिदम्॥ ४२-१३८॥

महाकुलकुण्डलिन्याः भवान्याः साधने शुभे।

अभेद्यभेदने चैव महापातकनाशने॥ ४२-१३९॥

महाघोरतरे काले पठित्वा सिद्धिमाप्नुयात्।

षट्चक्रस्तम्भनं नाथ प्रत्यहं यः करोति हि॥ ४२-१४०॥

मनोगतिस्तस्य हस्ते स शिवो न तु मानुषः।

योगाभ्यासं यः करोति न स्तवः पठ्यते यदि॥ ४२-१४१॥

योगभ्रष्टो भवेत् क्षिप्रं कुलाचारविलङ्घनात्।

कुलीनाय प्रदातव्यं न खल्वकुलेश्वरम्॥ ४२-१४२॥

कुलाचारं समाकृत्य ब्राह्मणाः क्षत्रियादयः।

योगिनः प्रभवन्त्येव स्तोत्रपाठात् सदामराः॥ ४२-१४३॥

आनन्दभैरव उवाच

वद कान्ते रहस्यं मे मया सर्वञ्च विस्मृतम्।

महाविषं कालकूटं पीत्त्वा देवादिरक्षणात्॥ ४२-१४४॥

कण्ठस्थाः देवताः सर्व्वा भस्मीभूताः सुसम्भृताः।

महाविषज्वालया च मम देहस्थदेवताः॥ ४२-१४५॥

कैवल्यनिरताः सर्वे प्रार्थयन्ति निरन्तरम्।

षट्चक्रं कथयित्वा तु सन्तोष्ं मे कुरु प्रभो।

षट्चक्रभेदकथनममृतश्रवणादिकम्॥ ४२-१४६॥

कथित्वा मम सन्तोषं कुरु कल्याणि वल्लभे।

अमृतानन्दजलधौ सुधाभिः सिक्तविग्रहम्॥ ४२-१४७॥

कृत्त्वा कथय शीघ्रं मे चायुषं परिवर्धय।

आनन्दभैरवी उवाच

निगूढार्थ महाकाल कालेश जगदीश्वर॥ ४२-१४८॥

भैरवानन्दनिलय कालकूटनिषेवण।

इदानीं श्रृणु योगार्थ मयि संयोग एव च॥ ४२-१४९॥

श्रुत्वा चैतत्क्रियाकार्यं नरो योगीश्वरो भवेत्।

ममोद्भवः खेऽमले च सर्वाकारविवजीते॥ ४२-१५०॥

भ्रूमध्ये सर्वदेहे च स्थापयित्वा च मां नरः।

भाव्यते चापरिच्छिन्नं ब्रह्मविष्णुशिवात्मकम्॥ ४२-१५१॥

मम रूपं महाकाल सत्त्वरजस्तमः प्रियम्।

केवलं रजोयोगेन शरीरं नापि तिष्ठति॥ ४२-१५२॥

तथा केवलयोगेन तमसा नापि तिष्ठति।

तथा केवलसत्त्वेन कुतो देही प्रतिष्ठति।

अतस्त्रिगुणयोगेन धारयामि नवाङ्गकम्॥ ४२-१५३॥

शनैः शनैः विजेतव्याः सत्त्वरजस्तमोगुणाः।

आदौ जित्वा रजोधर्मं पश्चात्तामसमेव च॥ ४२-१५४॥

सर्वशेषे सत्त्वगुणं नरो योगीश्वरो भवेत्।

गुणवान् ज्ञानवान् वाग्मी सुश्रीर्धर्मी जितेन्द्रियः॥ ४२-१५५॥

शुद्धनिर्मलसत्वं तु गुणमाश्रित्य मोक्षभाक्।

सदा सत्त्वगुणाच्छन्नं पुरुषं काल एव च॥ ४२-१५६॥

पश्यतीह न कदाचिज्जरामृत्युविवजीतम्।

तं जनं परमं शान्तं निर्मलं द्वैतवजीतम्॥ ४२-१५७॥

सर्वत्यागिनमात्मानं कालः सर्वत्र रक्षति।

जले वा पर्वते वापि महारण्ये रणस्थले॥ ४२-१५८॥

भूगर्त्तनिलये भीते संहारे दुष्टविग्रहे।

सन्तिष्ठति महायोगी सत्यं सत्यं कुलेश्वर॥ ४२-१५९॥

महायोगं शृणु प्राणवल्लभ श्रीनिकेतन।

योगार्थं परमं ब्रह्मयोगार्थ परन्तपः॥ ४२-१६०॥

ये जानन्ति महायोगं मिरयन्ते न च ते नराः।

कृत्वा कृत्वा षड्ङ्लस्य साधनं कृत्स्नसाधनम्॥ ४२-१६१॥

ततः कुर्यान्मूलपद्मे कुण्डलीपरिचालनम्।

मुहुर्मुहुश्चालनेन नरो योगीश्वरो भवेत्॥ ४२-१६२॥

एकान्तनिर्मले देशे दुर्भीक्षादिविवर्जीते।

वर्षमेकासने योगी योगमार्गपरो भवेत्॥ ४२-१६३॥

पद्मासनं सदा कुर्याद् बद्धपद्मासनं तथा।

महापद्मासनं कृत्वा तथा चासनमञ्जनम्॥ ४२-१६४॥

तत्पश्चात् स्वस्तिकाख्यञ्च बद्धस्वस्तिकमेव च।

योगाभ्यासे सदा कुर्यात् मन्त्रसिद्ध्यादिकर्मणि॥ ४२-१६५॥

चक्रासनं सदा योगी योगसाधनकर्मणि।

बद्धचक्रासनं नाम महाचक्रासनं तथा॥ ४२-१६६॥

कृत्वा पुनः प्रकर्तव्यं बद्धयोगेश्वरासनम्।

योगेश्वरासनं कृत्वा महायोगेश्वरासनम्॥ ४२-१६७॥

वीरासनं ततः कुर्यात् महावीरासनं तथा।

बद्धवीरासनं कृत्वा नरो योगेश्वरो भवेत्॥ ४२-१६८॥

ततः कुर्यान्महाकाल बद्धकुक्कुटासनम्।

महाकुक्कुटमाकृत्य केवलं कुक्कुटासनम्॥ ४२-१६९॥

मयूरासनमेवं हि महामयूरमेव च।

बद्धमयूरमाकृत्य नरो योगेश्वरो भवेत्॥ ४२-१७०॥

एतत् सर्वं प्रवक्तव्यं विचार्य सुमनःप्रिय।

अभिषेकप्रकरणे आसनादिप्रकाशकम्॥ ४२-१७१॥

कथितव्यं विशेषेण इदानीं शृणु षट्क्रमम्।

ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः॥ ४२-१७२॥

ततः परशिवो देवः षड्शिवाः षट्प्रकाशकाः।

एतेषां षड्गुणानन्दाः शक्तयः परदेवताः॥ ४२-१७३॥

षट्चक्रभेदनरता महाविद्याधिदेवताः।

एतेषां स्तवनं कुर्यात् परदेवसमन्वितम्॥ ४२-१७४॥

एतत्प्रकारकरणे यश्च प्रत्यहमादरात्।

क्रियानिविष्टः सर्वत्र भावनाग्रहरूपधृक्॥ ४२-१७५॥

स पश्यति जगन्नाथं कमलोपगतं हरिम्।

आदौ हरेर्दर्शनञ्च कारयेद्येन कुण्डली॥ ४२-१७६॥

ततो रुद्रस्य सञ्ज्ञायां लाकिन्याः शुभदर्शनम्।

सर्वशः क्रमशो नाथ दर्शनं प्राप्यते नरः॥ ४२-१७७॥

शनैः शनैर्महाकाल कैलासदर्शनं भवेत्।

क्रमेण सर्वसिद्धिः स्यात् अष्टाङ्गयोगसाधनात्॥ ४२-१७८॥

अष्टाङ्गसाधने काले यद्यत् कर्म करोति हि।

तत्सर्वं परियत्नेन शृणु सादरपूर्वकम्।

तत्क्रियादिकमाकृत्य शीघ्रं योगी भविष्यति॥ ४२-१७९॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षट्चक्रप्रकाशे

भैरवीभैरवसंवादे द्विचत्त्वारिंशत्तमः पटलः॥ ४२॥

## अथ त्रिचत्त्वारिंशः पटलः

आनन्दभैरवी उवाच

अथ कामातुराणाञ्च कामनिर्मूलहेतुना।

कथयामि महाकाल यत् कृत्वा कामिनीवशम्॥ ४३-१॥

तत्प्रकारं प्रवक्ष्यामि योगसाधनहेतुना।

हस्तासनं समाकृत्य ऊद्र्ध्वे पद्मासनं चरेत्॥ ४३-२॥

शिरोमूले करद्वन्द्वं नियोज्य जपमाचरेत्।

अल्पाल्पधारणं कुर्यात् श्वाससंख्यां समाचरेत्॥ ४३-३॥

श्वाससंख्यां तदा कुर्याद् यदा कुम्भकसुस्थिरः।

विना श्वाससंख्यां च कुतो योगिवरो वशी॥ ४३-४॥

विना संख्याप्रयोगेण बिना कुयोगवारणात्।

कदाचिन्न प्रकर्तव्यं संख्याकुम्भकवजीतः॥ ४३-५॥

अल्पाल्पकुम्भकं कुर्यात् खेचरपिरयकर्मणि।

सर्वकाले प्रकर्तव्यं सर्वकाले सुखी भवेत्॥ ४३-६॥

आनन्दकल्पमाकृत्य विजयाद्यासवादिभिः।

क्रमेण भेदनं कुर्यात् ततः साधकयोगिराट्॥ ४३-७॥

योगिनामपरिच्छिन्नं भावं विद्युत्प्रभाकरम्।

विद्युत्कोटिसमाभासं वारिधारासमाकुलम्॥ ४३-८॥

यद्येवं सुतभावज्ञा विपाकेन पतन्ति ते।

ते यान्ति परमं स्थानं ते यान्ति कोटिराज्यपाः॥ ४३-९॥

ते भोगिनो योगिनश्च ते लोकपालकाः स्मृताः।

ते महद्गुणसम्भोग्या मिरयन्ते न कदा कुतः॥ ४३-१०॥

ते भवन्ति महाश्रेष्ठास्ते भवन्ति सुधाकराः।

ते भेदकरणे युक्तास्ते मनुष्या न देवताः॥ ४३-११॥

ते सर्वे यान्ति सर्वत्र ते शिवास्ते च किङ्कराः।

ते मे भक्ता महाकाल इति मे स्वागमोदयम्॥ ४३-१२॥

ये भजन्ति तव पदाऽम्भोजं भावपरायणाः।

ते ज्ञानिनो भवन्त्येव तेषां कालो वशो भवेत्॥ ४३-१३॥

ये प्राणवायुसंयोगा ये प्राणपरिरक्षकाः।

आत्महत्यां परीहाय ब्रह्मलोकं मुदान्विताः॥ ४३-१४॥

यान्ति नाथ ध्यानपराः संसारार्थविवजीताः।

अरण्यवासिनो ये च नारण्यवासिनो नराः॥ ४३-१५॥

एकान्तनिर्जने देशे सर्वविघ्नविवजीते।

षड्वक्रभेदमाकृत्य ते नराः फलभागिनः॥ ४३-१६॥

महाकालफलं यस्तु सदेच्छति सतां गतिम्।

स एव योगी भ्रूमध्ये स्थित्वा सर्वत्रगो भवेत्॥ ४३-१७॥

सर्वदेशे सदा पूज्यः सर्वेशो निर्मलोऽद्वयः।

अनाद्यनन्तविभवः कालात्मा स भवेत् क्षणात्॥ ४३-१८॥

एतेषां साधनं शीघ्रं सिद्धिविद्यासुकल्पनम्।

एतद्रूपं निजं ध्यात्वा भेदं कृत्वा निजस्थलम्॥ ४३-१९॥

मूलाधारं स्वाधिष्ठानं भेदज्ञानी विभेद्य च।

कुर्यात् परमसन्दर्भं मणिपूरे विचक्षणः॥ ४३-२०॥

कृत्वा च दर्शनं विद्वान् श्रीकृष्णचरणाम्बुजम्।

स्वाधिष्ठानादिदेवेन्द्रं शक्तियुक्तं निरञ्जनम्॥ ४३-२१॥

राकिणीराधिका व्याप्तं त्रिलोकरक्षणं परम्।

परमाकाशनिलयं त्रैगुण्यं वारिरूपिणम्॥ ४३-२२॥

वाञ्छाकल्पतरोर्मूलवासिनं शिववैष्णवम्।

विलोक्यानन्दहृदयोऽशङ्कः सर्वत्र दर्शकः॥ ४३-२३॥

कृत्वा योगी सदाभ्यासी मणिपूरं विलोकयेत्।

मणिपूरं महाचिन्हं सिद्धिक्षेत्रं सुधामयम्॥ ४३-२४॥

हिरण्यकोटिदानेन गोकोटिदानहेतुना।

कोटिब्राह्मणभोज्येन यत्फलं लभते नरः॥ ४३-२५॥

तत्फलं लभते ध्यात्वा मणिपूरं मनोरमम्।

मणिपूरं महास्थानं योगिनामप्यदर्शनम्॥ ४३-२६॥

सूक्ष्मातिसूक्ष्मं परमं ज्ञानिनां ज्ञानगोचरम्।

अप्रकाश्यं महागुह्यं योगयोगेन लभ्यते॥ ४३-२७॥

आनन्दभैरव उवाच

योगार्थं यत्र कमले कोटिविद्युत्समप्रभे।

कोटिकालाग्निमिलिते कोटिचन्द्रविनिमीते॥ ४३-२८॥

कोटिसूर्यादिकिरणे मनः केन विलीयते।

सूचीरन्ध्रे यथा सूत्रं तदेव फलदं सुखम्॥ ४३-२९॥

यन्न दृष्टं श्रुतं क्वापि ज्ञानं न तत्र सुन्दरि।

तत्र केन प्रकारेण मनोनिवेशनं भवेत्॥ ४३-३०॥

यत्र न गमनं नृणां तस्य देवस्य यत्फलम्।

तत्फलं किं न जानाति अदृष्टे गमनं कुतः॥ ४३-३१॥

कुतो राज्ञां नसम्पत्तिः कुतो वा स्वार्थदर्शनम्।

कुतो वा जायते सिद्धिर्भेदने किं फलं भवेत्॥ ४३-३२॥

तत्त्वं जानासि देवेशि तत्प्रकारं प्रकाशय।

आनन्दभैरवी उवाच

यदुक्तं तद्धि सकलं सफलं परमेश्वर॥ ४३-३३॥

तत्र पूर्वं योगधर्मस्वाश्रयं शृणु तत्क्रमम्।

पूर्वस्मरणमात्रेण जीवन्मुक्तो भविष्यसि॥ ४३-३४॥

जीव एव महाभाग लोकानां मोक्षबन्धगः।

स जीवो वायुरूपेण महाबलपराक्रमः॥ ४३-३५॥

गच्छति प्रत्यहं नित्यं सर्वदा च पुनः पुनः।

पुनरायाति धरणीं स्वभावेन निरन्तरम्॥ ४३-३६॥

नानाभावपिरयः सोऽपि नानाकारनिरूपकः।

नानाधर्मपिरयः शुद्धोऽशुद्धवेशधरो महान्॥ ४३-३७॥

कन्दर्पनिलयो योगी स योगी परमार्थवित्।

स ज्ञानी निरहङ्कारी सोऽहङ्कारी शरीरधृक्॥ ४३-३८॥

सर्वगन्धपिरयोऽदृश्यो भावयेत्तां रहस्यवित्।

स एव निष्कलः शुद्धः सदा ध्यानपरायणः॥ ४३-३९॥

यदा चात्मनि ब्रह्माण्डे ब्रह्मणि त्वयि शङ्करे।

तन्मयो विलयं याति तदा भावो महान् स्मृतः॥ ४३-४०॥

तद्भावः परमं ज्ञानं न कथ्यं विपरीतकम्।

आधारं सुसुखं नित्यं स्वल्पकालविवजीतम्॥ ४३-४१॥

अत्यन्तधर्म सन्धानं प्राप्य योगी भवेन्नरः।

शनैः शनैः प्रगन्तव्यं तत्र तत्र सुदर्शनम्॥ ४३-४२॥

तत्र तत्र महासिद्धो भूत्त्वा संसारपुत्रवान्।

योगिनां बहुकालस्थं मृतानामल्पकालकम्॥ ४३-४३॥

श्वासधारणमाकृत्य बहुकालं सुखी भवेत्।

यथा बृहस्पतिः श्रीमान् यथा सूर्यो दिवाकरः॥ ४३-४४॥

तथा प्रकाशमाकुर्यात् कोटिभिः स्तोत्रनामभिः।

स्तुत्वा भूत्वा महाद्रव्यैस्तर्पयित्वा यथाक्रमम्॥ ४३-४५॥

अभिषिक्तः पुनर्ध्यात्वा पूजयित्वा यथाविधि।

मानसोपचारद्रव्यैः स्वधायुक्तैरथापि वा॥ ४३-४६॥

परमानन्दितो भूत्त्वा भावयेत् पीठदेवताः।

भावयित्वा ततो जप्त्वा धर्माधर्मौ विचिन्तयेत्॥ ४३-४७॥

देवतायां मनो योज्य स्थापयित्वा स्वपीठके।

पुनरुत्फुल्लकमलं मुद्रितं परिकारयेत्॥ ४३-४८॥

षड्दलं मूर्च्छितं कृत्वा दलाग्रे संविशेत् सुधीः।

सदानन्दः सर्वमयो वेदवेदान्तनामभिः॥ ४३-४९॥

स्तवकोटिभिरेकत्र ध्यात्वा संहारमुद्रया।

अधोमुखे दशदलकमलाग्रे नियोजयेत्॥ ४३-५०॥

षड्दलाग्रं महाकाल नियोज्य गमनं चरेत्।

ततो गच्छेत् प्रज्वलिते पद्मे दशदले पुरे॥ ४३-५१॥

प्रविश्य कणीकामध्ये तन्मयस्तत्क्षणाद् भवेत्।

तत्क्षणात्तन्मयो भूत्वा कुण्डलीचक्रसंस्थितः॥ ४३-५२॥

असाध्यसाधनं सर्वं मणिपूरस्थनिर्मलम्।

मणिपूरे महापीठे ध्यानगम्ये सति प्रभो॥ ४३-५३॥

मनोनिवेशनं कृत्वा नरो मुच्येत सङ्कटात्।

मनोयोगी मनोभोगी मनोभक्तो मनोयुवा॥ ४३-५४॥

मन एव मनुष्याणां कारणं त्राणमोक्षयोः।

कारणं सर्वभावानां तद्भावं सन्त्यजेद् बुधः॥ ४३-५५॥

सर्वभावं विहायापि महाभावं समाश्रयेत्।

भावेन लभ्यते मोक्षो भावेन लभ्यते सुखम्॥ ४३-५६॥

एतद्भावं सदा कुर्याद् भावाद् भवति योगिराट्।

भावेन भक्तिमाप्नोति विषयाद् भावमाश्रयेत्॥ ४३-५७॥

विषयं विकृतिग्राह्यं सुकृतिज्ञानवर्जितम्।

त्यक्त्वा दिव्यं महापीठं मणिपूरं समाश्रयेत्॥ ४३-८॥

महायन्त्रे मनो दत्वा निर्माणं कारयेद् बुधः।

मणिभिर्ग्रथनं कृत्वा नानामणिविभूषितम्॥ ४३-५०॥

सुपीठं कुलपीठे वा लिङ्गपीठमथापि वा।

श्रीविद्यापीठमालिख्य विभाव्य च पुनः पुनः॥ ४३-६०॥

ततः प्रस्फुटिते पद्मे दलाग्रे षड्दलस्य च।

स्थापयित्वा महाविष्णुं पूजयित्वा सुसंयतः॥ ४३-६१॥

जप्त्वा च तन्मयो भूत्वा निधाय मणिपूरके।

दृढाकारमूर्ध्वगतं षड्दलं परिरक्षयेत्॥ ४३-६२॥

ततश्चोद्र्ध्वतरे स्थाने महोच्चोत्तरसुन्दरे।

मनोनिवेशनं कृत्वा शक्तिं रुद्रं समाश्रयेत्॥ ४३-६३॥

चैतन्यरूपिणीं शक्तिं चैतन्यं रुद्ररूपिणम्।

तत्र भद्रात्मकं रौद्रं रौद्रीं प्रकाशकारिणीम्॥ ४३-६४॥

भक्त्या पुनः पुनर्ध्यायेदूर्ध्वरेतास्तमीश्वरम्।

प्रगच्छन्ति चोद्र्ध्वमार्गे ध्येया योगिभिरेव च॥ ४३-६५॥

अहं देवी परानन्दा मणिपूरनिवासिनी।

तथा श्रीलाकिनीशक्तिः श्रीरुद्रस्त्वं न संशयः॥ ४३-६६॥

रुद्ररूपी महादेवो रुद्ररूपा सरस्वती।

सर्वदा ऊद्र्ध्वगामी च सा शक्तिरूद्र्ध्वगामिनी॥ ४३-६७॥

ऊद्र्ध्वमार्गं काशयन्तीं योगिनीं योगमातरम्।

महारुद्रं तथा ध्यात्वा मणिपूरे सुनिर्मले॥ ४३-६८॥

ऊद्र्ध्वमुखं समाकुर्याद् महापद्मं मनोरमम्।

मणिपूरं महाकान्तं मणिकोटिसुनिर्मलम्॥ ४३-६९॥

कोटिकोटिशरच्चन्द्र पूर्णज्योतिःसमाकरम्।

ऊद्र्ध्वमुखं समाकुर्यात् स्वयंभावेन जायते॥ ४३-७०॥

यदि चोद्र्ध्वमुखं पद्मं यन्त्रमण्डलसंयुतम्।

अतिकोमलपत्रेषु भाति चात्यद्भुतङ्करम्॥ ४३-७१॥

लेपयित्वा योजयित्वा स्थापयित्वा पुनः पुनः।

प्रापयित्वा महारुद्रं त्रैलोक्यजननीं शिवाम्॥ ४३-७२॥

रुद्राणीं रौद्रशक्तिश्च लाकिनीं लोकसाक्षिणीम्।

कुम्भकं प्राणवायोश्च प्राणवायोश्च योजनम्॥ ४३-७३॥

एकत्र मिलनं कृत्वा भावनं परिकारयेत्।

भावेन लभ्यते मोक्षो भाव एव निजपिरयः॥ ४३-७४॥

मनो निवेश्य तत्रस्थो रुद्राराधनमाचरेत्।

तथा श्रीलाकिनीदेव्याः परमाद्भुतसाधनम्॥ ४३-७५॥

श्रृणुष्व परमानन्द भैरव पिरयवल्लभ।

ममोपदेशं सन्त्यज्य कोऽपि सिद्धो न सम्भवेत्॥ ४३-७६॥

ममाज्ञाबलयोगेन सिद्धो भवति मानवः।

मुक्तिमूलं महाभावं मुक्तिमूलं हि साधनम्॥ ४३-७७॥

मुक्तिक्रमेण कालेन सिद्धो भवति साधकः।

मम योगक्रमेणैव मम तन्त्रावलोकनात्॥ ४३-७८॥

कोऽपि नाथ ब्रह्मयोगी भवत्येव न चाखिले।

सर्वे च योगिनः शीघ्रं प्रभवन्ति न संशयः॥ ४३-७९॥

स्फुटाकारदलं कृत्वा विन्यासं तत्र कारयेत्।

महायोगिकुलन्यासं विद्यान्यासं समाचरेत्॥ ४३-८०॥

सर्वन्यासं निजन्यासं ज्ञानजालं समाचरेत्।

मानसक्रियया व्याप्तं देहं मधुरसम्प्लुतम्॥ ४३-८१॥

शिवरूपिणमात्मानं वैष्णवं ज्ञानचक्षुषम्।

एकाकारं मूलमन्त्रध्यानं तत्र समाचरेत्॥ ४३-८२॥

ध्यात्वा चार्घ्यं समाकुर्यात् कुलचक्रक्रमेण तु।

आत्मानमपरिच्छिन्नं विचिन्त्य पुनरेव च॥ ४३-८३॥

सन्ध्यायेन्निजचैतन्यदेवतां कुलदेवताम्।

पाद्यार्घ्यादिक्रमेणैव पूजयित्वाऽप्यहनीशम्॥ ४३-८४॥

परिवारांस्ततो ध्यात्वा तत्सर्वान् परिपूजयेत्।

धूपदीपौ ततो दद्याद् निजपूजाविधानतः॥ ४३-८५॥

प्राणायामं दीपनादौ कुर्यात् साधक एव च।

भक्त्या ध्यात्वा मनुं जप्त्वा मणिपूरस्थदैवते॥ ४३-८६॥

जपं समर्प्य विधिना प्राणायामं पुनस्त्रयम्।

प्रणम्य स्तोत्रकवचैः स्वदेवीं हृदि चार्पयेत्॥ ४३-८७॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धिमन्त्रप्रकरणे भैरवभैरवीसंवादे मणिपूरचक्रभेदप्रकारो नाम त्रिचत्वारिंशत्तमः पटलः॥ ४३॥

## अथ चतुश्चत्त्वारिंशः पटलः

आनन्दभैरवी उवाच

मणिपूरविभेदार्थं शृणु वक्ष्यामि तत्त्वतः।

यं ज्ञात्वा मूढलोकाश्च प्रविशन्ति महाघटे॥ ४४-१॥

अमूढत्वं प्राप्नुवन्ति भवन्ति योगिनोऽमराः।

खेचरत्वं प्राप्नुवन्ति सांख्ययोगनिषेविणः॥ ४४-२॥

महापातकमुख्यानां नाशं शीघ्रं महारिपुम्।

कियत्कालेऽनले दोषे जले पर्वतकानने॥ ४४-३॥

कुर्वन्ति च दिदृक्षूणां देवतावशमेव च।

मणिपूरं महापीठं ध्यायेद् यः प्राणसंयमम्॥ ४४-४॥

तथा पञ्चाऽऽसवासिद्धिं कृत्वा पूरं विभेदयेत्।

त्रिलोक जननीं सत्यां शिवामाद्यां त्रियोगिनीम्॥ ४४-५॥

मूलाधारात् समुत्पत्य गच्छन्ती रसषड्दले।

प्रकाशं षड्दलं कृत्त्वा प्रगच्छन्ती प्रभान्विता॥ ४४-६॥

मणिपूरे महाचक्रे त्रैलोक्यजपसाधने।

सिद्धीनां निलये काम्ये कमनीये मनःपिरये॥ ४४-७॥

मनः पिरया महादेवी सर्वोल्लासनकारिणी।

खेचरी महदानन्दमण्डिता मन्त्रयोगिनी॥ ४४-८॥

अनुग्रहकरी सिद्धा विभाव्या तत एव हि।

आनन्दघन सन्दोहमात्मज्ञानं सुनिर्मलम्॥ ४४-९॥

मणिपूरं संविभाव्य किन्न सिद्ध्यति भूतले।

अणिमा लघिमा व्याप्तिर्महाश्रेष्ठादिसिद्धिभाक्॥ ४४-१०॥

कौलो वा वार मुख्यो वा ज्ञानी वा साधकोत्तमः।

योगाभ्यासं यः करोति मणिपूरं समाश्रयेत्॥ ४४-११॥

मणिपूरस्थितं देवं यः स्तौति नियतः शुचिः।

स्तवराजस्य पाठेन प्रबुद्धा कुण्डली भवेत्॥ ४४-१२॥

सा देवी परमा माया मणिपूरे स्थिता शिवा।

प्रबुद्धां कास्यत्येव ततः सिद्धो भवेन्मनुः॥ ४४-१३॥

सिद्धे मनौ पराप्राप्तिरिति मे तन्त्रनिर्णयः।

यदि चैतन्यमिच्छन्ति कुण्डलिन्याः पराक्रमम्॥ ४४-१४॥

जानाति निजदेहे च महोदयमनुत्तमम्।
तेषां चैतन्यहेतोश्च देवतानां कुलेश्वर॥ ४४-१५॥
महास्तोत्रं समाकुर्यात् प्रत्यहं सिद्धिहेतुना।
सिद्धिकार्यं धर्मकार्यं मणिपूरे समाप्नुयात्॥ ४४-१६॥
मणिपूरनिवासिन्याः भेदनं ज्ञानसाधनम्।
सहस्रनाममममलं सिद्धिद्रव्यनिरूपणम्॥ ४४-१७॥
नित्यसिद्धिं काम्यसिद्धिं मणिपूरे समाश्रयेत्।
प्राणबुध्या स्वेष्टदेवीं पूजयेल्लाकिनीं पराम्॥ ४४-१८॥
स्वदेवतां पूजयेद् वै मणिपूरे महालये।
मणिपूरस्थितां रौद्रीं महाशक्तिं महोदयाम्॥ ४४-१९॥
सर्वसञ्चारिणीं योग्यां महायोगिपिरयां पराम्।
निजदेवीपदाम्भोज पूजावत् पूजनं चरेत्॥ ४४-२०॥
पूजां समाप्य विधिना स्तोत्रं देव्याः समाचरेत्।
तत्प्राणवायुरूपेण सिद्धीनां नाशहेतवे॥ ४४-२१॥
कृतं स्तोत्रं कोटिनाम ब्रह्मणा गुणकात्मना।
तत्सर्वं प्रकरोष्येतत् प्रकारं ज्ञानशङ्कर॥ ४४-२२॥
एतत्स्तोत्रप्रसादेन योगिनस्ते महौजसः।
अहङ्कारघटी ज्ञानं महाव्याधिनिवारणम्॥ ४४-२३॥
महास्तवनमेवं हि साक्षादानन्दवर्धनम्।
नय भक्तिप्रदं शुद्धं शुद्धानामप्यगोचरम्॥ ४४-२४॥

शिवां शक्यामाद्यां दशदलगतां रुद्रमहिषी।

विशालाक्षीं सूक्ष्मां शशियुतजटाजूटमुकुटाम्।

महाविद्युत्कोटिपिरयजडितपीठे त्रिनयना।

महालाकिन्याख्यां दशदल कलां भावयति कः॥ ४४-२५॥

मृणालान्तर्ध्वान्तः प्रकटतटसंहारसुभगा।

कुलक्षेत्रोल्लासां चरमपददां दीपकलिकाम्।

सदानन्दाकारां गतिगुणहरां चारुकिरणा।

प्रभावर्णश्यामां रुचिरवदनां भावयति कः॥ ४४-२६॥

प्रतीक्षानन्दाब्धि प्रकटचरणाम्भोजयुगला।

वियद्वर्णां कान्तां सुरवरसुपूजाविधिरताम्।

महासूक्ष्मद्वारप्रचलनकरीं भेदनकरी।

दिवायोगाह्लादपिरयजनशिवां भावयति कः॥ ४४-२७॥

अयोध्यापीठस्थामरुणकमनीं प्रेमगलिता।

महारौद्रीं भीमां शतशतरविप्रेमनिकराम्।

महादुःखार्तानां नयनशुभगां भावविरहा।

सतीं सीतामिन्द्रोत्सवनवघटां भावयति कः॥ ४४-२८॥

सुधाब्धेराह्लादप्रकरणसुरां सौरभकरा।

क्रियारूपां योग्यां भुवमणिपूरप्रकृतिगाम्।

गुरोः स्थानोद्योगां समनदहनां शीतलवरा।

त्रितत्त्वां तत्त्वज्ञां स(श)मरहरशक्तिं भजति कः॥ ४४-२९॥

विकाराकाराङ्गीं तरुणरविकोटिश्रियमिमा।

कुलाधारां सारां परमरसधारां जयवराम्।

कृपाच्छन्नाकामां परमरसभाण्डेषु शुभदा।

भजेदिन्द्रां रुद्रां शशिमुखकराह्लादनिकराम्॥ ४४-३०॥

रसाब्धौ विश्रान्तिं कुपितजनशान्तिं सकरुणा।

त्रिलोकज्ञानस्थां मदननिलयां योगनिकराम्।

मणिद्वीपच्छायां दशदलकलां केवलभवा।

भवानीं रुद्राणीं वरदमणिपूरे भजति कः॥ ४४-३१॥

कृपाब्धौ किं किं किमनुगतसुतां मौलिनमिता।

शिवाङ्कां मूलस्थां सकलमणिपूरस्थिरभवाम्।

हिरण्याक्षीं तक्षां क्षयकरणरश्मिच्छविशता।

विनोदीं पञ्चास्यपिरयगुणधरां भावयति कः॥ ४४-३२॥

महापद्माख्यां सकलधनदानाकुलचला।

चलानन्दोद्रेक--प्रचयरससिन्धूद्भवहृदि।

हृदानन्दो ध्यायेत् सकलगुणदात्रीं सुखमयी।

कलां सूक्ष्मात्यन्तां तिमिरदहनां कोटिधनदाम्॥ ४४-३३॥

दशकं यः पठेन्नित्यं श्रीविद्यां सुखदायिनीम्।

ध्यात्वा हृदयपद्माधो निर्मलात्मा सदा पठेत्॥ ४४-३४॥

मणिपूरस्थितं देवं रुद्रं पश्यति योगिराट्।

रुद्राणीसहितं शम्भुं दृष्ट्वा मुक्तो भवेत् क्षणात्॥ ४४-३५॥

जीवन्मुक्तः स एवात्मा योगिनीवल्लभो भवेत्।

योगात्मा परमात्मा च स हि साक्षादनीश्वरः॥ ४४-३६॥

स भित्वा मणि पूराब्धिं निर्मलं ज्योतिरुज्ज्वलम्।

शम्भोरीश्वरयोगज्ञक्रियानाथस्य श्रीपतेः॥ ४४-३७॥

निकटे याति देव्याश्च स्थाने योगी न संशयः॥ ४४-३८॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षट्चक्रप्रकाशे मणिपूरभेदने भैरवीभैरवसंवादे त्रितत्त्वलाकिनीशक्तिस्तवनं नाम चतुश्चत्त्वारिंशत्तमः पटलः॥ ४४॥

## अथ पञ्चचत्त्वारिंशः पटलः

आनन्दभैरवी उवाच

अथ कालक्रमं वक्ष्ये यत्काले योगिराड् भवेत्।

तत्कालं प्राणवायूनां निलयं सूक्ष्मसञ्चयम्॥ ४५-१॥

पुनः पुनः सञ्चयने दृढो भवति संवशी।

क्रियायां सञ्चरन्त्येव योगिन्यो योगमातरः॥ ४५-२॥

यत्काले यत्प्रकर्त्तव्यं भानुरूप्यकुलार्णव।

काले काले वशो याति परमात्मा निरामयः॥ ४५-३॥

विना प्रयोगसारेण विना जाप्येन शङ्कर।

कः सिद्धो जायते ज्ञानी योगी भवति कुत्र वा॥ ४५-४॥

अभ्यासमन्त्रयोगेन शनैर्योगी भवेन्नरः।

प्रभाते ज्ञानशौचञ्च कुण्डलीभावनादिकम्॥ ४५-५॥

तन्मध्ये चापि संस्कुर्याद् योगं पञ्चामरादिकम्।

ततो मन्त्रस्नानकार्यं मस्तके जलसेचनम्॥ ४५-६॥

सन्ध्यावन्दन कार्यञ्च ततः कुर्यात् पृथक् पृथक्।

तत उत्थाय सद्भूमौ शुद्धकोमलजासने॥ ४५-७॥

उपविश्य सदाभ्यासी शुद्धकायासनञ्चरेत्।

तत्कार्यसमये नाथ ध्यानं चैतन्यमेव च॥ ४५-८॥

कुण्डलिन्याः सदा कुर्यात् तन्मध्ये जपमेव च।

आसनं सुन्दरं कुर्यात् सव्यापसव्यभेदतः॥ ४५-९॥

आसनादिकमाकृत्य शेषे सुस्थासनं चरेत्।

सुस्थासनं समाकृत्य चोर्ध्वपद्मासनं चरेत्॥ ४५-१०॥

मस्तकाधः केशमध्ये हस्तौ दत्त्वा मनुं जपेत्।

चतुरशीतित्रिगुणमासनं भञ्जनं तथा॥ ४५-११॥

प्रत्यासनं क्रमेणैव एतेषां द्विगुणं पुनः।

एतेषामासनादीनां वक्तव्या सङ्ख्यका पुनः॥ ४५-१२॥

अष्टाङ्गसाधने नाथ वक्तव्यं सर्वमासनम्।

प्राणायामं षोडशकमथवा द्वादशादिकम्॥ ४५-१३॥

स्वकर्णागोचरं कृत्वा पिबेद्वायुं सदा बुधः।

ततः समाप्य तत्कार्यं मन्त्रयोगं समभ्यसेत्॥ ४५-१४॥

समाप्य मन्त्रयोगं च प्राणायामत्रयं चरेत्।

तत उत्थाय नद्यादिं विलोक्य चान्तरात्मनि॥ ४५-१५॥

स्नानं कृत्त्वा महायोगी मानसादिक्रमेण तु।

तत्रैव मानसं जापं समाप्य जपमेव च॥ ४५-१६॥

एकप्राणायामं कुर्यात् कृत्त्वा तीरे विशेत् सुधीः।

पिधाय पीतवसनं धर्माधर्मं विचिन्तयेत्॥ ४५-१७॥

ततः सन्ध्यावन्दनं च कृत्त्वा पूजाविधिं चरेत्।

सर्वत्र कुम्भकं कृत्त्वा भावयित्त्वा पुनः पुनः॥ ४५-१८॥

मणिपूरे महापीठे ध्यात्वा देवीं कुलेश्वरीम्।

पूजयित्त्वा विधानेन प्राणायामं पुनश्चरेत्॥ ४५-१९॥

ततः कुर्यात् साधकेन्द्रो विधिना कवचस्तवम्।

सर्वत्र प्राणसंयोगाद् योगी भवति निश्चितम्॥ ४५-२०॥

अथवा कालजालानां वारणाय महर्षीभिः।

एतत् कार्यं समाकुर्याद् योगनिर्णयसिद्धये॥ ४५-२१॥

विना योगप्रसादेन (न) कालः संवशो भवेत्।

कालेन योगमाप्नोति योगध्यानं स्वकालकम्॥ ४५-२२॥

योगाधीनं परं ब्रह्म योगाधीनं परन्तपः।

योगाधीना सर्वसिद्धिस्तस्माद् योगं समाश्रयेत्॥ ४५-२३॥

योगेन ज्ञानमाप्नोति ज्ञानान्मोक्षमवाप्नुयात्।

तत्क्रमं शृणु भूचक्रे सर्वसिद्ध्यादिसाधनम्॥ ४५-२४॥

सिद्धिसाधनमन्त्रेण योगी भवति भूपतिः।

शीघ्रं राजा भवेद् योगी शीघ्रं योगी भवेद् यतिः॥ ४५-२५॥

शीघ्रं योगी भवेद्विप्रो यदि स्वधर्ममाश्रयेत्।

स्वधर्मनिष्ठताज्ञानं सज्ज्ञानं परमात्मनः॥ ४५-२६॥

तज्ज्ञानेन लभेद् योगं योगाधीनाश्च सिद्धयः।

सिद्ध्यधीनं परं ब्रह्म तस्माद् योगं समाश्रयेत्॥ ४५-२७॥

स्वधर्मनिष्ठताज्ञानं स तज्ज्ञानं समाश्रयेत्।

योगयोगाद्भवेन्मोक्षो मम तन्त्रार्थनिर्णयः॥ ४५-२८॥

योगी ब्रह्मा मुरारिश्च तथा योगी महेश्वरः।

तथा योगी महाकालः कौलो योगी न संशयः॥ ४५-२९॥

मणिपूरभेदने तु यत्नं कुर्यात् सदा बुधः।

यदि चेन्मणिपूरस्थदेवताभेदको भवेत्॥ ४५-३०॥

सर्वक्षणं सुखी भूत्वा चिरं तिष्ठति निश्चितम्।

महाप्रभं सुन्दरञ्च महामोहनिघातनम्॥ ४५-३१॥

मेघाभं विद्युताभं च पूर्णतेजोमयं परम्।

मणिभिर्ग्रथितं पद्मं मणीनां पूरमेव च॥ ४५-३२॥

सूर्यकान्तैश्चन्द्रकान्तैर्वह्निकान्तैर्महोज्ज्वलैः।

इत्यादिमणिभिः सर्वं परं कान्तिगुणोदयम्॥ ४५-३३॥

निविडे जलदे मेघे कोटिविद्युत्प्रभा यथा।

तत्प्रकारं भावनीयं सिद्धानां ज्ञानगोचरम्॥ ४५-३४॥

अत्यन्तसूक्ष्ममार्गस्थं नित्यस्थानं हि योगिनाम्।

मणिभिः शोभितं पद्मं मणिपूरं तथोच्यते॥ ४५-३५॥

दशकोमलपत्रैश्च समायुक्तं मनोहरम्।

डादिफान्तवर्णयुक्तं स्थिरविद्युत्समाकुलम्॥ ४५-३६॥

शिवेनाधिष्ठितं पद्मं विश्वालोकनकारकम्।

आदौ वर्णरूपकाणां ध्यानं कुर्यात् स्वधामयः॥ ४५-३७॥

महापद्मे मनो दत्वा निर्मलं परिभावयेत्।

डादिफान्ताक्षराणां च ध्यानाज्ज्ञानस्थिरो भवेत्॥ ४५-३८॥

मनोधैर्यमुपागम्य दिव्यभक्तिं समालभेत्।

वर्णध्यानं प्रवक्ष्यामि श्रृणुष्व परमेश्वर॥ ४५-३९॥

यद्विभाव्यामरो भूत्वा चिरं तिष्ठति मानवः।

महाधैर्यक्रियां कुर्याद् वायुपानं शनैः शनैः॥ ४५-४०॥

यत्र यत्र मनो याति तन्मयस्तत्क्षणाद् भवेत्।

पूर्वादिदलमारभ्य ध्यानं कुर्यात् पृथग् पृथक्॥ ४५-४१॥

डां डां डां डाकिनीन्ता डमरुवररतां तारिणींताररूपा।

डिं डिं डिं डामरस्थां डमरुडमगृहे डङ्कडिंकिं मनुस्थाम्।

डं डं डं डामरेशीं डिमिडिमिडिमिगध्वाननिर्माणडोरा।

डों डों डों डाकडं डः प्रडुम डमुडां दाडिमामाश्रयामि॥ ४५-४२॥

ढां ढां ढां गाढढक्कां वरनिकरकरां बाढमाबाढमन्त्रा।

ढिं ढिं ढिं नागरूपां भज भज विमलानन्दचित्तप्रकाशः।

श्रीं ढें ढं वज्रढूं खा खवट मटमरं स्वाहया टोंटबीजा।

ढों ढों ढों ढक्कढक्कः पिरयढुनकरुणाकामिनीं लाकिनीं ताम्॥ ४५-४३॥

बाणस्थित्यसंस्थां रुचिनकरवणाकारणा वाणवाणि।

वीणां वेणूत्सवाढ्यां मणिगुणकरुणां नं खटीजप्रवीणम्।

वेणुस्थानां सुमानां मणिमयपवमामन्त्रमालाविलोला।

सिन्दूरारक्तवर्णां तरुणघननवीनामलां भावयामि॥ ४५-४४॥

तारां तारकमञ्जालविमलां तालादिसिद्धिप्रदा।

ताडङ्कामतितेजसा मुनिमनोयोगं वहन्तीं पराम्।

तां तारां तुलसीं तुलां तनुतटां तर्कोद्भवां तान्त्रिका।

श्रीसूर्यायुततेजसीं भज मनः श्रीमातरं तापसीम्॥ ४५-४५॥

व्यग्रस्थां स्थानसुस्थां स्थितिपथपथिकां थार्णकूटां थमाली।

गाथां योगां विपथां थमिति थमिति थं वह्निजायां स्थिरासाम्।

चन्द्रज्योत्स्नास्थलस्थां स्थिरपदमथनामुज्ज्वलामासनस्था।

स्थैर्यां स्थैर्याभिरामां प्रणव नव सुधां चन्द्रवर्णां भजामि॥ ४५-४६॥

द्रां द्रीं द्रूं दीर्घदंष्ट्रं दशनभयकरां साट्टहासां कुलेशी।

दोषच्छत्रापहन्त्रीं दिवितरणदशादायिनीमादरस्थाम्।

श्लिष्टाह्लादप्रदीप्तामखिलधनपदां दीपनीं भावयामि॥ ४५-४७॥

धर्मां श्रीं ध्यानशिक्षां धरणिधरधरां धूमधूमावतीं ता।

धूस्तूराकारवक्रां कुवलयधरणीं धारयन्तीं कराब्जम्।

विद्युन्मध्यार्ककोटिज्वलनधरसुधां कोकिलाक्षीं सुसूक्ष्मा।

ध्यात्वा ह्लादैकसिद्धिं धरणिधननिधिं सिद्धिविद्यां भजामि॥ ४५-४८॥

नित्यां नित्यपरायणां त्रिनयनां बन्धूकपुष्पोज्ज्वला।

कोट्यर्कायुतसंस्थिरां नवनवां हस्तद्वयाम्भोरुहाम्।

नानालक्षणधारणामलविधुश्रीकोटिरश्मिस्थिता।

सानन्दां नगनन्दिनीं त्रिगुणगां नं नं प्रभां भावये॥ ४५-४९॥

प्रीतिं प्रेममयीं परात्परतरां प्रेष्ठप्रभापूरिता।

पूर्णां पूर्णगुणोपरि प्रलपनां मांसपिरयां पञ्चमाम्।

व्यापारोपनिपातकापलपना पानाय पीयूषपा।

चित्तं प्रापय पीतकान्तवसनां पौराणिकीं पार्वतीम्॥ ४५-५०॥

स्फें स्फें समें फणिवाहनां फणफणां फुल्लारविन्दानना।

फेरूणां वरघोरनादविकटास्फालप्रफुल्लेन्मुखीम्

फं फं फं फणिकङ्कणां फणिति फं मन्त्रैकसिद्धेः फला।

भक्त्या ध्यानमहं करोमि नियतं वाञ्छाफलप्राप्तये॥ ४५-५१॥

विद्युताङ्कारमध्ये तु बिजलीरक्तवर्णकान्।

एवं ध्यात्वाखिलान् वर्णान्रक्तविद्युद् दलोद्यताम्॥ ४५-५२॥

सदा ध्यायेत् कुण्डलिनीं कणीकामध्यगामिनीम्।

वरहस्तां विशालाक्षीं चन्द्रावयवलक्षणाम्॥ ४५-५३॥

चारुचन्दनदिग्धाङ्गीं फणिहारविभूषणाम्।

द्विभुजां कोटिकिरणां भालसिन्दूरशोभिताम्॥ ४५-५४॥

त्रिनेत्रां कालरूपस्थां लाकिनीं लयकारिणीम्।

सिद्धिमार्गसाधनाय ध्यायेद् वर्णान् दश क्रमात्॥ ४५-५५॥

चतुर्भुजां षड्भुजां च अष्टहस्तां परापराम्।

दुर्गां दशभुजां देवीं निजवाहनसुस्थिताम्॥ ४५-५६॥

सर्वास्त्रधारिणीं सर्वां हस्तद्वादशशोभिताम्।

चतुर्दशभुजां रौद्रीं तथा षोडशपालिनीम्॥ ४५-५७॥

अष्टादशभुजां श्यामां हस्तविंशतिधारिणीम्।

एवं ध्यात्वा पूजयित्वा रुद्राणीस्तोत्रमापठेत्॥ ४५-५८॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धिमन्त्रप्रकरणे। षट्चक्रप्रकाशे भैरवीभैरवसंवादे वर्णध्यानकथन। नाम पञ्चचत्वारिंशत्तमः पटलः॥ ४५॥

अथ षट्चत्त्वारिंशः पटलः

आनन्दभैरवी उवाच

शृणु भैरव वक्ष्यामि रुद्राणीस्तोत्रमुत्तमम्।

श्रुत्त्वा पठित्त्वा देवेश धारयित्त्वा स्वदेहके॥ ४६-१॥

महासिद्धो भवेदेव महाकालवशो भवेत्।

त्रैलोक्यरक्षणार्थाय ब्रह्मणा विष्णुना तथा॥ ४६-२॥

रुद्रयुक्तां महारौद्रीं स्तुत्त्वा सर्वजयो भवेत्।

तच्छ्रुत्त्वा मुनयः सर्वे योगिनो योगदर्शकाः॥ ४६-३॥

सर्वे देवाः सर्वलोकाधिपाः स्युः प्राणरक्षकाः।

एतत् स्तवनमात्रेण ब्रह्मा ब्रह्मत्वमाप्नुयात्॥ ४६-४॥

विष्णुवीष्णुत्वमाप्नोति देवत्वं सर्वदेवताः।

इदानीं श्र्णु तत्स्तोत्रमष्टाङ्गयोग साधनम्॥ ४६-५॥

एतत्स्तवनपाठेन चाष्टाङ्गकुलदेवताः।

वशीभूताः प्रभवन्ति सप्तस्वर्गस्थदेवताः॥ ४६-६॥

अस्य महारुद्रशक्तिस्तोत्रस्य महाकालभैरवऋषिरनुष्टुप्छन्दः श्रीमच्छ्रीरूपिणी देवता वां

बीजं द्रां शक्तिः समौं स्फें कीलकं महोग्रादि

देवता सर्वाभीष्टसिद्ध्यर्थे जपे विनियोगः॥

महारौद्री रुद्रारुणारवरवक्रोधनिकरा।

विकारा धर्माणां हरतु विषयं देहि परमम्।

विवेकं सत्पुत्रं त्वमपि जगतामादिपुरुषं।

विभाकोटिग्रामस्खलननिचला लोचनचला॥ ४६-७॥

त्वमेका त्रैलोक्यं व्यवसि सततं मे शुभभवा।

अनन्ता सा चातीन्द्रियगणकला नागवसना।

श्रियं दातुं नित्यं समुदयति रश्मिस्तव शिवे।

शिवाह्लादानन्दा जडितमनमन्दा कुरु मुदा॥ ४६-८॥

महालोभं पापं हर हर हरे हीरकनिभे।

विषानन्दोद्घाता मम तनु विषं वेशवशिनि।

सुधानन्दं देहि क्षयमपि हरक्रोधमतुलं।

मदं कामं मोहं कुलजननि दिव्यं वितर तत्॥ ४६-९॥

तपस्यासद्भावं त्वमपि च ददासीह यदि वा।

प्रदीप्ता सद्व्याप्ता भवति तव दाने मम मनः।

प्रफुल्लातिश्रीदे जय मम न भक्तिं निजशुभां।

समीडे त्वामेकां भुवनजनरक्षां कुरु सदा॥ ४६-१०॥

विचार्य स्वे तन्त्रे रचयसि सुखं नित्यमिलितं।

महाखड्गप्रख्या त्रिभुवनकरा रुद्रदयिता।

सुराणां संरक्षां यदि कुरु मुदा पीठनिकरे।

मणिद्वीपे तेजोमयि हि मणिपूरेऽमलपदम्॥ ४६-११॥

महाक्षेत्रे युद्धोत्सवभयहरा त्वं कुलकला।

किराती सर्वाणी मम कुलगतं पालय लये।

लयज्ञानानन्दं रचय हृदये योगजननि।

यतीनां रक्षायै कुलयुवति विद्ये उदयति॥ ४६-१२॥

प्रतिष्ठा कीतीस्ते त्वमवतरसि त्रासि तिमिरा--।

न्न जाने त्वत् तत्त्वं तरुणि महिमानं सुखमयम्।

महापारावारां निधिभवजलेशं कुरु जयम्।

हिरण्याह्लादस्था त्वमपि करुणासागरमयी॥ ४६-१३॥

विधातारं विष्णुं सुरवरणवन्दीन् परजनान्।

प्रपासि त्वं सिद्धा सुखभुवनभङ्गक्षयकरा।

किरन्ती सानन्दा किरणशतकोटिं त्रिभुवने।

त्वमेका कल्याणि गिरिशरमणिं पाहि सततम्॥ ४६-१४॥

त्वदीयं सुखान्तं समीच्छामि सत्यं।

विसर्गेन्दुवर्णात्मकं कामनाख्यम्।

कृपादृष्टिपाता मनः पाहि शुद्धा।

त्वमेका परब्रह्मरूपेण सिद्धा॥ ४६-१५॥

जगत्तारिणी त्वं जगव्यापिनी त्वं।

जगज्ज्वालरूपा जगद्धर्मरूपा।

अनैकान्तिकत्त्वात्त्वमानन्दरूपा।

त्वमेका परब्रह्मरूपेण सिद्धा॥ ४६-१६॥

विधानं जनानां कुरु त्वं त्वमीशा।

क्षपाक्षा मच्चित्ता पिरयानन्ददात्री।

त्वमाज्ञाम्बुजस्था त्वमार्या गुरूणां।

त्वमेका परब्रह्मरूपेण सिद्धा॥ ४६-१७॥

प्रभामण्डलस्था स्थितित्यागसंस्था।

स्थलाम्भोजमाला त्वमालग्नकण्ठा।

शिवश्यामवर्णा महापिङ्गलार्णा।

त्वमेका परब्रह्मरूपेण सिद्धा॥ ४६-१८॥

चतुर्थश्रुतिस्थाचलश्चन्द्रसंस्था।

महावेदभाषा त्वमेका जगत्याम्।

महाभक्तिभावाश्रितं मां प्रसिद्धे।

त्वमेका परब्रह्मरूपेण सिद्धा॥ ४६-१९॥

जगद्धामचेष्टे जगद्बुद्धिनिष्ठे।

जगद्यौवनस्था जगद्भावसंस्था।

समावर्त्तमध्ये महाघूर्णीतं मां।

त्वमेका परब्रह्मरूपेण सिद्धा॥ ४६-२०॥

महा सृष्टिसंहारकालक्रमस्था।

महामांसभक्षा सदानन्दरूपा।

महाशाक्य मौनीन्द्रपूज्ये सुरेज्ये।

त्वमेका परब्रह्मरूपेण सिद्धा॥ ४६-२१॥

चतुःषष्टितन्त्रार्ण वाह्लादकत्वा--।

न्महाभौतिकत्वान्महासिद्धिविद्या।

छलच्छिन्नदेहा छलानन्नसंज्ञा।

त्वमेका परब्रह्मरूपेण सिद्धा॥ ४६-२२॥

शिवत्वं महत्त्वं समत्वामलत्वा--।

दनैकान्तिकत्वं ददासि त्वमाद्या।

सुधासागरस्था महामोहनस्था।

त्वमेका परब्रह्मरूपेण सिद्धा॥ ४६-२३॥

महासिंहपृष्ठे पदाम्भोजलक्ष्मी--

र्मम श्रीशिरोमण्डलस्थं प्रपातु।

भवानन्दसन्तानकल्पेऽवदेहं।

त्वमेका परब्रह्मरूपेण सिद्धा॥ ४६-२४॥

स्थिरा सा महाविद्युदाकारहारा।

महाचञ्चला चाचला ज्ञानजन्या।

सदा भावनत्वात्सदा ज्ञापनस्था।

त्वमेका परब्रह्मरूपेण सिद्धा॥ ४६-२५॥

कुलानन्दमोहा महाकौलकन्या।

कुलक्षेत्ररक्षा कुलच्छत्रकारा।

महाचञ्चलत्वान्महावायुघूर्णा।

त्वमेका परब्रह्मरूपेण सिद्धा॥ ४६-२६॥

चिरंजीविनी भामिनी भूमिबीजा।

भयाभावहन्त्री शरत्कोटिचन्द्रा।

विभूतिर्भयाहारकर्त्री प्रकृष्टा।

त्वमेका परब्रह्मरूपेण सिद्धा॥ ४६-२७॥

महावीरभावाश्रया भावरूपा।

विशेषाविशेषे महाशैववीरा।

विसर्गापवर्गाश्रयार्णोज्ज्वलत्त्वात्।

त्वमेका परब्रह्मरूपेण सिद्धा॥ ४६-२८॥

महापञ्चमत्वान्महामोदकत्वान्

महाकौलिकात्वादसञ्चारणत्वात्।

कुलप्रेमभावक्रियानिश्चलत्वात्।

त्वमेका परब्रह्मरूपेण सिद्धा॥ ४६-२९॥

वसोः सिद्धिदात्री शिवानन्दकर्त्री।

महामैथुनानन्दसम्भेदनत्वात्।

सुखाश्वासतत्त्वात्तपः प्राणरक्षा।

त्वमेका परब्रह्मरूपेण सिद्धा॥ ४६-३०॥

गलत्प्रेमभावा कुलज्ञानतत्त्वात्।

पिरया श्रीकृपात्वं भवाधारमूर्त्तीः।

महैश्वर्यहेतोर्महाराजकन्या।

त्वमेका परब्रह्मरूपेण सिद्धा॥ ४६-३१॥

महामोक्षविद्या महानिर्मलत्वात्।

प्रभापञ्चचूडस्य सिद्धिपिरया च।

महानादबिन्दुप्रयासाभिरामा।

त्वमेका परब्रह्मरूपेण सिद्धा॥ ४६-३२॥

महाविद्रुमाकारवर्णाभिरामा।

कुलाह्लादसूत्रादिसंसाधनत्वात्।

महद्राज्यविद्याधना सङ्कटत्वात्।

त्वमेका परब्रह्मरूपेण सिद्धा॥ ४६-३३॥

तवाङ्घ्रिद्वयाम्भोज पूजासुखत्वा--

न्महाकालरूपा स्वयं सर्वविद्या।

विकारादि सम्बन्धविशेषणत्वात्।

त्वमेका परब्रह्मरूपेण सिद्धा॥ ४६-३४॥

शिवत्वं शुभत्वं महाशैलकन्ये।

पिरयत्वं परत्वं महापावनत्वम्।

समाधेहि तत्त्वादनैकान्तिकत्वात्।

त्वमेका परब्रह्मरूपेण सिद्धा॥ ४६-३५॥

महाचेतनादेवनादोन नत्वाद--।

संख्यामतीनां मनोयोगमुख्या।

विरोधापहन्त्री रिपुप्राणहन्त्री।

त्वमेका परब्रह्मरूपेण सिद्धा॥ ४६-३६॥

चतुर्वींशतिक्रोधतत्त्वानुकूले।

वियत्खण्डचन्द्रोज्ज्वले कीलकस्थे।

सदा मां प्रपातु प्रचण्डार्कवर्णा।

त्वमेका परब्रह्मरूपेण सिद्धा॥ ४६-३७॥

शुभं कामधेनुस्वरूपं स्वदेहं।

सदा दर्शने श्रद्धया चारुवर्णा।

हिमांशुप्रभाकोटिवर्णेऽत्वपूर्णे।

त्वमेका परब्रह्मरूपेण सिद्धा॥ ४६-३८॥

महाकामबीजान्विता खण्डयन्ती।

महादोषजालं शनैरावहन्ती।

शिवाभद्रकाली स्थिरानन्दमाला।

त्वमेका परब्रह्मरूपेण सिद्धा॥ ४६-३९॥

महाकालकूटाशिनं तीक्ष्णनेत्रं।

सदा पाहि शम्भुं भयार्द्रातिवेलम्।

भवापालनत्वादसंख्यानिवासा।

त्वमेका परब्रह्मरूपेण सिद्धा॥ ४६-४०॥

हरन्ती विषाढ्यं वहन्ती कलाद्यं।

रटन्ती नटन्ती विशाला भ्रमन्ती।

श्रियः पालनी पालिका बालिकात्वात्।

त्वमेका परब्रह्मरूपेण सिद्धा॥ ४६-४१॥

भवानन्दहेतोः सदा श्रद्धया वा।

पदाम्भोजमध्ये मनोयोगकाले।

परासंख्यते कामसंक्षालनत्वात्।

त्वमेका परब्रह्मरूपेण सिद्धा॥ ४६-४२॥

क्षितिक्षोभनाशाय सिद्धादिविद्या।

कुलाढ्याखिलाढ्यानना सूक्ष्ममध्या।

प्रयत्नं करोषि क्षयानन्ददाना।

त्वमेका परब्रह्मरूपेण सिद्धा॥ ४६-४३॥

महाधैर्यमाह्त्यजं जप्यते यैस् --।

तवाद्याभिधानानि कालिप्रभाते।

तदैवापि काले ददासीह सिद्धिं।

त्वमेका परब्रह्मरूपेण सिद्धा॥ ४६-४४॥

चिरं स्थापयन्ती चिरं भासयन्ती।

त्वमाख्या गुरूणां कुलानन्दविद्ये।

स्वधाकारतुष्टा कलावह्निजाया।

त्वमेका परब्रह्मरूपेण सिद्धा॥ ४६-४५॥

सुरानन्दकाले फलोद्भूतचिन्हा।

चितामध्यदेशे महासिद्धिदात्रि।

त्रिभिन्ना विभिन्ना महारुद्रविद्ये।

त्वमेका परब्रह्मरूपेण सिद्धा॥ ४६-४६॥

महापूर्वी कात्यायनि क्रोधमूले।

विवेकादिकं धर्ममादौ ददासि।

त्रयाणां सुराणां मुदारक्षणाय।

त्वमेका परब्रह्मरूपेण सिद्धा॥ ४६-४७॥

विशुद्धस्फुटत्त्वान्महाकौतुकत्वा--।

त्तनुध्यानमोहादनन्ते कृतत्त्वात्।

कुलारक्षणात्मा महालक्षणात्मा।

त्वमेका परब्रह्मरूपेण सिद्धा॥ ४६-४८॥

दहन्ती रिपूणां कुलञ्चात्मदेशं।

क्षणादेव सूक्ष्मासुसूक्ष्मा सती सा।

ममानन्ददेशं सदा पालय श्री।

त्त्वमेका परब्रह्मरूपेण सिद्धा॥ ४६-४९॥

चतुर्थाश्रमस्थाश्रमं पाहि रुद्रे।

महोग्रप्रतापे महारौद्रि भद्रे।

महापातकादिक्षयत्वामृतत्त्वा--

त्त्वमेका परब्रह्मरूपेण सिद्धा॥ ४६-५०॥

महावायुरम्ये महाज्ञानगम्ये।

महामन्त्रजाप्यादिसिद्धिप्रसिद्धे।

लयं देहि बाह्यानिलाघातनत्वा--

त्त्वमेका परब्रह्मरूपेण सिद्धा॥ ४६-५१॥

न जानामि किं वामरो वापि विष्णु--।

र्महाकौलिको वा न जानाति पूजाम्।

कुलाद्यासनन्ते सुरेन्द्रादिपाठे।

त्वमेका परब्रह्मरूपेण सिद्धा॥ ४६-५२॥

मदीयं प्रलोभ्यं महाभद्रकालि।

प्रकाशेन कर्त्तुं समर्था भव त्वम्।

पदाब्जे च हन्तुं महापापसर्गे।

त्वमेका परब्रह्मरूपेण सिद्धा॥ ४६-५३॥

वहन्ती कपालं स्खलन्तीमपार्थं।

महाहेममाला महाकाशयन्ती।

शिवो मङ्गलं मे तु वैश्वानरीशे।

त्वमेका परब्रह्मरूपेण सिद्धा॥ ४६-५४॥

प्रचण्डा प्रसन्ना भवक्षोभहेतो--।

वीवादादिघाताय शान्तिः प्रतुष्टिः।

कियत्कालसंस्था प्रसन्नान्तरात्मा।

त्वमेका परब्रह्मरूपेण सिद्धा॥ ४६-५५॥

महावायुपाना क्रियामोक्षकाले।

कुलज्ञानदाना दिवारूपिणी त्वम्।

प्रभुत्वं विधेहि क्षमे कामकर्त्री।

त्वमेका परब्रह्मरूपेण सिद्धा॥ ४६-५६॥

यदि श्रीवराद्ये ममाख्या ससिद्धिं।

विदेहीति चित्ते समाधाय भक्तः।

समाप्नोति शीघ्रं सदा प्रार्थ्यते यैः।

सदा पठ्यते वा मुदा वारमेकम्॥ ४६-५७॥

महाकालशम्भो महाज्ञानसिद्धः।

सदा कालवश्ये पठेदेकचित्तः।

महाभक्तिभावं लभेद् वेद मुक्तिं।

महादेवभक्तिं त्रिकालेन योगम्॥ ४६-५८॥

मणेः पीठमध्ये महारुद्रकान्तां।

महालाकिनीं कुण्डलीं भावयन्ती।

महापुण्यलाभं स्तवं ब्रह्मसारं।

महाकान्तलाभाय पुण्याय सिद्ध्यै॥ ४६-५९॥

महाकालि रुद्राणि भद्राणि कृष्णे।

भवानन्दमूर्त्तीप्रकाशाय कुर्यात्।

किलानन्दमाकृत्य सम्पूज्यते यै--

र्महादेवि चण्डे तव ध्याननिष्ठा॥ ४६-६०॥

महामोक्षभावं समाप्नोति शीघ्रं

महाशुद्धता कामहा कालरूपी॥ ४६-६१॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धिमन्त्रप्रकरणे षट्चक्रप्रकाशे मणिपूरभेदनक्रमे भैरवीभैरवसंवादे रुद्रशक्तिलाकिनीस्तोत्रं नाम। षट्चत्त्वारिंशः पटलः ॥ ४६॥

अथ सप्तचत्त्वारिंशः पटलः

श्रीनन्दभैरवी उवाच

श्रृणु कैलासनाथाञ्ज चक्रमण्डलसंस्थितिम्।

षड्चक्रभेदमाहात्म्यं सावधानावधारय॥ ४७-१॥

अप्रकाश्यमिदं मन्त्रं मणिपूरविभेदनम्।

अष्टैश्वर्यसाधनाय जीवन्मुक्तिप्रदाय च॥ ४७-२॥

कथयामि महाकाल यज्ज्ञात्वा योगिनोऽमराः।

क्रियासाधनमात्रेण केन योगेन एव हि॥ ४७-३॥

साधनादेव सर्वज्ञः सर्वार्थज्ञानवान् भवेत्।

रुद्राणीसहितं रुद्रं ध्यात्वा सम्पूज्य सञ्जपेत्॥ ४७-४॥

अथ वक्ष्ये महामन्त्रं पूजाप्रकरणं तथा।

मणिपूरे स्थितो मन्त्री रुद्राणीयजनं चरेत्॥ ४७-५॥

सम्प्रति मन्त्रस्योद्धारं करोमि कालकूटप।

प्रणवं पूर्वमुच्चार्य नमः शब्दं ततो वदेत्॥ ४७-६॥

ते शब्दान्ते समुद्धृत्य रुद्रशब्दं ततः परम्।

रूपिण्यै पदमुच्चार्य रुद्राणी मन्त्रमीरितम्॥ ४७-७॥

ततो महारुद्रमन्त्रं वक्ष्यामि तत्त्वतः श्रृणु।

प्रणवान्ते नमस्शब्दं ते महाशब्दमुच्चरेत्॥ ४७-८॥

रुद्राय पदमुद्धृत्य महारुद्रमनुः स्मृतः।

ततोऽन्यत्कालरूपेश रुद्राणीमन्त्रमाश्रृणु॥ ४७-९॥

डादिफान्तैः सर्ववर्णैराद्यन्ते पुटितं मनोः।

सर्वशेषे वह्निजाया महामन्त्रोत्तमोत्तमः॥ ४७-१०॥

अस्य जापनमात्रेण षद्वह्म साधने जयी।

एवं प्रकारं रुद्रस्य चाथवान्यप्रकारकम्॥ ४७-११॥

रुद्राणां विविधं मन्त्रं कोटितन्त्रे विनिर्णयम्।

मणिपूरे सदा ध्यायेद् योगसाधनहेतुना॥ ४७-१२॥

सर्वत्र मानसं कार्यं ध्यानपूजाविधानकम्।

प्रमोदाख्यातिमनुभिर्मृत्युञ्जयादिभिस्तथा॥ ४७-१३॥

चैतन्यं कारयेत् शीघ्रं मणिपूरस्थदेवयोः।

अथ वक्ष्ये महेशस्य रुद्रस्य परमात्मनः॥ ४७-१४॥

प्रासादाख्यं महामन्त्रं त्रैलोक्यफलसिद्धिदम्।

सान्तमोङ्कारसंयुक्तं नादबिन्दुविभूषितम्॥ ४७-१५॥

प्रासादाख्ये मनुः प्रोक्तो भजतां कामदोमणिः।

प्रणवं पूर्वमुच्चार्य स्वाहान्तं जपते यदि॥ ४७-१६॥

स्तम्भनादीनि कर्माणि स करोति न संशयः।

अथवा मृत्युजेतारं महामन्त्रं महामनुम्॥ ४७-१७॥

जपेन्मानसजापेन यज्जाप्यं प्राणरक्षकम्।

तारं स्थिरा सकर्णेन्दुर्भृगुः सर्गसमन्वितः॥ ४७-१८॥

त्र्यक्षरात्मा निगदितो मन्त्रो मृत्युञ्जयात्मकः।

अथवान्यप्रकारेण जपेन्मृत्युञ्जयात्मकम्॥ ४७-१९॥

मृत्युञ्जयं समुद्धृत्य पालय द्वितयं ततः।

मृत्युञ्जयं समुद्धृत्य पुनरेव विलोमतः॥ ४७-२०॥

द्वादशाक्षरमन्त्रोऽयं मृत्युञ्जयाभिधोऽपरः।

ध्यानं (पूजां) तथा न्यासं शृणु वक्ष्यामि शङ्कर॥ ४७-२१॥

रुद्रमन्त्रेण पुटितं योजयेन्मृत्युहारणम्।

तथा हि रुद्रकान्ताया मन्त्रेण पुटितं शिवम्॥ ४७-२२॥

जपित्वा पूजयित्वा च नरो गोप्ता भवेद्वशी।

प्रातःकृत्यादिकं कृत्वा हविष्याशी जितेन्द्रियः॥ ४७-२३॥

अतिसावधानपरो विधिसेवापरायणः।

स्नानसन्ध्यादिकं कृत्वा आसनादिकमाश्रयेत्॥ ४७-२४॥

समाप्य आसनं सर्वं पीतवस्त्रे पिधाय च।

अथवा शुक्लवस्त्रे द्वे परिधाय मनोहरे॥ ४७-२५॥

कोमलाद्यासने गत्वा प्रक्षाल्यपादयुग्मकम।

द्विराचम्य विधानेन पूजायां स्वस्तिकासने॥ ४७-२६॥

वीरासने तथा पद्मासनयोन्यासने तथा।

उपविश्य निर्मलात्मा पूजामार्गपरो भवेत्॥ ४७-२७॥

सर्वाणि द्रव्यभोज्यानि मनसा कल्पितानि च।

तदलाभे सलाभे वा मनःकल्पितशोधनम्॥ ४७-२८॥

करणीयं सर्वदैव निजबाह्येऽपि चालयेत्।

यथा लभ्यानि द्रव्याणि संशोध्य तत्र योजयेत्॥ ४७-२९॥

ततः कुर्याद् विशेषेण प्राणायामं मनोरमम्।

चतुःषष्टिमात्रया वा तथा षोडशमात्रया॥ ४७-३०॥

तद्वादशमात्रया वा संख्यया वायुमाश्रयेत्।

प्राणायामं समाप्याथ रुद्रन्यासं समाचरेत्॥ ४७-३१॥

श्रीकण्ठादिमहावीरन्यासं कुर्यात् प्रयत्नतः।

रुद्रन्यासं प्रवक्ष्यामि मनुयोगादिसिद्धये॥ ४७-३२॥

एतन्न्यासाभिकरणे नरो रुद्रसमो भवेत्।

सदा कुर्यान्महान्यासं सर्वसिद्धिप्रकाशनात्॥ ४७-३३॥

शक्तिहीनं शक्तियुक्तं महान्यासं प्रकीतीतम्।

शक्तियुक्तं समाकृत्य महाशक्तो भवेद् बली॥ ४७-३४॥

शक्तिहीनं तथा कार्यं सर्वविघ्नविनाशनात्।

मातृकापद्मचक्रे तु मातृकावर्गसंयुतम्॥ ४७-३५॥

मातृकापुटितं मन्त्रं किं वा मन्त्रेण संपुटम्।

कृत्वा मन्त्री न्यासजालं सावधानेन कारयेत्॥ ४७-३६॥

विक्रमी सिंहतुल्यः स्यात्तं दृष्ट्वा यान्ति शत्रवः।

मौनी भूत्वा समाकृत्य कुलचक्रस्य भेदनम्॥ ४७-३७॥

मणिपूरे स्थिरो भूत्वा महातेजोमयो भवेत्।

तेषां नाम प्रवक्ष्यामि पञ्चाशदेकसंख्यया॥ ४७-३८॥

पञ्चाशदेकशक्तीनां तथा नाम शृणु प्रभो।

सर्वेषामभिधानान्ते ईशाय नम उच्चरेत्॥ ४७-३९॥

एकैकं मातृकावर्णं नाम्न आद्ये नियोजयेत्।

शक्तियुक्तं सदा नाम ईशान्तं सन्त्यजेत् तथा॥ ४७-४०॥

भेदने शक्तियुक्तस्तु न्यासं कुर्यान्महायतिः।

कुशासने सिद्धिहेतोश्चैलाजिनकुशोत्तरम्॥ ४७-४१॥

बद्धैकमासनं योगी न्यासजालं समाचरेत्।

अथवा द्वीपिचर्मादि कोमलाद्यासनेऽपि वा॥ ४७-४२॥

योगाभ्यासी न्यासजालं कृत्वा सावभयो भवेत्।

भद्रकाली गृहे स्थित्वा ये कुर्वन्ति निरन्तरम्॥ ४७-४३॥

महान्यासं महादेव तत्क्षणादमरो भवेत्।

आयुरारोग्यसम्पत्तिं सम्प्राप्नोति महाश्रियम्॥ ४७-४४॥

समायाति मम स्थाने न्यासयोगप्रसादतः।

न्यासधारणयोगेन मणिपूरे ह्रदो भवेत्॥ ४७-४५॥

आदौ तन्नाम वक्तव्यं पश्चात्शक्त्याभिन्ननकम्।

श्रीकण्ठश्चाप्यनन्तश्च सूक्ष्मा त्रिमूर्तीरेव च॥ ४७-४६॥

अमरेश्वरश्चार्घीशो भावभूतिस्ततः परम्।

अतिथीशस्थाण्वीशो हरो झिण्टीश एव च॥ ४७-४७॥

भौतिकः सद्योजातश्चाप्यनुग्रहेश्वरस्तथा।

अक्रूरोऽपि महासेनो निर्जरादिश्च षोडश॥ ४७-४८॥

एते देवा महारुद्र षोडशस्वरविग्रहाः।

क्रोधीशश्चापि चण्डेशः पञ्चान्तकः शिवोत्तमः॥ ४७-४९॥

एकरुद्रस्तथा कूर्म एकनेत्रेश्वरस्ततः।

चतुराननोऽजेशश्च सर्वः सोमेश एव च॥ ४७-५०॥

लाङ्गलीशो दारुकेशोऽर्द्धनारीश्वर एव च।

( उमाकान्तेश आषाढिः डिण्डीशोऽत्रीश एव च

मीनेशश्चापि मेषेशो लोहितेशः शिखीश्वरः।

छगलण्डे द्विरण्डेशो महाकालेश्वरस्ततः।)

वाणीशश्च भुजङ्गेशः पिनाकीशस्ततः परम्॥ ४७-५१॥

खड्गीश श्चरकेशश्च श्येनो भृग्वीश एव च

नकुलीशः शिवेशश्च संवर्त्तकेश एव च॥ ४७-५२॥

एते रुद्राः समाख्याताः सर्वकाले कुलेश्वराः।

यस्य नाम्नश्चान्तभाते ईशशब्दो न विद्यते॥ ४७-५३॥

केशान्तं नाम संस्कृत्य न्यासं मौलीशमाचरेत्।

कामं मोहादिनाशार्थं यः करोति निरन्तरम्॥ ४७-५४॥

मातृकावर्णघटितं मातृकास्थलके न्यसेत्।

शक्तियुक्तं यदा न्यासं तत्कालेऽपीशयोजनम्।

अथवा रुद्रशक्त्या च तथा रुद्रेण सम्पुटम्॥ ४७-५५॥

निजमन्त्रेण वा नाथ पुटितं मातृकास्थले।

शक्त्या च ग्रथनं कृत्वा संसारं सन्तरेत् क्षणात्॥ ४७-५६॥

तत्प्रकारं श्रृणु प्राणनाथ शङ्कर वल्लभ।

पूर्णोदरी च गिरिजा शाल्मली तदनन्तरम्॥ ४७-५७॥

लोलाक्षी वर्त्तुलाक्षी च दीर्घघोणा ततः परम्।

सुदीर्घमुखिगोमुख्यौ दीर्घजिह्वा ततः परम्॥ ४७-५८॥

कुण्डोदरी चोर्द्ध्वमुखी तथा विकृतमुख्यपि

ज्वालामुखी वह्निमुखी लोलजिह्वा ततः परम्॥ ४७-५९॥

विद्यामुखी तथा नाथ एताश्च स्वरशक्तयः।

काद्यार्णशक्तिविद्याश्च वक्ष्यामि पार्वतीश्वर॥ ४७-६०॥

महाकालीसरस्वत्योर्महालक्ष्म्यास्ततः परम्।

द्राविणी नागरी भूयः खेचरी चापि मञ्जरी॥ ४७-६१॥

रूपिणी बिम्बिनी पश्चात् काकोदरी च पूतना।

भद्रकाली योगिनी च शङ्खिनी गर्ज्जिनी तथा॥ ४७-६२॥

कालरात्रिः कुञ्जिका च कपद्दनी ततः परम्।

वज्रा जया ततो नाथ सुमुखेश्वर्यपि प्रभो॥ ४७-६३॥

रेवती माधवी चैव वारुणी वायवी तथा।

वक्षोविदारिणी चैव सहजालक्ष्म्यथ प्रभो॥ ४७-६४॥

व्यापिनी चैव माया च रुद्राङ्कपीठदेवताः।

सर्वाभरणसंयुक्ता सिन्दूरारुणविग्रहाः॥ ४७-६५॥

धृतशूलकपालादि बाणशक्तिप्रखेटकाः।

वराभयकरा नित्याः सर्पवाहनवाहनाः॥ ४७-६६॥

श्रीकण्ठाद्या महारुद्रा धृतशूलकपालकाः।

खड्गखेटकशक्तीषु गदामूसलधारकाः॥ ४७-६७॥

नानास्त्रधारका नित्या बन्धूककोटिसुन्दराः।

रक्तचन्दनदिग्धाङ्गाः पञ्चचूडधराः पराः॥ ४७-६८॥

रक्तोत्पलमहामालालङ्कारकरपङ्कजाः।

पीठन्यासं ततः कुर्यात् मम तन्त्रानुसारतः॥ ४७-६९॥

सर्वत्रमूलपुटितमथवा वर्णसम्पुटम्।

कृत्वा पीठन्यासकार्यं विधानेन वदामि तत्॥ ४७-७०॥

ओं अनन्ताय नमश्च नमो हृदि ततः परम्।

ओं पद्माय नमः शब्दं हृदये च ततः परम्॥ ४७-७१॥

ओं सूर्यमण्डलाय द्वादशान्ते कलात्मने।

ओं नमः पदं समुच्चार्य चान्ते च हृदये प्रभो॥ ४७-७२॥

ओं उं सोममण्डलाय षोडशकलात्मने नमः।

सर्वत्र हृदये कार्यं पीठन्यासं मनोलयम्॥ ४७-७३॥

ओं मं वह्निमण्डलाय दशकलात्मने नमः।

ओं सं सत्त्वाय नमश्च ओं रं रजसे नमः॥ ४७-७४॥

ओं तं तमसे नमश्च पूर्वादिकेशरेषु च।

ओं तं आत्मने नमश्च ओं सर्वव्यापिने नमः॥ ४७-७५॥

ओं अं अन्तरात्मने च ओं मनोन्मन्यै नमश्च।

तदुपरि ततो वदेत् नमोऽन्ते शून्यवासिने॥ ४७-७६॥

ओं पं परमात्मने च नमोऽन्ते कालरूपिणे।

ओं ह्रीं ज्ञानात्मने चान्ते नमोऽन्ते वर्णवासिने॥ ४७-७७॥

पीठशक्तेस्ततो न्यासं कुर्यात् साधकयोगिराट्।

हृत्पद्मस्यापि पूर्वादि केशरेषु च संन्यसेत्॥ ४७-७८॥

ओं वामायै नमश्चान्ते ओं ज्येष्ठायै नमो वदेत्।

ओं सर्वभूतदमन्यै नमः शब्दं समुच्चरेत्॥ ४७-७९॥

( ओं रौद्रायै नमश्चान्ते ओं काल्यै च नमो वदेत्।

ओं कलविकरिण्यै नमः शब्दं ततो वदेत्।

ओं बलप्रमथन्यै नमो व भोऽन्ते च पुनर्वदेत्।)

एता विन्यस्य देवेश मध्ये विन्यासमाचरेत्।

हृत्पद्मस्य कर्णीकायां कृत्वा भावनमाचरेत्॥ ४७-८०॥

ओं मनोन्मन्यै नमश्च तदुपरि ततो वदेत्।

ओं नमो भगवतेऽन्ते च सकलपदमुच्चरेत्।

गुणाय शक्तियुक्ताय अनन्ताय पदं ततः॥ ४७-८१॥

( योगपीठात्मने चान्ते नमः शब्दं समुच्चरेत्।

ततः कुर्यान्महादेव ऋष्यादिन्यासमेव च।

रुद्रशक्त्या ऋषेर्वीष्णुस्तथा मृत्युञ्जयस्य च।)

कहोड मुनिपुत्रश्च ऋषिरस्य प्रकीर्तीतः।

महेश्वरमुखाज्ज्ञात्वा यः साक्षात्तपसा मनुम्॥ ४७-८२॥

संसाधयति शुद्धात्मा स तस्य ऋषिरीरितः।

गुरुत्वान्मस्तके चास्य न्यासस्तु परिकीर्तीतः॥ ४७-८३॥

सर्वेषां मन्त्रतत्त्वानां छादनाद् छन्द उच्यते।

अक्षरात्वात्पदत्वाच्च मुखे च्छन्दः समीरितम्॥ ४७-८४॥

सर्वेषामेव जन्तूनां प्रेषणात्प्रेरणात्तथा।

हृदयाम्भोजमध्यस्था देवता तत्र तां न्यसेत्॥ ४७-८५॥

ऋषिच्छन्दोऽपरिज्ञानान्न मन्त्रः फलभाग्भवेत्।

दौर्बल्यं याति मन्त्राणां विनियोगमजानताम्॥ ४७-८६॥

न्यसेन्मूर्ध्नी ऋषिन्यासं छन्दोन्यासं मुखाम्बुजे।

देवतान्यासमाकुर्यात् हृदयाम्भोरुहे सुधीः॥ ४७-८७॥

मूके गुह्ये बीजन्यासं शक्तिन्यासं तु पादयोः।

सर्वाङ्गे कीलकन्यासमाचरेत् यत्नतः सुधीः॥ ४७-८८॥

शिवशक्त्यात्मकन्यासं शिरस्येव समाचरेत्।

शिरसि प्राणरक्षायै महाविष्णुऋषये नमः॥ ४७-८९॥

मुखे पङ्क्तच्छन्दसे वै नमःशब्दं समुच्चरेत्।

हृदि महारुद्राय शक्तियुक्ताय संवदेत्॥ ४७-९०॥

देवतायै नमः शब्दं करन्यासं ततश्चरेत्।

ततोऽङ्गन्यासमाकृत्य ध्यानं कुर्यात् प्रयत्नतः॥ ४७-९१॥

वह्निना दीर्घबीजेन मन्त्रस्याङ्गक्रियां चरेत्।

रुद्रध्यानं प्रवक्ष्यामि ध्यानाद् भवति भूपतिः॥ ४७-९२॥

रौद्रं रौद्रात्मकं तं प्रकृतिपुरुषं गंभीरगीताभिधानं।

शूलं खड्गं दधानं वरमभयकरं पद्ममेकं प्रचण्डम्।

सञ्चारं रश्मिजालं शशिशतकिरणं कामधेनुस्वरूपं।

ध्यायेद्रौद्रीं स्वशक्तिं प्रलयमयतनुं सूर्यकोटिप्रकाशम्॥ ४७-९३॥

एवं ध्यात्वा सुमनसैश्च सम्पूज्यार्घ्यं विधिञ्चरेत्।

कृत्वार्घ्यं रुद्रमन्त्रेण पीठपूजां समाचरेत्॥ ४७-९४॥

वामा ज्येष्ठा तथा रौद्री काली कलपदादिका।

विकरण्याक्षरा प्रोक्ता बलादिविकरण्यथ॥ ४७-९५॥

बलप्रमथनी पश्चात् सर्वभूतदमन्यथ।

मनोन्मनीति सम्प्रोक्ताः शिवस्य पीठशक्तयः॥ ४७-९६॥

पूजयेद् गन्धपुष्पाद्यैः पीठशक्तिः क्रमेण तु।

प्रणवादि नमोऽन्तेन पूजा कार्या विधानतः॥ ४७-९७॥

पुनर्ध्यात्वा च पाद्यार्घ्यैरावाह्य परिपूजयेत्।

पाद्यमर्घ्यमाचमनीयं स्नानीयं पुनराचमनम्॥ ४७-९८॥

गन्धपुष्पबिल्वदलैः पूर्वावरणमर्चयेत्।

वं हृदयाय नम इत्यादिषडङ्गपूजनम्॥ ४७-९९॥

मध्ये चतुर्दीक्षु चैवं शेषे वारद्वयं वदेत्।

इन्द्रादीन् लोकपालांश्च पूजयित्वा ततोऽर्चयेत्॥ ४७-१००॥

वज्रादींश्च महाकाल धूपदीपैर्नीवेदयेत्।

नैवेद्यं बहु कृत्वा (च) पानार्थं जलदानकम्१०१॥

शरीरशोधनं कृत्वा प्राणायामं ततश्चरेत्।

जपेत् शतत्रयं मन्त्री विशुद्धः शुद्धचेतसा॥ ४७-१०२॥

अष्टोत्तरं योजयित्वा गजान्तकसहस्रकम्।

अथवाष्टोत्तरशतं जप्त्वा समर्पणं चरेत्॥ ४७-१०३॥

प्राणायामत्रयं कुर्यान्निजमन्त्र प्रसिद्धये।

ततः प्रणाममाकुर्यात् शक्तिचैतन्यहेतुना॥ ४७-१०४॥

नमो रुद्राय देवाय कोटिसूर्य्येन्दुमूर्त्तये।

सर्वाय ज्ञानदानाय नमस्ते शूलधारिणे॥ ४७-१०५॥

नमस्ते कालरुद्राय कालाय वेदरूपिणे।

वेदमार्गप्रदर्शाय शत्रुसंक्षयकारिणे॥ ४७-१०६॥

रौद्राय शक्तियुक्ताय शङ्कराय नमो नमः।

चतुर्भुजाय वेदाय महाकाशस्वरूपिणे॥ ४७-१०७॥

वरपद्मशूलखड्गधारिणे ब्रह्मणे नमः ....

रुद्रशक्त्यर्चनं कृत्वा महारुद्रेण संयुतम्॥ ४७-१०८॥

मणिपूरे दृढो याति सत्यं सत्यं कुलेश्वर।

शक्त्यर्च्चनविधिं वक्ष्ये मूलमन्त्रेण पूजनम्॥ ४७-१०९॥

सर्वत्र कारयेन्मन्त्री अष्टैश्वर्यजयाय च।

आदौ ऋषिन्यासकार्यं वक्ष्यामि शृणु तत्त्वतः॥ ४७-११०॥

शिरसीह रुद्रशक्तिर्महाविष्णुपदं ततः।

ऋषये नम उच्चार्य मुखे हस्तं नियोजयेत्॥ ४७-१११॥

पङ्क्तिछन्दसे नमश्च हृदि हस्तं नियोजयेत्।

महारुद्राणीति पदं लाकिनीपदमेव च॥ ४७-११२॥

त्रिशक्त्यन्ते महाविद्या देवतायै नमस्ततः।

गुह्ये ओं पदमुच्चार्य निजबीजाय ते नमः॥ ४७-११३॥

सर्वाङ्गे सकलायैव वज्राय कीलकाय च।

नमः पदं समुच्चार्य ऋष्यादिन्यासमेव च॥ ४७-११४॥

रुद्रवत्सकलं कार्यं कराङ्गन्यासकर्मणि।

आदावृष्यादिकन्यासः करशुद्धिस्ततः परम्॥ ४७-११५॥

अङ्गुलिव्यापकन्यासो हृदादिन्यास एव च।

रुद्रशक्तिमहाषोढान्यासञ्च तदनन्तरम्॥ ४७-११६॥

मन्त्रन्यासं ततः कृत्वा व्यापकन्यासमाचरेत्।

तालत्रयञ्च दिग्बन्धः प्राणायामस्ततः परम्॥ ४७-११७॥

ध्यानं कुर्याद्विशेषेण रुद्रशक्त्या महाप्रभो॥ ४७-११८॥

रुद्राणीं रुद्रकान्तां नवरसजडितां कुङ्कुमाशक्तगात्रां।

लोकेशीं षड्भुजान्तां त्रिभुवनयजितां कोटिसौदामिनीभाम्।

पद्मस्थां पद्महस्तां वरभयकरां खड्गशक्तिं दधानां।

ध्यायेद् रौद्रीं त्रिनेत्रां शवदमनशशिश्रेणिभूषामलाङ्गीम्॥ ४७-११९॥

रुद्रवत् पूजनं कार्यं रुद्रशक्त्याश्च शङ्कर।

दशोपचारैः पूजा वा तथा पञ्चोपचारकैः॥ ४७-१२०॥

अष्टादशोपचारैर्वा षोडशाद्युपचारकैः।

अलाभे तु प्रकर्त्तव्यं मानसेन निवेदयेत्॥ ४७-१२१॥

सर्वत्र मानसं कार्यं कोटि कोटिगुणं भवेत्।

पूजां समाप्य विधिना जलं दत्वा जपादिके॥ ४७-१२२॥

प्राणायामत्रयं कृत्वा जप्त्वाष्टोत्तरकं शतम्।

सहस्रं वा मुहुर्जप्त्वा अष्टोत्तरसमन्वितम्॥ ४७-१२३॥

जपं समर्पयेद्विद्वान् गुह्यातिगुह्यमन्त्रकैः।

प्राणायामत्रयं पश्चात् कुर्यात् साधकसत्तमः॥ ४७-१२४॥

वन्दनं भक्तियुक्तेन कुर्याद् योगादिसिद्धये।

महारौद्र नमस्तेऽस्तु लाकिन्यै ते नमो नमः॥ ४७-१२५॥

शान्त्यै तुष्ट्यै नमो नित्यं दुर्गायै ते नमो नमः।

रुद्रशक्त्यै नमो नित्यं मणिपूरनिवासिनी॥ ४७-१२६॥

अष्टसिद्धिं योगसिद्धिं देहि तुभ्यं नमो नमः।

सर्वग्रन्थिछेदिकायै परब्रह्मस्वरूपिणी॥ ४७-१२७॥

मां रक्ष पालय त्वं हि मणिपूरे नमो नमः।

प्रणम्य विधिनानेन पूजासमापनञ्चरेत्॥ ४७-१२८॥

पुनस्तत्र पूजयेद् वै प्रासादाख्यं महाप्रभुम्।

तथा मृत्युञ्जयं देवं मणिपूरे प्रपूजयेत्॥ ४७-१२९॥

प्राणायामादिकं कृत्वा श्रीकण्ठन्यासमाचरेत्।

पूर्णोदर्यादिसहितं कृत्वा पीठं न्यसेत्सुधीः॥ ४७-१३०॥

पीठमनुं प्रविन्यस्य ऋष्यादिन्यासमाचरेत्।

ऋषिरस्य वासुदेवः पङ्क्तिश्छन्द उदाहृतम्॥ ४७-१३१॥

सदाशिवो देवता च अङ्गुलिन्यासमाचरेत्।

हामङ्गुष्ठाभ्यां नमः पश्चात् ह्रीं तर्जनीभ्यां ततः परम्।

खां नमः पदमन्ते च षड्दीर्घभाजयान्वितम्॥ ४७-१३२॥

एवं करन्यासमाकार्यं विधानेन समाचरेत्।

शूद्रस्तु एतत्पर्यन्तं कार्यं होमादिकं च यत्॥ ४७-१३३॥

न कुर्यात् पार्वतीनाथ तथा स्त्रीलोक इत्यपि।

यदि ज्ञानी भवेद् देव स देवो न तु मानुषः॥ ४७-१३४॥

चाण्डालादीनि वा जातौ स्थितो ब्राह्मणोत्तमः।

ज्ञानवान् वादसंवादे वजीतो न्यासमाचरेत्॥ ४७-१३५॥

न्यासस्तन्मयता बुद्धिः सोऽहंभावेन पूजयेत्।

स एव ज्ञानी परमो वेदशास्त्रविशारदः॥ ४७-१३६॥

न्यासपूजादिकं तस्य सर्वदा नात्र संशयः।

यावद्देहे ह्यहंबुद्धिस्तावन्मरणधारकः॥ ४७-१३७॥

तद्वजीतो मृत्युजेता न्यासपूजादिकं कृतः।

षड्दीर्घभाजा बीजेन हकारेण सबिन्दुना॥ ४७-१३८॥

करयोरंगुलिद्वन्द्वं विन्यसेत् संक्रमेण तु।

ईशानाद्याः पञ्चमूर्त्तीर्वीन्यसेत् साधकोत्तमः॥ ४७-१३९॥

ततः कुर्यान्महादेव ऊर्द्र्ध्वः प्राग्दक्षिणोत्तरे।

मुखेषु विन्यसेन्मन्त्री चाङ्गुलिभिः परस्परम्॥ ४७-१४०॥

तत्तद्बीजैः प्रयत्नेन तत्तन्मूर्त्तीः प्रविन्यसेत्।

अङ्गुष्ठयोः शेषभागे हौ  ईशानाय ओं नमः॥ ४७-१४१॥

षड्दीर्घभाजाबीजेन हकारेण सबिन्दुना।

तत्पुरुषमघोरञ्च वामदेवं ततः परम्॥ ४७-१४२॥

सद्योजातं क्रमेणैव अङ्गुली द्वे ततः परम्।

विन्यसेत्साधकश्रेष्ठो नमोऽन्तं परमेश्वर॥ ४७-१४३॥

शिरोवदनहृद्गुह्यपादेषु विन्यसेत्सुधीः।

तत्तदङ्गुलिभिश्चैव तत्क्रमेण प्रविन्यसेत्॥ ४७-१४४॥

पञ्चमूर्त्तीर्न्यसेन्नाथ तत्प्रकारं शृणुष्व तत्।

ईशानादिस्वबीजं तु प्रकारेण प्रविन्यसेत्॥ ४७-१४५॥

शूद्रः कुर्यान्न्यासजालमेतत् पर्यन्तमेव हि।

तत ऊर्ध्वप्राग्दक्षिणपश्चिमोत्तरसंमुखे॥ ४७-१४६॥

ईशानस्य पञ्चकला ब्रह्मऋग् वेदसंयुताः।

पञ्चपादादिका नाथ प्रणवादिनमोऽन्तिकाः॥ ४७-१४७॥

ईशानं सर्वविद्यानां ओं नलिन्यै ततः परम्।

कलायै नम एवापि सर्वत्रैवं क्रमेण तु॥ ४७-१४८॥

ईश्वरः सर्वभूतानां तदङ्गं पदकं ततः।

दयायै कलायै नमश्चापि ब्रह्मादिपदं ततः॥ ४७-१४९॥

ओं ब्रह्मेष्टदायै चान्ते कलायै नम इत्यपि।

ततः शिवोऽस्तु मे पदं ओं सावित्र्यै पदं वदेत्॥ ४७-१५०॥

कलायै नम एवं हि सदाशिवो पदन्ततः।

ओमन्ते चांशुमालिन्यै कलायै पद इत्यपि॥ ४७-१५१॥

दिङ्मुखे स न्यसेन्मन्त्री पूर्वादिक्रमयोगतः।

तत्पुरुषस्य चतस्त्रः कला न्यसेत् सदा वशी॥ ४७-१५२॥

ओं तत्पुरुषायपदं विद्महे तदनन्तरम्।

ओं शान्त्यै पदस्यान्ते कलायै नम इत्यपि॥ ४७-१५३॥

महादेवाय शब्दान्ते धीमहीति ततः पदम्।

ओं विद्यायै पदस्यान्ते कलायै नम इत्यपि॥ ४७-१५४॥

तन्नो रुद्रः पदं पश्चात् ओं प्रतिष्ठायै पदं लिखेत्।

श्री दुर्गायै कलायै नमश्चाथ प्रचोदयात्॥ ४७-१५५॥

ओं निवृत्यै कलायै च नमः पदं समुच्चरेत्।

ततोऽष्टस्थानमध्ये तु अघोराष्टकला न्यसेत्॥ ४७-१५६॥

हृद्ग्रीवां मध्यगतलं तथा नाभिषु पृष्ठके।

तथा वक्षसि चाघोरा अष्टौ कला न्यसेत् सुधीः॥ ४७-१५७॥

अघोरेभ्य उमान्ते वै उमायै पदमुच्चरेत्।

कलायै नम एवाथ अघोरेभ्यः पदं वदेत्॥ ४७-१५८॥

ओं मोहायै पदस्यान्ते कलायै नम इत्यपि।

अघोरपदमुच्चार्य क्षमायै शब्दमुच्चरेत्॥ ४७-१५९॥

कलायै नम एवाथ घोरतरेभ्य एव च।

ओं निद्रायै पदस्यान्ते कलायै नम इत्यपि॥ ४७-१६०॥

सर्वतः सर्वं ओं अन्ते व्याधये शब्दमुच्चरेत्।

कलायै नम एवाथ सर्वेभ्यः पदमुच्चरेत्॥ ४७-१६१॥

ओं मृत्यवे पदस्यान्ते कलायै नम इत्यपि।

नमस्तेऽस्तु पदस्यान्ते ओम् क्षुधायै पदं वदेत्॥ ४७-१६२॥

कलायै नम एवाथ रुद्ररूपेऽथ एव च।

ओम् कृष्णायै पदस्यान्ते कलायै नम इत्यपि॥ ४७-१६३॥

वामदेवस्य देवस्य त्रयोदश कला न्यसेत्।

एतेषु स्थानपद्मेषु तत्प्रकारं श्रृणु प्रभो॥ ४७-१६४॥

गुह्येऽण्ड शेषमध्ये तु ऊरुयुग्मे ततः पदम्।

जानुद्वये तथा जङ्घायुगले स्फिग्द्वये तथा॥ ४७-१६५॥

कट्यां पार्श्वयुगे चैव क्रमेण भावको न्यसेत्।

आदौ प्रणवमुच्चार्य ततो मन्त्रं स्मरेत्सुधीः॥ ४७-१६६॥

वामदेवाय शब्दान्ते नमो ज्येष्ठायशब्दतः॥ ४७-१६७॥

नमो रुद्राय शब्दान्ते नमः शब्दं समुच्चरेत्।

कालाय नम एवान्ते कलविकरणाय च॥ ४७-१६८॥

नमो बलविकरणाय बलप्रमथनाय च।

ओम् वामदेवाय नमः ओम् वज्राय ततः परम्॥ ४७-१६९॥

कलायै नम एवाथ ज्येष्ठाय नम इत्यपि।

ओम् रक्षायै पदस्यान्ते कलायै नम इत्यपि॥ ४७-१७०॥

रुद्राय नम ओम् रत्यै कलायै नम इत्यपि।

कालाय नम इत्यन्ते पालिन्यै शब्दमुच्चरेत्॥ ४७-१७१॥

कलायै नम इत्यन्ते पालिन्यै शब्दमुच्चरेत्।

कामायै शब्दमुच्चार्य कलायै नम एव हि॥ ४७-१७२॥

विकरणाय नमोन्ते प्रणवञ्चोच्चरेद्बुधः।

संयमिन्यै पदान्ते च कलायै नम इत्यपि॥ ४७-१७३॥

बल ओम् शब्दमुच्चार्य क्रोधायैपदमुच्चरेत्।

कलायै नम एवाथ विकलायै नमस्ततः॥ ४७-१७४॥

ओं वृद्ध्यै पदकस्यान्ते कलायै नम इत्यपि।

बल ओं शब्दमुच्चार्य स्थिरायै शब्दमुच्चरेत्॥ ४७-१७५॥

कलायै नम एवाथ प्रमथनाय नमस्ततः।

ओं रौद्रपदस्यान्ते कलायै नम इत्यथ॥ ४७-१७६॥

सर्वभूतदमनाय नम ओं पदमुच्चरेत्।

भ्रामिन्यै पदकस्यान्ते कलायै नम इत्यपि॥ ४७-१७७॥

नम ओं शब्दमुच्चार्य मोहिन्यै पदकं स्मरेत्।

कलायै नम एवाथ उन्मनाय नमस्ततः॥ ४७-१७८॥

ओं जयायै पदस्यान्ते कलायै नम उच्चरेत्।

ततो न्यासं महाकाल सद्योजातस्य ताः कलाः॥ ४७-१७९॥

सद्योजातं प्रपद्यामि ओम् वृद्ध्यै पदमुच्चरेत्।

कलायै नम एवाथ सद्योजाताय वै नमः॥ ४७-१८०॥

ओम् वृद्ध्यै पदकस्यान्ते कलायै नम इत्यपि।

भवे पदे ततः पश्चाद् ओम् सद्यः पदमुच्चरेत्॥ ४७-१८१॥

कलायै नम एवाथ अभवे ओम् ततः परम्।

ओम् मेधायै पदस्यान्ते कलायै नम उच्यते॥ ४७-१८२॥

ततो भजस्व मां शब्दं ओम् प्रज्ञायै पदं वदेत्।

कलायै नम एवाथ भव ओम् शब्दमुच्चरेत॥ ४७-१८३॥

प्रभायै पदमुच्चार्य कलायै नम इत्यपि।

तद्भवाय नमः पश्चात् ओम् सुधायै नमस्ततः॥ ४७-१८४॥

कलायै नम उच्चार्य न्ससेदष्टौ कलाः प्रभोः।

ईशानाख्यास्ततो नाथ भक्तः पञ्च ऋचो न्यसेत्॥ ४७-१८५॥

पञ्चाङ्गुलिषु योगेश क्रमशः कामनाशनात्।

प्रणवं पूर्वमुच्चार्य ततो मन्त्रं स्मरेत्सुधीः॥ ४७-१८६॥

ईशानः सर्वविद्यानां ईश्वरस्तदनन्तरम्।

उच्चरेत्सर्वभूतानां ब्रह्माधिपतिरित्यपि॥ ४७-१८७॥

ब्रह्मणोधिपतिः पश्चात् शिवो मेऽस्तु सदाशिवः

प्रणवं पूर्वमुच्चार्य ततस्तत्पुरुषाय च॥ ४७-१८८॥

विद्महे पदतः पश्चात् महादेवाय धीमहि।

ततो रुद्रः पदस्यान्ते प्रचोदयात्पुनर्वदेत्॥ ४७-१८९॥

प्रणवं पूर्वमुद्धृत्य ततो मन्त्रं स्मरेत् सुधीः।

अघोरेभ्योऽथ घोरेभ्यो घोरशब्दं समुच्चरेत्॥ ४७-१९०॥

घोरतरेभ्य एवान्ते सर्वतः सर्वशब्दकम्।

सर्वेभ्योऽन्ते नमस्तेऽस्तु रुद्ररूपेभ्य एव च॥ ४७-१९१॥

अष्टौ स्थानेषु चैतेषु सर्वपापनिवृत्तये।

पार्श्वयोर्हस्तयोश्चैव नासिकायाञ्च मस्तके॥ ४७-१९२॥

बाहुयुग्मे महावीर मणिपूरविभेदकः।

तत्प्रकारं प्रवक्ष्येऽहं सावधानोऽवधारय॥ ४७-१९३॥

बलप्रमथनाय नमोऽन्ते च सर्वभूतपदं वदेत्।

दमनाय नमोऽन्ते तु नमः शब्दं समुच्चरेत्॥ ४७-१९४॥

उन्मनाय नमः पश्चात् पुनः प्रणवमुद्धरेत्।

सद्योजातं प्रपद्यामि सद्योजाताय वै नमः॥ ४७-१९५॥

भवे भवेनादिभवे भजस्व मां ततः परम्

भवोद्भवाय शब्दान्ते नमो मन्त्रं मुदा न्यसेत् ॥ ४७-१९६॥

अङ्गुलीभ्यां समाहृत्य पञ्च ऋचानया प्रभो

एवं क्रमेण सन्नयासं कुर्यादेषु स्थलेषु च॥ ४७-१९७॥

मूर्ध्निहृद्गुह्यपादेषु न्यसेदेता ऋचो मुदा

ततः कुर्यान्महाकाल चाङ्गन्यासान्तरं शुभम्॥ ४७-१९८॥

तत्प्रकारं प्रवक्ष्यामि सावधानोऽवधारय।

वाग्भवं पूर्वमुच्चार्य कामबीजं ततः परम्॥ ४७-१९९॥

वकारं शत्रुसंयुक्तं दक्षकार्णेन्दुसंयुतम्।

चन्द्रबीजं वामनेत्रथान्तवह्निविधून्न्तम्॥ ४७-२००॥

केवलं चन्द्रबीजं तु सविसर्गमनुं ततः।

सर्वज्ञाय पदस्यान्ते हृदयाय नमः पदम्॥ ४७-२०१॥

अमृते पदमुच्चार्य कामबीजं ततः पदम्।

तेजोज्वालापदं मालिनेऽन्ते च क्लृप्ताय ब्रह्मणेऽपि वसेत्ततः॥ ४७-२०२॥

स्वाहान्तं तत एवाथ ज्वलितशिखिशब्दकम्।

शिखायानादिबोधाय शिखायै वषडित्यथ॥ ४७-२०३॥

वजिरणे वज्रहस्ताय स्वतन्त्राय पदं वदेत्।

कवचाय तारशब्दं ततोऽन्यद् बीजमुच्चरेत्॥ ४७-२०४॥

नाकारं बिन्दुसंयुक्तं वामनेत्रं सबिन्दुकम्।

पशुशब्दं तारमन्त्रं अनन्तशक्तये पदम्॥ ४७-२०५॥

अस्त्राय फडिति प्रोच्य एवं विन्यस्य योगिराट्।

मणिपूरे मनो योज्य ध्यायेच्चैतन्यमुत्तमम्॥ ४७-२०६॥

ओम् मुक्तापीतपयोदमौक्तिकजवावर्णैर्मुखैः पञ्चभिः

त्र्यक्षैरञ्चितमीशमिन्दुमुकुटं पूर्णेन्दुकोटिप्रभम्।

शूलं टङ्ककृपाणवज्रदहनान्नागेन्द्रघण्टाङ्कुशान्।

पाशं भीतिहरं दधानममिताकल्पोज्ज्वलाङ्गं भजे॥ ४७-२०७॥

एवं ध्यात्वा मानसोपचारैः सम्पूज्य पूजकः।

अर्घ्यस्थापनमाकुर्यान्निजमन्त्राभिशोधनम्॥ ४७-२०८॥

शैवोक्तपीठमन्वन्तां पीठपूजां ततश्चरेत्।

पुनर्ध्यात्वा समावाह्य चावाहनादिमुद्रया॥ ४७-२०९॥

पञ्चपुष्पाञ्जलिदानपर्यन्तं परिपूजयेत्।

पञ्चपुष्पाञ्जलिं दत्त्वा वदनार्चनमाचरेत्॥ ४७-२१०॥

शिवावरुणदेवांश्च पूजयेत्तत् क्रमं शृणु।

एशान्यां पूजयेद्विद्वान् ईशानाय नमस्ततः॥ ४७-२११॥

पूर्वे ओं तत्पुरुषाय नमः शब्दं समुच्चरेत्।

दक्षिणे ओं अघोराय नमः शब्दं समुच्चरेत्॥ ४७-२१२॥

उत्तरे ओं वामशब्दं देवाय नम उच्चरेत्।

पश्चिमे प्रणवं पश्चात् सद्योजाताय एव हि॥ ४७-२१३॥

नमोऽन्तं पूजनं कृत्वा सर्वसिद्धीश्वरो भवेत्।

ईशानादिचतुष्केषु निवृत्तीत्यादीन् प्रपूजयेत्॥ ४७-२१४॥

प्रणवान्ते निवृत्यै च नमश्चान्ते ततोऽर्चयेत्।

एवं प्रतिष्ठां विद्यां च शान्तिं सम्पूज्य यत्नतः॥ ४७-२१५॥

प्रणवादिनमोऽन्तेन चतुर्थ्यन्तपदेन च।

योजयित्वा महापूजाविधौ कुर्यात् समर्पणम्॥ ४७-२१६॥

दशदलस्य मध्ये तु विभाव्याष्टदलं सुधीः।

तत्रैव पूजनं कुर्यात् अष्टाङ्गयोगसिद्धये॥ ४७-२१७॥

प्रणवादिनमोऽन्तेन चतुर्थ्यन्तपदेन च।

पूजयेद्देवदेवेशं गन्धपुष्पाक्षतादिभिः॥ ४७-२१८॥

अनन्तेशं पूजयेद्वै तथा सूक्ष्मेशमेव च।

शिवोत्तमेशं सम्पूज्य एकनेत्रेशमेव च॥ ४७-२१९॥

एकरुद्रेशमेवं हि त्रिमूर्त्तीशं ततोऽर्चयेत्।

भक्त्या समर्चयेत्तत्र श्रीकण्ठेशं शिखण्डिनम्॥ ४७-२२०॥

तद्बाह्यपत्रिकाग्रेषु उत्तरादिक्रमेण तु

उमाद्यादेवताः पूज्याः प्रणवादिनमोऽन्तिकाः॥ ४७-२२१॥

उमादेवीं समभ्यर्च्य तथा चण्डेश्वरं ततः।

नन्दिनञ्च महाकालं गणेशं वृषभं तथा॥ ४७-२२२॥

भृङ्गरीटः स्कन्दपुत्रौ तद्बाह्ये क्रमतोऽर्चयेत्।

इन्द्रादीन् लोकपालाश्च गन्धदीपैः समर्चयेत्॥ ४७-२२३॥

वज्रादींश्च क्रमेणैव पूजयेत्साधकोत्तमः।

धूपदीपादिनैवेद्यपानार्थं पुनराचमनम्॥ ४७-२२४॥

संहारमुद्रया चोर्ध्वे स्थापयेद्रुद्ररूपिणम्।

विसर्जनान्तं तत्कर्म उत्सृष्टपूजनादिकम्॥ ४७-२२५॥

समाप्य विधिनानेन पूजाकर्म समापयेत्।

प्रत्यहं मानसं जापं होममर्चनतर्पणे॥ ४७-२२६॥

वर्धयेत् साधकश्रेष्ठो भक्तिभावपरायणः।

पञ्चलक्षजपेनास्या पुरश्चरणमिष्यते॥ ४७-२२७॥

एवं ध्यात्वा जपेन्मन्त्रं पञ्चलक्षं मधुप्लुतैः।

प्रसूनैः करवीरोत्थैरथवा जुहुयात् सुधीः॥ ४७-२२८॥

सर्वदा मानसं कार्यं द्रव्यालाभेऽनिशं चरेत्।

तद्दशांशं प्रजुहुयात्तद्दशांशञ्च तर्पणम्॥ ४७-२२९॥

तद्दशांशं चाभिषेकं दशांशं विप्रभोजनम्।

एवं जपं साधनञ्च पुरा नारायणो मुनिः॥ ४७-२३०॥

कृत्वा सर्वसत्त्वमयः शीतलो योगिराड् भवेत्।

यः करोति साधनानि सोऽचिरादमरो भवेत्॥ ४७-२३१॥

पूजान्ते पूजाशेषे च पूजामध्यक्रमेण च।

प्रणमेत् साधकश्रेष्ठो वरुणात् पापभूपतेः॥ ४७-२३२॥

ओं नमः परमकल्याण नमस्ते विश्वभावन

नमस्ते पार्वतीनाथ उमाकान्त नमोऽस्तु ते॥ ४७-२३३॥

विश्वात्मने विचिन्त्याय गुणाय निर्गुणाय च।

धर्माय ज्ञानमोक्षाय नमस्ते सर्वयोगिने॥ ४७-२३४॥

नमस्ते कालरूपाय त्रैलोक्यरक्षणाय च।

गोलोकघातकायैव चण्डेशाय नमोऽस्तु ते॥ ४७-२३५॥

सद्योजाताय देवाय नमस्ते शूलधारिणे।

कालान्ताय च कान्ताय चैतन्याय नमो नमः॥ ४७-२३६॥

कुलात्मकाय कौलाय चन्द्रशेखर ते नमः।

उमानाथ नमस्तुभ्यं योगीन्द्राय नमो नमः॥ ४७-२३७॥

सर्वाय सर्वपूज्याय ध्यानस्थाय गुणात्मने।

पार्वती प्राणनाथाय नमस्ते परमात्मने॥ ४७-२३८॥

एतत्स्तोत्रं पठित्वा च स्तौति यः परमेश्वरम्।

याति रुद्रकुलस्थानं मणिपूरं विभिद्यते॥ ४७-२३९॥

एतत्स्तोत्रप्रपाठेन तुष्टो भवति शङ्करः।

खेचरत्वं पदं नित्यं ददाति परमेश्वरः॥ ४७-२४०॥

ततो वक्ष्ये महादेव मृत्युञ्जयविधानकम्।

यत् कृत्वा परमब्रह्ममयो भवति साधकः॥ ४७-२४१॥

मृत्युञ्जयस्य मन्त्रं वै जपते यदि मानुषः।

कोटिवर्षशतं स्थित्वा लीनो भवति ब्रह्मणि॥ ४७-२४२॥

सर्वव्यापकरूपेण स तिष्ठति सदाशिव।

तत्प्रकारं प्रवक्ष्यामि सावधानोऽवधारय॥ ४७-२४३॥

आदौ पूजां विधानेन वक्ष्यामि सारनिमीताम्।

श्रीकण्ठसपूर्णोदर्याश्च न्यासं चास्ये समाचरेत्॥ ४७-२४४॥

ततो हृदयमध्ये तु स्वहस्ताङ्गुलिमुद्रया।

तद्वयान्यस्य देवेश तत्प्रकाशं प्रचक्ष्यते॥ ४७-२४५॥

प्रणवादि नमोऽन्तेन चतुर्थ्यन्तपदेन च।

योजयित्वा न्यसेन्मन्त्री मन्त्रभावपरायणः॥ ४७-२४६॥

आधारशक्तिमेवं हि प्रकृतितदनन्तरम्।

कूर्ममनन्तं तत्पश्चात् पृथिवीं क्षीरसागरम्॥ ४७-२४७॥

श्वेतद्वीपं ततः पश्चान्मणिमण्डपमेव च।

कल्पवृक्षे ततो नाथ विन्यसेन्मणिवेदिकाम्॥ ४७-२४८॥

रत्नसिंहासनं तत्र हृदयाम्भोजमण्डले।

दक्षवामस्कन्धभागे वामोरौ दक्षिणे तथा॥ ४७-२४९॥

मुखे वामपार्श्वभागे नाभौ दक्षपार्श्वके।

प्रणवादिनमोऽन्तेन चतुर्थ्यन्तपदेन च॥ ४७-२५०॥

सर्वत्र न्यासमाकुर्यात्तेषां नाम श्रृणु प्रभो।

क्रमेण सर्वं कर्त्तव्यं क्रमभङ्गो न चाचरेत्॥ ४७-२५१॥

धर्मं ज्ञानञ्च वैराग्यमैश्वर्यं तदनन्तरम्।

अधर्ममपि चाज्ञानमवैराग्यं ततः परम्॥ ४७-२५२॥

अनैश्वर्यं क्रमेणापि विन्यसेत् साधकोत्तमः।

पुनर्वारं हृदम्भोजे न्यसेदेकमनाः सुधीः॥ ४७-२५३॥

अनन्तपद्ममेवं तु अं सूर्यमण्डलं तथा

द्विषड्कलात्मना सार्धं सं सोममण्डलं तथा॥ ४७-२५४॥

षोडशकलात्मानञ्च मं वह्निमण्डलं तथा

दशकलात्मना सार्धं सं सत्वं तदनन्तरम्॥ ४७-२५५॥

रं बीजं रजसं तत्र तं तमसमेव च

आं आत्मने न्यसेन्मन्त्री अं अन्तरात्मने नमः॥ ४७-२५६॥

पं बीजं परमात्मानं मायाज्ञानात्मने नमः

इत्यन्तं न्यस्य देवेश मन्त्रसिद्धिमवाप्स्यसि॥ ४७-२५७॥

मणिपूरे मन्त्रसिद्धिं सर्वसिद्धिमवाप्नुयात्

यः करोति सदा न्यासं ध्यानपूजापरायणः॥ ४७-२५८॥

वामां ज्येष्ठां तथा रौद्रीं कालीं कलपदादिकाम्।

विकरण्याह्वया युक्ता बलविकरणीं तथा॥ ४७-२५९॥

बलप्रमथिनीं चैव न्यसेत् साधकसत्तमः।

ततः सर्वभूतदमनीं मनोन्मनीं ततो न्यसेत्॥ ४७-२६०॥

तदुपरि न्यसेन्नाथ ओं नमो भगवते पदम्।

सकलगुणात्मनः शक्तिं चान्ते युक्ताय पदमावदेत्॥ ४७-२६१॥

अनन्ताय पदस्यान्ते योगपीठात्मने पदम्।

नमोऽन्तोऽयं महामन्त्रः सर्वोपरि न्यसेत्सुधीः॥ ४७-२६२॥

ततो नाथ समाकुर्यात् साधको गतभीः स्वयम्।

ऋष्यादिन्यासमाकुर्यात् तत्प्रकारं शृणु प्रभो॥ ४७-२६३॥

शिरसि पदमुच्चार्य कहोडऋषये नमः।

तदुपरि ततो नाथ महाविष्णुपदं वदेत्॥ ४७-२६४॥

ऋषये नम इत्युक्त्वा मुखे देवीपदं वदेत्।

गायत्रीच्छन्दसे पश्चान्नमः शब्दं समुच्चरेत्॥ ४७-२६५॥

हृदि मृत्युञ्जयायैवं दैवतायै नमः पदम्।

ऋषिः कहोडो देव्याश्च गायत्रीच्छन्द ईरितम्॥ ४७-२६६॥

मृत्युञ्जयो महादेवो देवतास्य प्रकीतीता।

कराङ्गन्यासकौ कुर्यात् षड्दीर्घभाजया सह॥ ४७-२६७॥

सकारेण महाकाल तत्प्रकारं शृणु प्रभो।

सामङ्गुष्ठाभ्यां चान्ते च नमः शब्दं क्रमेण तु॥ ४७-२६८॥

एवं कराङ्गुलीन्यासं कुर्यादेव महाप्रभो।

षड्दीर्घभाजा मन्त्रेण सकारेण सबिन्दुना॥ ४७-२६९॥

कराङ्गन्यासमाकुर्यात् कुलतन्त्रक्रमेण तु।

ततो ध्यानं समाकुर्यात् शुभभावपरायणः॥ ४७-२७०॥

इन्द्वर्कानललोचनं स्मितमुखं पद्मद्वयान्तास्पदं।

मुद्रापाशमृगाक्षसूत्रविलसत्पाणिं हिमांशुच्छविम्।

कोटीरेन्दुगलत्सुधाप्लुततनुं हारादिभूषोज्ज्वलं।

कान्त्या विश्वविमोहनं पशुपतिं मृत्युञ्जयं भावये॥ ४७-२७१ ॥

एवं ध्यात्वा मानसोपचारद्रव्यैः प्रपूजयेत्।

अर्घ्यस्थापनमाकृत्य तत्तन्मन्त्रेण साधकः॥ ४७-२७२ ॥

पूजयेत्पीठमन्वन्ता तत्तन्मन्त्रेण साधकः।

पुनर्ध्यात्वा समावाह्य मूलमन्त्रेण मन्त्रवित्॥ ४७-२७३ ॥

पाद्यादिभिः पूजयेद्वै गन्धपुष्पादिशोभितैः।

पञ्चपुष्पाञ्जलिं दत्वा परिवारान् प्रपूजयेत्॥ ४७-२७४ ॥

केशरेष्वग्निनिर्ऋतिवाय्वीशानेषु पूजयेत्।

मध्ये दिक्षु च तन्मध्ये सा बीजं तत्र चोच्चरेत्॥ ४७-२७५ ॥

हृदयाय नमश्चान्ते सीं बीजं तदनन्तरम्।

शिरसे स्वाहया सार्धं सु बीजं तदनन्तरम्॥ ४७-२७६ ॥

शिखायै वषडित्यादि सैं बीजं तदनन्तरम्।

कवचाय पदस्यान्ते तारबीजं समुच्चरेत्॥ ४७-२७७ ॥

सौं बीजं पूर्वमुच्चार्य नेत्रत्रयाय इत्यपि।

वौषडादिमध्यपदं चतुर्दीक्षु ततः परम्॥ ४७-२७८ ॥

सश्चान्तेऽस्त्राय शब्दान्ते फडित्येव समर्चयेत्।

षडङ्गानि पूजयित्वा तद्बहिः प्रतिपूजयेत्॥ ४७-२७९ ॥

इन्द्रादींल्लोकपालांश्च वज्रादींश्च तथा प्रभो।

धूपदीपादिनैवेद्यपानादीनि प्रदापयेत्॥ ४७-२८० ॥

विधिना वादनं कुर्यान्मृत्युञ्जयसुतोषणात्।

विसर्जनान्तं यत्कर्म समाप्य विधिनामुना॥ ४७-२८१॥

संहारमुद्रया चैव हृदये चानयेद् बुधः।

प्रसन्नहृदयो भूत्वा चरणोदकमापिबेत्॥ ४७-२८२॥

एतन्मात्रेण देवेश सर्वसिद्धिं समाप्नुयात्।

पिबामि चरणद्वन्द्वाम्भोजनिःसृतकं भजे॥ ४७-२८३॥

अमरत्वं सदा देहि मृत्युञ्जय नमोऽस्तुते॥ ४७-२८४॥

इति श्रीरुद्रयामले उत्तरतन्त्रे मन्त्रप्रकाशो नाम सप्तचत्वारिंशः पटलः॥ ४७॥

अथाष्टचत्त्वारिंशः पटलः

आनन्दभैरव उवाच

श्रुतं च साधनं पुण्यं महारुद्रस्य सुन्दरि।

मणिपूरे प्रकाशश्च कथितं ज्ञाननिर्णयम्॥ ४८-१॥

अकस्मात् सिद्धिसम्पत्तिं नुतिं वद महापिरयाम्।

यस्य श्रवणमात्रेण पाठेन योगिनीवशम्॥ ४८-२॥

श्रीनन्दभैरवी उवाच

परमानन्ददेवेश योगानामधिप प्रभो।

स्तोत्रं रुद्रस्य वक्ष्यामि सारात्सारं परात्परम्॥ ४८-३॥

यज्ज्ञात्वा योगिनः सर्वे षट्चक्रपरिभेदकाः।

आकाशगामिनः सर्वे स्वर्गमोक्षाभिलाषुकाः॥ ४८-४॥

महादेवसमाः सर्वे देवाश्च स्वर्गभोगिनः।

सर्वरक्षाकरं स्तोत्रं ये पठन्ति निरन्तरम्॥ ४८-५॥

ते यान्ति ब्रह्मसदनं सिद्धमुख्या महीतले॥ ४८-६॥

ओं भजामि शम्भुं सुखमोक्षहेतुं।

रुद्रं महाशक्तिसमाकुलाङ्गम्।

रौद्रात्मकं चारुहिमांशुशेखरं।

कालं गणेशं सुमुखाय शङ्करम्॥ ४८-७॥

मृत्युञ्जयं जीवनरक्षकं परं।

शिवं परब्रह्मशरीरमङ्गलम्।

हिमांशुकोटिच्छविमादधानं।

भजामि पद्मद्वयमध्यसंस्थितम्॥ ४८-८॥

सर्वात्मकं कामविनाशमूलं।

तं चन्द्रचूडं मणिपूरवासिनम्।

चतुर्भुजं ज्ञानसमुद्रयाढ्यं।

पाशं मृगाक्षं गुणसूत्रव्याप्तम्॥ ४८-९॥

धरामयं तेजसमिन्दुकोटिं।

वायुं जलेशं गगनात्मकं परम्।

भजामि रुद्रं कुललाकिनीगतं।

सर्वाङ्गयोगं जयदं सुरेश्वरम्॥ ४८-१०॥

शुक्रं महाभीमनयं पुराणं।

प्राणात्मकं व्याधिविनाशमूलम्।

यज्ञात्मकं कामनिवारणं गुरुं।

भजामि विश्वेश्वरशङ्करं शिवम्॥ ४८-११॥

वेदागमानामतिमूलदेशं।

तदुद्भवं भद्रहितं परापरम्।

कालान्तकं ब्रह्मसनातनपिरयं।

भजामि शम्भुं गगनादिरूढम्॥ ४८-१२॥

शिवागमं शब्दमयं विभाकरम्।

भास्वत्प्रचण्डानलविग्रहं ग्रहम्।

ग्रहस्थितं ज्ञानकरं करालम्

भजामि शम्भुं प्रकृतीश्वरं हरम्॥ ४८-१३॥

छायाकरं योगकरं सुखेन्द्रं।

मत्तं महामत्तकुलोत्सवाढ्यम्।

योगेश्वरं योगकलानिधिं विधिं।

विधानवक्तारमहं भजामि॥ ४८-१४॥

हेमाचलालङ्कृतशुद्धवेशं।

वराभयादाननिदानमूलम्।

भजामि कान्तं वनमालशोभितं।

चामूलपद्मामलमालिनं कुलम्॥ ४८-१५॥

स्वयं पुराणं पुरुषेश्वरं गुरुं।

मिथ्याभयाह्लादविभाविनं भजे।

भावपिरयं प्रेमकलाधरं शिवं।

गिरीश्वरं चारुपदारविन्दम्॥ ४८-१६॥

ध्यानपिरयं ज्ञानगभीरयोगं।

भाग्यास्पदं भाग्यसमं सुलक्षणम्।

शूलायुधं शूलविभूषिताङ्गं।

श्रीशङ्करं मोक्षफलक्रियं भजे॥ ४८-१७॥

नमो नमो रुद्रगणेभ्य एवं।

मृत्युञ्जयेभ्यः कुलचञ्चलेभ्यः।

शक्तिपिरयेभ्यो विजयादिभूतये।

शिवाय धन्याय नमो नमस्ते॥ ४८-१८॥

बाह्यं त्रिशूलं वरसूक्ष्मभावं।

विशालनेत्रं तनुमध्यगामिनम्।

महाविपद् दुःखविनाशबीजं।

प्रज्ञादयाकान्तिकरं भजामि॥ ४८-१९॥

पुरान्तकं पूर्णशरीरिणं गुरुं।

स्मरारिमाद्यं निजतर्कमार्गम्।

अनादिदेवं दिवि दोषघातिनम्।

भजामि पञ्चाक्षरपुण्यसाधनम्॥ ४८-२०॥

दिगम्बरं पद्ममुखं करस्थं।

स्थितिक्रियायोगनियोजनं भवम्।

भावात्मकं भद्रशरीरिणं शिवं।

भजामि पञ्चाननमर्कवर्णम्॥ ४८-२१॥

मायामयं पङ्कजदामकोमलं।

दिग्व्यापिनं दण्डधरं हरेश्वरम्।

त्रिपक्षकं त्र्यक्षरबीजभावं।

त्रिपद्ममूलं त्रिगुणं भजामि॥ ४८-२२॥

विद्याधरं वेदविधानकार्यं।

कायागतं नीतनिनादतोषम्।

नित्यं चतुर्वर्गफलादिमूलं।

वेदादिसूत्रं प्रणमामि योगम्॥ ४८-२३॥

वेदान्तवेद्यं कुलशास्त्रविज्ञं।

क्रियामयं योगस्वधर्मदानम्।

भक्तेश्वरं भक्तिपरायणं वरं।

भक्तं महाबुद्धिकरं भजाम्यहम्॥ ४८-२४॥

गतागतं गम्यमगम्यभावं।

समुल्लसत्कोटिकलावतंसम्।

भावात्मकं भावमयं सुखासुखं।

भजामि भर्गं प्रथमारुणप्रभम्॥ ४८-२५॥

बिन्दुस्वरूपं परिवादवादिनं।

मध्याह्नसूर्यायुतसन्निभं नवम्।

विभूतिदानं निजदानदानं।

दानात्मकं तं प्रणमामि देवम्॥ ४८-२६॥

कुम्भापहं शत्रुनिकुम्भघातिनं।

दैत्यारिमीशं कुलकामिनीशम्।

प्रीत्यान्वितं चिन्त्यमचिन्त्यभावं।

प्रभाकराह्लादमहं भजामि॥ ४८-२७॥

त्रिमूर्त्तीमूलाय जयाय शम्भवे।

हिताय लोकस्य वपुर्धराय।

नमो भयाच्छिन्नविघातिने पते।

नमो नमो विश्वशरीरधारिणे॥ ४८-२८॥

तपःफलाय प्रकृतिग्रहाय।

गुणात्मने सिद्धिकराय योगिने।

नमः प्रसिद्धाय दयातुराय।

वाञ्छाफलोत्साहविवर्धनाय ते॥ ४८-२९॥

शिवममरमहान्तं पूर्णयोगाश्रयन्तं।

धरणिधरकराब्जैर्वर्धमानं त्रिसर्गम्।

विसम मरणघातं मृत्युपूज्यं जनेशं।

विधिगणपतिसेव्यं पूजये भावयामि॥ ४८-३०॥

एतत्स्तोत्रं पठेद् विद्वान् मुनिर्योगपरायणः।

नित्यं जगन्नाथगुरुं भावयित्वा पुनः पुनः॥ ४८-३१॥

मणिपूरे वायुनिष्ठो नित्यं स्तोत्रं पठेद् यदि।

जीवन्मुक्तश्च देहान्ते परं निर्वाणमाप्नुयात्॥ ४८-३२॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने रुद्रमृत्युञ्जयस्तवनं। नाम अष्टचत्वारिंशत्तमः पटलः॥ ४८॥

अथैकोनपञ्चाशत्तमः पटलः

आनन्दभैरवी उवाच

षड्चक्रभेदनार्थाय सर्वसिद्धसुसिद्धये।

वक्ष्यामि लाकिनीदेवीस्तोत्रं परमदुर्लभम्॥ ४९-१॥

यत्पाठादतिसन्तोषं प्राप्नोति यतिरीश्वर।

तत्क्रियासारसम्पन्नं स्तवनं लाकिनीपिरयम्॥ ४९-२॥

अस्य श्रीलाकिनीस्तोत्रस्य महाविष्णुकहोडऋषिर्गायत्रीच्छन्दो महासिद्धिदमृत्युञ्जय-- महारुद्र

लाकिनी सरस्वतीदेवता मणिपूरभेदने

जपे विनियोगः॥

ओम् बीजाक्षरमूर्तीमाती हरिणीमार्यां जयां बुद्धिदां।

दीनानामपराधकोटिहननीं संज्ञामणिं योगिनाम्।

त्वामाद्यामनुरागिणीं गुणगणामोदैकहेतुस्थलां।

स्थित्यन्तःकृतकौतुकीम वरदे वन्दे मुदा लाकिनीम्॥ ४९-३॥

हेरम्बार्चनसिद्धिदाद्वयगता कोटिप्रभा भास्करा

साकारा किरणोज्ज्वला सुखमयी वेदध्वनिप्राणिनी।

कोपाको पितलक्षणा तरुतराकल्पाशया संशया

कृत्वैवं वरवर्णीनी समवतु श्रीलाकिनी कङ्किनी॥ ४९-४॥

केयूरामलहारमालशुभगा वीरासना स्थायिनी

भार्या रुद्रपतेः प्रवालविमला वक्रोत्पल स्रग्धरा।

माता योगवतां सती परा परपदा माध्वीरसाच्छादिता।

त्वं मां पाहि कृपामयी यमगतं मृत्युञ्जये श्रीधरे॥ ४९-५॥

आकाङ्क्षीकुलसङ्घका क्षयकरी शत्रुप्रभादेर्दया।

भक्तानामतिदुःखहा शशिमुखी योन्याननना कामुकी।

कामस्थानमकामदोषशतकं शीघ्रं त्वलक्षेमदा।

जीवन्मुक्तिपदं विधेहि समरे सर्गद्रुहस्य पिरयम्॥ ४९-६॥

त्वं पञ्चाननपूजिता त्वमशिता त्वं बालविद्यागति--।

स्त्वं सत्यं कवितासु वाक्यकविता त्वं केवलानन्ददा।

त्वं लाक्षारुणरूपिणी त्वमवरा त्वं लिङ्गसंहारिणी।

त्वं साक्षादमृतप्रदा त्वमजरा त्वं लाकिनी पातु माम्॥ ४९-७॥

नानामङ्गलधर्मराज्यजडिता संस्कारबोधाश्रया।

लिङ्गस्थाचलपुत्रिका नवगृहे सङ्कामयन्ती शिवा।

मे लिङ्गोपरि रुद्रनाथ विपथव्याभेदनं सङ्गमं।

शीघ्रं कारय देवि मोक्षतुरिकं कोटीव चन्द्रोज्ज्वला॥ ४९-८॥

चन्द्राभासकलाश्रया श्रयति या शब्दच्छटा या समा।

माया मोहभिदा दया दयति या कृष्णक्रिया मोहिनी।

लक्ष्मीर्नीलकलेवरामलमणेः पूर्वं सदा रक्षतु।

श्रीविद्या भयदायिनी त्वमपि सा मे नाभिमूलोदया॥ ४९-९॥

मात्रा मुद्रामननिलया मालिनी मन्त्रविद्या।

विश्वेशानी शयनरहिता शीतवातातपस्था।

सत्यासत्या वचनभवगा गौरि माता त्वमेव।

प्राणान् रक्ष प्रथमकिरणामाश्रये त्वामनन्ताम्॥ ४९-१०॥

सिद्धासिद्धा शशिरविकला केवलाम्भोजसंस्था।

स्थित्यानन्दा नयनस्वचलाम्भोजमध्यप्रकाशा।

नित्यं श्रद्धागतिपथकरा कर्त्री कामानहर्त्री।

नाद्यस्तोत्रं भज भज भजे त्वामनन्तां स्वरूपे॥ ४९-११॥

पीतापीता पवनगमना धारणध्यानयोगा।

कालाकाला कलिकुलकला निष्कला ज्ञानरूपा।

कृष्णानन्दा मदनकुहरा केकरा शङ्करी वा।

त्वं श्रीघात्री धवलकमलं नाभिमूले प्रवक्ष्ये॥ ४९-१२॥

श्वेता श्वेतारुणशतकरा भावनाज्ञानसिद्धिः।

प्रीताप्रीता परमगहना चारुणामाननायाः।

त्वं सा विद्या विधिबुधवरा धारणाज्ञानगम्या।

रम्यारम्या रमणनिरता नीरदा पातु नाभिम्॥ ४९-१३॥

मन्दोद्बन्धपिरयवधुलता नीरवानावहन्त्री।

क्षेत्राक्षेत्रा परचरगता भुक्तिमुक्तिप्रकाशा।

कौलाकौलाज्ञापितनयना गञ्जना वातमुग्धा।

मुग्धामुग्धामतिधनपतेर्नाभिसंस्थेऽवनाभिम्॥ ४९-१४॥

हंसी सिंहासनगतपदा चक्रविद्या सुसूक्ष्मा।

श्रीविद्या त्वं नवविलचरा सुन्दरी रक्तवर्णा।

स्वर्णाम्भोजोपरि शुभमना चक्रमध्ये प्रतिष्ठा

सर्वा वर्णा परिजनदयानाभिपद्मं च रक्षा॥ ४९-१५॥

ब्रह्मानन्दा नृपगणमहापूजया शोभिताङ्गी।

श्रीश्रीविद्यासकलविभवा भावनीया महेन्द्रैः।

सिद्धस्थाने मणिमयगृहे मूलसिंहासनस्था।

पद्मे चाष्टान्वितयुगदले नाभिमूले ममाव॥ ४९-१६॥

योगज्ञानं द्विविधविभवं वेदविद्याप्रकाशं।

मे चाष्टाङ्गं समवतु मुदा षोडशी भैरवस्था।

चन्द्रोल्का त्वं भवभयहरा शोकतापापहन्त्री।

नाभावब्जे उदयति सुरो यस्तमीशे प्ररक्ष॥ ४९-१७॥

संश्लिष्टा त्वं विरत करुणे शीतले शीतशैले।

साक्षादन्यप्रचयवचना पार्वणा पर्वपूरा।

विद्युत्पूरं समसुखमयं पाहि पञ्चानना या।

त्वं सा देवी शुभमणिगृहे शीतलत्वं विधेहि॥ ४९-१८॥

छन्दोगानां सकलविषयच्छेदिनी चार्णमाता

माला लाक्षरुणकिरणभा गोपपूज्या गिरीज्या।

मातस्त्वं मे स्वमणिभवनं पाहि सूक्ष्मा भवानी।

वानस्थानाश्रय जय कराचाङ्गिरा चान्नपूर्णा॥ ४९-१९॥

चन्द्रोल्लासाऽवयवसुखदा दीर्घकेशी विशाला।

त्वं मातङ्गी जननि जगतां बालिका विप्रचण्डा।

ज्योत्स्नाजाले उदयति सदा रक्तभाषप्रभासा।

त्वं मे रुद्र हरिहरतनुं नाभिमूले प्ररक्ष॥ ४९-२०॥

वाणीनाम्ना रचयति वचः सुन्दरी वर्णनस्था।

स्थित्यन्तस्था चलतनुधरा धामसन्धामरा सा।

बोधानन्दप्रकृतितनुभिर्व्यापिनी ज्ञानमुग्धा।

मातस्त्वं मे मणिदलगृहं पाहि सर्वाङ्गविद्ये॥ ४९-२१॥

विद्या चण्डामलसितसृजा चन्दनालिप्तदेहा।

विश्वेशानि भगवति शिवे त्वं क्षयामोघरूपा।

जाया शम्भोर्जटिलशिवगता मोक्षदा मानसंस्था।

चित्तं शुभ्रं कुरु विषयछेदनं छेदिनि त्वम्॥ ४९-२२॥

मणिमयकुलगेहे कोटिविद्युत्प्रकाशेऽ--

भयवरमपि देहि कोधविद्ये मयि त्वम्।

सकलसुखविभोगं पालय प्राणरूपं।

चरणतलविलग्नं मामनाथं परेशि॥ ४९-२३॥

भुवनगहनहेतोः कायसर्गा विनास्ते।

विधिमखसुरनाथं मानुषादि त्रिसर्गम्।

मम मणिकुलपद्मे नित्यरूपाभिधानं।

जयति खलु तदानीं स्तोत्रसारप्रकारम्॥ ४९-२४॥

भवतु चरणपद्मे लाकिनी देवकन्ये।

विरचय मनुशास्त्रं सिद्धमन्त्रप्रकारम्।

वह वह भवभावं त्राहि मां चन्द्रगेहे।

कठिनहृदयनाशं शङ्करि त्वं कुरुष्व॥ ४९-२५॥

कमलवनसमीपे वन्यमध्येऽतिगुह्ये

विषयविषयिनाशं कौलिके त्वं विकृत्य।

भवनिजमणिपीठे स्थापयित्वा निदानं।

हर हरदयिते त्वं दोषषड्कं विवादम्॥ ४९-२६॥

घोरे सान्द्रान्धकारे मम निजकुलदृग्दानकत्री प्रसन्ने।

वाञ्छाकल्पद्रुमस्था त्वमिह कुशलदा दायभागाविभागा।

त्वं काली नन्दिनीस्था नयकरुणघटा मध्यगा माघका त्वं।

भीमा भीत्यापहन्त्री हरपदनयनो लाकिनी नाभिमाव॥ ४९-२७॥

एतत्स्तोत्रं पठेद् विद्वान् योगज्ञानी निराश्रयः।

महासुखगतो वीरो विभवायामृताय च॥ ४९-२८॥

भोगमोक्षौ करे तस्य चैहिके योगिराड् भवेत्।

परे याति महादेवी पादपद्मे न संशयः॥ ४९-२९॥

ऐहिके चिरजीवित्वं ददाति कामदायिनी।

मणिपूरे स्थितो याति कुलमार्गप्रसादतः॥ ४९-३०॥

कुलमार्गेण यत्स्थानं लयं विश्वेश्वरीपदम्।

तल्लया मणिपूरस्था देवता पश्यति ध्रुवम्॥ ४९-३१॥

पूजान्ते प्रपठेत् स्तोत्रं भक्तिभावपरायणः।

शीघ्रमेव हि योगी स्यात् कुलमार्गप्रसादतः॥ ४९-३२॥

इति श्रीरुद्रयामले उत्तरतन्त्रे लाकिनीशस्तवनं नाम एकोनपञ्चाशत्तमः पटलः॥ ४९॥

## अथ पञ्चाशत्तमः पटलः

आनन्दभैरवी उवाच

नाथ कान्त प्रवक्ष्यामि सिद्धसाधनमुत्तमम्।

येन साधनमात्रेण नरो योगी भवेद् ध्रुवम्॥ ५०-१॥

त्रिवीरं त्रिविधं प्रोक्तमुत्तमाधममध्यमम्।

तत्रैव त्रिविधं सङ्गमूर्ध्वपातालभूतलम्॥ ५०-२॥

सप्त ऊर्ध्वं तथा नाथ सप्त भूतलमेव च।

सप्त पातालमेवं हि सप्तत्रिसप्तसंख्यकम्॥ ५०-३॥

तन्मध्ये त्रिविधं भावं दिव्यवीरपशुक्रमम्।

दिवि तिष्ठन्ति देवाश्च वीरास्तिष्ठन्ति भूतले॥ ५०-४॥

पशवः सन्ति पाताले क्रमशः क्रमशः प्रभो।

सर्वत्र त्रिगुणच्छन्नं सत्त्वरजस्तमादिकम्॥ ५०-५॥

सत्त्वगुणं स्वर्गमध्ये सर्वे विष्णुपरायणाः।

तदा सर्वे दृढाः स्वर्गे भूतले च रजोगुणम्॥ ५०-६॥

ब्रह्मसेवापराः सर्वे ब्रह्मज्ञानिन एव च।

पाताले शिवसेवाश्च शिवरूपिण एव च॥ ५०-७॥

तमोगुणात् पशोर्भावं तमोदृष्टिं समाप्य च।

ततो विहाय तज्ज्ञानं वीरो भवति साधकः॥ ५०-८॥

वीरभावे ज्ञानदृष्टिं ब्रह्मसिद्धिं समाप्य च।

देवता भवति क्षिप्रं सत्त्वे निर्मलभावके॥ ५०-९॥

स्थिरो भूत्वा महादेवो भवत्येव क्रमेण तु।

आकाशगामिनी सिद्धिः क्रमशो भवति ध्रुवम्॥ ५०-१०॥

मूलाधारस्य चाधो वै पातालतलवासिनः।

तदूर्ध्वे ब्रह्मलोके तु भूतलादिनिवासिनः॥ ५०-११॥

तदूर्ध्वे सत्त्वनिलयं स्वाधिष्ठानं हि दैवतम्

विधिविद्याप्रकाशश्च वरदेवस्य सम्पदम्॥ ५०-१२॥

तदूर्ध्वे सर्वरूपञ्च सर्वज्ञानाश्रयं परम्।

परस्थानं महादेव मणिपूरं मनोहरम्॥ ५०-१३॥

रुद्रशक्त्यात्मकं चक्रं श्रीविद्याचक्रमण्डलम्।

लाकिनी परमा माया महारुद्रेण सेविता॥ ५०-१४॥

मणिपूरप्रकाशाय रुद्रशक्तिवीभाति च।

सर्वज्ञानानन्दमयं सर्वसिद्धिप्रकारकम्॥ ५०-१५॥

महासूक्ष्मशब्दमयं कुण्डलं ज्ञानसाधनम्।

यस्याः साधनमात्रेण योगी भवति भैरव॥ ५०-१६॥

प्रकार एव सेवायां महासिद्धीश्वरो भवेत्।

सर्वे च पशवः सन्ति तलवद् भूतले नराः॥ ५०-१७॥

तेषां ज्ञानप्रकाशाय वीरभावः प्रकाशितः।

वीरभावं मुदा प्राप्य क्रमेण देवता भवेत्॥ ५०-१८॥

यत्काले वीरभावादिसिद्धिं प्राप्नोति मानवः।

तत्कालनिर्णयं वक्ष्ये वीराद्देवत्वमाप्नुयात्॥ ५०-१९॥

मासेनाकर्षीणी सिद्धिर्मासेन वाक्पतिर्भवेत्।

मासत्रयेण संयोगाज्जायते सुरवल्लभः॥ ५०-२०॥

एवं चतुष्टये मासि भवेद् दिक्पालगोचरः।

पञ्चमे पञ्चबाणः स्यात् षष्ठे रुद्रो न संशयः॥ ५०-२१॥

वीरभावं समाश्रित्य सर्वदा योगमाश्रयेत्।

पशोरधीनं देवेश वीरभावं मनोहरम्॥ ५०-२२॥

वीराधीनं दिव्यभावं दिव्येन रुद्रतर्पणम्।

रुद्रदर्शनमात्रेण जीवन्मुक्तो भवेद् ध्रुवम्॥ ५०-२३॥

जीवन्मुक्तिपदं प्राप्य किन्न सिध्यति भूतले।

मनोनिवेशमाकृत्य पशुभावाश्रितो नरः॥ ५०-२४॥

वीरभावं समाश्रित्य चादौ योगं समाश्रयेत्।

सर्वदा चाभ्यसेद् योगं मन्त्रन्यासपरायणः॥ ५०-२५॥

योगसिद्धिं ज्ञानसिद्धिं मोक्षसिद्धिं ततः परम्।

यदि मोक्षमिहेच्छन्ति पशवः शास्त्रमोहिताः॥ ५०-२६॥

समज्ञानं वीरभावमाश्रित्य योगमाप्नुयात्।

योगाभ्यासस्य चाद्ये च शरीरं परिशोधयेत्॥ ५०-२७॥

आदौ पञ्चामराः कार्याः सर्वकार्यनिराश्रयाः।

केवलं योगमाश्रित्य सदा पञ्चामरा भवेत्॥ ५०-२८॥

द्विप्रकारं महाकाल पञ्चामराभिधानकम्।

नेती दन्ती तथा धौती नेली क्षालनं तथा॥ ५०-२९॥

एकप्रकारमेवं हि कथितं परमेश्वर।

दन्ती नेती तथा धौति नेली क्षालनक्रमात्॥ ५०-३०॥

एवं वा नित्यमाकुर्याद् योगसिद्धिसमृद्धये।

पञ्चामरासाधनादिकाले कुर्यान्निजक्रियाम्॥ ५०-३१॥

ओषधी पञ्चमं ग्राह्यं पञ्चयोगसुसिद्धये।

बिल्वपत्रं जयापत्रं तुलसीश्यामपत्रकम्॥ ५०-३२॥

निर्गुण्डीपत्रमेवं तु दूर्वाग्रन्थिरसेन च।

एषां प्रकृतिनामानि वक्ष्यामि शृणु शङ्कर॥ ५०-३३॥

अमरा बिल्वपत्रं तु चामरा विजयादलम्।

अमरलता ग्रन्थिदूर्वा निर्गुण्डी चामरेश्वरी॥ ५०-३४॥

अमरा श्यामतुलसी पञ्चामरास्तरूद्भवाः।

कथिता योगसिद्ध्यर्थे तत्प्रमाणं क्रमात् शृणु॥ ५०-३५॥

पञ्चतोलकमानं तु विजयापत्रमेव च।

अन्येषां तोलकं चैकं संशोध्य भक्षणं चरेत्॥ ५०-३६॥

एतद्भक्षणमात्रेण पञ्चयोगे जयी भवेत्।

पुनस्तेषां महाकाल मनुं वक्ष्यामि तत्त्वतः॥ ५०-३७॥

सकलं चामरायोगं मन्त्रेणानेन भक्षयेत्।

तातद्वयं समुद्धृत्य ॠयुगं तदनन्तरम्॥ ५०-३८॥

विसर्गबिन्दुसंयुक्तं तत्पश्चादमृतामुखि।

मरणं मारयद्वन्द्वं योगसिद्धिं ततः परम्॥ ५०-३९॥

देहि देहि पदस्यान्ते स्वाहान्तं मन्त्रमुत्तमम्।

एतन्मन्त्रेण चोत्पाट्य मन्त्रयित्वा प्रभक्षयेत्॥ ५०-४०॥

एतत्काण्डस्य मन्त्रं तु तत्रैव परियोजयेत्।

निर्गुण्डीमन्त्रराजं तु श‍ृणु वक्ष्यामि भैरव॥ ५०-४१॥

कामबीजत्रयं पश्चात् कालीबीजत्रयं तथा।

सर्वयोगं ततः पश्चात् साधयद्वयमेव च॥ ५०-४२॥

अमृतत्वं मयि शक्तं समर्पयद्वयं ततः।

स्वाहान्तमनुना चाथ चोत्पाट्य भक्षणं चरेत्॥ ५०-४३॥

बिल्वपत्रं प्रगृह्णीयात्तन्मन्त्रं श‍ृणु भैरव।

लज्जाबीजं कामबीजं शक्तिबीजं ततः परम्॥ ५०-४४॥

ब्रह्मबीजं ततः पश्चाद् गौरसुन्दरि चावदेत्।

मां स्थापय महायोगे पालयद्वयमेव च॥ ५०-४५॥

शङ्करप्रेमगलिते स्वाहान्तं मन्त्रमुच्चरेत्।

तुलसीपत्रं संशोध्य चोत्पाट्य मनुनाऽमुना॥ ५०-४६॥

विष्णुपिरये महामाये शिवयोगप्रसाधिनि।

मायाच्छेदं ततः पश्चात् संसारं हारयद्वयम्॥ ५०-४७॥

अमरत्वं देहि देहि स्वाहान्तं प्रणवादिकम्।

श‍ृणु श्रीविजयापत्रशोधनं हि चतुवीधम्॥ ५०-४८॥

चतुर्वर्णं स्वमन्त्रेण परिशोध्य कुलाकुलम्।

तत्क्रमं परिवक्ष्यामि सावधानाऽवधारय॥ ५०-४९॥

प्रणवं पूर्वमुच्चार्य देवीबीजं ततः परम्।

स्वाहान्तं मन्त्रमुद्धृत्य संशोध्य भक्षयेत् सुधीः॥ ५०-५०॥

एकीकृत्य महादेव चैतन्मन्त्रेण मन्त्रयेत्।

अमृतेऽमृतशब्दान्ते तद्भवे पदं ततः॥ ५०-५१॥

श्रीबीजं मन्मथं बीजं लज्जाबीजद्वयं क्रमात्।

क्रमेण च समुद्धृत्य विजये ज्ञानसुन्दरि॥ ५०-५२॥

योगमोक्षप्रदे पश्चात् कायशोधिनि पावनि।

मम पश्चात् कायसिद्धिं देहि देहि ततः परम्॥ ५०-५३॥

अमृतवर्षीणि शब्दान्ते अमृतं तदनन्तरम्।

आकर्षयद्वयं पश्चात् सिद्धिं देह्यनलपिरये॥ ५०-५४॥

एतन्मन्त्रेण संशोध्य सावधानेन भक्षयेत्।

न्यूनाधिकं न कर्तव्यं शनैरभ्यासमाचरेत्॥ ५०-५५॥

यावत् प्रमाणभक्षः स्यात् प्रमाणे चाधिकं न च।

एतद्भोजनमाकृत्य पयः पानं समाचरेत्॥ ५०-५६॥

तत्प्रकारं शृणु प्राणनाथ ईश्वर शङ्कर।

मरीचबीजं संशोध्य दुग्धशोधनमाचरेत्॥ ५०-५७॥

एतत्प्रकारं द्विविधं तत्प्रकारं वदाम्यहम्।

वाञ्छाकल्पतरोर्मूले गुरुं ध्यात्वा पुनः पुनः॥ ५०-५८॥

मानसोपचारद्रव्यैः पूजयित्वा विधानतः।

मरीचं तोलकार्धं तु शोधयेन्मनुनामुना॥ ५०-५९॥

श्रीकृष्णबीजमुद्धृत्य पृथ्वीबीजत्रयं तथा।

घोरघोरतरे पश्चान्मरीचकुलसुन्दरि॥ ५०-६०॥

नीला त्वं भव देहे मे शरीरं शोधयद्वयम्।

द्विठान्तोऽयं मनुः प्रोक्तस्तत्पश्चाद् दुग्धशोधनम्॥ ५०-६१॥

आदौ मरीचं भुक्त्वा तु दुग्धपानं महाबलम्।

चर्वयित्वा मरीचं तु दुग्धपानं महाबलम्॥ ५०-६२॥

कृष्णबीजं समुद्धृत्य कामेश्वरीमनुं ततः।

शिवबीजद्वयं पश्चात् कृष्णगोवसवासिनी॥ ५०-६३॥

योगविग्रहमुद्धृत्य मम कामप्रसाधिनि।

तत्पश्चाद् योगसिद्धीनामीश्वरि क्षेत्रवासिनि॥ ५०-६४॥

शरीरं वसमन्ते च चालयद्वयमेव च।

विघ्नान् वारययुग्मं तु स्वाहान्तोऽयं महामनुः॥ ५०-६५॥

द्वादशवारमुच्चार्य चाथवा पञ्चवारकम्।

वारत्रयं मुदा शोध्य सर्वत्रायं विधिः स्मृतः॥ ५०-६६॥

यदि पिबेत् खेचरत्वं तथा दुग्धं द्विपादकम्।

यदि चेत् केवलं दुग्धं तदा प्रस्थं चतुर्दश॥ ५०-६७॥

लघ्वाहारी महाज्ञानी पञ्चमादि विरागवित्।

मणिपूरे मनोयोगं समाकृत्यामरो भवेत्॥ ५०-६८॥

चतुर्वर्गः करे तस्य यो मणेः पीठमाश्रयेत्।

श्रीनन्दभैरव उवाच

मणिपूरभेदनार्थं मनोयोगसुसिद्धये॥ ५०-६९॥

खेचरादिमहायोगसिद्धये सर्वसिद्धये।

मृत्युञ्जयस्य देवस्य रुद्रशक्त्याश्च दर्शनात्॥ ५०-७०॥

तथा पीठस्थिरार्थाय कालजालवशाय च।

सहस्रनामबीजानि चाष्टोत्तरशतानि च॥ ५०-७१॥

मृत्युञ्जयस्य लाकिन्याः स्तोत्रं मकारकूटकम्।

कथयस्व वरारोहे यदि स्नेहोऽस्ति मां प्रति॥ ५०-७२॥

ज्ञानदे परमेशानि शरीरं मम रक्षतु॥ ५०-७३॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरण भैरवभैरवीसंवादे

मणिभेदप्रकाशो नाम पञ्चाशत्तमः पटलः॥ ५०॥

अथैकपञ्चाशत्तमः पटलः

आनन्दभैरवी उवाच

अथ सम्भेदनार्त्थाय वक्ष्ये षड्पङ्कजस्य च।

महारुद्रस्य देवस्य श्री श्रीमृत्युञ्जयस्य च॥ ५१-१॥

लाकिनी शक्तिसहितं सहस्रनाममङ्गलम्।

अष्टोत्तरशतव्याप्तं निगूढं भव सिद्धये॥ ५१-२॥

धारयित्वा पठित्वा च श्रुत्वा वा नाममङ्गलम्।

शृणुष्व परमानन्द योगेन्द्र चन्द्रशेखर॥ ५१-३॥

तवाह्लादप्रणयनात् सर्वसम्पत्तिप्राप्तये।

मणियोगसुसिद्ध्यर्थं सावधानाऽवधारय॥ ५१-४॥

अष्टोत्तरसहस्रनाममङ्गलस्य कहोड ऋषिर्गायत्रीच्छन्दो महारुद्रमृत्युञ्जयलाकिनी-- सरस्वतीदेवता सर्वाभीष्टशाचीपीठयोगसिद्ध्यर्थे विनियोगः।

ओं मृत्युञ्जय रुद्रादि लाकिन्यादि सरस्वती।

मृत्युजेता महारौद्री महारुद्रसरस्वती॥ ५१-५॥

महारौद्रो मृत्युहरो महामणिविभूषिता।

महादेवो महावक्रो महामाया महेश्वरी॥ ५१-६॥

महावीरो महाकालो महाचण्डेश्वरी स्नुषा।

महावातो महाभेदो वीरभद्रा महातुरा॥ ५१-७॥

महाचण्डेश्वरो मीनो मणिपूरप्रकाशिका।

महामत्तो महारात्रो महावीरासनस्थिता॥ ५१-८॥

मायावी मारहन्ता च मातङ्गी मङ्गलेश्वरी।

मृत्युहारी मुनिश्रेष्ठा मनोहारी मनोयवा॥ ५१-९॥

मण्डलस्थो मनीलाङ्गो मान्या मोहनमौलिनी।

मत्तवेशो महाबाणो महाबला महालया॥ ५१-१०॥

मारी हारी महामारी मदिरामत्तगामिनी।

महामायाश्रयो मौनी महामाया मरुत्प्रिया॥ ५१-११॥

मुद्राशी मदिरापी च मनोयोगा महोदया।

मांसाशी मीनभक्षश्च मोहिनी मेघवाहना॥ ५१-१२॥

मानभङ्गप्रियो मान्या महामान्यो महाबला।

महाबाणधरो मुख्यो महाविद्या महीयसी॥ ५१-१३॥

महाशूलधरोऽनन्तो महाबली महाकुला।

मलयाद्रिनिवासी च मतिर्मालासनप्रिया॥ ५१-१४॥

मायापतिर्महारुद्रो मरुणाहतकारिणी।

मालाधारी शङ्खमाली मञ्जरी मांसभक्षिणी॥ ५१-१५॥

महालक्षणसम्पन्नो महालक्षणलक्षणा।

महाज्ञानी महावेगी मौषली मुषलप्रिया॥ ५१-१६॥

महोख्यो मालिनीनाथो मन्दराद्रिनिवासिनी।

मौनीनामन्तरस्थश्च मानभङ्गा मनःस्विनी॥ ५१-१७॥

महाविद्यापतिर्मध्यो मध्ये पर्वतवासिनी।

मदिरापो मन्दहरो मदनामदनासना॥ ५१-१८॥

मदनस्थो मदक्षेत्रो महाहिमनिवासिनी।

महान् महात्मा माङ्गल्यो महामङ्गलधारिणी॥ ५१-१९॥

महाहीनशरीरश्च मनोहरतदुद्भवा।

मायाशक्तिपतिर्मोहा महामोहनिवासिनी॥ ५१-२०॥

महच्चितो निर्मलात्मा महतामशुचिस्थित।

मत्तकुञ्जरपृष्ठस्थो मत्तकुञ्जरगामिनी॥ ५१-२१॥

मकरो मरुतानन्दो माकरी मृगपूजिता।

मणीपूज्या मनोरूपी मेदमांसविभोजिनी॥ ५१-२२॥

महाकामी महाधीरो महामहिषमर्द्दी।

महिषासुरबुद्धिस्थो महिषासुरनाशिनी॥ ५१-२३॥

महिषस्थो महेशस्थो मधुकैटभनाशिनी।

मधुनाथश्च मधुपो मधुमांसादिसिद्धिदा॥ ५१-२४॥

महाभैरवपूज्यश्च महाभैरवपूजिता।

महाकान्ति प्रियानन्दो महाकान्तिस्थिताऽमरा॥ ५१-२५॥

मालाकोटिधरो मालो मुण्डमालाविभूषिता।

मण्डलज्ञाननिरतो मणिमण्डलवासिनी॥ ५१-२६॥

महाविभूतिक्रोधस्थो मिथ्यादोषसरस्वती।

मेरुस्थो मेरुनिलय मेनकानुजरूपिणि॥ ५१-२७॥

महाशैलासन मेरुमोहिनी मेघवाहिनी।

मञ्जुघोषो मञ्जुनाथो मोहमुद्गरधारिणी॥ ५१-२८॥

मेढ्रस्थो मणिपीठस्थो मूलरूपा मनोहरा।

मङ्गलार्थो महायोगी मत्तमेहसमुद्भवा॥ ५१-२९॥

मतिस्थित मनोमानो मनोमाता महोन्मनी।

मन्दबुद्धिहरो मृत्युर्मृत्युहन्त्री मनःप्रिया॥ ५१-३०॥

महाभक्तो महाशक्तो महाशक्तिर्मदातुरा।

मणिपुरप्रकाशश्च मणिपुरविभेदिनी॥ ५१-३१॥

मकारकूटनिलयो माना मानमनोहरी।

माक्षरो मातृकावर्णो मातृकाबीजमालिनी॥ ५१-३२॥

महातेजा महारश्मिर्मन्युग स्यान् मधुप्रिया।

मधुमांससमुत्पन्नो मधुमांसविहारिणी॥ ५१-३३॥

मैथुनानन्दनिरतो मैथुनालापमोहिनी।

मुरारिप्रेमसंतुष्टो मुरारिकरसेविता॥ ५१-३४॥

माल्यचन्दनदिग्धाङ्गो मालिनी मन्त्रजीविका।

मन्त्रजालस्थितो मन्त्री मन्त्रिणांमन्त्रसिद्धिदा॥ ५१-३५॥

मन्त्रचैतन्यकारी च मन्त्रसिद्धिप्रिया सती।

महातीर्थप्रियो मेषो महासिंहासनस्थिता॥ ५१-३६॥

महाक्रोधसमुत्पन्नो महती बुद्धिदायिनी।

मरणज्ञानरहितो महामरणनाशिनी॥ ५१-३७॥

मरणोद्भूतहन्ता च महामुद्रान्विता मुदा।

महामोदकरो मारो मारस्था मारनाशिनी॥ ५१-३८॥

महाहेतुहरो हर्ता महापुरनिवासिनी।

महाकौलिकपालश्च महादैत्यनिवारिणी॥ ५१-३९॥

मार्तण्डकोटिकिरणो मृतिहन्त्री मृतिस्थिता।

महाशैलोऽमलो मायी महाकालगुणोदया॥ ५१-४०॥

महाजयो महारुद्रो महारुद्रारुणाकरा।

मनोवर्णमृजोमाख्यो मुद्रा तरुणरूपिणी॥ ५१-४१॥

मुण्डमालाधरो मार्यो मार्यपुष्पमृजामनी।

मङ्गलप्रेमभावस्था महाविद्युत्प्रभाऽचला॥ ५१-४२॥

मुद्राधारी मतस्थैर्यो मतभेदप्रकारिणी।

महापुराणवेत्ता च महापौराणिकाऽमृता॥ ५१-४३॥

मौनविद्यो महाविद्या महाधननिवासिनी।

मघवा माघमध्यस्था महासैन्या महोरगा॥ ५१-४४॥

महाफणिधरो मात्रा मातृका मन्त्रवासिनी।

महाविभूतिदानाढ्ये मेरुवाहनवाहना॥ ५१-४५॥

महाह्लादो महामित्रो महामैत्रेयपूजिता।

मार्कण्डेयसिद्धिदाता मार्कण्डेयायुषिस्थिता॥ ५१-४६॥

मार्कण्डेयो मुहुःप्रीतो मातृकामण्डलेश्वरी।

मानसंस्थो मानदाता मनोधारणतत्परा॥ ५१-४७॥

मयदानवचित्तस्थो मयदानवचित्रिणी।

महागुणधरानन्दो महालिङ्गविहारिणी॥ ५१-४८॥

महेश्वरस्थितो मूलो मूलविद्याकुलोदया।

मायापो मोहनोन्मादी महागुरुनिवासिनी॥ ५१-४९॥

महाशुक्लाम्बरधरो मलयागुरुधूपिता।

मधूपिनी मधूल्लासो माध्वीरससमाश्रया॥ ५१-५०॥

महागुरुर्महादेहो महोत्साहा महोत्पला।

मध्यपङ्कजसंस्थाता मध्याम्बुजनिवासिनी॥ ५१-५१॥

मारीभयहरो मल्लो मल्लग्रहविरोधिनी।

महामुण्डलयोन्मादी मदघूर्णीतलोचना॥ ५१-५२॥

महासद्योजातकालो महाकपिलवतीनी।

मेघवाहो महावक्रो मनसामणिधारिणी॥ ५१-५३॥

मरणाश्रयहन्ता च महागुर्वीगणस्थिता।

महापद्मस्थितो मन्त्रो मन्त्रविद्यानिधीश्वरी॥ ५१-५४॥

मकरासनसंस्थाता महामृत्युविनाशिनी।

मोहनो मोहिनीनाथो मत्तनर्तनवासिनी॥ ५१-५५॥

महाकालकुलोल्लासी महाकामादिनाशिनी।

मूलपद्मनिवासी च महामूलकुलोदया॥ ५१-५६॥

मासाख्यो मांसनिलया मङ्गलस्था महागुणा।

मायाछन्नतरो मीनो मीमांसागुणवादिनी॥ ५१-५७॥

मीमांसाकारको मायी मार्जारसिद्धिदायिनी।

मेदिनीवल्लभक्षेमो मेदिनीज्ञानमोदिनी॥ ५१-५८॥

मौषलीश मृषार्थस्थो मनकल्पितकेशरी।

मनस श्रीधरो जापो मन्दहाससुशोभिता॥ ५१-५९॥

मैनाको मेनकापुत्रो मायाछन्ना महाक्रिया।

महाक्रिया च लोमाण्डो मण्डलासनशोभिता॥ ५१-६०॥

मायाधारणकर्ता च महाद्वेषविनाशिनी।

मुक्तकेशी मुक्तदेहो मुक्तिदा मुक्तिमानिनी॥ ५१-६१॥

मुक्ताहारधरो मुक्तो मुक्तिमार्गप्रकाशिनी।

महामुक्तिक्रियाच्छन्नो महोच्चगिरिनन्दिनी॥ ५१-६२॥

मूषलाद्यस्त्रहन्ता च महागौरीमनःक्रिया।

महाधनी महामानी मनोमत्ता मनोलया॥ ५१-६३॥

महारणगत सान्तो महावीणाविनोदिनी।

महाशत्रुनिहन्ता च महास्त्रजालमालिनी॥ ५१-६४॥

शिवो रुद्रो वलीशानी कितवामोदवधीनी।

चन्द्रचूडाधरो वेदो मदोन्मत्ता महोज्ज्वला॥ ५१-६५॥

विगलत्कोटिचन्द्राभो विधुकोटिसमोदया।

अग्निज्वालाधरो वीरो ज्वालामालासहस्रधा॥ ५१-६६॥

भर्गप्रियकरो धर्मो महाधामीकतत्परा।

धर्मध्वजो धर्मकर्ता धर्मगुप्ति प्रसृत्त्वरी॥ ५१-६७॥

महाविद्रुमपूरस्थो विद्रुमाभायुतप्रभा।

पुष्पमालाधरो मान्य शत्रूणां कुलनाशिनी॥ ५१-६८॥

कोजागरो विसर्गस्थो बीजमालाविभूषिता।

बीजचन्द्रो बीजपूरो बीजाभा विघ्ननाशिनी॥ ५१-६९॥

विशिष्टो विधिमोक्षस्थो वेदाङ्गपरिपूरिणी।

किरातिनीपति श्रीमान् विज्ञाविज्ञजनप्रिया॥ ५१-७०॥

वर्धस्थो वर्धसम्पन्नो वर्णमालाविभूषिता।

महाद्रुमगत शूरो विलसत्कोटिचन्द्रभा॥ ५१-७१॥

महाकुमारनिलयो महाकामकुमारिका।

कामजालक्रियानाथो विकला कमलासना॥ ५१-७२॥

खण्डबुद्धिहरो भावो भवतीति दुरासना।

असंख्यको रूपसंख्यो नामसंख्यादिपूरणी॥ ५१-७३॥

सद्मनाद्यमना कोषकिङ्किणीजालमालिनी।

चन्द्रायुतमुखाम्भोजो विभायुतसमानना॥ ५१-७४॥

कालबुद्धिहरो बालो भगवत्यम्बिकाऽण्डजा।

मुण्डहस्तश्चातुराद्यः विवादरहिताऽवृता॥ ५१-७५॥

पञ्चमाचारकुशलो महापञ्चमलालसा।

विकारशून्यो दुर्धर्षो द्विपदा मानुषक्रिया॥ ५१-७६॥

मयदानवकर्मस्थो विधातृकर्मबोधिनी।

कलिकालक्रियारूढ। वायवीघर्घरध्वनि॥ ५१-७७॥

सर्वसञ्चारकर्ता च सर्वसञ्चारकत्रीका।

मन्दमन्दगतिप्रेमा मन्दमन्दगतिस्थिता॥ ५१-७८॥

साट्टहासो विधुकला चाघोराघोरयातना।

महानरकहर्ता च नरकादिविपाकहा॥ ५१-७९॥

पञ्चरश्मिसमुद्भूतो नगादिबलघातिनी।

गरुडासनसम्पूज्यो गरुडप्रेमवर्धीनी॥ ५१-८०॥

अश्वत्थवृक्षनिलयो वटवृक्षतलस्थिता।

चिराङ्गो प्रथमाबुद्धि प्रपञ्चसारसङ्गति॥ ५१-८१॥

स्थितिकर्ता स्थितिच्छाया विमदा छत्रधारिणी।

दाडिमाभासकुसुमो दाडिमोद्भवपुष्पिका॥ ५१-८२॥

द्राढ्यो द्रवीभरतिका रतिकालापवर्धीनी।

रत्नगर्भो रत्नमाला रत्नेश्वर इवागति॥ ५१-८३॥

प्रसिद्धः पावनी पुच्छा पुच्छसुस्थ परापरा।

खेचरी खेचर स्वस्थो महाखड्गधरा जया॥ ५१-८४॥

किशोरभावखेलस्थो विखनादिप्रकारिका।

महाशब्दप्रकाशश्च महाशब्दप्रकाशिका॥ ५१-८५॥

चारुहासो विपधन्ता शत्रुमित्रगणस्थिता।

वज्रदण्डधरो व्याघ्रो वियत्खेलनखञ्जना॥ ५१-८६॥

गदाधर शीलधारी शशिकर्पूरगाऽबला।

वसनासनकारी च वसनावसनप्रिया॥ ५१-८७॥

महाविद्याधरो गुप्तो विशिष्टगोपनक्रिया।

गुप्तगीतागायनस्थो गुप्तशास्त्रगलप्रदा॥ ५१-८८॥

योगविद्यापुराणश्च यागविद्या विभाकला।

एककालो द्विकालश्चात्र कालफलाम्बुजा॥ ५१-८९॥

अष्टादशभुजो रौद्री भुजगा विघ्ननाशिनी।

विद्यागोपनकारी च विद्यासिद्धिप्रदायिनी॥ ५१-९०॥

विजयानन्दगो मन्दो महाकालमहेश्वरी।

भूतिदानरतो मार्गौं महद्गीताप्रकाशिनी॥ ५१-९१॥

केशाद्यावेशसन्तानो मङ्गलाभा कुलान्तरा।

द्विभुजो वेदबाहुश्च षड्भुजा कामचारिणी॥ ५१-९२॥

चन्द्रकान्तमाल्यधरो लोकातिलोकरागिणी।

त्रिभङ्गदेहनिकरो विभाङ्गस्था विनोदिनी॥ ५१-९३॥

त्रिकूटस्थस्त्रिभावस्थस्त्रिशरीरा त्रिकालजा।

एकवक्रो द्विवक्रश्च वक्रशून्या शिशुप्रिया॥ ५१-९४॥

श्री विद्यामन्त्रजालस्थो विज्ञानी कुशलेश्वरी।

घटासरगतो गौरा गौरवी गौरिकाऽचला॥ ५१-९५॥

गुरुज्ञानगतो गन्धो गन्धभोग्या गिरिध्वजा।

छायामण्डलमध्यस्थो विकटा पुष्करानना॥ ५१-९६॥

कामाख्यो निरहङ्कार कामरूपनृपाङ्गजा।

सुलभो दुर्लभो दुःखी सूक्ष्मातिसूक्ष्मरूपिणी॥ ५१-९७॥

बीजजापपशो क्रूरो विमोहगुणनाशिनी।

अर्धरो निपुणोल्लाशो विभुरूपा सरस्वती॥ ५१-९८॥

अनन्तघोषनिलयो विहङ्गगणगामिनी।

अच्युतेश प्रकाण्डस्थ प्रचण्डफालवाहिनी॥ ५१-९९॥

अभ्रान्तो भ्रान्तिरहिता श्रान्तो यान्ति प्रतिष्ठिता।

अव्यर्थो व्यर्थवाक्यस्थो विशङ्काशङ्कयान्विता॥ ५१-१००॥

यमुनापतिप पीनो महाकालवसावहा।

जम्बूद्वीपेश्वर पार पारावारकृतासनी॥ ५१-१०१॥

वज्रदण्डधर शान्तो मिथ्यागतिरतीन्द्रिया।

अनन्तशयनो न्यूनः परमाह्लादवर्धीनी॥ ५१-१०२॥

शिष्टाश्रणिलयो व्याख्यो वसन्तकालसुप्रिया।

विरजान्दोलितो भिन्नो विशुद्धगुणमण्डिता॥ ५१-१०३॥

अञ्जनेशः खञ्जनेश पललासवभक्षिणी।

अङ्गभाषाकृतिस्नाता सुधारसफलातुरा॥ ५१-१०४॥

फलबीजधरो दौर्गो द्वारपालनपल्लवा।

पिप्पलादः कारणश्च विख्यातिरतिवल्लभा॥ ५१-१०५॥

संहारविग्रहो विप्रो विषण्णा कामरूपिणी।

अवलापो नापनापो विक्लृप्ता कंसनाशिनी॥ ५१-१०६॥

हठात्कारेणतो चामो नाचामो विनयक्रिया।

सर्व सर्वसुखाच्छन्नो जिताजितगुणोदया॥ ५१-१०७॥

भास्वत्किरीटो राङ्कारी वरुणेशीतलान्तरा।

अमूल्यरत्नदानाढ्यो दिवारात्रिस्त्रिखण्डजा॥ ५१-१०८॥

मारबीजमहामानो हरबीजादिसंस्थिता।

अनन्तवासुकीशानो लाकिनी काकिनी द्विधा॥ ५१-१०९॥

कोटिध्वजो बृहद्दुर्गश्चामुण्डा रणचण्डिका।

उमेशो रत्नमालेशी विकुम्भगणपूजित॥ ५१-११०॥

निकुम्भपूजित कृष्णो विष्णुपत्नी सुधात्मिका।

अल्पकालहरः कुन्तो महाकुन्तास्त्रधारिणी॥ ५१-१११॥

ब्रह्मास्त्रधारक क्षिप्तो वनमालाविभूषिता।

एकाक्षर द्वयक्षरश्च षोडशाक्षरसंभवा॥ ५१-११२॥

अतिगम्भीरवातस्थो महागम्भीरवाद्यगा।

त्रिविधात्मा त्रिदेशात्मा तृतीयात्राणकारिणी॥ ५१-११३॥

कियत्कालचलानन्दो विहङ्गगमनासना।

गीर्वाण बाणहन्ता च बाणहस्ता विधूच्छला॥ ५१-११४॥

बिन्दुधर्मोज्ज्वलोदारो वियज्ज्वलनकारिणी।

विवासा व्यासपूज्यश्च नवदेशीप्रधानिका॥ ५१-११५॥

विलोलवदनो वामो विरोमा मोदकारिणी।

हिरण्यहारभूषाङ्गः कलिङ्गनन्दिनीशगा॥ ५१-११६॥

अनन्यक्षीणवक्षश्च क्षितिक्षोभविनाशिका।

क्षणक्षेत्रप्रसादाङ्गो वशिष्ठादिऋषीश्वरी॥ ५१-११७॥

रेवातीरनिवासी च गङ्गातीरनिवासिनी।

चाङ्गेशः पुष्करेशश्च व्यासभाषाविशेषिका॥ ५१-११८॥

अमलानाथसंज्ञश्च रामेश्वरसुपूजिता।

रमानाथ प्रभु प्राप्ति कीतीदुर्गाभिधानिका॥ ५१-११९॥

लम्बोदर प्रेमकालो लम्बोदरकुलप्रिया।

स्वर्गदेहो ध्यानमानो लोचनायतधारिणी॥ ५१-१२०॥

अव्यर्थवचनप्रक्ष्यो विद्यावागीश्वरप्रिया।

अब्दमानस्मृतिप्राण कलिङ्गनगरेश्वरी॥ ५१-१२१॥

अतिगुह्यतरज्ञानी गुप्तचन्द्रात्मिकाऽव्यया।

मणिनागगतो गन्ता वागीशानी बलप्रदा॥ ५१-१२२॥

कुलासनगतो नाशो विनाशा नाशसुप्रिया।

विनाशमूलः कूलस्थः संहारकुलकेश्वरी॥ ५१-१२३॥

त्रिवाक्यगुणविप्रेन्द्रो महदाश्चर्यचित्रिणी।

आशुतोषगुणाच्छन्न मदविह्वलमण्डला॥ ५१-१२४॥

विरूपाक्षी लेलिहश्च महामुद्राप्रकाशिनी।

अष्टादशाक्षरो रुद्रो मकरन्दसुबिन्दुगा॥ ५१-१२५॥

छत्रचामरधारी च छत्रदात्री त्रिपौण्ड्रजा।

इन्द्रात्मको विधाता च धनदा नादकारिणी॥ ५१-१२६॥

कुण्डलीपरमानन्दो मधुपुष्पसमुद्भवा।

बिल्ववृक्षस्थितो रुद्रो नयनाम्बुजवासिनी॥ ५१-१२७॥

हिरण्यगर्भ कौमारो विरूपाक्षा ऋतुप्रिया।

श्रीवृक्षनिलयश्यामो महाकुलतरूद्भवा॥ ५१-१२८॥

कुलवृक्षस्थितो विद्वान् हिरण्यरजतप्रिया।

कुलपः प्राणप प्राणा पञ्चचूडधराधरा॥ ५१-१२९॥

उषती वेदिकानाथो नर्मधर्मविवेचिका।

शीतलाप्त शीतहीनो मनःस्थैर्यकरी क्षया॥ ५१-१३०॥

कुक्षिस्थ क्षणभङ्गस्थो गिरिपीठनिवासिनी।

अर्धकायः प्रसन्नात्मा प्रसन्नवनवासिनी॥ ५१-१३१॥

प्रतिष्ठेश प्राणधर्मा ज्योतीरूपा ऋतुप्रिया।

धर्मध्वजपताकेशो बलाका रसवद्धीनी॥ ५१-१३२॥

मेरुश्रृङ्गगतो धूर्तो धूर्तमत्ता खलस्पृहा।

सेवासिद्धिप्रदोऽनन्तोऽनन्तकार्यविभेदिका॥ ५१-१३३॥

भाविनामत्त्वजानज्ञो विराटपीठवासिनी।

विच्छेदच्छेदभेदश्च छलन्शास्त्रप्रकाशिका॥ ५१-१३४॥

चारुकर्म्या संस्कृतश्च तप्तहाटकरूपिणी।

परानन्दरसज्ञानी रससन्तानमन्त्रिणी॥ ५१-१३५॥

प्रतीक्ष सूक्ष्मशब्दश्च प्रसङ्गसङ्गतिप्रिया।

अमायी सागरोद्भूतो बन्ध्यादोषविवजीता॥ ५१-१३६॥

जितधर्मो ज्वलच्छत्री व्यापिका फलवाहना।

व्याघ्रचर्माम्बरो योगी महापीना वरप्रदा॥ ५१-१३७॥

वरदाता सारदाता ज्ञानदा वरवाहिनी।

चारुकेशधरो मापो विशाला गुणदाऽम्बरा॥ ५१-१३८॥

ताडङ्कमालानिर्मालधरस्ताडङ्कमोहिनी।

पञ्चालदेश संभूतो विशुद्धस्वरवल्लभा॥ ५१-१३९॥

किरातपूजितो व्याधो मनुचिन्तापरायणा।

शिव वाक्यरतो वामो भृगुरामकुलेश्वरी॥ ५१-१४०॥

स्वयम्भू कुसुमाच्छन्नो विधिविद्याप्रकाशिनी।

प्रभाकरतनूद्भूतो विशल्यकरणीश्वरी॥ ५१-१४१॥

उषतीश्वर सम्पर्की योगविज्ञानवासिनी।

उत्तमो मध्यमो व्याख्यो वाच्यावाच्यवराङ्गना॥ ५१-१४२॥

आंबीजवादरोषाढ्या मन्दरोदरकारिणी।

कृष्णसिद्धान्तसंस्थानो युद्धसाधनचर्चीका॥ ५१-१४३॥

मथुरासुन्दरीनाथो मथुरापीठवासिनी।

पलायनविशून्यश्च प्रकृतिप्रत्ययस्थिता॥ ५१-१४४॥

प्रकृतिप्राणनिलयो विकृतिज्ञाननाशिनी।

सर्वशास्त्रविभेदश्च मत्तसिंहासनासना॥ ५१-१४५॥

इतिहासप्रियो धीरो विमलाऽमलरूपिणी।

मणिसिंहासनस्थश्च मणिपरजयोदया॥ ५१-१४६॥

भद्रकालीजपानन्दो भद्राभद्रप्रकाशिनी।

श्रीभद्रो भद्रनाथश्च भयभङ्गविहिंसिनी॥ ५१-१४७॥

आत्मारामो विधेयात्मा शूलपाणिप्रियाऽन्तरा।

अतिविद्यादृढाभ्यासो विशेषवित्तदायिनी॥ ५१-१४८॥

अजराऽमरकान्तिश्च कान्तिकोटिधरा शुभा।

पशुपाल पद्मसंस्थ श्रीशपाशुपताऽस्त्रदा॥ ५१-१४९॥

सर्वशास्त्रधरो दृप्तो ज्ञानिनी ज्ञानवर्धीनी।

द्वितीयानाथ ईशार्द्धो बादरायणमोहिनी॥ ५१-१५०॥

शवमांसाशनो भीमो भीमनेत्रा भयानका।

शिवज्ञानक्रमो दक्ष क्रियायोगपरायणा॥ ५१-१५१॥

दानस्थो दानसम्पन्नो दन्तुरा पार्वतीपरा।

प्रियानन्दो दिवाकर्ता निशानिषादघातिनी॥ ५१-१५२॥

अष्टहस्तो विलोलाक्षो मनःस्थापनकारिणी।

मृदुपुत्रो मृदुच्छत्रो विभाऽङ्गपुण्यनन्दिनी॥ ५१-१५३॥

अन्तरिक्षगतो मूलो मूलपुत्रप्रकाशिनी।

अभीतिदाननिरतो विधुमालामनोहरी॥ ५१-१५४॥

चतुरास्त्रजाह्नवीशो गिरिकन्या कुतूहली।

शिशुपालरिपुप्राणो विदेशपदरक्षिणी॥ ५१-१५५॥

विलक्षणो विधिज्ञाता मानहन्त्री त्रिविक्रमा।

त्रिकोणाननयोगीशो निम्ननाभिर्नगेश्वरी॥ ५१-१५६॥

नवीन गुणसम्पन्नो नवकन्याकुलाचला।

त्रिविधेशो विशङ्कितो विज्वरा ज्वरदायिनी॥ ५१-१५७॥

अतिधामीकपुत्रश्च चारुसिंहासनस्थिता।

स्थापकोत्तमवर्गाणां सतां सिद्धिप्रकाशिनी॥ ५१-१५८॥

सिद्धप्रियो विशालाक्षो ध्वंसकर्त्री निरञ्जना।

शक्तीशो विकलेशश्च क्रतुकर्मफलोदया॥ ५१-१५९॥

विफलेशो वियद्गामी ललिता बुद्धिवाहना।

मलयाद्रितप क्षेम क्षयकर्त्री रजोगुणा॥ ५१-१६०॥

द्विरुण्डको द्वारपालो बलेवीघ्नविनाशिनी।

मायापद्मगतो मानो मारीविद्याविनाशिनी॥ ५१-१६१॥

हिंगुलाजस्थित सिद्धो विदुषां वादसारिणी।

श्रीपतीश श्रीकरेश श्रीविद्या भुवनेश्वरी॥ ५१-१६२॥

मतिप्रथमजो धन्यो मिथिलानाथपुत्रिका।

रामचन्द्रप्रिय प्राप्तो रघुनाथकुलेश्वरी॥ ५१-१६३॥

कूर्मः कूर्मगतो वीरो वसावर्गा गिरीश्वरी।

राजराजेश्वरीबालो रतिपीठगुणान्तरा॥ ५१-१६४॥

कामरूपधरोल्लासो विदग्धा कामरूपिणी।

अतिथीश सर्वभर्ता नानालङ्कारशोभिता॥ ५१-१६५॥

नानालङ्कारभूषाङ्गो नरमालाविभूषिता।

जगन्नाथो जगद्व्यापी जगतामिष्टसिद्धिदा॥ ५१-१६६॥

जगत्कामो जगद्व्यापी जयन्ती जयदायिनी।

जयकारी जीवकारी जयदा जीवनी जया॥ ५१-१६७॥

जयो गणेश श्रीदाता महापीठनिवासिनी।

विषम सामवेदस्थो यजुर्वेदांशयोगया॥ ५१-१६८॥

त्रिकालगुणगम्भीरो द्वाविंशतिकराम्बुजा।

सहस्रबाहु सारस्थो भागगा भवभाविनी॥ ५१-१६९॥

भवनादिकरो मार्गो विनीता नयनाम्बुजा।

सर्वत्राकर्षकोऽखण्ड सर्वज्ञानाभिकषीणी॥ ५१-१७०॥

जिताशयो जितविप्रः कलङ्कगुणवजीता।

निराधारो निरालम्बो विषया ज्ञानवजीता॥ ५१-१७१॥

अतिविस्तारवदनो विवादखलनाशिनी।

भार्यानाथः क्षोभनाशो रिपूणां कुलपूजिता॥ ५१-१७२॥

आशवो भूरिवर्गाणां चारुकुन्तलमण्डिता।

अतिबुद्धिधरो सूक्ष्मो रजनीध्वान्तनाशिनी॥ ५१-१७३॥

ज्योत्स्नाजालकरो योगी वियोगशायिनी युगा।

युगगामी योगगामी जयदा लाकिनी शिवा॥ ५१-१७४॥

संज्ञाबुद्धिकरो भावो भवभीतिविमोहिनी।

सुन्दर सुन्दरानन्दो रतिकारतिसुन्दरी॥ ५१-१७५॥

रतिज्ञानी रतिसुखो रतिनाथप्रकाशिनी।

बुद्धरूपी बोधमात्रो वैरोधो द्वैतवजीता॥ ५१-१७६॥

भूरिभावहरानन्दो भूरिसन्तानदायिनी।

यज्ञसाधनकर्ता च सुयज्ञ पञ्चमोचना॥ ५१-१७७॥

कोटिकोटिचन्द्रतेजः कोटिकोटिरुचिच्छटा।

कोटिकोटिचञ्चलाभो द्विकोट्ययुतचञ्चला॥ ५१-१७८॥

कोटिसूर्याच्छन्नदेह कोटिकोटिरविप्रभा।

कोटिचन्द्रकान्तमणि कोटीन्दुकान्तनिर्मला॥ ५१-१७९॥

शतकोटिविधुमणि शतकोटीन्दुकान्तगा।

विलसत्कोटिकालाग्नि कोटिकालानलोपमा॥ ५१-१८०॥

कोटिवह्निगतो वह्नि वह्निजाया द्विगोद्भवा।

महातेजो वह्निवारिः कालाग्निहारधारिणी॥ ५१-१८१॥

कालाग्निरुद्रो भगवान् कालाग्निरुद्ररूपिणी।

कालात्मा कलिकालात्मा कलिका कुललाकिनी॥ ५१-१८२॥

मृत्युजितो मृत्युतेजा मृत्युञ्जयमनुप्रिया।

महामृत्युहरो मृत्युरपमृत्युविनाशिनी॥ ५१-१८३॥

जयो जयेशो जयदो जयदा जयवधीनी।

जयकरो जगद्धर्मो जगज्जीवनरक्षिणी॥ ५१-१८४॥

सर्वजित् सर्वरूपी च सर्वदा सर्वभाविनी।

इत्येतत् कथितं नाथ महाविद्याभिधानकम्॥ ५१-१८५॥

शब्दब्रह्ममयं साक्षात् कल्पवृक्षस्वरूपकम्।

अष्टोत्तरसहस्राख्यं शतसंख्यासमाकुलम्॥ ५१-१८६॥

त्रैलोक्यमङ्गलक्षेत्रं सिद्धविद्याफलप्रदम्।

सकलं निष्कलं साक्षात् कल्पद्रुमकलान्वितम्॥ ५१-१८७॥

योगिनामात्मविज्ञानमात्मज्ञानकरं परम्।

यः पठेद् भावसम्पूर्णो मिथ्याधर्मविवजीतः॥ ५१-१८८॥

रुद्रपीठे स्वयं भूत्त्वा महायोगी भवेद्ध्रुवम्।

अकस्मात्सिद्धिमाप्नोति चाधमांमाल्यदायिनीम्॥ ५१-१८९॥

राजलक्ष्मीधनैश्वर्यमतिधैर्यं हयादिकम्।

कुञ्जरं सुन्दरं वीरं पुत्रं राज्यं सुखं जयम्॥ ५१-१९०॥

राजराजेश्वरत्वं च दिव्यवाहनमेव च।

अक्लेशपञ्चमासिद्धिं ततः प्राप्नोति मध्यमाम्॥ ५१-१९१॥

अत्यन्तदुःखहननं गुरुत्वं लोकमण्डले।

देवानां भक्तिसंख्याञ्च दिव्यभावं सदा सुखम्॥ ५१-१९२॥

आयुर्वृद्धिं लोकवश्यं पूर्णकोशं हि गोधनम्।

देवानां राज्यभवनं प्रत्यक्षे स्वप्नकालके॥ ५१-१९३॥

दीर्घदृष्टिभयत्यागं चाल्पकार्यविवजीतम्।

सदा धर्मप्रियत्वं च धर्मज्ञानं महागुणम्॥ ५१-१९४॥

विवेकाङ्कुरमानन्दं श्रीवाणीसुकृपान्वितम्।

तत उत्तमयोगस्थां सिद्धिंप्राप्नोति साधकः॥ ५१-१९५॥

अनन्तगुणसंस्थानं मायार्थभूतिवर्जनम्।

एकान्तस्थानवसतिं योगशास्त्रनियोजनम्॥ ५१-१९६॥

सर्वाकाङ्क्षाविशून्यत्वं दैवतैकान्तसेवनम्।

खेचरत्वं सर्वगतिं भावसिद्धिं सुरप्रियम्॥ ५१-१९७॥

सदा रौद्रक्रियायोगं विभूत्यष्टाङ्गसिद्धिदम्।

दृढज्ञानं सर्वशास्त्रकारित्वं रससागरम्॥ ५१-१९८॥

एकभावं द्वैतशून्यं महापदनियोजनम्।

महागुणवतीविद्यापतित्वं शान्तिमेव च॥ ५१-१९९॥

प्राप्नोति साधकश्रेष्ठो यः पठेद् भावनिश्चलः।

त्रिकालमेककालं वा द्विकालं वा पठेत् सुधीः॥ ५१-२००॥

शतमष्टोत्तरं चास्य पुरश्चर्याविधिः स्मृतः।

पुरश्चरणमाकृत्य पठित्वा च पुनः पुनः॥ ५१-२०१॥

अष्टैश्वर्ययुतो भूत्वा मनोगतिमवाप्नुयात्।

सर्वत्र कुशलं व्याप्तं यः पठेन्नियतः शुचिः॥ ५१-२०२॥

षट्चक्रमणिपीठञ्च भित्त्वाऽनाहतगो भवेत्।

अनाहतं ततो भित्त्वा विशुद्धसङ्गमो भवेत्॥ ५१-२०३॥

विशुद्धपद्मं भित्त्वा च शीर्षे द्विदलगो भवेत्।

द्विदलादिमहापद्मं भित्त्वैतत् स्तोत्रपाठतः॥ ५१-२०४॥

चतुर्वर्गां क्रियां कृत्वा चान्ते निर्वाणमोक्षभाक्।

योगिनां योगसिद्ध्यर्थं सर्वभूतदयोदयम्॥ ५१-२०५॥

निर्वाणमोक्षसिद्ध्यर्थे कथितं परमेश्वर।

एतत्स्तवनपाठेन किं न सिद्ध्यति भूतले॥ ५१-२०६॥

कुलं कुलक्रमेणैव साधयेद् योगसाधनम्।

योगान्ते योगमध्ये च योगाद्ये प्रपठेत् स्तवम्॥ ५१-२०७॥

कृत्तिकारोहिणीयोगयात्रायां मिथुने तथा।

श्रवणायां मेषगणे कुजे चेन्दुसमाकुले॥ ५१-२०८॥

शनिवारे च सङ्क्रान्त्यां कुजवारे पुनः पुनः।

सन्ध्याकाले लिखेत् स्तोत्रं ध्यानधारणयोगिराट्॥ ५१-२०९॥

भूर्जपत्रे लिखित्वा च कण्ठे शीर्षे प्रधारयेत्।

अथवा रात्रियोगे च कुलचक्रे लिखेत् सुधीः॥ ५१-२१०॥

सर्वत्र कुलयोगेन पठन् सिद्धिमवाप्नुयात्।

एतन्नाम्ना प्रजुहुयात् कालिकाकृतिमान् भवेत्॥ ५१-२११॥

तद्दशांशक्रमेणैव हुत्वा योगीह सर्वदा।

मणिपूरे दृढो भूत्वा रुद्रशक्तिकृपां लभेत्॥ ५१-२१२॥

इति श्रीरुद्रयामले लाकिनीशाष्टोत्तरशतसहस्रनामविन्यासे एकपञ्चाशत्तमः पटलः॥ ५१॥

अथ द्विपञ्चाशत्तमः पटलः

श्रीनन्दभैरव उवाच

कथयस्व वरारोहे मणिपूरमनुक्रमम्।

यज्ज्ञात्वा मुनयः सर्वे चाष्टसिद्धिमवाप्नुयुः॥ ५२-१॥

प्रजपन् गच्छति क्षिप्रं अनायास मनाहते।

मन्त्रार्थं मन्त्रचैतन्यं निजविग्रहरक्षणम्॥ ५२-२॥

तत्परापरग्रन्थिस्थं विचार्य वक्तुमर्हसि।

श्रीनन्दभैरवी उवाच

महाभैरव कालाग्ने मनुज्ञानं निशामय॥ ५२-३॥

कथयामि तव स्नेहादतिकोमलसाधनम्।

मन्त्राणां मन्त्रचैतन्यं विषयानि शृणु प्रभो॥ ५२-४॥

मणिपूरे त्वनायासे यत्प्रसादात् स्थिरो भवेत्।

एतत्करणमात्रेण योगी भवति निश्चितम्॥ ५२-५॥

कोटिकोटिमन्त्रजालं तदर्थकोटयः स्मृताः।

एतन्मध्ये सारभागं कथयामि कुलार्णव॥ ५२-६॥

सर्वत्र समभावेन संस्मरन् मन्त्रमुत्तमम्।

शरीरमपरिच्छिन्नं ब्रह्माण्डं सचराचरम्॥ ५२-७॥

मूलादि मणिपूरान्तं त्रिगुणं मनुरूपकम्।

वर्णमालामुपादाय मुहुर्मुहुर्जपेत् सुधीः॥ ५२-८॥

पूर्णतेजोमयीं ध्यायेत् कोटिकालाग्निरूपिणीम्।

स्वदेवतां सदा ध्यायेन्मूलादिब्रह्मरन्ध्रके॥ ५२-९॥

तन्मूतीमपरिच्छिन्नां गूढस्थाननिवासिनीम्।

गभीरोर्ध्वगलानन्दां सुधासागरवासिनीम्॥ ५२-१०॥

यज्ज्ञात्वा ब्रह्मतुल्यं स्याद् ब्रह्मरन्ध्रे विभावनात्।

मूलरन्ध्रे मुदा ध्यायेत् कोटिकालानलोज्ज्वलम्॥ ५२-११॥

ज्वलन्तं ध्यानमाकुर्यादूर्ध्वशिखाप्रभाकरम्।

सुधारसमोदमुग्धं हव्याग्निसदृशोज्ज्वलम्॥ ५२-१२॥

ललाटं चिन्तयेत् कान्तं पूर्णेन्दुकोटिसङ्कुलम्।

विगलद्रसपुञ्जं तु तद्रसप्रोज्ज्वलाननम्॥ ५२-१३॥

स्थिरवायुस्थिराकारं मन्त्रार्थं चेति भावयेत्।

अथवा शुद्धसङ्काशं पूर्णब्रह्ममयूखगम्॥ ५२-१४॥

मूलादिब्रह्मरन्ध्रान्तं मूलं ध्यात्वा पुनः पुनः।

विचिन्तयेत् सूक्ष्मरूपां महागुर्वीं स्वदेवताम्॥ ५२-१५॥

मन्त्रार्थं चेति तज्ज्ञानं तज्ज्ञानान्मोक्षमाप्नुयात्।

मन्त्रार्थज्ञानमात्रेण सिद्धिर्निर्वाणमाप्नुयात्॥ ५२-१६॥

न स्थूलं नातिसूक्ष्मं गुणमयवपुषं विश्वनाथं स्वशक्तिं।

स्वानन्दानन्दचित्तं कलिफलमचलं चञ्चलं शुक्लरक्तम्।

पीनापीनादिरूपं त्रिगुणगगमनं मूलपद्मादिवक्रे।

विश्वात्मानं कुलाख्यं मनुगुणजडितं भावयेत्सिद्धलोकः॥ ५२-१७॥

चतुः षष्टिक्षेत्रे त्रिगुणजननीं ध्याननिपुणां।

(महा)मन्त्राकारां भुवनकरुणां बोधविषये।

महाविद्यामाद्यां मनुमयरसाच्छन्नतनुता--

मवाप्यामन्दाब्धौ कुलपथि भजन्तीह रसिकाः॥ ५२-१८॥

समस्तं शून्यार्थं रजतघटनारायणमयं।

विसर्गं बिन्दुस्थं रविशशिकला वह्निकिरणम्।

जगद् व्यापाराङ्गं भवविरहितं भावजडितं

विकाराधाराहं दशदलबिले स्थापयति धीः॥ ५२-१९॥

सुरासुरभयप्रदं तरुणरूपशोभाकरं।

मनोहरकलेवरं सकलदेहसंज्ञापनम्।

भजन्ति मुनयो नृपा यतय इन्द्रदेवादयो।

दशाच्छदनिकेतने प्रकृतिदेहमध्यस्थितम्॥ ५२-२०॥

प्रचण्डवचनाश्रयं ध्वनिकलापसम्मर्दनं।

महोत्कटतपःप्रियं भजति चाशुतोषं शिवम्।

निधाय हृदि पङ्कजे किमपि नाभिमूलेऽपि वा।

विभावगुणभावनं परिकरोति योगी महान्॥ ५२-२१॥

स्वकीयगुणसत्त्वके कठिनचित्तसंज्ञार्पणं।

चतुर्भुजकलेवरे दशकलाधरेन्दीवरे।

मनोहरहरं परमसारमाद्याक्षरं।

प्रकृत्य परमेश्वरे प्रणवरूपमारोपये॥ ५२-२२॥

विविक्तमतिनिर्मलं कमलहासमाल्याश्रयं।

शिवं शतकभास्करं सकलदेहमध्येऽपि वा।

भुजायुतधरं धराधरधरं हि मुद्राधरं।

भजन्ति कुलकामिनीपतय ईशवेश्मास्पदा॥ ५२-२३॥

सदा चरणपङ्कजे विवहानिमुद्राप्तये।

कृपामयसलक्षणं गतिगसत्वसम्भावनम्।

सदैकगुणभावनं परमदेवदेवस्य या।

त्रिलोकजननीपते रमणमेव कुर्याद्वशी॥ ५२-२४॥

एवं कृत्वा निरालम्बविश्वासध्यानवान्नरः।

अकस्मान्मन्त्रचैतन्यं प्राप्नोत्यर्थविनिर्णयम्॥ ५२-२५॥

इति श्रीरुद्रयामले उत्तरतन्त्रे मन्त्रार्थ चैतन्यविन्यासो नाम। द्विपञ्चाशत्तमः पटलः॥ ५२॥

## अथ त्रिपञ्चाशत्तमः पटलः

श्रीनन्दभैरवी उवाच

आनन्दसागराम्भोजमध्यस्थ परमप्रिय।

इदानीं कालजालादिवारणं शृणु भैरव॥ ५३-१॥

सम्पूर्य सञ्चयाच्छन्नं वायुं स्वाभाविकीगतिम्।

कुम्भयित्वा स्वभावेन चिरकालं सुखी भवेत्॥ ५३-२॥

शनैः शनैः रेचयित्वा सर्वदा तद्गतो भवेत्।

कालजालवशो याति तत्क्षणान्नात्र संशयः॥ ५३-३॥

विना वाय्वाकुञ्चनेन न सिध्यति च को जनः।

वायुचालनमात्रेण सूक्ष्ममार्गोद्गमेन च॥ ५३-४॥

सिध्यत्येव महायोगी कालजालवशोऽपि च।

कालवशं न करोति मोहादतिसुखायते॥ ५३-५॥

कालभक्षो भवेत् सोऽपि मिरयते नात्र संशयः।

मणिपुरे मनो दत्त्वा साधयेद् देवताः सदा॥ ५३-६॥

स्तोत्रं ध्यानं नाम गुणं पठित्वा च पुनः पुनः।

मनोयोगञ्च सर्वत्र वायुना कारयेद् बुधः॥ ५३-७॥

कुम्भयित्वा धारयित्वा रेचयित्वा पुनः पुनः।

सर्वकालवशं नीत्वा जितात्मा चामरो भवेत्॥ ५३-८॥

लोभमोहौ वर्जयित्वा कामक्रोधादिपातकम्।

सर्वदा वायुपानञ्च कृत्वा रहसि संवशी॥ ५३-९॥

नित्यं वायुसाधनानि षड्चक्रभेदनाय च।

शनैः शनैर्धारयेद्वै चिरजीवित्वसाधनात्॥ ५३-१०॥

यदि न चिरजीवी स्यात् कालात्मा वायुसेवकः।

षड्चक्रभावसिद्ध्यन्ते ज्ञानी मृत्युवशो भवेत्॥ ५३-११॥

अतः कुर्याच्छिवज्ञानं वायुसंसिद्धकारणम्।

तत्क्रियासाधनार्थाय आदौ पञ्चामराविधिम्॥ ५३-१२॥

कुर्यात् साधकमुख्यश्च निजकायप्रसाधनात्।

नेतीयोगं तदा कुर्याद् यथा भवति संवशी॥ ५३-१३॥

धौतीयोगं तदा कुर्याद् यथा भवति संवशी।

नेलीयोगमाकुर्याद् यत्र लोको न विद्यते॥ ५३-१४॥

दन्तीयोगं तदा कुर्याद् यदा मुख्यक्रियावतः।

तदा क्षणेन यः कुर्याद् यदा तृष्णाविवजीतः॥ ५३-१५॥

तृष्णानाशो भवेन्मोक्ष इति मे योगनिर्णयः।

विशेषेण प्रवक्ष्येऽहं शृणु कैलासपावन॥ ५३-१६॥

एतत्कार्यं पुरा कृत्वा दिवि देवा मुनीश्वराः।

कायसिद्धिं मुदा कृत्वा छायामायाविवर्जिताः॥ ५३-१७॥

सर्वत्र गामिनः सर्वे धर्मशास्त्रार्थपण्डिताः।

चिरजीविन एवापि सकलश्रीसमन्विताः॥ ५३-१८॥

तत्तद्भेदान् प्रवक्ष्यामि साधनं कायरक्षणम्।

यः करोति महादेव कायसाधनमुत्तमम्॥ ५३-१९॥

स आयाति ममानन्दसदने नात्र संशयः।

प्रभाते च समुत्थाय ब्राह्मे कालफलोदये॥ ५३-२०॥

सहस्त्रारे गुरोः पादपङ्कजध्यानमाचरेत्।

विचिन्तयेत्ततः श्रीमान् गुरुरूपां सरस्वतीम्॥ ५३-२१॥

स्वदेवतां परानन्दरसिको योगबुद्धिमान्।

प्रणम्य शिरसा नित्यं शौचकार्यं समाचरेत्॥ ५३-२२॥

शौचक्रियाक्रमेणैव सिद्धः शुचिगुणान्वितः।

प्रगच्छेच्छौचकार्यार्थं घटमानं तु यत्नतः॥ ५३-२३॥

मृत्तिकाप्रस्थमानञ्च नीत्वा शौचं समाचरेत्।

कुल्कुलं सप्तदशकं वर्चत्यागं पुनः पुनः॥ ५३-२४॥

ततस्तर्जन्या चालोड्य वामहस्तस्य शङ्कर।

गुदरन्ध्रे समायोज्य क्षालनं हि पुनः पुनः॥ ५३-२५॥

यावच्च विससंत्यागं निःशेषेण मलक्षयम्।

तावन्मृत्पयसा क्षाल्य शोधयेदुदरं सुधीः॥ ५३-२६॥

यावन्न जायते सौख्यं तावत्कालं समाचरेत्।

तत उत्थाय विधिना मृत्तिकाशौचमाचरेत्॥ ५३-२७॥

येन क्रमेण विष्ठाया गन्धनाशोऽपि जायते।

पादद्वयं समाक्षाल्य चान्तःशौचं समाश्रयेत्॥ ५३-२८॥

तत्क्रियासफलं वक्ष्ये शृणु योगेश्वर प्रभो।

सूक्ष्मवस्त्रसमुद्भूतं डोरकं सूक्ष्मरन्ध्रके॥ ५३-२९॥

नासिकाया दृढतरं कोमलं चातिनिर्मलम्।

शनैः शनैर्नीयोज्याथ जिह्वामूले निवेशयेत्॥ ५३-३०॥

जिह्वामूलात् सदादाय वारं द्वादशकं सुधीः।

मन्दमन्दाघर्षणं तु कृत्वा भेदं समानयेत्॥ ५३-३१॥

मायात्रयेण बीजेन देवीबीजत्रयेण च।

रमाबीजत्रयेणापि योगिन्यै नम इत्यपि॥ ५३-३२॥

एतन्मन्त्रेण योगीन्द्रो नेतीयोगं समाचरेत्।

शिरःस्थाङ्गं समाकृत्य कण्ठशोधनमाचरेत्॥ ५३-३३॥

ततो वक्षःशोधनं तु ततो नाभेश्च शोधनम्।

क्रमेण कुर्यात् कायार्थे तत्प्रकारं शृणु प्रभो॥ ५३-३४॥

धौतीक्रियां समाकुर्यात् तप्तोदकनिसेवनम्।

शुक्लवस्त्रं सूक्ष्मसूत्रं चाष्टाङ्गुलप्रमाणकम्॥ ५३-३५॥

द्वात्रिंशद्धस्तमानं तु पूर्णसंख्या उदीरिता।

मन्त्री प्रथमतः कुर्यात् चतुरङ्गुलवस्त्रकम्॥ ५३-३६॥

दीर्घे पञ्चहस्तमानं तप्तोदकसमन्वितम्।

भक्षयेत् शेषजिह्वाग्रे संस्थाप्य वसनं सुखम्॥ ५३-३७॥

तर्जनीमध्यमाङ्गुष्ठमुद्राभिर्भक्षयेत् सुधीः।

क्रमेण वर्धयेन्नित्यं दीर्घे च प्रसवे तथा॥ ५३-३८॥

एतन्मन्त्रेण देवेश पूर्वोक्तमनुना तथा।

सर्वत्र पूर्वबीजेन संशोध्य बीजमुच्चरेत्॥ ५३-३९॥

शक्तिबीजत्रयं पश्चात् कामबीजत्रयं तथा।

लक्ष्मीबीजत्रयं पश्चान्महाधौतनिवासिनी॥ ५३-४०॥

मेवाडीमलमन्त्रे तु क्षालयद्वयमेव च।

भार्या वहेत्ततः पश्चादुदरे सन्निवेशयेत्॥ ५३-४१॥

शनैर्नीवेशमाकृत्य यावत् सर्वः प्रजायते।

एतद्योगप्रसादेन वायवी सुकृपा भवेत्॥ ५३-४२॥

ततः कुर्यात् साधकेन्द्रो विग्रहक्षेमकारणात्।

नेलीपरमं योगं गात्रदृढनिबन्धनम्॥ ५३-४३॥

घूर्णायमानमाकुर्यादुदरं परमेश्वर।

सर्वदा चालनं कुर्यात् प्राणवायुप्रधारणम्॥ ५३-४४॥

वामे घूर्णीतमाकृत्य दक्षिणे घूर्णीतं चरेत्।

एवं क्रमेण देवेश पुटपाकं समाचरेत्॥ ५३-४५॥

एतन्मन्त्रेण देवेश शुभासने हठो भवेत्।

ब्रह्मबीजत्रयं पश्चात् कालीबीजत्रयं ततः॥ ५३-४६॥

देवीप्रणवयुग्मं तु गात्रस्थायै नमो द्विठः।

तदन्ते नाडिकादीनां क्षालनं परमाद्भुतम्॥ ५३-४७॥

वक्षःस्थानं महादेव दन्तीयोगेन कारयेत्।

गजमानं दन्तकाष्ठं निर्मलं सुन्दरं मतम्॥ ५३-४८॥

दन्तकाष्ठं क्षालयेद्वै मनुना साधकाग्रणीः।

मायाबीजत्रयं पश्चाद् भैरवीबीजकत्रयम्॥ ५३-४९॥

मदीनीबीजयुगलं दन्तकाष्ठनिवासिनी।

मे हृद्ग्रन्थिं छेदय इति युगलं वह्निसुन्दरी॥ ५३-५०॥

क्रमेण विधिनानेन गलरन्ध्रे निवेशयेत्।

यावन्नाभेरधो याति यावत् सुखमयानि च॥ ५३-५१॥

तावद्दन्तीयोगकार्यं प्रभाते सर्वकार्यकम्।

एतदन्ते ततः कुर्यान्नाडीक्षालनमेव च॥ ५३-५२॥

तन्मन्त्रं शृणु वीरेन्द्र चामरत्वप्रदायकम्।

आदौ प्रणवमुद्धृत्य दीर्घप्रणवयुग्मकम्॥ ५३-५३॥

भुवनेशीबीजयुग्मं चन्द्रबीजत्रयं ततः।

कृष्णबीजत्रयं पश्चादर्कबीजत्रयं ततः॥ ५३-५४॥

वाग्भवत्रयमुद्धृत्य वह्निबीजत्रयं ततः।

श्रीबीजं मन्मथं लक्ष्मीं शीतले तदनन्तरम्॥ ५३-५५॥

स्वोदरं नाडिकामूलं मलक्षालययुग्मकम्।

स्वाहान्तमनुना नित्यं क्षालयेन्नाडिकाधमाः॥ ५३-५६॥

यावत्तृष्णानाशकः स्यात्तावत्कालं समाचरेत्।

यावदुद्गमशक्तित्वं त्रिदण्डावधि धारणा॥ ५३-५७॥

तावन्न जायते नाथ क्षालनं सुखसाधनम्।

यदि भाग्यवशादेव त्रिदण्डवायुकुम्भकम्॥ ५३-५८॥

स्वयमेव समायाति नाडिकाक्षालनं शुभम्।

यावत्सूक्ष्मानिलालापं मधुपानं निरन्तरम्॥ ५३-५९॥

पादाम्भोजनिःसृतं तु परमानन्दवर्धनम्।

तत्सुखेनापरिच्छिन्नं संज्ञाननिर्मलेन च॥ ५३-६०॥

चिदानन्दस्वरूपेण आनन्दाश्रुविमोचनम्।

तदा हि हृदयग्रन्थिभेदनं देहवर्धनम्॥ ५३-६१॥

तदा हि पुलकं स्थैर्यं देहावेशस्थिरं तथा।

तदा षट्कञ्ज सिद्धान्तज्ञानं चैतन्यनिर्मलम्॥ ५३-६२॥

चिदानन्दमयो भूत्वा तृष्णाज्ञानविवजीतः।

जीवन्मुक्तः परानन्दरसिकः प्रणयप्रियः॥ ५३-६३॥

स्थिरचेता महायोगी भवत्येव न संशयः।

आस्तिको देवभक्तश्च निन्दावादविवजीतः॥ ५३-६४॥

स एवात्मा महाज्ञानी भवत्येव न संशयः।

पञ्चयोगं समाकृत्य नित्यादिकमनुत्तमम्॥ ५३-६५॥

स्नानं कुर्याद्विधानेन तीर्थराजनिकेतने।

इडा गङ्गाजले वापि पिङ्गला यमुनाजले॥ ५३-६६॥

सुषुम्नायां सरस्वत्यां वसुपुष्करकोटिषु।

तथापि बाह्यस्नाने तु सर्वाङ्गमस्तकं विना॥ ५३-६७॥

सप्तवारं समासिञ्चेत् मस्तकं बाह्यवारिणा।

मार्जनेनापि मनुना मूलमन्त्रेण वा पुनः॥ ५३-६८॥

ततोऽङ्गं मार्जयित्वा च सन्ध्यावन्दनमाचरेत्।

बाह्यसन्ध्यां तु मन्त्रेणैवान्तरे प्रकृतीश्वरम्॥ ५३-६९॥

ऊर्ध्वाधस्तैजसं बिन्दुं नादमण्डलसम्पुटम्।

सन्ध्यावन्दनमाकृत्य महौषधिं प्रभक्षयेत्॥ ५३-७०॥

मूलमन्त्रेणाभिमन्त्र्य पञ्चगव्यं कुलेश्वर।

ततः कुर्यान्महापूजां स्वस्वमन्त्रोक्तसाधिताम्॥ ५३-७१॥

षट्चक्रार्थं ततो ध्यायेद् यदुक्तं विधिना प्रभो।

कुण्डलिन्या महापूजा सहस्रनाममङ्गलम्॥ ५३-७२॥

देवतानां पठेद्धीमान् सर्वकाले सुसिद्धये।

मूलाधारं मुदा भित्वा सूक्ष्मवायुद्वयेन च॥ ५३-७३॥

ततो भेदं स्वाधिष्ठानं राकिणीविष्णुसङ्गमम्।

तयोरनुक्रमं नाथ सहस्रनाममङ्गलम्॥ ५३-७४॥

अन्यन्तगुह्यकथनं सत्त्वभक्तिप्रकारकम्।

भित्वा भेदं मुदा कुर्यान्मणिपीठस्थदेवयोः॥ ५३-७५॥

ध्यानं ज्ञानं स्तवं नित्यं यजनं नामकीर्तनम्।

चैतन्यं रुद्रलाकिन्यास्तथा मृत्युञ्जयस्य च॥ ५३-७६ ॥

नित्यं गुरुमयं ध्यात्वा सर्वगामिनमीश्वरम्।

चिरजीवी महायोगी भवत्येव न संशयः॥ ५३-७७॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे

भैरवभैरवीसंवादे मणिपूरभेदो नाम त्रिपञ्चाशत्तमः पटलः॥ ५३॥

## अथ चतुःपञ्चाशत्तमः पटलः

आनन्दभैरवी उवाच

परापराविभेदज्ञ निगूढज्ञानसाधनम्।

इदानीं शृणु सर्वज्ञ पञ्चद्रव्यादिसाधनम्॥ ५४-१ ॥

षड्चक्रपद्मभेदार्थं यत्क्रमाज्जायते क्षणात्।

अमरश्चामरा चैव सर्वसिद्धिप्रदायिका॥ ५४-२॥

ब्रह्मज्ञानसाधनी च ब्रह्मानन्दस्वरूपिणी।

अमरलता तथा ध्येया दूर्वासंज्ञा प्रतिष्ठिता॥ ५४-३॥

सिद्धामरा च निर्गुण्डी सर्वसिद्धिप्रदायिका।

नीलामरा ततो ग्राह्या नीलतुलसीसङ्गिता॥ ५४-४॥

अमरुः समयापत्रं चामरा विल्वपत्रिका।

शिवप्रिया सदा पूज्या पूर्वोक्तावासमाश्रयेत्॥ ५४-५॥

एतद्भक्षणमन्त्राणि श्रृणु कैलासभूपते।

ब्राह्मणी क्षत्रिया वैश्या शूद्रा चक्रमतो जया॥ ५४-६॥

तत्तन्मन्त्रेण संशोध्य भक्षयेन्मनुनामुना।

सर्वासाम मरादीनां भक्षणे समुदीरिता॥ ५४-७॥

प्रणवं दीर्घप्रणवं कपिले ज्ञानसाधनि।

मम योगं साधयेति युगं स्वरेण सम्पुटम्॥ ५४-८॥

शाखासमूहसम्पूर्णे महौषधिनिवासिनि।

मामेकममरं देहि कुरु युग्मं ततो द्विठः॥ ५४-९॥

अमराशनमन्त्राणि श्रृणुष्व पार्वतीश्वर।

यस्य स्मरणमात्रेण नरो नारायणो भवेत्॥ ५४-१०॥

शिववद् विहरेल्लोके बिल्वपत्रस्य भक्षणात्।

श्रीबीजत्रयमुद्धृत्य वाग्देवीत्रितयं ततः॥ ५४-११॥

लक्ष्मीकामेश्वरीबीजं रमाकामत्रयं त्रयम्।

सिद्धविश्वेशि परमे निगूढतरुवासिनि॥ ५४-१२॥

मामेकं ज्ञानतत्त्वेऽन्ते नियोजय युगं द्विठः।

एतन्मन्त्रेण वीरेन्द्रो विधितत्त्वाख्यमुद्रया॥ ५४-१३॥

शोधयित्वा पुनर्नाथ चामरां शोधयेत्ततः।

दूर्वा देवी त्रिभुवने अमृतत्त्वप्रदायिनि॥ ५४-१४॥

ग्रन्थिच्छेदभेदवारी प्रणवाद्ये परे रमा।

ततो हि विष्णुबीजञ्च किङ्कणी बीजमुद्धरेत्॥ ५४-१५॥

राजराजेश्वरीबीजं श्रीबीजं त्रीणि तत्परम्।

सुधाखण्डे मामिहान्ते सिद्धामरपदं लिखेत्॥ ५४-१६॥

देहि देहि नमः स्वाहाशब्दमुच्चार्य शोधयेत्।

एतद्भक्षणमात्रेण चिरकालं सुखी भवेत्॥ ५४-१७॥

सर्वसंयोगमात्रेण सिद्धो भवति साधकः।

सिद्धामराशोधनं तु शृणु श्रीचन्द्रशेखर॥ ५४-१८॥

सिद्धामरा च निर्गुण्डी त्रिषु लोकेषु गोपिता।

एतत्प्रधानं मूलञ्च पत्रं वा चालयेत् सुधीः॥ ५४-१९॥

मूलाभावे दलं ग्राह्यं दलाभावे न मूलकम्।

आनयेत् साधकश्रेष्ठः शोभनेन दिनेन तु॥ ५४-२०॥

तदा भवति सिद्धिश्च कौलानां नियमो नहि।

कौलिके सर्वसिद्धिश्च कौलिके योगसाधनम्॥ ५४-२१॥

कुलाचारविहीनानां योगभोगादिकं कथम्।

विना योगेन भोगादिसञ्चयो जायते कथम्॥ ५४-२२॥

योगसाधनमात्रेण भोगसाधनमालभेत्।

तद्भोगं परमं ज्ञानं कालामृतनिसेवनम्॥ ५४-२३॥

विषयाह्लादभोगादिरनायासेन वर्धते।

शरीरिणामादिकार्यं शरीरस्य प्रभो प्रियम्॥ ५४-२४॥

शीतलामृतरूपाढ्यं व्यक्ताव्यक्तप्रकारकम्।

आदिसाधनमेवं हि कथितं स्नेहहेतुना॥ ५४-२५॥

वल्लभ प्राणरक्षार्थे शोकातीवारणाय च।

पुनस्तु कथये तुभ्यं निर्गुण्डीशोधनं मनुम्॥ ५४-२६॥

ओं निर्गुण्डि महामाये महायवनिवासिनि।

आयुरारोग्यजननि ब्रह्मशब्दनिवासिनि॥ ५४-२७॥

मदीयं सकलं कायं शुद्धं कुरु युगं ततः।

नान्तयुग्मं बिन्दुनादभूषितं चारुतेजसम्॥ ५४-२८॥

चतुर्दशस्वरव्याप्तं (ठयुगं) बिन्दुभूषितम्।

लक्ष्मीबीजत्रयं पश्चाद् रमाबीजमयं लिखेत्॥ ५४-२९॥

वज्रकायं देहि देहि शब्दान्ते वह्निसुन्दरी।

एतन्मन्त्रेण संशोध्य भक्षयेत् साधकोत्तमः॥ ५४-३०॥

ततोऽमरो भवेत् क्षिप्रं नात्र कार्या विचारणा।

तुलसीशोधनं वक्ष्ये श्रृणुष्व परमेश्वर॥ ५४-३१॥

यत्कृत्वा च निरोगी स्याद् बलवान् विजितेन्द्रियः।

प्रणवं वैष्णवी देवी सत्त्वज्ञाननिवासिनि॥ ५४-३२॥

कामबीजत्रयान्ते तु मां रक्ष युगलं द्विठः।

एतच्छोधनमाकृत्य भक्षणं यः करोति च॥ ५४-३३॥

कायसिद्धिर्भवेत्तस्य ध्यानधारणयोगिनः॥ ५४-३४॥

इति श्रीरुद्रयामले उत्तरतन्त्रे सिद्धमन्त्रप्रकरणे षट्चक्रप्रकाशे भैरवीभैरवसंवादे पञ्चसिद्धद्रव्यशोधनं नाम चतुःपञ्चाशत्तमः पटलः॥ ५४॥

## अथ पञ्चपञ्चाशत्तमः पटलः

श्रीनन्दभैरवी उवाच

कथयामि तव स्नेहात् कायवश्यविशेषणात्।

हठयोगं प्रकथितमिदानीं शृणुत क्रमम्॥ ५५-१॥

मणिपूरस्थितं रुद्रं त्रैलोक्ये पवनाक्षयम्।

कथयामि शिवानन्द शिवशङ्कर मङ्गल॥ ५५-२॥

स्वाधिष्ठानोर्ध्वदेशे च परमानन्दसागरम्।

नाभिमूलं मेघजालमध्य विद्युच्छताकुलम्॥ ५५-३॥

रहस्यातिरहस्यं च योगिनामतिसारगम्।

तन्नाभिमूलदेशे च नीलपद्मं महाप्रभम्॥ ५५-४॥

तद्दलाग्रे सदा भान्ति डादिफान्ताक्षराणि च।

तद् बाह्ये शोभितं रूपं त्रिकोणमनलस्य च॥ ५५-५॥

प्रभातसूर्यसङ्काशं शिखाकारं निरञ्जनम्।

तत्राग्निबीजरूपं च रूपातीतं गुणान्तरम्॥ ५५-६॥

विचिन्तयेन्मेषपृष्ठवाहनं चारुणाकृतिम्।

चतुर्बाहुं त्रिनयनं चारुदेहधरं परम्॥ ५५-७॥

तत्क्रोडे भाति रुद्रेशः सिन्दूरारुणविग्रहः।

ब्रह्मरूपी त्रिनयनः सृष्टिसंहारकारकः॥ ५५-८॥

विभूतिभूषिताङ्गस्तु लोकानामिष्टदो विभुः।

तस्य वामे सदा भाति लाकिनी परदेवता॥ ५५-९॥

चतुर्भुजा महादेवी त्रिनेत्रा सौख्यदायिनी।

श्यामाङ्गी पीतवसना विचित्रालङ्कृतामरा॥ ५५-१०॥

सर्वसिद्धिप्रदा माता सर्वत्र सर्वपालिका।

सदा रक्षतु मां देवी विद्याभिः कुलपालिका॥ ५५-११॥

एवं ध्यात्वा पूजयित्वा जपयागस्तवादिभिः।

ततः सिद्धो भवेन्मन्त्री मणिपूरप्रसादतः॥ ५५-१२॥

मणिपूरफलं वक्ष्ये समासेन श्रृणुष्व तत्।

कोटिवर्षशतेनापि फलं वक्तुं न शक्यते॥ ५५-१३॥

मणिपूरानन्तरं हि प्रवक्तव्यमनाहतम्।

स्तोत्रं ध्यानं नामधेयं सहस्रगुणशङ्करम्॥ ५५-१४॥

फलमत्यन्तगुह्यं च सुहृत्पद्मोपसिद्धिदम्।

आत्मज्ञानं मोक्षसिद्धिं प्रेमभक्त्यादिलाभकम्॥ ५५-१५॥

संहर्ता जनसङ्घानां पालकः कमलाकरः।

अकस्माज्ज्ञानसन्दोहलक्ष्मीं प्राप्नोति योगिराट्॥ ५५-१६॥

इति श्रीरुद्रयामले उत्तरतन्त्रे सिद्धमन्त्रप्रकरणे षट्चक्रप्रकाशे भैरवीभैरवसंवादे मणिपूरभेदो नाम पञ्चपञ्चाशत्तमः पटलः॥ ५५॥

## अथ षट्पञ्चाशत्तमः पटलः

श्रीनन्दभैरव उवाच

वद कामिनि कौमारि सुरानन्दे कुलेश्वरि।

हृदयाम्भोजविन्यासमधुना वक्तुमर्हसि॥ ५६-१॥

यस्य विज्ञानमात्रेण नरो योगेश्वरो भवेत्।

सर्वसिद्धिक्रियास्थानं योगिनामतिदुर्लभम्॥ ५६-२॥

सर्वतत्त्वस्वरूपं च सिद्धिमार्गप्रकाशकम्।

हृदयाम्भोज विज्ञानान्मार्तण्डभैरवो भवेत्॥ ५६-३॥

श्रोतुमिच्छामि तत्सर्वं षट्चक्रसारमङ्गलम्।

स्नेहाद् दृष्टिक्रमेणैव भक्तियोगोद्भवेन च॥ ५६-४॥

भेदनं भावनं ज्ञानं चित्तदर्शनमेव च।

मन्त्रोद्धारञ्च सङ्केतं सर्वज्ञादिगुणोदयम्॥ ५६-५॥

यजनं काकिनीदेव्या ईश्वरस्य गुणात्मनः।

स्तवनं कवचं सर्वं सहस्रनाममङ्गलम्॥ ५६-६॥

वायूनां मण्डलज्ज्ञानं समासेन वदस्व मे।

त्वमेव शरणं देवि त्राहि मां दुःखसङ्कटात्॥ ५६-७॥

महाकाल भयाभाव भक्तिभावपरायण।

ममानन्दभैरवेश शृणु वक्ष्यामि तत्त्वतः॥ ५६-८॥

यदुक्तं भवता चात्र चाश्रुतं चाद्भुतं मतम्।

नोक्तं कुत्रापि सर्वेश तव स्नेहात् प्रकाशितम्॥ ५६-९॥

अप्रकाश्यमिदं रत्नं दुःखजालनिवारणम्।

सावधानेन सर्वेश कुरु त्वं योगसाधनम्॥ ५६-१०॥

मयि योगं महादेव कृत्वा कालवशं नय।

मयि योगं न करोति सिद्धिभक्तिक्रियादिकम्॥ ५६-११॥

अकस्मान्मरणं तस्य कालभक्षो न संशयः।

केवलं मां हृदम्भोजे परिपूर्णफलोदये॥ ५६-१२॥

सर्वाकारे मनोराज्ये नानाकौतुकसङ्कुले।

पूजयित्वा सदा ध्यायेत् काकिनीं मां न संशयः॥ ५६-१३॥

स योगी जायते नाथ हृदम्बुजप्रसादतः।

हृत्पङ्केरुहमध्यस्थाः सर्वे देवाः सवासवाः॥ ५६-१४॥

मामर्चयन्ति ते नित्यं भक्तिभावपरायणाः।

ये ध्यायन्ति महावीर ते पश्यन्ति सवासवान्॥ ५६-१५॥

क्रमेण प्राणसंयोगान् मां पश्यन्ति न संशयः।

मामेकं काकिनीध्यानं स्थिरवायुं प्रचण्डकम्॥ ५६-१६॥

पश्यन्ति योगिनः काये अष्टैश्वर्यं महाप्रभम्।

केवलं भक्तियोगेन नित्ययोगे स्युरुत्तमाः॥ ५६-१७॥

पद्मध्यानं प्रथमतः कृत्वा सिद्धो भवेन्नरः।

तद्धयानं श्रृणु वीरेश योगिनामिह दुर्लभम्॥ ५६-१८॥

हृत्पद्मं कुलपालितं सुललितं हंसेन संशोधितं।

बन्धूकामलदीप्तिकोटिजडितं सम्भावितं साधकैः।

अत्युत्कृष्टमयूखपुञ्जमिलितं सिन्दूरपूरारुणं।

ध्यात्वा पश्यति यो नरः प्रतिदिनं काद्यारुणैरावृतम्॥ ५६-१९॥

स स्यात्कोटिधनेश्वरो नरवरो भूयात्त्वभावार्णवे।

यो नित्यं लिपिभावनं प्रकुरुते नित्येश्वरालोकनात्।

तद्धयानं क्रमतो वदामि सकलं येन प्रसिद्धो भवे--।

दानन्दार्णवमध्यपद्मकलितं काद्यर्कवर्णोज्ज्वलम्॥ ५६-२०॥

दले पूर्वे ध्यायेदतिविमलवर्णं कमिति वा

प्रभातार्कच्छायारुणकिरणयोगं युगमयम्।

चतुर्बाहुं नित्यं त्रिनयनमनन्तं रविगतं।

भवाद्याशक्तिस्थं स्वभवनघटाशोभिततनुम्॥ ५६-२१॥

द्वितीये पत्रेऽस्मिन् खमरुणसमूहाश्रयपदं।

पदं श्रीतारिण्या अनिलगगनयोः प्रियकरम्।

मुदा ध्यायेदेवं परममनिलं देवभुजगं।

सुवर्णालङ्कारं त्रिनयनममौल्यं सुखमयम्॥ ५६-२२॥

तृतीये पत्रेऽस्मिन् विधुयुतकपालं त्रिनयनं।

स्वसिन्दूराकारं द्वियुगभुजशोभाभवमहम्।

सदा ध्यायेदेवं परमपुरुषं श्रीगणपतिं।

स्फुरद्रक्ताकारं तरुणमणिमालं जितमदम्॥ ५६-२३॥

चतुः पत्रे ध्यायेद्यमरुणशतं घोरनिनदं।

क्रियादक्षं मूर्तीं त्रिनयनसरोजं युगभुजम्।

वराभीतिप्रोच्छत्स्फटिकजपमालादिसहितं।

फणालङ्काराङ्गं शिव शिव मुखेशोत्तममहम्॥ ५६-२४॥

ङंबीजं सिन्दूरारुणममखिलनाथं त्रिनयनं।

महामोक्षस्थानं मणिकनकरत्नाद्यभरणम्।

चतुर्बाहुं रुद्रं जगति भवमेकं गुणविभुं।

कपालं श्रीमालं वरमभयकं बिभ्रतमहम्॥ ५६-२५॥

चतुर्बाह्लल्लासं कमलवरमालासिसहितं।

विभुं तं ध्यायेऽहं विधुशतमुखं तं त्रिनयनम्।

प्रभातार्कप्रायं सकलमणिरत्नाभरणकं।

महाज्योत्स्नाजालं परमरसबिन्दूद्भवतनुम्॥ ५६-२६॥

तमेकं नेत्रस्थं छममलकरं नूतनरविं।

चतुर्बाहुं ध्याये वरतनुकपालेषु सहितम्।

सुधाधारापानं कनकजपमालाऽवृततनुं।

त्रिनेत्रं योगेन्द्रं वसुदलगतं चारुवदनम्॥ ५६-२७॥

चतुर्वक्त्रं ध्याये जमजममरं सारुणतनुं।

विशालाक्षं सूक्ष्मं समरसमयं ब्रह्मवपुषम्।

चतुर्बाहुं देवं त्रिभुवनपदं सारघटितं।

महाशङ्खं रुद्रं वरमभयकं विभ्रतबलम्॥ ५६-२८॥

महाकायं तेजोमयमपि चरुं बीजमखिलं।

मुदा ध्याये कामापहमतिमुखं चाष्टमदले।

महासिन्दूराद्रिं दिनकरकलाकोटिविमलं।

त्रिनेत्रं पञ्चास्यं दशभुजयुतं सर्ववपुषम्॥ ५६-२९॥

ञबीजं सार्धेन्दूद्भव शिखमखेशं त्रिनयनं।

चतुर्बाहुं ध्याये सुकमलगदाचक्रनियुतम्।

महामालाव्याप्तं सुकनकशुभाऽलङ्कृतगुरुं।

प्रभातार्कं विश्वाचीतजडिलरूपं रविदले॥ ५६-३०॥

मनोरूपाच्छन्नं त्रिनयनमधीशारुणदले।

टबीजं बिन्द्विन्द्वं जपवटिवराभीत्यसिधरम्।

तमेकं सोमेशं मणिमयचलत्कुण्डलधरं।

मुदा ध्याये शम्भुं हृदि शिवदले सिद्धकमले॥ ५६-३१॥

त्रिनेत्रं कामाख्यं शिशुकरुणया सिद्धिफलदं।

सुरत्नाऽलङ्कारच्छविरुचितनूनां समनघम्।

ठकारं बिन्द्विन्द्वं नवरविघटाकोटिकिरणं।

दले चार्के ध्याये कमलवरमालाशिशुधरम्॥ ५६-३२॥

एतच्छुद्धमनोलयस्य भवनं चैतन्यसंसिद्धये।

वर्णानां जपभावनं यदि सदा चिन्तामणेर्मण्डलम्।

योगीन्द्रः कुरुते वशिष्ठसदृशो वाचां पतिर्भूतले।

वाक्सिद्धिं चिरकालवासमखिले देवो हि नो मानुषः॥ ५६-३३॥

वाञ्छाचिन्तामणिगृहं हृदयाम्भोजमण्डलम्।

तन्मध्ये पवनस्थानं मण्डलाकारमुल्बणम्॥ ५६-३४॥

बुद्धिप्रतिभया व्याप्तं तन्मध्ये पवनाक्षरम्।

आच्छन्नधूमसङ्काशं प्रसिद्धस्थानमुत्तमम्॥ ५६-३५॥

तन्मध्ये देवतापीठं षट्कोणं मण्डलं परम्।

तन्मध्ये भावयेदिष्टं स्वस्वकल्पोक्तसाधितम्॥ ५६-३६॥

वायोर्ध्यानं तत्र कुर्यादत्यन्तसूक्ष्मरूपिणम्।

निराकारं परं ब्रह्म साकारं शब्दरूपिणम्॥ ५६-३७॥

निरक्षरं स्वाक्षराढ्यं महोग्रं स्थिररूपिणम्।

चतुर्बाहुं जगद्व्याप्तं कृष्णसारासनं यवम्॥ ५६-३८॥

लोकत्रयाणां वरदं करुणासिन्धुरूपिणम्।

पञ्चभूतात्मकं रौद्रं प्राणसञ्ज्ञं किरीटिनम्॥ ५६-३९॥

संबिभ्रतं वराभीतिघण्टाडमरुसेवकान्।

ईशनाम्ना परिचितं परहंसं कुलेश्वरम्॥ ५६-४०॥

सर्वाऽलङ्कारशोभाङ्गं विवेकोदयकारणम्।

विचिन्तयेत् साधकेन्द्रः परिवारगणावृतम्॥ ५६-४१॥

तत्र पङ्केरुहे ध्यायेदीश्वरं वर्णरूपिणम्।

त्रैलोक्यमङ्गलं नाथं चतुर्बाहुं किरीटिनम्॥ ५६-४२॥

रत्नमालाशोभिताङ्गं शुक्लवर्णं महाप्रभम्।

ईश्वरं योगिनामीशं वरदं परमेश्वरम्॥ ५६-४३॥

वराभीतिशङ्खपद्मश्रिया जुष्टं पुरातनम्।

रत्नाभरणभूषाङ्गं हृदयाम्भोजवासिनम्॥ ५६-४४॥

वाञ्छातिरिक्तफलदं भावसिद्धिप्रकाशकम्।

परमहंसमीशानं ध्यायेद् हृत्पद्ममण्डले॥ ५६-४५॥

तत्पार्श्वे ध्यानमाकुर्यात् काकिनीं परमेश्वरीम्।

त्रैलोक्यपूजितां देवीं काकचञ्चुप्रकाशिनीम्॥ ५६-४६॥

चतुर्भुजां पीतवर्णां पीतवस्त्रोपशोभिताम्।

नवविद्युत्कोटिरूपां विलोलनेत्रपङ्कजाम्॥ ५६-४७॥

कपालशशिशूलास्त्रवरदानसमाकुलाम्।

विचित्ररत्ननिर्माणस्वर्णाऽलङ्कारभूषिताम्॥ ५६-४८॥

त्रैलोक्यललितां सूक्ष्मां वराभयकराम्बुजाम्।

सुधापानरतां मत्तां पूर्णरूपां कुलेश्वरीम्॥ ५६-४९॥

रत्नकङ्कणमालाढ्यां परमानन्दभैरवीम्।

हृदयाम्भोजमध्यस्थां ध्यायेऽहं हंसगामिनीम्॥ ५६-५०॥

तत्पीठमध्यनिकरे त्रिकोणं परिचिन्तयेत्।

पीठशक्तिं सुवर्णाढ्यां विद्युत्कोटिसमोदयाम्॥ ५६-५१॥

काकिनीसदृशीं मत्तां पूर्णान्तः करणोद्यताम्।

सर्वाऽलङ्कारभूषाढ्यां परिवारगणावृताम्॥ ५६-५२॥

तद्दक्षिणे पार्श्वभागे चिन्तयेत्त्वामलिङ्गकम्।

सुवर्णशुद्धसङ्काशं निर्मलं चारुतेजसम्॥ ५६-५३॥

महालक्ष्मीप्रियानन्दं सर्वाकारं निरञ्जनम्।

ज्ञानयोगोदयं ब्रह्मरूपिणं बहुरूपिणम्॥ ५६-५४॥

प्रदीपकलिकाकारं चिन्तयेदीश्वरं शिवम्।

एतेषां ज्ञानमाकृत्य वागीशो भवति क्षणात्॥ ५६-५५॥

वाक्यसिद्धिं तत्र नाथ चिन्तयेत् प्रसिद्धये।

तत्र भानोर्मण्डलञ्च चिन्तयेत् साधकाग्रणीः॥ ५६-५६॥

पद्मकिञ्जल्कमध्ये तु चिन्तयेदरुणायुतम्।

मासैकसाधनादेव योगी स्याच्छीतलाङ्गधृक्॥ ५६-५७॥

द्विमासे ग्रन्थिभेदः स्यादनन्तगुणवान् भवेत्।

त्रिमासे योगयोग्यः स्यात् सर्पादिविषनाशकृत्॥ ५६-५८॥

चतुर्मासे निर्मलात्मा भावकः स्थिरमानसः।

पञ्चमे मासि सम्प्राप्ते वायवी कृपयान्विता॥ ५६-५९॥

स्थिरवायुः स्थिरा दृष्टिरतीव सुखसम्पदः।

ततो दिने दिने वृद्धिर्वायूनामनुकम्पया॥ ५६-६०॥

षण्मासात् पापसंत्यक्तो मुक्तवद् भ्रमते चिरम्।

जले चाग्नौ च भूगर्ते कदाचिन्न मिरयेत हि॥ ५६-६१॥

ईश्वरात्मा महाज्ञानी निःशङ्को निरुपद्रवः।

महाविवेकसिद्धान्तज्ञानी भेदविवर्जितः॥ ५६-६२॥

स भूत्वा चिरजीवी च भुक्तिभागी दिने दिने।

सप्तमे कल्पसन्त्यक्तो मदनो दोषविग्रहः॥ ५६-६३॥

नित्यानन्दगुणप्राप्तिर्भूमित्यागो दिने दिने।

अष्टमे सर्वशत्रुघ्नो रामनामविवर्जितः॥ ५६-६४॥

अणिमादिदर्शनञ्च ब्रह्मगोविन्ददर्शनम्।

नवमे क्षालनासिद्धिर्भूमित्यागस्त्रिहस्तकः॥ ५६-६५॥

दशमे योगसिद्धिश्च षट्चक्रादिप्रदर्शनम्।

ब्रह्मरन्ध्रभेदनज्ञो महानन्दविग्रहः॥ ५६-६६॥

एकादशे सर्वसिद्धिः पञ्चभूतमयाङ्गधृक्।

सप्तस्वर्गालोकनञ्च षड्विप्रियदर्शनम्॥ ५६-६७॥

द्वादशे देवसन्मानं देवता--पाददर्शनम्।

अत्यन्तं सुखसन्तानं मायाजालनिवारणम्॥ ५६-६८॥

सर्वविद्यासर्वसिद्धिदीव्यभक्तिः शुभोदया।

ते वीरास्ते च योगीन्द्रास्ते दिव्यास्ते च भैरवाः॥ ५६-६९॥

ते सर्वे मृत्युजेतारस्ते भक्ता मुक्तिभागिनः।

ये तिष्ठन्ति महारण्ये निर्जने पर्वते चिरम्॥ ५६-७०॥

धारयन्ति साधयन्ति योगमेतत् कुलेश्वर।

योगे योगाद् भवेन्मोक्ष इति मे तत्त्वनिर्णयः॥ ५६-७१॥

संसारोत्तारणे मुक्तिर्योगशब्देन कथ्यते।

लोके हि दुर्लभं योगं योगात्परतरं नहि॥ ५६-७२॥

योगं पञ्चविधं प्रोक्तमेकं विषयसम्मतम्।

द्वितीयञ्च द्विभेदञ्च पूजायोगं तृतीयकम्॥ ५६-७३॥

भक्तियोगं परं ब्रह्मयोगसारं कुलेश्वर।

सर्वत्रापि मनोयोगाद् बद्धो मुक्तो भवेद् ध्रुवम्॥ ५६-७४॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षट्चक्रप्रकाशे भैरवभैरवीसंवादेऽनाहतपद्मविन्यासो नाम षट्पञ्चाशत्तमः पटलः॥ ५६॥

अथ सप्तपञ्चाशत्तमः पटलः

श्रीनन्दभैरवी उवाच

अथातः सम्प्रवक्ष्यामि विवेकगुणलक्षणम्।

वर्णध्यानानन्तरं हि पूजनं तन्महाफलम्॥ ५७-१॥

पूजया लभेत पूजां विवेकं भावसम्भवम्।

काकिनीश्वरसंयोगं भावं परमदुर्लभम्॥ ५७-२॥

यजनं काकिनीदेव्या ईश्वरस्यापि भावनम्।

पूजाभावे महासिद्धिर्जायते तत्क्षणाच्छिव॥ ५७-३॥

भावेन लभ्यते पूजा विवेकं पूजया लभेत्।

विवेकं ब्रह्मभावं तु प्राप्नोति कोटिजन्मनि॥ ५७-४॥

अथवा लभ्यते शीघ्रं तवापि मदनुग्रहैः।

तत्प्रकारं शृणु प्राणवल्लभ त्रिपुरेश्वर॥ ५७-५॥

यस्य विज्ञानमात्रेण भवेत् परमभावकः।

विचिन्तयेद्वर्णपार्श्वे चतुर्दीक्षु क्रमेण तु॥ ५७-६॥

सिद्धेश्वरान् योगयुक्तान् महापुरुषसंश्रितान्।

ब्रह्माणं परमं हंसं रुद्रं विश्वेश्वरं प्रभुम्॥ ५७-७॥

मृत्युञ्जयं महाकालं नीलकण्ठं सुरेश्वरम्।

श्रीविष्णुं कमलानाथं पञ्चचूडं कुमारकम्॥ ५७-८॥

चन्द्रं सूर्यं प्रजानाथं दक्षं मुनीन्द्रमेव च।

प्रचेतसं मरीचिञ्च कश्यपं पुलहं तथा॥ ५७-९॥

वशिष्ठञ्च भृगुञ्चैव गौतमं कपिलं मुनिम्।

पुलस्त्यञ्च क्रतुञ्चैव प्रह्लादं कर्दमं तथा॥ ५७-१०॥

अथर्वाङ्गिरसषीञ्च बालखिल्यान् मरीचिपान्।

मानसञ्चान्तरीक्षञ्च विद्याश्च पवनं विभुम्॥ ५७-११॥

तेजसञ्च जलञ्चैव महीस्पर्शञ्च शब्दकम्।

तथा रूपं रसं गन्धं प्रकृतिञ्च विकारकम्॥ ५७-१२॥

यञ्चान्यत् कारणं सर्वं भुवाक्षयं चराचरम्।

तत्पार्श्वगामिनो देवा सेन्द्रा भ्रमन्ति नित्यशः॥ ५७-१३॥

अगस्त्यश्च महातेजा मार्कण्डेयश्च वीर्यवान्।

यमदग्निर्भरद्वाजः संवर्तश्च्यवनस्तथा॥ ५७-१४॥

दुर्वासाश्च महाभाग ऋष्यश्रृगंश्च धामीकः।

सनत्कुमारो भगवान् योगाचार्यो महातपाः॥ ५७-१५॥

असितो देवलश्चैव जैगीषव्यश्च तत्त्ववित्।

ऋषभाजीतशक्रश्च महावीर्यस्तथा मणिः॥ ५७-१६॥

आयुर्वेदं तथाष्टाङ्गमेते भान्ति स्वमूर्तयः।

चन्द्रमाः सह नक्षत्रैरादित्यैश्च गभस्तिभिः॥ ५७-१७॥

वायव ऋतवश्चैव सङ्कल्पः प्राण एव च।

मूतीमन्तो महात्मानो महाव्रतपरायणाः॥ ५७-१८॥

एते चान्ये च बहव ईश्वरं समुपासते।

एते पार्श्वे चिन्तनीया वर्णानां साधकोत्तमैः॥ ५७-१९॥

तत्पार्श्वस्थः प्रभाकोटिधारकः प्रतिभाति च।

अर्थो धर्मश्च कामश्च हर्षो द्वेषस्तथा दमः॥ ५७-२०॥

तत्र गन्धर्वमुख्याश्च सहिताप्सरसस्तथा।

विंशतिः सप्त चैवान्ये लोकपालाश्च सर्वशः॥ ५७-२१॥

शुक्रो बृहस्पतिश्चैव बुधोऽङ्गारक एव च।

शनैश्चरश्च राहुश्च ग्रहाः सर्वे तथैव च॥ ५७-२२॥

मन्त्रो रथन्तरश्चैव हविष्मान् वसुमानपि।

आदित्याः साधिराजानो नानावृन्दैरुपासिताः॥ ५७-२३॥

मरुतो विश्वकर्मा च वसवश्च कपालिनः।

तथा पितृगणाः सर्वे सर्वाणि च हवींष्यथ॥ ५७-२४॥

ऋग्वेदः सामवेदश्च यजुर्वेदस्तथा विधिः।

अथर्ववेदश्च तथा सर्वशास्त्राणि चैव हि॥ ५७-२५॥

इतिहासोपदेशश्च वेदाङ्गानि च सर्वशः।

ग्रहा यज्ञाश्च सोमाश्च दैवतानि च सर्वशः॥ ५७-२६॥

सावित्री तारिणी दुर्गा वाणी सप्तविधा तथा।

मेधा धृतिः स्मृतिश्चैव प्रज्ञा बुद्धिर्यशः क्षमा॥ ५७-२७॥

सामानि श्रुतिशास्त्राणि गाथास्तु विविधास्तथा।

भाष्याणि तर्कयुक्तानि देहवन्ति विभान्ति च॥ ५७-२८॥

नाटिका विविधाः कार्याः कथाख्यायिककारिकाः।

अत्र तिष्ठन्ति ये पुण्या ये पुण्या गुरुपूजकाः॥ ५७-२९॥

क्षणा लवा मुहूर्ताश्च दिवारात्रिश्च सर्वतः।

अर्धमासास्तथामासाः ऋतवः षट् च शङ्कर॥ ५७-३०॥

संवत्सराः पञ्चयुगं मासा रात्रिश्चतुर्वीधा।

कालचक्रञ्च यद्दव्यं नित्यमक्षयमव्ययम्॥ ५७-३१॥

धर्मचक्रस्तथा चापि नित्यमास्ते महेश्वर।

अदितिश्च दितिश्चैव रुद्रश्च विनता तथा॥ ५७-३२॥

कालिका युवती देवी सुरसा चाथ गौतमी।

प्राधा कद्रुश्च वै देव्यो देवतानाञ्च मातरः॥ ५७-३३॥

रुद्राणी श्रीश्च लक्ष्मीश्च भद्रा षष्ठी तथा परा।

पृथिवीसञ्ज्ञिता देवी ह्रीः स्वाहा कीती रेव च॥ ५७-३४॥

सुरा देवी शची चैव तथा पुष्टिररुन्धती।

संसिद्धि सिद्धिदा विद्या महादेवी रतिस्तथा॥ ५७-३५॥

एताश्चान्याश्च वै देव्य उपतस्थुरलङ्कृताः।

आदित्यावसवो रुद्रा मरुतश्चाश्विनावपि॥ ५७-३६॥

विश्वेदेवाश्च साध्याश्च पितरश्च महर्षयः।

राजर्षयस्तत्र भान्ति हरिश्चन्द्रादयः प्रभो॥ ५७-३७॥

सर्वे हेमकुण्डलिनः सर्वाऽलङ्कारभूषिताः।

भावुका गीतवाद्यादि निस्वनैर्मग्नदेहिनः॥ ५७-३८॥

भावयन्ति महेशानीं काकिनीं परमेश्वरीम्।

वर्णरूपां नित्यकलां महेश्वरपतिव्रताम्॥ ५७-३९॥

ईश्वरं भावयन्त्येते पूजयन्ति निरन्तरम्।

वेष्टिताः सुन्दराकाराः अष्टसिद्धिसमृद्धिदाः॥ ५७-४०॥

एताः पूज्या महाकाल वर्णपार्श्वचराः प्रभाः।

प्रसीद नाथ स्वामीति नाम्ना मनसि पूजयेत्॥ ५७-४१॥

वर्णेश्वर प्रियानन्दां काकिनीं पूजयाम्यहम्

इति मन्त्रेणैव पूज्या वर्णरूपा सरस्वती॥ ५७-४२॥

तदा प्रसन्नाः सिध्यन्ति श्रीकाकिन्याः कलौ युगे॥ ५७-४३॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षट्चक्रप्रकाशे भैरवभैरवीसंवादे काकिनीश्वरवर्णपार्श्वे चरयजनं नाम सप्तपञ्चाशत्तमः पटलः॥ ५७॥

## अथाष्टपञ्चाशत्तमः पटलः

श्रीनन्दभैरवी उवाच

अथाष्टसिद्धिमाहात्म्यं शृणु श्रीचन्द्रशेखर।

मन्त्रोद्धारं तथा न्यासं कवचाङ्ग तव प्रियम्॥ ५८-१॥

स्तोत्रं सहस्रनामाख्यं साष्टोत्तरमनुप्रियम्।

साकारध्यानमखिलं सालोक्यादिपदप्रदम्॥ ५८-२॥

यस्य करणमात्रेण सुरो भवति मानुषः।

वृक्षबीजाद् भवेद् वृक्षः श्रद्धयाश्च फलोदयः॥ ५८-३॥

तथा तथैव मन्त्राणामुदयो बीजयोगतः।

बीजं तु परमं ज्ञानं बीजाधीनं चराचरम्॥ ५८-४॥

बीजमाश्रित्य सर्वेन्द्राः प्रतिभान्ति महौजसः।

कोटिसूर्यप्रतीकाशाः प्राणस्थाननिवासिनः॥ ५८-५॥

के चाप्ययुतसूर्याभाः शतसूर्यसमप्रभाः।

केचिद् द्वादशसूर्याभाः को जनश्चैकभासुराः॥ ५८-६॥

कोपि नाम मुनिर्दीप्तः कोपि चन्द्रसमप्रभः।

कोपि श्रीकान्तिकिरणः शङ्खचक्रगदाधरः॥ ५८-७॥

एते बीजसमुद्भूता निर्बीजाश्च पञ्चदेवताः।

ब्रह्मविष्णुशिवानन्दभैरवाः प्राणदेवताः॥ ५८-८॥

ब्रह्माब्रह्मस्वरूपेण श्वासमार्गप्रवेशकः।

विष्णुर्वैष्णवतत्त्वेन कुम्भकान्तर्गतः प्रभुः॥ ५८-९॥

शिवः संहाररूपेण महाप्रलयगः प्रभुः।

आनन्दभैरवः श्रीमान् मूलज्ञानीपरात्परः॥ ५८-१०॥

मूलाम्भोजाद् ब्रह्मरन्ध्रं यावत्तत्र प्रवेशिका।

प्राणविद्यास्वरूपेण बीजरूपा सनातनी॥ ५८-११॥

सा भाव्या योगिभिनीत्यं योगाङ्गैरतिभाव्यते।

योगशास्त्रं विना नाथ के जानन्ति महर्षयः॥ ५८-१२॥

अत्यन्तदुःखसाध्या सा योगिज्ञेया मनोयवा।

नानारूपा बृहद्रूपा श्वासोच्छ्वासप्रकाशिनी॥ ५८-१३॥

हृदयाम्भोजमध्यस्था ईश्वरस्थानवासिनी।

कालचञ्चुप्रकाशा सा सर्वभूतहृदिस्थिता॥ ५८-१४॥

सर्वेषां ज्ञानकर्त्त्री च सर्वानन्दकरी हृदि।

सा देवी काकिनी विद्या ईश्वरी परमा कला॥ ५८-१५॥

विभाव्या कोटिसूर्याभा कोटिचन्द्रसमानना।

तस्या मन्त्रं महामन्त्रं ब्रह्ममन्त्रं हि योगिनाम्॥ ५८-१६॥

श्रृणुनाथ कुलानन्द भैरव्यादिमनुं मुदा।

एतन्मत्रप्रभावेण परात्मानं वशं नयेत्॥ ५८-१७॥

दीर्घप्रणवमुच्चार्य वामनेत्रं समुद्धरेत्।

मायान्ते वाग्भवं बीजं कामबीजं समुद्धरेत्॥ ५८-१८॥

कामबीजं तथैश्वर्ये नमोऽन्ते वह्निकामिनी।

एतन्मन्त्रप्रसादेन भवेत् कालवशः क्षणात्॥ ५८-१९॥

अत्यन्तसुखमाप्नोति भयाज्ञानापहो भवेत्।

कामेन पुटितं मन्त्रं वाग्भवेनापि वा प्रभो॥ ५८-२०॥

स्वमन्त्रपुटितं कृत्वा सिद्धिः स्यादचिरादिह।

अथान्यमन्त्रं वक्ष्यामि सावधानोऽवधारय॥ ५८-२१॥

भद्रकालीं समुद्धृत्य किङ्किणीबीजमुद्धरेत्।

बालाबीजं समुद्धृत्य माहेश्वर्यै नमो द्विठः॥ ५८-२२॥

केवलं मूलमन्त्रेण पुटितं मूलमन्त्रकैः।

पूजयेत् परया भक्त्या हृदयाम्भोजमण्डले॥ ५८-२३॥

अप्रकाश्यमिमं मन्त्रं सर्वतन्त्रेषु गोपितम्।

लक्षजपेन सिद्धिः स्याद् हृदयाब्जे स्थिरो भवेत्॥ ५८-२४॥

अकस्माद्दीपकलिकाकारं जीवं प्रपश्यति।

ततो भवेन्महायोगी ईश्वरीमन्त्रसाधनात्॥ ५८-२५॥

ध्यानं वक्ष्यामि पूजाया गुह्याद् गुह्यतरं परम्।

ध्यात्वा पाद्यादिभिर्नाथ मनःकल्पितपुष्पकैः॥ ५८-२६॥

पूजयेत्परया भक्त्या मन्त्रध्यानपरायणः॥ ५८-२७॥

शशधरशतकोटिश्रीमयूखप्रभायाः।

या सुरतरुगुणशोभा निर्मला वेदहस्ता।

अरुणकिरणभाला हारमाला विलोला।

हृदयकमलमध्ये श्रीश्वरीं तां भजामि॥ ५८-२८॥

एवं सर्वस्वरूपां तां विभाव्य हृदयाम्बुजे।

पुनः पुनः पूजयेद्वै त्रैलोक्योद्भवपुष्पकैः॥ ५८-२९॥

अवश्यं सिद्धिमाप्नोति पूजायोगप्रभावतः।

आयुरारोग्यजननं पूजनं सुमहाफलम्॥ ५८-३०॥

ततो जपेन्महामन्त्रं वर्णमालाक्रमेण तु।

प्राणायामं ततः कृत्वा न्यसेत् सर्वाङ्गमध्यके॥ ५८-३१॥

मातृकाग्रन्थिनिकरे न्यसेत् पूर्वोक्तनामभिः।

यदुक्तं पूर्वपटले तेषां नामाभिरेव च॥ ५८-३२॥

विन्यस्य मन्त्रपुटितं मन्त्रन्यासं ततश्चरेत्।

काकिन्या अष्टशक्तीनां न्यासं कुर्यात्ततः परम्॥ ५८-३३॥

काकजिह्वाद्विकाण्डेशी कामाख्या काकिनी ध्वजा।

काकिनी काकमाला च काकचञ्चुप्रकाशिनी॥ ५८-३४॥

कोकिलाचाष्टशक्तीनां नाम्ना विन्यस्य मस्तके।

कण्ठकूपे न्यसेत्पश्चात् षोडशस्वरसम्पुटम्॥ ५८-३५॥

हृदये विन्यसेन्नाथ कादिद्वादशसम्पुटम्।

मन्त्रं विन्यस्य विधिना नाभौ मन्त्रेण सम्पुटम्॥ ५८-३६॥

डादिफान्तं तु विन्यस्य बादिलान्तं स्वलिङ्गके।

मूलाधारे मूलमन्त्रपुटितं वादिसान्तकम्॥ ५८-३७॥

विन्यस्य व्यापकं न्यासं कृत्वाङ्गानि च बन्धयेत्।

ततः प्राणायाममेकं कृत्वा प्राणान् समाश्रयेत्॥ ५८-३८॥

ततः स्तोत्रं पठेद्धीमान् तत्सर्वं श्रृणु शङ्कर।

हविष्याशी वशीभूत्वा साधयेदिह सिद्धये॥ ५८-३९॥

इति श्रीरुद्रयामले उत्तरतन्त्रे काकिनीसिद्धिसाधन नामाष्टपञ्चाशत्तमः पटलः॥ ५८॥

अथैकोनषष्टितमः पटलः

श्रीनन्दभैरवी उवाच

ज्ञानेश्वरी शुभकरी परिभावनीया।

योगेश्वरैर्हरिहरैर्गुरुभिर्महेन्द्रैः।

तां काकिनीं परशिवां परमेशपत्नीं।

संस्तौमि चारुहृदयाम्बुजपीठमध्ये॥ ५९-१॥

एकाकिनी त्रिजगतामतिनाशकाले।

त्वां काकिनीं समरकार्णा(ण्ड)ककाकपत्नीम्।

त्वं साक्षिणी भुवनभङ्गविधौ सकास्ते।

भूषण्डकाकमहिषीव वयं भजामः॥ ५९-२॥

एकाकिनीं सकलधारणकालयोगे।

आधार्य देहसमये सति काकिनीं त्वाम्।

वाय्वासने मनस आशु विकारनाशे।

काकेन्द्रचञ्चुचलितामहमेवमीडे॥ ५९-३॥

भावोदये प्रणयिनीमगतौ च भावा।

आह्लादयोगविभवे भुवनेश्वरीं त्वाम्।

मन्दारहाररुचिरे परमेश्वरि त्वं।

रक्षां कुरु प्रथमतो मतिमाश्रयामि॥ ५९-४॥

चन्द्रोदये सुखमयी द्युतिकोटिदीप्ता।

गोप्यागमे सुमतिभिः स्वमनांसि शुद्धा।

सा त्वं सुखात्वं भव भावविपूजनीये।

रक्षां कुरु प्रथमभास्करमङ्घ्रिमीडे॥ ५९-५॥

ते पादपङ्कजमजस्रमहं भजामि।

सानन्दबिन्दु विमलासनभावपुञ्जे।

गुञ्जावटीविमलमाल्यसुशोभिताङ्गे।

स्यामेव मे चरमभावसमूहदात्री॥ ५९-६॥

पञ्चानने दशभुजे सकलास्त्रयुक्ते।

विद्ये भये नरहरे नरहारभूषे।

प्रेतासने त्रिनयने जननी त्वमेव।

रक्षे शुभे चरणपङ्कजमाश्रयामि॥ ५९-७॥

श्री सुन्दरि प्रणतरक्षिणि वेदमात--।

स्तारेश्वरी त्वमपि रक्ष विनाशकाले।

यद्येकभक्त इतिहासपुराणवक्ता।

नित्यानुरक्तहरपादसरोजमीडे॥ ५९-८॥

ते श्रीपदं भुवनसारमनन्तसेव्यं।

योगास्पदं कृतिभिराश्रयमेकयोगम्।

सर्वे भजन्ति निजमोक्षफलाय नित्यं।

दीनोऽहमम्ब भुवनेशि मुदा भजामि॥ ५९-९॥

त्रैलोक्यपूजितपदं हृदयाम्बुजस्थं।

चित्तप्रकाशकमले स्वसुखानुभूतम्।

मायाश्रयं सकलसिद्धिनिदानरूपं।

मञ्जीरहारविनतं वरमाश्रयामि॥ ५९-१०॥

कौटीरहारकमलप्रियमाल्यशोभे।

शोभाकरे स्थिरतरा भव मे हृदब्जे।

भूमण्डले हि बलवान्कृतकृत्य एव

त्वामीश्वरीं हृदि मुदा सुखमाश्रयामि॥ ५९-११॥

नित्ये पुरा भजति योगसुसिद्धयेऽसौ।

शम्भुगीरीश इति चेश्वरपार्श्वगामि।

सायुज्यनाथपदवीं गत ईशाकान्ते।

एकाकिनी कुलवताङ्घ्रियुगं किमन्यैः॥ ५९-१२॥

ध्यायन्ति योगिन इहाघसमूहशैलं।

संहार हेतुकसदाघविनाशनाय।

चित्तोत्सवाय विभवाय जयाय भूमेः।

दीनोऽहमाशु विभजामि पदं श्रिये ते॥ ५९-१३॥

कृष्णे सिते विमलपीतनिभे सुरक्ते।

वर्णाश्रये त्वमव मामतिदीनमेकम्।

पुत्रं तवैव चरणाम्बुजमेव कान्तं।

नीलाम्बुजे स्थिरतरं कुरु कामदात्रि॥ ५९-१४॥

सर्वेश्वरी प्रियकरि भवभावहन्त्रि।

नाना ध्वनिप्रणतकामदुघे विचित्रे।

रत्नाम्बरे सुखपदं यदि देहि दास्यं।

त्वं चारुवर्णगलिते पदमाश्रयामि॥ ५९-१५॥

रत्नाकरे सकरुणेऽरुणकोटिवर्णे।

स्वर्णादिनिमीतसृजापविशोभिताङ्गी।

त्वं काकिनी यदि कटाक्षनिपातमेकं।

सर्वं कुरुष्व सुखमोक्षपथप्रमोदी॥ ५९-१६॥

आद्ये प्रवालविमलेऽमलमाल्यशोभे।

सूक्ष्मेऽतिसूक्ष्मनिकरे करुणानिधाने।

( क ) बाले वले प्रचले चपले प्रलापे।

योगेशि पादकमलं कुलमाश्रयामि॥ ५९-१७॥

( ख ) त्वं षोडशी खरतरा खरखड्गहस्ते।

खड्गेश्वरी प्रखरवाक्यमाथाढ्यवक्रे।

म खर्जूरहाररुचिरे खलहन्त्रि तुभ्यं।

नित्यं नमो नम उपेन्द्रगिरीन्द्रसेव्ये॥ ५९-१८॥

( ग ) गीतानते तरुतरे प्रणमामि नित्यं।

गात्रेश्वरी गतिहरे गणनाथसेव्ये।

गायन्ति ते चरणपङ्कजसारगीतं।

रक्षाप्रचण्डकलुषादनुपेक्षणीयम्॥ ५९-१९॥

( घ ) दीर्घस्वरे घनवरे घनघोरनादे।

घोरानने नवघने घटनाघनानाम्।

घोरास्पदे घटगते घटशून्यकर्त्री।

त्वं काकिनी समवतु क्षितिदोषजालात्॥ ५९-२०॥

( ङ ) आनुस्वरे स्मरहरे ननु रूपविद्ये।

संयोगिनीप्रबलशत्रुविनाशभूते।

रक्षेऽतिरक्ष करुणां कुरु देहि मोक्षं।

( च ) चण्डि प्रचण्डनयने चरणं भजे ते॥ ५९-२१॥

( छ ) छत्रप्रदे छलहरे छदवासिनी त्वं।

छद्मस्थिते हृदयपङ्कजदक्षयोगे।

( ज ) त्वां पूजये जयधरे यदुनाथजन्यो।

जाये जयं यदिह देहि पदं भजामि॥ ५९-२२॥

( झ ) झङ्के झनज्वलयतीह रिपं पिबन्ति।

त्वं कौशिकी सकलदेहविशोधनी त्वम्।

( न ) नित्येऽनुनासिकपदे सकलार्थदे त्वं।

( ञ ) रक्षां कुरुष्व विपदे कुलपुञ्जगुञ्जे॥ ५९-२३॥

( ट ) टङ्कारगेऽट्टहसने टलले़ऽट्टहासे।

( ठ ) ठाक्कारिणी सठहरा परिनिष्ठिता त्वम्।

सिंहेष्टपृष्ठनिलयेऽस्थिरयोगभावं

हृत्पद्मके कुरु सदा सकलार्थदात्रि॥ ५९-२४॥

एतत्स्तोत्रं पठेद्धीमान् ध्यानन्यासपरायणः।

विभाव्य स्तौति यो योगी स योगी मोक्षभाग्भवेत्॥ ५९-२५॥

हृत्पङ्करुहमध्यस्थं स पश्यति जगत्त्रयम्।

अष्टसिद्धियुतः शीघ्रं जीवन्मुक्तो भवेन्नरः॥ ५९-२६॥

इति श्रीरुद्रयामले महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे काकिनीस्तोत्रविन्यासो नामोनषष्टितमः पटलः॥ ५९॥

## अथ षष्टितमः पटलः

आनन्दभैरव उवाच

वद कान्ते परानन्दे रहस्यं कुलसुन्दरि।

यस्य विज्ञानमात्रेण भवेद् गङ्गाधरो हरिः॥ ६०-१॥

ईश्वरस्य स्तवब्रह्मपरं निर्वाणसाधनम्।

शोभाकोटियोगपतेर्योगेन्द्रस्य परापतेः॥ ६०-२॥

ईश्वरं के न मानन्ति ब्रह्मविष्णुशिवादयः।

तस्य स्मरणमात्रेण महावाग्मी च मृत्युजित्॥ ६०-३॥

मन्त्री वेदान्तसिद्धान्तं तं भजन्ति महर्षयः।

देवा मनुष्या गन्धर्वास्तं भजन्ति महेश्वरम्॥ ६०-४॥

अकालमृत्युहरणं सर्वदा सर्वतोमुखम्।

सदा तस्य स्तवं दिव्यं श्रोतुमिच्छामि शाङ्करि॥ ६०-५॥

श्रीनन्दभैरवी उवाच

कौल त्वं शृणु शङ्करप्रियकरं स्तोत्रं तदीशस्य च।

श्रीनाथाय नमः कुलेश परमप्राणेश तुभ्यं मुदा।

सानन्दाय नमो भवाय पतये लोकेश्वरायो ओं नमो।

भूतेशाय गणाधिपाय यतये श्रीशूलिने ते नमः॥ ६०-६॥

कान्ताय प्रणवाय योगपतये योगेश्वरायो ओं नमो।

महारायाक्षरेश्वराय महते नित्याय नित्यं नमः।

स्वाधिष्ठानविभेदकाय हरये मूलाब्जसम्भेदिने।

नाभेरम्बुजभेदिने हृदयाम्भोद्भेदकायों नमः॥ ६०-७॥

कालाय प्रणवाय मायवशिने नित्यं नमो भास्वते।

मोक्षाय प्रमथेश्वराय कवये खट्वाङ्गहस्ताय ते।

भक्तिश्रीनिधये महेन्द्रखचराय मायाश्रयार्यो नमो।

विज्ञानाय शिवाय सूक्ष्मगतये गूढाय भूयो नमः॥ ६०-८॥

सर्वज्ञाय जयाय भूतिपतये भूतेश्वराय प्रभो।

पञ्चास्याय हराय देवपतये गौरीश्वराय श्रिये।

भोगायान्तरगामिने हरिहरायानन्दचिद्रूपिणे।

कल्याणाय भगाय शुद्धमतिभिनीत्यं नमस्ते नमः॥ ६०-९॥

गोविन्दप्रियवल्लभाय विधये ब्रह्मादिकोत्पत्तये।

उत्पत्तिस्थितिसंहृतिप्रकृतये बाह्याय विश्वेश्वर।

तुभ्यं काल नमो नमः प्रलययोगोल्लासिने भूभृते।

विज्ञाताय गिरीन्द्रपूजित विभो भूताधिपायानिशम्॥ ६०-१०॥

गौरीशाय गणाचीताय मनसे मान्याय भूवासिने।

भूतोत्साहमहीशनाथशशिचूडाय प्रधानाय ते।

नित्यं नित्यकलाकुलाय फणिचूड।य प्रबुद्धाय ते।

तेजःशान्तिपते सतां पतिपते निर्वासने ते नमः॥ ६०-११॥

शोभाकोटियुताय चन्द्रकिरणाह्लादाय सूक्ष्माय ते

तुभ्यं नाथ नमो नमः प्रणमतामानन्दसिन्धूत्सवा।

हेरम्ब श्रयकातीकेयजनकानन्दप्रियाय प्रभो।

पित्रे सर्वसुखाय सर्वपतये श्रीनीलकण्ठेश्वर॥ ६०-१२॥

त्रिब्रह्मापीतभूतये सुरतये श्रीभास्वते योगिना--

मानन्दोदयकारिणे कुलपते ते नाथ तुभ्यं नमः।

ब्रह्मानन्दकुलाय रौप्यगिरये सौन्दर्यसंसिद्धये

सर्वानन्दकराय सम्परतरायाढ्याय सत्यं नमः॥ ६०-१३॥

काशीशं कौशिकीशं सुरतरुकिरणं कारणाख्यं सुखाख्यं।

गौरीशं गङ्गिरीशं गुरुमगुरुगिरिश्रेणिलिप्ताङ्गवङ्गम्।

घोषाख्यं मञ्जुघोषं घनगणघटितं घोरसङ्घट्टनादं

चार्वीशं राघवेशं घनहृदि घटमामीश्वरं घौटकेश॥ ६०-१४॥

लाक्षाभाण्डं विशालो वसति तव करे स्थावरो जङ्गमो वा।

भूताध्यक्षो वशिष्ठः स्वपरिजनकुले सर्वदा पाहि शम्भो।

भक्तिज्ञानं न दातुं चपलमलमणिश्रेणिमाला विलोला।

लोकाभीतो कलङ्की विधिशतमुकुटश्रीपदाम्भोरुहं ते॥ ६०-१५॥

धूर्तः शौरिः प्रशान्तो विमलमधुरसामोदमानोऽप्रमत्तो।

मायामोहापदेवी सुरमदमदनो दानसम्मानदाता।

त्वं नाथं श्रीपदाम्भोरुहविमलतले ते कथं ना सुरक्षे।

पूर्वास्यो दक्षिणास्यो धनपतिवदनः पश्चिमास्यो मुनिस्त्वम्॥ ६०-१६॥

भेदी सिद्धान्तविद्याधरनिधिकिरणः कारणोऽनन्तशक्ति--

र्यः साक्षात् कामधेनुः स च धनपतिपः सर्वभोगानुरागी।

पादाम्भोजे हि नित्यं कलगिरिसुतानाथ ते योगिपत्वं।

चित्तं मे चञ्चलाख्यं शशिधरकिरणो वाक्पते योगसिद्धिः॥ ६०-१७॥

कपर्दी श्रीखङ्गासिवरगदया वेदभुजया।

घनच्छायासङ्कोचरचनावशाच्छद्मविजयः।

जयी जेता जायेर्जयमनुकरोतु श्रियतमो।

ज्वलज्झंझावाते क्षणधर इह क्रोध इति मे॥ ६०-१८॥

अथाऽऽज्ञा चक्रान्तर्गतविवरमाच्छन्नजटिलः।

प्रतिज्ञाभङ्गस्थकटकशतकोटिप्रकटितः।

कुठारस्ते क्रोधी कमठकटवासी कठिनहा।

ककाराद्यं नत्वा दशकिरणमानोऽवतु सदा॥ ६०-१९॥

सुधाखण्डादेव्याः स्तवनपठनेन प्रियकरं।

पदाम्भोजं चेति प्रचयति स्वभाग्यं कुलपते।

प्रधाने भूखण्डे जयति यदि मृत्युञ्जयपदं।

विनोदं भूयोगं पचति सहसा प्रेमतरलः॥ ६०-२०॥

यद्येवं प्रपठेदिदमनियतं कौलावलीसंयुतं।

स्तोत्रं साररहस्यभारपरमानन्दैकचित्तस्थलम्।

योगीन्द्रावगतित्वमुक्तफलदं सर्वेश्वरत्वं पदं।

चन्द्रादित्यसमागतं परपदाह्लादैकमात्रं लभेत्॥ ६०-२१॥

ते शम्भो यदि पादाम्भोरुहमङ्गलवल्लिका।

पूज्यते सर्वदा योगी निर्वाणगुणसिद्धये॥ ६०-२२॥

किन्न सिद्धयति भ्रूमध्ये शिवभक्तिप्रसादतः॥ ६०-२३॥

इति श्री रुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने अनाहत पद्मे सुरस्तवनं नाम षष्टितमः पटलः॥ ६०॥

## अथैकषष्टितमः पटलः

श्रीनन्दभैरव उवाच

वद कल्याणि कामेशि त्रैलोक्यपरिपूजिते।

ब्रह्माण्डानन्तनिलये कैलासशिखरोज्ज्वले॥ ६१-१॥

कालिके कालरात्रिस्थे महाकालनिषेविते।

शब्दब्रह्मस्वरूपे त्वं वक्तुमर्हसि सादरात्॥ ६१-२॥

सहस्रनामयोगाख्यम् अष्टोत्तरमनन्तरम्।

अनन्तकोटिब्रह्माण्डं सारं परममङ्गलम्॥ ६१-३॥

ज्ञानसिद्धिकरं साक्षाद् अत्यन्तानन्दवर्धनम्।

सङ्केतशब्दमोक्षार्थं काकिनीश्वरसंयुतम्॥ ६१-४॥

परानन्दकरं ब्रह्म निर्वाणपदलालितम्।

स्नेहादभिसुखानन्दादादौ ब्रह्म वरानने॥ ६१-५॥

इच्छामि सर्वदा मातर्जगतां सुरसुन्दरि।

स्नेहानन्दरसोद्रेकसम्बन्धान् कथय द्रुतम्॥ ६१-६॥

श्रीनन्दभैरवी उवाच

ईश्वर श्रीनीलकण्ठ नागमालाविभूषित।

नागेन्द्रचित्रमालाढ्य नागाधिपरमेश्वर॥ ६१-७॥

काकिनीश्वरयोगाढ्यं सहस्रनाम मङ्गलम्।

अष्टोत्तरं वृताकारं कोटिसौदामिनीप्रभम्॥ ६१-८॥

आयुरारोग्यजननं शृणुष्वावहितो मम।

अनन्तकोटिब्रह्माण्डसारं नित्यं परात्परम्॥ ६१-९॥

साधनं ब्रह्मणो ज्ञानं योगानां योगसाधनम्।

सार्वज्ञगुह्यसंस्कारं संस्कारादिफलप्रदम्॥ ६१-१०॥

वाञ्छासिद्धिकरं साक्षान्महापातकनाशनम्।

महादारिद्र्यशमनं महैश्वर्यप्रदायकम्॥ ६१-११॥

जपेद्यः प्रातरि प्रीतो मध्याह्नेऽस्तमिते रवौ।

नमस्कृत्य जपेन्नाम ध्यानयोगपरायणः॥ ६१-१२॥

काकिनीश्वरसंयोगं ध्यानं ध्यानगुणोदयम्।

आदौ ध्यानं समाचर्य निर्मलोऽमलचेतसा॥ ६१-१३॥

ध्यायेद् देवीं महाकालीं काकिनीं कालरूपिणीम्।

परानन्दरसोन्मत्तां श्यामां कामदुघां पराम्॥ ६१-१४॥

चतुर्भुजां खड्गचर्मवरपद्मधरां हराम्।

शत्रुक्षयकरीं रत्नाऽलङ्कारकोटिमण्डिताम्॥ ६१-१५॥

तरुणानन्दरसिकां पीतवस्त्रां मनोरमाम्।

केयूरहारललितां ताटङ्कद्वयशोभिताम्॥ ६१-१६॥

ईश्वरीं कामरत्नाख्यां काकचञ्चुपुटाननाम्।

सुन्दरीं वनमालाढ्यां चारुसिंहासनस्थिताम्॥ ६१-१७॥

हृत्पद्मकर्णीकामध्याकाशसौदामिनीप्रभाम्।

एवं ध्यात्वा पठेन्नाममङ्गलानि पुनः पुनः॥ ६१-१८॥

ईश्वरं कोटिसूर्याभं ध्यायेद्धृदयमण्डले।

चतुर्भुजं वीररूपं लावण्यं भावसम्भवम्॥ ६१-१९॥

श्यामं हिरण्यभूषाङ्गं चन्द्रकोटिसुशीतलम्।

अभयं वरदं पद्मं महाखड्गधरं विभुम्॥ ६१-२०॥

किरीटिनं महाकायं स्मितहास्यं प्रकाशकम्।

हृदयाम्बुजमध्यस्थं नूपुरैरुपशोभितम्॥ ६१-२१॥

कोटिकालानलं दीप्तं काकिनीदक्षिणस्थितम्।

एवं विचिन्त्य मनसा योगिनं परमेश्वरम्॥ ६१-२२॥

ततः पठेत् सहस्राख्यं वदामि शृणु तत्प्रभो॥ ६१-२३॥

अस्य श्रीकाकिनीश्वरसहस्रनामस्तोत्रस्य ब्रह्माऋषिर्गायत्रीच्छन्दो जगदीश्वर काकिनी देवता

निर्वाणयोगार्थ सिद्ध्यर्थे जपे विनियोगः।

ओं ईश्वरः काकिनीशान ईशान कमलेश्वरी।

ईशः काकेश्वरीशानी ईश्वरीशः कुलेश्वरी॥ ६१-२४॥

ईशमोक्षः कामधेनुः कपर्दीशः कपर्दीनी।

कौलः कुलीनान्तरगा कविः काव्यप्रकाशिनी॥ ६१-२५॥

कलादेशः सुकविता कारणः करुणामयी।

कञ्जपत्रेक्षणः काली कामः कोलावलीश्वरी॥ ६१-२६॥

किरातरूपी कैवल्या किरणः कामनाशना।

कार्णाटेशः सकर्णाटी कलिकः कालिकापुटा॥ ६१-२७॥

किशोरः कीशुनमिता केशवेशः कुलेश्वरी।

केशकिञ्जल्ककुटिलः कामराजकुतूहला॥ ६१-२८॥

करकोटिधरः कूटा क्रियाक्रूरः क्रियावती।

कुम्भहा कुम्भहन्त्री च कटकच्छकलावती॥ ६१-२९॥

कञ्जवक्त्रः कालमुखी कोटिसूर्यकरानना।

कम्रः कलपः समृद्धिस्था कुपोऽन्तस्थः कुलाचला॥ ६१-३०॥

कुणपः कौलपाकाशा स्वकान्तः कामवासिनी।

सुकृतिः शाङ्करी विद्या कलकः कलनाश्रया॥ ६१-३१॥

कर्कन्धुस्थः कौलकन्या कुलीनः कन्यकाकुला।

कुमारः केशरी विद्या कामहा कुलपण्डिता॥ ६१-३२॥

कल्कीशः कमनीयाङ्गी कुशलः कुशलावती।

केतकीपुष्पमालाढ्यः केतकीकुसुमान्विता॥ ६१-३३॥

कुसुमानन्दमालाढ्यः कुसुमामलमालिका।

कवीन्द्रः काव्यसम्भूतः काममञ्जीररञ्जिनी॥ ६१-३४॥

कुशासनस्थः कौशल्याकुलपः कल्पपादपा।

कल्पवृक्षः कल्पलता विकल्पः कल्पगामिनी॥ ६१-३५॥

कठोरस्थः काचनिभा करालः कालवासिनी।

कालकूटाश्रयानन्दः कर्कशाकाशवाहिनी॥ ६१-३६॥

कटधूमाकृतिच्छायो विकटासनसंस्थिता।

कायधारी कूपकरी करवीरागतः कृषी॥ ६१-३७॥

कालगम्भीरनादान्ता विकलालापमानसा।

प्रकृतीशः सत्प्रकृतिः प्रकृष्टः कषीणीश्वरी॥ ६१-३८॥

भगवान् वारुणीवर्णा विवर्णो वर्णरूपिणी।

सुवर्णवर्णो हेमाभो महान् महेन्द्रपूजिता॥ ६१-३९॥

महात्मा महतीशानी मेहेशो मत्तगामिनी।

महावीरो महावेगा महालक्ष्मीश्वरो मतिः॥ ६१-४०॥

महादेवो महादेवी महानन्दो महाकला।

महाकालो महाकाली महाबलो महाबला॥ ६१-४१॥

महामान्यो महामान्या महाधन्यो महाधनी।

महामालो महामाला महाकाशो महाकाशा॥ ६१-४२॥

महायशो महायज्ञा महाराजो महारजा।

महाविद्यो महाविद्या महामुख्यो महामखी॥ ६१-४३॥

महारात्रो महारात्रिर्महाधीरो महाशया।

महाक्षेत्रो महाक्षेत्रा कुरुक्षेत्रः कुरुप्रिया॥ ६१-४४॥

महाचण्डो महोग्रा च महामत्तो महामतिः।

महावेदो महावेदा महोत्साहो महोत्सवा॥ ६१-४५॥

महाकल्पो महाकल्पा महायोगो महागतिः।

महाभद्रो महाभद्रा महासूक्ष्मो महाचला॥ ६१-४६॥

महावाक्यो महावाणी महायज्वा महाजवा।

महामूर्तीर्महाकान्ता महाधर्मो महाधना॥ ६१-४७॥

महामहोग्रो महिषी महाभोग्यो महाप्रभा।

महाक्षेमो महामाया महामाया महारमा॥ ६१-४८॥

महेन्द्रपूजिता माता विभालो मण्डलेश्वरी।

महाविकालो विकला प्रतलस्थललामगा॥ ६१-४९॥

कैवल्यदाता कैवल्या कौतुकस्थो विकर्षीणी।

वालाप्रतिर्वालपत्नी बलरामो वलाङ्गजा॥ ६१-५०॥

अवलेशः कामवीरा प्राणेशः प्राणरक्षिणी।

पञ्चमाचारगः पञ्चापञ्चमः पञ्चमीश्वरी॥ ६१-५१॥

प्रपञ्चः पञ्चरसगा निष्प्रपञ्चः कृपामयी।

कामरूपी कामरूपा कामक्रोधविवर्जीता॥ ६१-५२॥

कामात्मा कामनिलया कामाख्या कामचञ्चला।

कामपुष्पधरः कामा कामेशः कामपुष्पिणी॥ ६१-५३॥

महामुद्राधरो मुद्रा सन्मुद्रः काममुद्रिका।

चन्द्रार्धकृतभालाभो विधुकोटिमुखाम्बुजा॥ ६१-५४॥

चन्द्रकोटिप्रभाधारी चन्द्रज्योतिःस्वरूपिणी।

सूर्याभो वीरकिरणा सूर्यकोटिविभाविता॥ ६१-५५॥

मिहिरेशो मानवका अन्तर्ग्गामी निराश्रया।

प्रजापतीशः कल्याणी दक्षेशः कुलरोहिणी॥ ६१-५६॥

अप्रचेताः प्रचेतस्था व्यासेशो व्यासपूजिता।

काश्यपेशः काश्यपेशी भृग्वीशो भार्गवेश्वरी॥ ६१-५७॥

वशिष्ठः प्रियभावस्थो वशिष्ठबाधितापरा।

पुलस्त्यपूजितो देवः पुलस्त्यचित्तसंस्थिता॥ ६१-५८॥

अगस्त्याच्र्योऽगस्त्यमाता प्रह्लादेशो वलीश्वरी।

कर्दमेशः कर्दमाद्या बालको बालपूजिता॥ ६१-५९॥

मनस्थश्चान्तरिक्षस्था शब्दज्ञानी सरस्वती।

रूपातीता रूपशून्या विरूपो रूपमोहिनी॥ ६१-६०॥

विद्याधरेशो विद्येशी वृषस्थो वृषवाहिनी।

रसज्ञो रसिकानन्दा विरसो रसवजीता॥ ६१-६१॥

सौनः सनत्कुमारेशी योगचर्येश्वरः प्रिया।

दुर्वाशाः प्राणनिलयः साङ्ख्ययोगसमुद्भवा॥ ६१-६२॥

असङ्ख्येयो मांसभक्षा सुमांसाशी मनोरमा।

नरमांसविभोक्ता च नरमांसविनोदिनी॥ ६१-६३॥

मीनवक्त्रप्रियो मीना मीनभुङ्मीनभक्षिणी।

रोहिताशी मत्स्यगन्धा मत्स्यनाथो रसापहा॥ ६१-६४॥

पार्वतीप्रेमनिकरो विधिदेवाधिपूजिता।

विधातृवरदो वेद्या वेदो वेदकुमारिका॥ ६१-६५॥

श्यामेशो सितवर्णा च चासितोऽसितरूपिणी।

महामत्ताऽऽसवाशी च महामत्ताऽऽसवप्रिया॥ ६१-६६॥

आसवा व्द्योऽमनादेवी निर्मलासवपामरा।

विसत्तो मदिरामत्ता मत्तकुञ्जरगामिनी॥ ६१-६७॥

मणिमालाधरो मालामातृकेशः प्रसन्नधीः।

जरामृत्युहरो गौरी गायनस्थो जरामरा॥ ६१-६८॥

सुचञ्चलोऽतिदुर्धर्षा कण्ठस्थो हृद्गता सती।

अशोकः शोकरहिता मन्दरस्थो हि मन्त्रिणी॥ ६१-६९॥

मन्त्रमालाधरानन्दो मन्त्रयन्त्रप्रकाशिनी।

मन्त्रार्थचैतन्यकरो मन्त्रसिद्धिप्रकाशिनी॥ ६१-७०॥

मन्त्रज्ञो मन्त्रनिलया मन्त्रार्थामन्त्रमन्त्रिणी।

बीजध्यानसमन्तस्था मन्त्रमालेऽतिसिद्धिदा॥ ६१-७१॥

मन्त्रवेत्ता मन्त्रसिद्धिर्मन्त्रस्थो मान्त्रिकान्तरा।

बीजस्वरूपो बीजेशी बीजमालेऽति बीजिका॥ ६१-७२॥

बीजात्मा बीजनिलया बीजाढ्या बीजमालिनी।

बीजध्यानो बीजयज्ञा बीजाढ्या बीजमालिनी॥ ६१-७३॥

महाबीजधरो बीजा बीजाढ्या बीजवल्लभा।

मेघमाला मेघमालो वनमाली हलायुधा॥ ६१-७४॥

कृष्णाजिनधरो रौद्रा रौद्रा रौद्रगणाश्रया।

रौद्रप्रियो रौद्रकर्त्री रौद्रलोकप्रदः प्रभा॥ ६१-७५॥

विनाशी सर्वगानां च सर्वाणी सर्वसम्पदा।

नारदेशः प्रधानेशी वारणेशो वनेश्वरी॥ ६१-७६॥

कृष्णेश्वरः केशवेशी कृष्णवर्णास्त्रिलोचना।

कामेश्वरो राघवेशी बालेशी वा बाणपूजितः॥ ६१-७७॥

भवानीशो भवानी च भवेन्द्रो भववल्लभा।

भवानन्दोऽतिसूक्ष्माख्या भवमूर्तीर्भवेश्वरी॥ ६१-७८॥

भवच्छायो भवानन्दो भवभीतिहरो वला।

भाषाज्ञानीभाषमाला महाजीवोऽतिवासना॥ ६१-७९॥

लोभापम्दो लोभकर्त्री प्रलोभो लोभवधीनी।

मोहातीतो मोहमाता मोहजालो महावती॥ ६१-८०॥

मोहमुद्गरधारी च मोहमुद्गरधारिणी।

मोहान्वितो मोहमुग्धा कामेशः कामिनीश्वरी॥ ६१-८१॥

कामलापकरोऽकामा सत्कामो कामनाशिनी।

बृहन्मुखो बृहन्नेत्रा पद्माभोऽम्बुजलोचना॥ ६१-८२॥

पद्ममालः पद्ममाला श्रीदेवो देवरक्षिणी।

असितोऽप्यसिता चैव आह्लादो देवमातृका॥ ६१-८३॥

नागेश्वरः शैलमाता नागेन्द्रो वै नगात्मजा।

नारायणेश्वरः कीतीः सत्कीतीः कीतीवधीनी॥ ६१-८४॥

कातीकेशः कातीकी च विकर्ता गहनाश्रया।

विरक्तो गरुडारूढा गरुडस्थो हि गारुडी॥ ६१-८५॥

गरुडेशो गुरुमयी गुरुदेवो गुरुप्रदा।

गौराङ्गेशो गौरकन्या गङ्गेशः प्राङ्गणेश्वरी॥ ६१-८६॥

प्रतिकेशो विशाला च निरालोको निरीन्द्रिया।

प्रेतबीजस्वरूपश्च प्रेताऽलङ्कारभूषिता॥ ६१-८७॥

प्रेमगेहः प्रेमहन्त्री हरीन्द्रो हरिणेक्षणा।

कालेशः कालिकेशानी कौलिकेशश्च काकिनी॥ ६१-८८॥

कालमञ्जीरधारी च कालमञ्जीरमोहिनी।

करालवदनः काली कैवल्यदानदः कथा॥ ६१-८९॥

कमलापालकः कुन्ती कैकेयीशः सुतः कला।

कालानलः कुलज्ञा च कुलगामी कुलाश्रया॥ ६१-९०॥

कुलधर्मस्थितः कौला कुलमार्गः कुलातुरा।

कुलजिह्वः कुलानन्दा कृष्णः कृष्णसमुद्भवा॥ ६१-९१॥

कृष्णेशः कृष्णमहिषी काकस्थः काकचञ्चुका।

कालधर्मः कालरूपा कालः कालप्रकाशिनी॥ ६१-९२॥

कालजः कालकन्या च कालेशः कालसुन्दरी।

खड्गहस्तः खर्पराढ्या खरगः खरखड्गनी॥ ६१-९३॥

खलबुद्धिहरः खेला खञ्जनेशः सुखाञ्जनी।

गीतप्रियो गायनस्था गणपालो गृहाश्रया॥ ६१-९४॥

गर्गप्रियो गयाप्राप्तिर्गर्गस्थो हि गभीरिणा।

गारुडीशो हि गान्धर्वी गतीशो गार्हवह्निजा॥ ६१-९५॥

गणगन्धर्वगोपालो गणगन्धर्वगो गता।

गभीरमानी सम्भेदो गभीरकोटिसागरा॥ ६१-९६॥

गतिस्थो गाणपत्यस्था गणनाद्यो गवा तनूः।

गन्धद्वारो गन्धमाला गन्धाढ्यो गन्धनिर्गमा॥ ६१-९७॥

गन्धमोहितसर्वाङ्गो गन्धचञ्चलमोहिनी।

गन्धपुष्पधूपदीपनैवेद्यादिप्रपूजिता॥ ६१-९८॥

गन्धागुरुसुकस्तूरी कुङ्कुमादिविमण्डिता।

गोकुला मधुरानन्दा पुष्पगन्धान्तरस्थिता॥ ६१-९९॥

गन्धमादनसम्भूतपुष्पमाल्यविभूषितः।

रत्ना द्यशेषालङ्कारमालामण्डितविग्रहः॥ ६१-१००॥

स्वर्णाद्यशेषालङ्कारहारमालाविमण्डिता।

करवीरा युतप्रख्यरक्तलोचनपङ्कजः॥ ६१-१०१॥

जवाकोटिकोटिशत चारुलोचनपङ्कजा।

घनकोटिमहानास्य पङ्कजालोलविग्रहा॥ ६१-१०२॥

घर्घरध्वनिमानन्दकाव्याम्बुधिमुखाम्बुजा।

घोरचित्रसर्पराज मालाकोटिशताङ्कभृत्॥ ६१-१०३॥

घनघोरमहानाग चित्रमालाविभूषिता।

घण्टाकोटिमहानादमानन्दलोलविग्रहः॥ ६१-१०४॥

घण्टाडमरुमन्त्रादि ध्यानानन्दकराम्बुजा।

घटकोटिकोटिशतसहस्रमङ्गलासना॥ ६१-१०५॥

घण्टाशङ्खपद्मचक्रवराभयकराम्बुजा।

घातको रिपुकोटीनां शुम्भादीनां तथा सताम्॥ ६१-१०६॥

घातिनीदैत्यघोराश्च शङ्खानां सततं तथा।

चार्वाकमतसङ्घातचतुराननपङ्कजः॥ ६१-१०७॥

चञ्चलानन्दसर्वार्थसारवाग्वादिनीश्वरी।

चन्द्रकोटिसुनिर्माल मालालम्बितकण्ठभृत्॥ ६१-१०८॥

चन्द्रकोटिसमानस्य पङ्केरुहमनोहरा।

चन्द्रज्योत्स्नायुतप्रख्यहारभूषितमस्तकः॥ ६१-१०९॥

चन्द्रबिम्बसहस्राभायुतभूषितमस्तकः।

चारुचन्द्रकान्तमणिमणिहारायुताङ्गभृत्॥ ६१-११०॥

चन्दनागुरुकस्तूरी कुङ्कुमासक्तमालिनी।

चण्डमुण्डमहामुण्डायुतनिर्मलमाल्यभृत्॥ ६१-१११॥

चण्डमुण्डघोरमुण्डनिर्माणकुलमालिनी

चण्डाट्टहासघोराढ्यवदनाम्भोजचञ्चलः॥ ६१-११२॥

चलत्खञ्जननेत्राम्भोरुहमोहितशङ्करा।

चलदम्भोजनयनानन्दपुष्पकरमोहितः॥ ६१-११३॥

चलदिन्दुभाषमाणावग्रहखेदचन्द्रिका।

चन्द्रार्धकोटिकिरणचूडामण्डलमण्डितः॥ ६१-११४॥

चन्द्रचूडाम्भोजमाला उत्तमाङ्गविमण्डितः।

चलदर्कसहस्रान्त रत्नहारविभूषितः॥ ६१-११५॥

चलदर्ककोटिशतमुखाम्भोजतपोज्ज्वला।

चारुरत्नासनाम्भोजचन्द्रिकामध्यसंस्थितः॥ ६१-११६॥

चारुद्वादशपत्रादि कर्णीकासुप्रकाशिका।

चमत्कार--ग--टङ्कारधुनर्बाणकराम्बुजः॥ ६१-११७॥

चतुर्थवेदगाथादि स्तुतिकोटिसुसिद्धिदा।

चलदम्बुजनेत्रार्कवह्निचन्द्रत्रयान्वितः॥ ६१-११८॥

चलत्सहस्रसङ्घात पङ्कजादिप्रकाशिका।

चमत्काराट्टहासास्य स्मितपङ्कजराजयः॥ ६१-११९॥

चमत्कारमहाघोरसाट्टाट्टहासशोभिता।

छायासहस्रसंसारशीतलानिलशीतलः॥ ६१-१२०॥

छदपद्मप्रभामानसिंहासनसमास्थिता।

छलत्कोटिदैत्यराजमुण्डमालाविभूषितः॥ ६१-१२१॥

छिन्नादिकोटिमन्त्रार्थज्ञानचैतन्यकारिणी।

चित्रमार्गमहाध्वान्तग्रन्थिसम्भेदकारकः॥ ६१-१२२॥

अस्त्रकास्त्रादिब्रह्मास्त्रसहस्रकोटिधारिणी।

अजामांसादिसद्भक्ष--रसामोदप्रवाहगः॥ ६१-१२३॥

छेदनादिमहोग्रास्त्रे भुजवामप्रकाशिनी।

जयाख्यादिमहासाम ज्ञानार्थस्य प्रकाशकः॥ ६१-१२४॥

जायागणहृदम्भोज बुद्धिज्ञानप्रकाशिनी।

जनार्दनप्रेमभाव महाधनसुखप्रदः॥ ६१-१२५॥

जगदीशकुलानन्दसिन्धुपङ्कजवासिनी।

जीवनास्थादिजनकः परमानन्दयोगिनाम्॥ ६१-१२६॥

जननी योगशास्त्राणां भक्तानां पादपद्मयोः।

रुक्षपवननिर्वातमहोल्कापातकारुणः॥ ६१-१२७॥

झर्झरीमधुरी वीणा वेणुशङ्खप्रवादिनी।

झनत्कारौघसंहारकरदण्डविशानधृक्॥ ६१-१२८॥

झर्झरीनायिकार्य्यादिकराम्भोजनिषेविता।

टङ्कारभावसंहारमहाजागरवेशधृक्॥ ६१-१२९॥

टङ्कासिपाशुपातास्त्रचर्मकार्मुकधारिणी।

टलनानलसङ्घट्टपट्टाम्बरविभूषितः॥ ६१-१३०॥

टुल्टुनी किङ्किणी कोटि विचित्रध्वनिगामिनी।

ठं ठं ठं मनुमूलान्तः स्वप्रकाशप्रबोधकः॥ ६१-१३१॥

ठं ठं ठं प्रखराह्लादनादसम्वादवादिनी।

ठं ठं ठं कूर्मपृष्ठस्थः कामचाकारभासनः॥ ६१-१३२॥

ठं ठं ठं बीजवह्निस्थ हातुकभ्रूविभूषिता।

डामरप्रखराह्लादसिद्धिविद्याप्रकाशकः॥ ६१-१३३॥

डिण्डिमध्वानमधुरवाणीसम्मुखपङ्कजा।

डं डं डं खरकृत्यादि मारणान्तःप्रकाशिका॥ ६१-१३४॥

ढक्कारवाद्यभूपूरतारसप्तस्वराश्रयः।

ढौं ढौं ढौं ढौकढक्कलं वह्निजायामनुप्रियः॥ ६१-१३५॥

ढं ढं ढं ढौं ढ ढं ढ कृत्येत्थाहेति वासिनी।

तारकब्रह्ममन्त्रस्थः श्रीपादपद्मभावकः॥ ६१-१३६॥

तारिण्यादिमहामन्त्र सिद्धिसर्वार्थसिद्धिदा।

तन्त्रमन्त्रमहायन्त्र वेदयोगसुसारवित्॥ ६१-१३७॥

तालवेतालदैतालश्रीतालादिसुसिद्धदा।

तरुकल्पलतापुष्पकलबीजप्रकाशकः॥ ६१-१३८॥

डिन्तिडीतालहिन्तालतुलसीकुलवृक्षजा।

अकारकूटविन्दिन्दुमालामण्डितविग्रहः॥ ६१-१३९॥

स्थातृप्रस्थप्रथागाथास्थूलस्थित्यन्तसंहरा।

दरीकुञ्जहेममालावनमालादिभूषितः॥ ६१-१४०॥

दारिद्र्यदुःखदहनकालानलशतोपमः।

दशसाहस्त्रवक्राम्भोरुहशोभितविग्रहः॥ ६१-१४१॥

पाशाभयवराह्लादधनधर्मादिवर्धिनी।

धर्मकोटिशतोल्लाससिद्धिऋद्धिसमृद्धिदा॥ ६१-१४२॥

ध्यानयोगज्ञानयोगमन्त्रयोगफलप्रदा।

नामकोटिशतानन्तसुकीर्तिगुणमोहनः॥ ६१-१४३॥

निमित्तफलसद्भावभावाभावविवर्जिता।

परमानन्दपदवी दानलोलपदाम्बुजः॥ ६१-१४४॥

प्रतिष्ठासुनिवृत्तादि समाधिफलसाधिनी।

फेरवीगणसन्मानवसुसिद्धिप्रदायकः॥ ६१-१४५॥

फेत्कारीकुलतन्त्रादि फलसिद्धिस्वरूपिणी।

वराङ्गनाकोटिकोटिकराम्भोजनिसेविता॥ ६१-१४६॥

वरदानज्ञानदान मोक्षदातिचञ्चला।

भैरवानन्दनाथाख्य शतकोटिमुदान्वितः॥ ६१-१४७॥

भावसिद्धिक्रियासिद्धि साष्टाङ्गसिद्धिदायिनी।

मकारपञ्चकाह्लादमहामोदशरीरधृक्॥ ६१-१४८॥

मदिरादिपञ्चतत्त्वनिर्वाणज्ञानदायिनी।

यजमानक्रियायोगविभागफलदायकः॥ ६१-१४९॥

यशः सहस्रकोटिस्थ गुणगायनतत्परा।

रणमध्यस्थकालाग्नि क्रोधधारसुविग्रहः॥ ६१-१५०॥

काकिनीशाकिनीशक्तियोगादि काकिनीकला।

लक्षणायुतकोटीन्दुललाटतिलकान्वितः॥ ६१-१५१॥

लाक्षाबन्धूकसिन्दूरवर्णलावण्यलालिता।

वातायुतसहस्राङ्गघूर्णायमानभूधरः॥ ६१-१५२॥

विवस्वत्प्रेमभक्तिस्थ चरणद्वन्द्वनिर्मला।

श्रीसीतापतिशुद्धाङ्ग व्याप्तेन्द्रनीलसन्निभः॥ ६१-१५३॥

शीतनीलाशतानन्दसागरप्रेमभक्तिदा।

षट्पङ्केरुहदेवादिस्वप्रकाशप्रबोधिनी॥ ६१-१५४॥

महोमीस्थषडाधारप्रसन्नहृदयाम्बुजा।

श्यामप्रेमकलाबन्धसर्वाङ्गकुलनायकः॥ ६१-१५५॥

संसारसारशास्त्रादि सम्बन्धसुन्दराश्रया।

ह्सौः प्रेतमहाबीजमालाचित्रितकण्ठधृक्॥ ६१-१५६॥

हकारवामकर्णाढ्य चन्द्रबिन्दुविभूषिता।

लयसृष्टिस्थितिक्षेत्रपानपालकनामधृक्॥ ६१-१५७॥

लक्ष्मीलक्षजपानन्दसिद्धिसिद्धान्तवणीनी।

क्षुन्निवृत्तिक्षपारक्षा क्षुधाक्षोभनिवारकः॥ ६१-१५८॥

क्षत्रियादिकुरुक्षेत्रारुणाक्षिप्तत्रिलोचना।

अनन्त इतिहासस्थ आज्ञागामी च ईश्वरी॥ ६१-१५९॥

उमेश उटकन्येशी ऋद्धिस्थह्स्थगोमुखी।

गकारेश्वरसंयुक्त त्रिकुण्डदेवतारिणी॥ ६१-१६०॥

एणाचीशप्रियानन्द एरावतकुलेश्वरी।

ओढ्रपुष्पानन्तदीप्त ओढ्रपुष्पानखाग्रका॥ ६१-१६१॥

एह्त्यशतकोटिस्थ औं दीर्घप्रणवाश्रया।

अङ्गस्थाङ्गदेवस्था अर्यस्थश्चार्यमेश्वरी॥ ६१-१६२॥

मातृकावर्णनिलयः सर्वमातृकलान्विता।

मातृकामन्त्रजालस्थः प्रसन्नगुणदायिनी॥ ६१-१६३॥

अत्युत्कटपथिप्रज्ञा गुणमातृपदे स्थिता।

स्थावरानन्ददेवेशो विसर्गान्तरगामिनी॥ ६१-१६४॥

अकलङ्को निष्कलङ्को निराधारो निराश्रया।

निराश्रयो निराधारो निर्बीजो बीजयोगिनी॥ ६१-१६५॥

निःशङ्को निस्पृहानन्दो सिन्धूरत्नावलिप्रभा।

आकाशस्थः खेचरी च स्वर्गदाता शिवेश्वरी॥ ६१-१६६॥

सूक्ष्मातिसूक्ष्मात्वैर्ज्ञेया दारापदुःखहारिणी।

नानादेशसमुद्भूतो नानालङ्कारलङ्कृता॥ ६१-१६७॥

नवीनाख्यो नूतनस्थ नयनाञ्जनिवासिनी।

विषयाख्यविषानन्दा विषयाशी विषापहा॥ ६१-१६८॥

विषयातीतभावस्थो विषयानन्दघातिनी।

विषयच्छेदनास्त्रस्थो विषयज्ञाननाशिनी॥ ६१-१६९॥

संसारछेदकच्छायो भवच्छायो भवान्तका।

संसारार्थप्रवर्तश्च संसारपरिवतीका॥ ६१-१७०॥

संसारमोहहन्ता च संसारार्णवतारिणी।

संसारघटकश्रीदासंसारध्वान्तमोहिनी॥ ६१-१७१॥

पञ्चतत्त्वस्वरूपश्च पञ्चतत्त्वप्रबोधिनी।

पाथीवः पृथिवीशानी पृथुपूज्यः पुरातनी॥ ६१-१७२॥

वरुणेशो वारुणा च वारिदेशो जलोद्यमा।

मरुस्थो जीवनस्था च जलभुग्जलवाहना॥ ६१-१७३॥

तेजः कान्तः प्रोज्ज्वलस्था तेजोराशेस्तु तेजसी।

तेजस्थस्तेजसो माला तेजः कीतीः स्वरश्मिगा॥ ६१-१७४॥

पवनेशश्चानिलस्था परमात्मा निनान्तरा।

वायुपूरककारी च वायुकुम्भकवधीनी॥ ६१-१७५॥

वायुच्छिद्रकरो वाता वायुनिर्गममुद्रिका।

कुम्भकस्थो रेचकस्था पूरकस्थातिपूरिणी॥ ६१-१७६॥

वाय्वाकाशाधाररूपी वायुसञ्चारकारिणी।

वायुसिद्धिकरो दात्री वायुयोगी च वायुगा॥ ६१-१७७॥

आकाशप्रकरो ब्राह्मी आकाशान्तर्गतद्रिगा।

आकाशकुम्भकानन्दो गगनाह्लादवर्धीनी॥ ६१-१७८॥

गगनाच्छन्नदेहस्थो गगनाभेदकारिणी।

गगनादिमहासिद्धो गगनग्रन्थिभेदिनी॥ ६१-१७९॥

कलकर्मा महाकाली कालयोगी च कालिका।

कालछत्रः कालहत्या कालदेवो हि कालिका॥ ६१-१८०॥

कालब्रह्मस्वरूपश्च कालितत्त्वार्थरक्षिणी।

दिगम्बरो दिक्पतिस्था दिगात्मा दिगिभास्वरा॥ ६१-१८१॥

दिक्पालस्थो दिक्प्रसन्ना दिग्वलो दिक्कुलेश्वरी।

दिगघोरो दिग्वसना दिग्वीरा दिक्पतीश्वरी॥ ६१-१८२॥

आत्मार्थो व्यापितत्त्वज्ञ आत्मज्ञानी च सात्मिका।

आत्मीयश्चात्मबीजस्था चान्तरात्मात्ममोहिनी॥ ६१-१८३॥

आत्मसञ्ज्ञानकारी च आत्मानन्दस्वरूपिणी।

आत्मयज्ञो महात्मज्ञा महात्मात्मप्रकाशिनी॥ ६१-१८४॥

आत्मविकारहन्ता च विद्यात्मीयादिदेवता।

मनोयोगकरो दुर्गा मनः प्रत्यक्ष ईश्वरी॥ ६१-१८५॥

मनोभवनिहन्ता च मनोभवविवर्धीनी।

मनश्चान्तरीक्षयोगो निराकारगुणोदया॥ ६१-१८६॥

मनोनिराकारयोगी मनोयोगेन्द्रसाक्षिणी।

मनःप्रतिष्ठो मनसा मानशङ्का मनोगतिः॥ ६१-१८७॥

नवद्रव्यनिगूढार्थो नरेन्द्रविनिवारिणी।

नवीनगुणकर्मादिसाकारः खगगामिनी॥ ६१-१८८॥

अत्युन्मत्ता महावाणी वायवीशो महानिला।

सर्वपापापहन्ता च सर्वव्याधिनिवारिणी॥ ६१-१८९॥

द्वारदेवीश्वरी प्रीतिः प्रलयाग्निः करालिनी।

भूषण्डगणतातश्च भूःषण्डरुधिरप्रदा॥ ६१-१९०॥

काकावलीशः सर्वेशी काकपुच्छधरो जया।

अजितेशो जितानन्दा वीरभद्रः प्रभावती॥ ६१-१९१॥

अन्तर्नाडीगतप्राणो वैशेषिकगुणोदया।

रत्ननिमीतपीठस्थः सिंहस्था रथगामिनी॥ ६१-१९२॥

कुलकोटीश्वराचार्यो वासुदेवनिषेविता।

आधारविरहज्ञानी सर्वाधारस्वरूपिणी॥ ६१-१९३॥

सर्वज्ञः सर्वविज्ञाना मार्तण्डो यश इल्वला।

इन्द्रेशो विन्ध्यशैलेशी वारणेशः प्रकाशिनी॥ ६१-१९४॥

अनन्तभुजराजेन्द्रो अनन्ताक्षरनाशिनी।

आशीर्वादस्तु वरदोऽनुग्रहोऽनुग्रहक्रिया॥ ६१-१९५॥

प्रेतासनसमासीनो मेरुकुञ्जनिवासिनी।

मणिमन्दिरमध्यस्थो मणिपीठनिवासिनी॥ ६१-१९६॥

सर्वप्रहरणः प्रेतो विधिविद्याप्रकाशिनी।

प्रचण्डनयनानन्दो मञ्जीरकलरञ्जिनी॥ ६१-१९७॥

कलमञ्जीरपादाब्जो बलमृत्युपरायणा।

कुलमालाव्यापिताङ्गः कुलेन्द्रः कुलपण्डिता॥ ६१-१९८॥

बालिकेशो रुद्रचण्डा बालेन्द्राः प्राणबालिका।

कुमारीशः काममाता मन्दिरेशः स्वमन्दिरा॥ ६१-१९९॥

अकालजननीनाथो विदग्धात्मा प्रियङ्करी।

वेदाद्यो वेदजननी वैराग्यस्थो विरागदा॥ ६१-२००॥

स्मितहास्यास्यकमलः स्मितहास्यविमोहिनी।

दन्तुरेशो दन्तुरु च दन्तीशो दशनप्रभा॥ ६१-२०१॥

दिग्दन्तो हि दिग्दशना भ्रष्टभुक् चर्वणप्रिया।

मांसप्रधाना भोक्ता च प्रधानमांसभक्षिणी॥ ६१-२०२॥

मत्स्यमांसमहामुद्रा रजोरुधिरभुक्प्रिया।

सुरामंसमहामीनमुद्रामैथुनसुप्रिया॥ ६१-२०३॥

कुलद्रव्यप्रियानन्दो मद्यादिकुलसिद्धिदा।

हृत्कण्ठभ्रूसहस्रारभेदनोऽन्ते विभेदिनी॥ ६१-२०४॥

प्रसन्नहृदयाम्भोजः प्रसन्नहृदयाम्बुजा।

प्रसन्नवरदानाढ्यः प्रसन्नवरदायिनी॥ ६१-२०५॥

प्रेमभक्तिप्रकाशाढ्यः प्रेमानन्दप्रकाशिनी॥ ६१-२०६॥

प्रभाकरफलोदयः परमसूक्ष्मपुरप्रिया।

प्रभातरविरश्मिगः प्रथमभानुशोभान्विता।

प्रचण्डरिपुमन्मथः प्रचलितेन्दुदेहोद्गतः।

प्रभापटलपाटलप्रचयधर्मपुञ्जाचीता॥ ६१-२०७॥

सुरेन्द्रगणपूजितः सुरवरेशसम्पूजिता।

सुरेन्द्रकुल सेवितो नरपतीन्द्रसंसेविता।

गणेन्द्र गणनायको गणपतीन्द्र देवात्मजा।

भवार्णवगतारको जलधिकर्णधारप्रिया॥ ६१-२०८॥

सुरासुरकुलोद्भवः सुररिपुप्रसिद्धिस्थिता।

सुरारिगणघातकः सुरगणेन्द्रसंसिद्धिदा।

अभीप्सितफलप्रदः सुरवरादिसिद्धिप्रदा।

प्रियाङ्गज कुलार्थदः सुतधनापवर्गप्रदा॥ ६१-२०९॥

शिवस्वशिवकाकिनी हरहरा च भीमस्वना।

क्षितीश इषुरक्षका समनदर्पहन्तोदया।

गुणेश्वर उमापती हृदयपद्मभेदी गतिः।

क्षपाकरललाटधृक् स्वसुखमार्गसन्दायिनी॥ ६१-२१०॥

श्मशानतटनिष्पट प्रचटहासकालङ्कृता।

हठत्शठमनस्तटे सुरकपाटसंछेदकः।

स्मराननविवर्धनः प्रियवसन्तसम्बायवी।

विराजितमुखाम्बुजः कमलमञ्जसिंहासना॥ ६१-२११॥

भवो भवपतिप्रभाभवः कविश्च भाव्यासुरैः।

क्रियेश्वर ईलावती तरुणगाहितारावती।

मुनीन्द्रमनुसिद्धिदः सुरमुनीन्द्रसिद्धायुषी।

मुरारिहरदेहगस्त्रिभुवना विनाशक्रिया॥ ६१-२१२॥

द्विकः कनककाकिनी कनकतुङ्गकीलालकः।

कमलाकुलः कुलकलार्कमालामला।

सुभक्त तमसाधकप्रकृतियोगयोग्याचीतो।

विवेकगतमानसः प्रभुपरादिहस्ताचीता॥ ६१-२१३॥

त्वमेव कुलनायकः प्रलययोगविद्येश्वरी।

प्रचण्डगणगो नगाभुवनदर्पहारी हरा।

चराचरसहस्त्रगः सकलरूपमध्यस्थितः।

स्वनामगुणपूरकः स्वगुणनामसम्पूरणी॥ ६१-२१४॥

इति ते कथितं नाथ सहस्त्रनाम मङ्गलम्।

अत्यद्भुतं परानन्दरससिद्धान्तदायकम्॥ ६१-२१५॥

मातृकामन्त्रघटितं सर्वसिद्धान्तसागरम्।

सिद्धविद्यामहोल्लास मानन्दगुणसाधनम्॥ ६१-२१६॥

दुर्लभं सर्वलोकेषु यामले तत्प्रकाशितम्।

तव स्नेहरसामोदमोहितानन्दभैरव॥ ६१-२१७॥

कुत्रापि नापि कथितं स्वसिद्ध हानिशङ्कया।

सर्वादियोग सिद्धान्तसिद्धये भुक्तिमुक्तये॥ ६१-२१८॥

प्रेमाह्लादरसेनैव दुर्लभं तत्प्रकाशितम्।

येन विज्ञातमात्रेण भवेद्धीभैरवेश्वरः॥ ६१-२१९॥

एतन्नाम शुभफलं वक्तुं न च समर्थकः।

कोटिवर्षशतेनापि यत्फलं लभते नरः॥ ६१-२२०॥

तत्फलं योगिनामेक क्षणाल्लभ्यं भवार्णवे।

यः पठेत् प्रातरुत्थाय दुर्गग्रहनिवरणात्॥ ६१-२२१॥

दुष्टेन्द्रियभयेनापि महाभयनिवारणात्।

ध्यात्वा नाम जपेन्नित्यं मध्याह्ने च विशेषतः॥ ६१-२२२॥

सन्ध्यायां रात्रियोगे च साधयेन्नामसाधनम्।

योगाभ्यासे ग्रन्थिभेदे योगध्याननिरूपणे॥ ६१-२२३॥

पठनाद् योगसिद्धिः स्याद् ग्रन्थिभेदो दिने दिने।

योगज्ञानप्रसिद्धिः स्याद् योगः स्यादेकचित्ततः॥ ६१-२२४॥

देहस्थ देववश्याय महामोहप्रशान्तये।

स्तम्भनायारिसैन्यानां प्रत्यहं प्रपठेच्छुचिः॥ ६१-२२५॥

भक्तिभावेन पाठेन सर्वकर्मसु सुक्षमः।

स्तम्भयेत् परसैन्यानि वारैकपाठमात्रतः॥ ६१-२२६॥

वारत्रयप्रपठनाद् वशयेद् भुवनत्रयम्।

वारत्रयं तु प्रपठेद् यो मूर्खः पण्डितोऽपि वा॥ ६१-२२७॥

शान्तिमाप्नोति परमां विद्यां भुवनमोहिनीम्।

प्रतिष्ठाञ्च ततः प्राप्य मोक्षनिर्वाणमाप्नुयात्॥ ६१-२२८॥

विनाशयेदरीञ्छीघ्रं चतुर्वारप्रपाठने।

पञ्चावृत्तिप्रपाठेन शत्रुमुच्चाटयेत् क्षणात्॥ ६१-२२९॥

षडावृत्या साधकेन्द्रः शत्रूणां नाशको भवेत्।

आकर्षयेत् परद्रव्यं सप्तवारं पठेद् यदि॥ ६१-२३०॥

एवं क्रमगतं ध्यात्वा यः पठेदतिभक्तितः।

स भवेद् योगिनीनाथो महाकल्पद्रुमोपमः॥ ६१-२३१॥

ग्रन्थिभेदसमर्थः स्यान्मासमात्रं पठेद् यदि।

दूरदर्शी महावीरो बलवान् पण्डितेश्वरः॥ ६१-२३२॥

महाज्ञानी लोकनाथो भवत्येव न संशयः।

मासैकेन समर्थः स्यान्निर्वाणमोक्षसिद्धिभाक्॥ ६१-२३३॥

प्रपठेद् योगसिद्ध्यर्थं भावकः परमप्रियः।

शून्यागारे भूमिगर्तमण्डपे शून्यदेशके॥ ६१-२३४॥

गङ्गागर्भे महारण्ये चैकान्ते निर्जनेऽपि वा।

दुर्भीक्षवर्जिते देशे सर्वोपद्रववर्जिते॥ ६१-२३५॥

श्मशाने प्रान्तरेऽश्वत्थमूले वटतरुस्थले।

इष्टकामयगेहे वा यत्र लोको न वर्तते॥ ६१-२३६॥

तत्र तत्रानन्दरूपी महापीठस्थलेऽपि च।

दृढासनस्थः प्रजपेन्नाममङ्गलमुत्तमम्॥ ६१-२३७॥

ध्यानधारणशुद्धाङ्गो न्यासपूजापरायणः।

ध्यात्वा स्तौति प्रभाते च मृत्युजेता भवेद् ध्रुवम्॥ ६१-२३८॥

अष्टाङ्गसिद्धिमाप्नोति चामरत्वमवाप्नुयात्।

गुरुदेवमहामन्त्रभक्तो भवति निश्चितम्॥ ६१-२३९॥

शरीरे तस्य दुःखानि न भवन्ति कुवृद्धयः।

दुष्टग्रहाः पलायन्ते तं दृष्ट्वा योगिनं परम्॥ ६१-२४०॥

यः पठेत् सततं मन्त्री तस्य हस्तेऽष्टसिद्धयः।

तस्य हृत्पद्मलिङ्गस्था देवाः सिध्यन्ति चापराः॥ ६१-२४१॥

युगकोटिसहस्राणि चिरायुर्योगिराड् भवेत्।

शुद्धशीलो निराकारो ब्रह्मा विष्णुः शिवः स च।

स नित्यः कार्यसिद्धश्च स जीवन्मुक्तिमाप्नुयात्॥ ६१-२४२॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने ईश्वरशक्तिकाकिन्यष्टोत्तर-- सहस्रनामस्तोत्रविन्यासो नाम एकषष्टितमः पटलः॥ ६१॥

अथ द्विषष्टितमः पटलः

श्रीनन्दभैरवी उवाच

अथ नाथ प्रवक्ष्येऽहं काकिनीगुरुदेवयोः।

मन्त्रोद्धारस्तव ज्ञानं येन सिद्धो भवेद् यतिः॥ ६२-१॥

एतत्स्तवनपाठेन सहस्राख्यान्तसिद्धिषु।

राजत्वं लभते सद्योऽथवा योगी च सम्पदि॥ ६२-२॥

यथा जनकराजा च विषये गुरुभक्तिमान्।

महासिद्धो महाज्ञानी तथा भवति साधकः॥ ६२-३॥

सुरा नागा रुद्रगणाः सर्वे विद्यार्थसेवकाः।

योगी ज्ञानी तथा सिद्धाः खेचरा यक्षराक्षसाः॥ ६२-४॥

मुनयः क्रोधवेतालास्तथा चण्डेश्वरादयः।

एतच्छुभस्तवेन्द्रेण स्तुत्वा सर्वत्र सिद्धिगाः॥ ६२-५॥

पूर्णः पूर्णेन्दुबिम्बाननकमलकटाक्षादघौघापहारी।

नारीन्धाता विधाता समवति न च तान् योगयोग्यान् महेन्द्रान्।

सम्पत्तिप्राणयोगी निरवधिवरदानन्दगोप्ता शरीरो।

बालो मृत्युञ्जयस्य प्रभुरिति भयहा पातु मे गुप्तदेहम्॥ ६२-६॥

कामक्रोधापहन्ता जनयति भरतान् भारतान् पातु पृथ्वीं।

यो योगी भावयोगी मम कुलफलदः सर्वदा शं करोतु।

तत्क्रोडे लोकचक्रं तिलतुलतुलसेसन्निभं भाति सूक्ष्मं।

तच्छ्रीनाथाङ्घ्रिपादद्वयमजरमहं भावये हृत्प्रपञ्चे॥ ६२-७॥

मायां मोहे विवेकी शत--कितव--रिपूच्छेदकः प्रेरकस्थ--।

कोर्षाणी गुप्ततन्द्रावनिभवमनुजो यो महामङ्गलस्थः।

लोकातीतो तितीरो जय जय करुणानाथ दाता तपस्वी।

मन्त्रोद्धारार्थगुप्तं समवति य इह प्राणनाथं तमीडे॥ ६२-८॥

भावान्तो योऽतिगुर्वी हृदि जयकमलेऽतेऽमरप्रत्यथर्वो।

वाग्देवी देवतायै नम इति मनुना मोहितो वाक्पतीशः।

मन्त्रार्थोद्दीपनाख्यो विजयसखाकोटिभिर्वेष्टितो यो।

बालार्कानन्दरश्मिप्रचयशतमखः पातु मां दुःखजालात्॥ ६२-९॥

हृष्टाङ्गा सङ्गताङ्गाननविमलशिखाकोटिभिर्वजीतो यो।

मन्त्राच्चैतन्यहर्ता प्रणवमयशिवं तत्सदान्ते शिवं च।

ध्यात्वा माहेश्वरायां नम इति जपनात् ते महेन्द्राधिपः स्यात्।

कालीपुत्रः स एव त्वमभयवरदः सेव्यते यैः स मुक्तः॥ ६२-१०॥

हंसः प्राणाविहन्ता त्वमखिलवरदस्त्वं निदानः प्रधानः।

शान्तीशस्त्वं प्रतिष्ठः प्रणवशिवसदाभद्रमाहेश्वराय।

अन्तेऽत्युच्चैर्नमोऽन्ते मनुमिह जपते सम्पदे दोषभङ्गा--।

दानन्दाब्धौ त्वमीशो गुरुरिह चपलं चापलं मां प्रपाहि॥ ६२-११॥

आनन्दोद्रेककारी त्वमपि सकरुणासागरो भक्तिदाता।

दाता विद्याधरीणां त्वमपि सुररिपुः पार्वतीप्राणनाथः।

तारे बिन्द्वाधराढ्यं क्षरमथविधुमत्तं मन्त्रमेकाक्षरं ते।

तारान्तं त्र्यक्षरन्तं प्रजपति यदि यो योगिराड् भूतले स्यात्॥ ६२-१२॥

सर्पाण्डस्थं सुसिद्धो हरविधुमधरं चन्द्रबिन्दुस्वरूपं।

जप्त्वा नित्यं विलोमं प्रणवमृतिहरं वह्निकान्ता तदन्ते।

एतद्रूपं पदं यो भजति वरगतं हेममञ्जीरनादं।

मन्त्रेक्षानन्दचित्तं विजयवरकुलानन्ददः प्राणगं ते॥ ६२-१३॥

उच्चाटे मोहने वाप्यरिवशसमये शान्तिपुष्ट्यान्तवश्ये।

ते मन्त्रान् योजयित्वा जपति यदि सुधीः श्रीपदाब्जावलम्बी।

सिध्येत् षट्कर्मसारं परमगुरुगतः स भवेत् कल्पशाखी।

राजेन्द्रः सर्वलोके धनपतिसदृशः शम्भुनाथप्रसादात्॥ ६२-१४॥

खान्तं शक्रादिरूढं विधुनयनयुतं कामबीजं त्रिशक्तिं।

चाद्येऽन्ते ओं शिवायानलवधुमिलितं यो जपेन्नाथमन्त्रम्।

तेनाम्नायो जपित्वा कुलपथनिरतः साधकः श्रीवरेण्यः।

किं तस्यासाध्यसिद्धिं त्रिजगति स सुखी सन्मुखी योगमार्गी॥ ६२-१५॥

सर्वातीतो विहारी पदगतिरहितः सर्वगामी विरामी।

हस्ताभावो विनेता निरवधिवरदः सर्वरूपी विरूपी।

मन्त्रज्ञस्त्वं सुमन्त्री महमयसमयः संशयासारहन्ता।

मन्ता विश्वेश्वरीणां परपशुपतयेऽन्ते नमः पातु नम्रम्॥ ६२-१६॥

योगी भोगी विरागी त्वमतुलविभवः सम्भवः पञ्चचूडो।

वाणी शेषः प्रियेशः शशिग्रथितमृडाशोभिताङ्गो ह्यनङ्गः।

कामो माया रमेशः प्रथमदिनकरश्रेणि शोभावलिप्तः।

सर्वाङ्गं यः प्रपायादमलकमलगः क्रोधगो योऽवलोकम्॥ ६२-१७॥

एतच्छ्रीशङ्करस्तोत्रं यः पठेन्नियतः शुचिः।

संवत्सराद् भवेत् सिद्धिः सर्वज्ञानप्रदायिनी॥ ६२-१८॥

शुचौ वाप्यशुचौ स्तौति भक्त्या यः साधकोत्तमः।

स सर्वयातनामुक्तो योगी ग्रन्थिविभेदकः॥ ६२-१९॥

अकस्मात् सिद्धिमाप्नोति प्रेमानन्दसुभक्तिदाम्।

शतमष्टोत्तरं चास्य पुरश्चर्याविधिः स्मृतः॥ ६२-२०॥

न स्नानं न जपः कार्यं न पूजादिविधानकम्।

केवलं स्तवपाठेनानाहते सुस्थिरो भवेत्॥ ६२-२१॥

चिरञ्जीवी वीतरागो वीतसंसारभावनः।

पठित्वा धारयित्वा च योगभ्रष्टो न सम्भवेत्।

अनायासे योगसिद्धिं प्राप्नोति विपुलां श्रियम्॥ ६२-२२॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षट्चक्रप्रकाशे भैरवीभैरवसंवादे ईश्वरस्तोत्रविन्यासो नाम द्विषष्टितमः पटलः॥ ६२॥

अथ त्रिषष्टितमः पटलः

आनन्दभैरवी उवाच

कवचं श्रृणु चास्यैव लोकनाथ शिवापते।

ईश्वरस्य परं ब्रह्म निर्वाणयोगदायकम्॥ ६३-१॥

कवचं दुर्लभं लोके नामसम्मोहनं परम्।

कवचं ध्यानमात्रेण निर्वाणफलभाग्भवेत्॥ ६३-२॥

अस्य किं (पु)त्वत्रमाहात्म्यं तथापि तद्वदाम्यहम्।

केवलं ग्रन्थिभेदाय निजदेहानुरक्षणात्॥ ६३-३॥

सर्वेषामपि योगेन्द्र देवानां योगिनां तथा।

भावादि सिद्धिलाभाय कायनिर्मलसिद्धये॥ ६३-४॥

प्रकाशितं महाकाल तव स्नेहवशादपि।

सर्वे मन्त्राः प्रसिध्यन्ति सम्मोहकवचाश्रयाः॥ ६३-५॥

कवचस्य ऋषिर्ब्रह्मा छन्दोऽनुष्टुबुदाहृतम्।

ईश्वरो देवता प्रोक्त स्तथा शक्तिश्च काकिनी॥ ६३-६॥

कीलकं क्रूं तथा ज्ञेयं ध्यानसाधनसिद्धये।

हृदब्जभेदनार्थे तु विनियोगः प्रकीतीतः॥ ६३-७॥

एतच्छ्रीसम्मोहनमहाकवचस्य ब्रह्मा ऋषिरनुष्टुप् छन्द ईश्वरो देवता काकिनी शक्तिः क्रूं कीलकं ध्यानसाधनसिद्धये हृदब्जभेदार्थे जपे विनियोगः।

प्रणवो मे पातु शीर्षं ललाटं च सदाशिवः।

प्रासादो हृदयं पातु बाहुयुग्मं महेश्वरः॥ ६३-८॥

पृष्ठं पातु महादेव उदरं कामनाशनः।

पार्श्वौ पातु कामराजो बालः पृष्ठतलान्तरम्॥ ६३-९॥

कुक्षिमूलं महावीरो ललितापतिरीश्वरः।

मृत्युञ्जयो नीलकण्ठो लिङ्गदेशं सदावतु॥ ६३-१०॥

लिङ्गाधो मुद्रिका पातु पादयुग्ममुमापितः।

अङ्गुष्ठं पातु सततं पार्वतीप्राणवल्लभः॥ ६३-११॥

गुल्फं पातु त्रयम्बकश्च जानुनी युवतीपतिः।

ऊरुमूलं सदा पातु मञ्जुघोषः सनातनः॥ ६३-१२॥

सिमनी देशमापातु भैरवः क्रोधभैरवः।

लिङ्गदेशोद्गमं पातु लिङ्गरूपी जगत्पतिः॥ ६३-१३॥

हृदयाग्रं सदा पातु महेशः काकिनीश्वरः।

ग्रीवां पातु वृषस्थश्च कण्ठदेशं दिगम्बरः॥ ६३-१४॥

लम्बिकां पातु गणपो नासिकां भवनाशकः।

भ्रूमध्यं पातु योगीन्द्रः महेशः पातु मस्तकम्॥ ६३-१५॥

मूर्ध्निदेशं मुनीन्द्रश्च द्वादशस्थो महेश्वरः।

द्वादशाम्भोरुहं पातु काकिनीप्राणवल्लभः॥ ६३-१६॥

नाभिमूलाम्बुजं पातु महारुद्रो जगन्मयः।

स्वाधिष्ठानाम्बुजं पातु सदा हरिहरात्मकः॥ ६३-१७॥

मूलपद्मं सदा पातु ब्रह्मेन्द्रो डाकिनीश्वरः।

कुण्डलीं सर्वदा पातु डाकिनी योगिनीश्वरः॥ ६३-१८॥

कुण्डली मातृका पातु वटुकेशः शिवो(रो?) हरः।

राकिणीविग्रहं पातु वामदेवो महेश्वरः॥ ६३-१९॥

पञ्चाननः सदा पातु लाकिनीवज्रविग्रहम्।

स्वस्थानं द्वादशारञ्च वीरः पातु सुकाकिनीम्॥ ६३-२०॥

वीरेन्द्रः कर्णीकां पातु द्वादशारं विषाशनः।

षोडशारं सदा पातु क्रोधवीरः सदाशिवः॥ ६३-२१॥

मां पातु वज्रनाथेशोऽरिभयात् क्रोधभैरवः।

षड्चक्रं सर्वदा पातु लाकिनीश्रीसदाशिवः॥ ६३-२२॥

षोडशाम्भोरुहान्तस्थं पातु धूम्राक्षपालकः।

दिङ्गाथेशो महाकायो मां पातु परमेश्वरः ।

आकाशगङ्गाजटिलो द्विदलं पातु मे परम्।

गङ्गाधरः सदा पातु हाकिनीं परमेश्वरः॥ ६३-२३॥

हाकिनी परशिवो मे भूरपद्मं परिरक्षतु।

दण्डपाणीश्वरः पातु मनोरूपं द्विपत्रकम्॥ ६३-२४॥

साधुकेशः सदा पातु मनोन्मन्यादिवासिनम्।

पिङ्गाक्षेशः सदा पातु भयभूमौ तनूं मम॥ ६३-२५॥

उन्मनी स्थानकं पातु रोधिनीसहितं मम।

सुधाघटः सदा पातु ममानन्दादिदेवताम्॥ ६३-२६॥

आनन्दभैरवः पातु गूढदेशाधिदेवताम्।

मायामयोपहा पातु सुषुम्नानाडिकाकलाम्॥ ६३-२७॥

इडाकलाधरं पातु कोटिसूर्यप्रभाकरः।

पिङ्गलामिहिरं पातु चन्द्रशेखर ईश्वरः॥ ६३-२८॥

कोटिकालानलस्थानं सुषुम्नायां सदावतु।

सुधासमुद्रो मां पातु रत्नकोटिमणीश्वरः॥ ६३-२९॥

शिवनाथः सदा पातु कुण्डलीचक्रमेव मे।

विष्णुचक्रं महादेवः कालरात्रः कुलान्वितम्॥ ६३-३०॥

मृत्युजेता सदा पातु सहस्रारं सदा मम।

सहस्रदलगं शम्भुं स्वयम्भूः पातु सर्वदा॥ ६३-३१॥

सर्व रूपिणमीशानं पातु शर्वो हि सर्वदा।

सर्वत्र सर्वदा पातु श्रीनीलकण्ठ ईश्वरः॥ ६३-३२॥

सर्वबीजस्वरूपो मे बीजमालां सदावतु।

मातृकां सर्वबीजेशो मातृकार्णं शिवो मम॥ ६३-३३॥

अहङ्कारं हरः पातु करमालां सदा मम।

जलेऽरण्ये महाभीतौ पर्वते शून्यमण्डपे॥ ६३-३४॥

व्याघ्रभल्लूकमहिषपश्वादिभयदूषिते।

महारण्ये घोरयुद्धे गगने भूतलेऽतले॥ ६३-३५॥

अत्युत्कटे शस्त्रघाते शत्रुचौरादिभीतिषु।

महासिंहभये क्रूरे मत्तहस्तिभये तथा॥ ६३-३६॥

ग्रहव्याधिमहाभीतौ सर्पभीतौ च सर्वदा।

पिशाचभूतवेतालब्रह्मदैत्यभयादिषु॥ ६३-३७॥

अपवादा पवादेषु मिथ्यावादेषु सर्वदा।

करालकालिकानाथः प्रचण्डः प्रखरः परः॥ ६३-३८॥

उग्रः कपर्दी भीदंष्ट्री कालाच्छन्नकरः कविः।

क्रोधाच्छन्नो महोन्मत्तो गरुडीशो महेशभृत॥ ६३-३९॥

पञ्चाननः पञ्चरश्मिः पावनः पावमानकः।

शिखा मात्रामहामुद्राधारकः क्रोधभूपतिः॥ ६३-४०॥

द्रावकः पूरकः पुष्टः पोषकः पारिभाषिकः।

एते पान्तु महारुद्रा द्वाविंशतिमहाभये॥ ६३-४१॥

एते सर्वे शक्तियुक्ता मुण्डमालाविभूषिताः।

अहङ्कारेश्वराः क्रुद्धा योगिनस्तत्त्वचिन्तकाः॥ ६३-४२॥

चतुर्भुजा महावीराः खड्गखेटकधारकाः।

कपालशङ्खमालाढ्या नानारत्नविभूषिताः॥ ६३-४३॥

किंकिंणीजालमालाढ्या हेमनूपुरराजिताः।

नानालङ्कारशोभाढ्याश्चन्द्रचूडाविभूषिताः॥ ६३-४४॥

सदानन्दयुताः श्रीदा मोक्षदाः कर्मयोगिनाम्।

सर्वदा भगवान् पातु ईश्वराः पान्तु नित्यशः॥ ६३-४५॥

ब्रह्मा पातु मूलपद्मं श्रीविष्णुः पातु षड्दलम्।

रुद्रः पातु दशदलमीश्वरः पात्वनाहतम्॥ ६३-४६॥

सदाशिवः पातु नित्यं षोडशारं सदा मम।

परो द्विदलमापातु षड्शिवाः पान्तु नित्यशः॥ ६३-४७॥

अपराः पान्तु सततं मम देहं कुलेश्वराः।

पूर्णं ब्रह्म सदा पातु सर्वाङ्गं सर्वदेवताः॥ ६३-४८॥

कालरूपी सदा पातु मनोरूपी शिरो मम।

आत्मलीनः सदा पातु ललाटं वेदवित्प्रभुः॥ ६३-४९॥

वाराणसीश्वरः पातु मम भ्रूमध्यपीठकम्।

योगिनाथः सदा पातु मम दन्तावलिं दृढम्॥ ६३-५०॥

ओष्ठाधरौ सदा पातु झिल्टीशो भौतिकेश्वरः।

नासापुटद्वयं पातु भारभूतीशोऽतिथीश्वरः॥ ६३-५१॥

गण्डयुग्मं सदा पातु स्थाणुकेशो हरेश्वरः।

कर्णदेशं सदा पातु अमरोऽर्धीश्वरो मम॥ ६३-५२॥

महासेनेश्वरस्तुण्डं मम पातु निरन्तरम्।

श्रीकण्ठादिमहारुद्राः स्वाङ्गग्रन्थिषु मातृकाः॥ ६३-५३॥

मां पातु कालरुद्रश्च सर्वाङ्ग कालसंक्षयः।

अकाल तारकः पातु उदरं परिपूरकः॥ ६३-५४॥

अगस्त्यादिमुनिश्रेष्ठाः पान्तु योगिन ईश्वराः।

श्रीनाथेश्वर ईशानः पातु मे सूक्ष्मनाडिकाः॥ ६३-५५॥

त्रिशूली पातु पूर्वस्यां दक्षिणे मृत्युनाशनः।

पश्चिमे वारुणीमत्तो महाकालः सदाऽवतु॥ ६३-५६॥

उत्तरे चावधूतेशो भैरवः कालभैरवः।

ईशाने पातु शान्तीशो वायव्यां योगिवल्लभः॥ ६३-५७॥

मरुत्कोणे दैत्यहन्ता पातु मां सततं शिवः।

वह्निकोणे सदा पातु कालानलमुखाम्बुजः॥ ६३-५८॥

ऊर्ध्वं ब्रह्मा सदा पातु अधोऽनन्तः सदाऽवतु।

सर्वदेवः सदा पातु सर्वदेहगतं सुखम्॥ ६३-५९॥

इहार्हो वल्लभः पातु कालाख्येशो गुणो मम।

रविनाथः सदा पातु हृदयं मानसं मम॥ ६३-६०॥

चन्द्रेशः पातु सततं भ्रूमध्यं मम कामदः।

वज्रदण्डधरः पातु रक्ताङ्गेशस्त्रिलोचनम्॥ ६३-६१॥

बुधश्यामसुन्दरेशः पातु मे हृदयस्थलम्।

सुवर्णवर्णगुर्वीशो मम कण्ठं सदाऽवतु॥ ६३-६२॥

सिन्दूरजलदच्छन्नाद्यर्कशुक्रेश्वरो गलम्।

नाभिदेशं सदा पातु शनिश्यामेश ईश्वरः॥ ६३-६३॥

राहुः पातु महावक्रः केवलं मुखमण्डलम्।

केतुः पातु महाकायः सदा मे गुह्यदेशकम्॥ ६३-६४॥

इन्द्रादिदेवताः पान्तु परिवारगणैर्युताः।

शिरोमण्डलदिग्रूपं पान्तु वैकुण्ठवासिनः॥ ६३-६५॥

भैरवा भैरवीयुक्ताः सर्वदेहसमुद्भवाः।

भीमदंष्ट्र महाकाया मम पान्तु निरन्तरम्॥ ६३-६६॥

यज्ञभुङ्नीलकण्ठो मे हृदयं पातु सर्वदा।

उन्मत्तभैरवाः पान्तु ईश्वराः पान्तु सर्वदा॥ ६३-६७॥

क्रोधभूपतयः पान्तु श्रीमायामदनान्विताः।

इत्येतत् कवचं तारं तारकब्रह्ममङ्गलम्॥ ६३-६८॥

कथितं नाथ यत्नेन कुत्रापि न प्रकाशितम्।

तव स्नेहवशादेव प्रसन्नहृदयान्विता॥ ६३-६९॥

कृपां कुरु दयानाथ तवैव कवचाद्भुतम्।

हिताय जगतां मोहविनाशायामृताय च॥ ६३-७०॥

पठितव्यं साधकेन्द्रैर्योगीन्द्रैरुपवन्दितम्।

दुर्लभं सर्वलोकेषु सुलभं तत्त्ववेदिभिः॥ ६३-७१॥

असाध्यं साधयेदेव पठनात् कवचस्य च।

धारणात् पूजनात् साक्षात् सर्वपीठफलं लभेत्॥ ६३-७२॥

काकचञ्चुपुटं कृत्वा सप्तधा पञ्चधापि वा।

कवचं प्रपठेद्विद्वान् गूढसिद्धिनिबन्धनात्॥ ६३-७३॥

काकिनीश्वरसंयोगं सुयोगं कवचान्वितम्।

ईश्वराङ्गं विभाव्यैव कल्पवृक्षसमो भवेत्॥ ६३-७४॥

एतत्कवचपाठेन देवत्वं लभते ध्रुवम्।

आरोग्यं परमं ज्ञानं मोहनं जगतां वशम्॥ ६३-७५॥

स्तम्भयेत् परसैन्यानि पठेद्वारत्रयं यदि।

शान्तिमाप्नोति शीघ्रं स षट्कर्मकरणक्षमः॥ ६३-७६॥

आकाङ्क्षा रसलालित्यविषयाशाविवजीतः।

साधकः कामधेनुः स्यादिच्छादिसिद्धिभाग्भवेत्॥ ६३-७७॥

सर्वत्र गतिशक्तिः स्यात् स्त्रीणां मन्मथरूपधृक्।

अणिमालघिमाप्राप्तिगुणादिसिद्धिमाप्नुयात्॥ ६३-७८॥

योगिनीवल्लभो भूत्वा विचरेत् साधकाग्रणीः।

यथा गुहो गणेशश्च तथा स मे हि पुत्रकः॥ ६३-७९॥

श्रीमान् कुलीनः सारज्ञः सर्वधर्मविवजीतः।

शनैः शनैर्मुदा याति षोडशारे यतीश्वरः॥ ६३-८०॥

यत्र भाति शाकिनीशः सदाशिवगुरुः प्रभुः।

क्रमेण परमं स्थानं प्राप्नोति मम योगतः॥ ६३-८१॥

मम योगं विना नाथ तव भक्तिः कथं भवेत्।

एतत्सम्मोहनाख्यस्य कवचस्य प्रपाठतः॥ ६३-८२॥

वाणी वश्या स्थिरा लक्ष्मीः सर्वैश्वर्यसमन्वितः।

त्यागिता लभ्यते पश्चान्निःसङ्गो विहरेत् शिवः।

सदाशिवे मनो याति सिद्धमन्त्री मनोलयः॥ ६३-८३॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षट्चक्रप्रकाशे भैरवीभैरव संबादेऽनाहतेश्वरसम्मोहनाख्यकवचं नाम त्रिषष्टितमः पटलः॥ ६३॥

## अथ चतुष्षष्टितमः पटलः

श्री आनन्दभैरवी उवाच

अथ भेदान् प्रवक्ष्यामि सर्वेन्द्रियविनिग्रहान्।

शृणु चैकमनाः शम्भो यदि वाञ्छाफलेच्छुकः॥ ६४-१॥

पुनर्ज्ञानं समाप्नोति स्मृतिविज्ञानवर्जीतम्।

यत्र वै कुरुते न्यासं मम तन्त्रोक्तसम्मतम्॥ ६४-२॥

अनाहतोर्ध्वं श्रीपद्मं दलषोडशवेष्टितम्।

कण्ठकूपमहाधूमावयवे कोटिभास्वरम्॥ ६४-३॥

पञ्चरश्मियुतं क्षेत्रं तन्मध्ये केशवप्रभम्।

तन्मध्ये कणीकास्थानं परमाह्लादवर्धनम्॥ ६४-४॥

अप्रकाश्यं सुगोप्यन्तु शिवरूपं सदाशिवम्।

पूजयेन्मतिमान् ज्ञानी साकिनीशक्तिवल्लभम्॥ ६४-५॥

महाजनाः कामकलादिबीजै--

नीरुध्य वक्रं परिभावयन्ति।

मेघाभमुग्रं स्थिरविद्युदाभं।

श्यामं महासुन्दरविग्रहामलम्॥ ६४-६॥

निरूपणं नास्ति गतिप्रकाश--

श्चालोकनं पञ्चमवर्णयोगः।

जातेवीचारः प्रतिपादको यः।

सदाशिवं शान्तजनाश्रयं भजे॥ ६४-७॥

अकालचक्रं कुलकालचक्रं।

प्रकाशमानं भजतां सुरद्रुमम्।

यजन्ति चक्रं तरुणारुणायुतं।

सिन्दूरशैलामलदीप्तवन्तम्॥ ६४-८॥

ब्रह्मादिदेवाः प्रतिपूजयन्ति।

तदादिदेवस्य समाधिभावम्॥ ६४-९॥

भल्लेशी भल्लकुल्ला कलयति वलिभिर्वीरभल्लूकभाला--।

भर्गभ्रान्तिवीभान्ती भयलविलकलाकालसर्पातुरस्था।

कौला कैलासमालाकुलकमलजले बिन्दुलावण्यलीला।

कण्ठाम्भोजे ज्वलन्ती कनकमधुगृहे पीठपूरे समाधौ॥ ६४-१०॥

ध्येया या चिन्तनीया रुचिरविकिरणा साकिनी पीतवस्त्रा।

सा पायान्नीरदाभं वरदसमददं चन्द्रचूडं सदेशम्।

ब्रह्मेन्द्रैर्योगिमुख्यैर्वीरचयति दलग्रन्थि संस्थानचित्रं।

विद्युत्पुञ्जप्रकाशा मुनिगणनिलया सेव्यतां साधकेन्द्रैः॥ ६४-११॥

आकाशाख्य प्रकाशे द्विरसदलकलाप्रोज्वले ब्रह्ममार्गे।

जीवानां हंसमाला विचरितपवने धूमधूमेन्दुशुभ्रे।

श्रीमार्तण्डो विशुद्धे जयति कुलपथोद्दीपनः प्राणवायुः।

साकिन्या योगिनीभिर्वसति सुखपदामोदचिन्तामनीशः॥ ६४-१२॥

द्वावेव धत्तः सकलञ्च कालं।

सदाशिवौ तौ मधुपूरवासिनौ।

इच्छाक्रियाज्ञानविराजितौ यौ।

प्रधानदेवौ भजतां सुखास्पदौ॥ ६४-१३॥

विशुद्धपद्मे प्रकृतीश्वरौ यौ।

प्रचक्रतू बाणशिवादिभेदिनौ।

अकाररूपे गुरुमन्त्रदीप्तौ।

कुलाकुलार्थौ पथि भावनीयौ॥ ६४-१४॥

महाभैरव उवाच

कुलजे परमे विद्ये नित्यानन्दस्वरूपिणि।

भेदान् सर्वान्मम स्नेहाद्वक्तुमर्हसि सुन्दरि॥ ६४-१५॥

कालकूटमहाभीममदोन्मादसुविस्मृतः।

अहं न जाने योगार्थान् नित्यायुर्बन्धनप्रियान्॥ ६४-१६॥

यदि मां रक्षितुं शक्ता विषाक्ताङ्गं सदावतु।

कथं वा कण्ठसञ्चारः कथं वा राक्षसी क्रिया॥ ६४-१७॥

कथं वा रिपुविद्वेषी कथं वा मङ्गलोदयः।

कियद्वा विनयाह्लादं कियद्वा कालसाधनम्॥ ६४-१८॥

नवीनत्वं कथं याति ध्यानं वा कीदृशं तव।

तवाङ्गागुरुसद्भावं कुलपीठप्रदर्शनम्॥ ६४-१९॥

कुण्डलीगमनं कुत्र साधकानां कुलं कुतः।

वर्णध्यानं कुत्र पदे दलभेदः कथं भवेत्॥ ६४-२०॥

स्फूतीवीद्याबियोगो हि पूर्वज्ञानसमोदयः।

कथं समरसप्राप्तिः कथं वा कायकल्पनम्॥ ६४-२१॥

मथनं कामदेवस्य कथं देहे व्यवस्थितिः।

कण्ठाम्भोजस्थिरः को वा भावज्ञानी च को जनः॥ ६४-२२॥

भावादि त्वत्कृपादृष्ट्या वद आदौ पतिं प्रति।

श्रीनन्दभैरवी उवाच

आदौ श्रीकण्ठसञ्चारः श्रूयतां परमेश्वर॥ ६४-२३॥

श्रोतव्यं मन्त्रिभिर्नीत्यं कर्तव्यं प्रत्यहं प्रभो॥ ६४-२४॥

कण्ठे षोडशकं दलं तदुदरे श्रीकणीकामण्डले।

तद्वाह्ये चतुरस्त्रकं सुखमयं षड्कोणमन्तर्गतम्।

बाह्ये द्वारचतुष्टयं नवगृहं भूबिम्बषट्कं ततः।

श्रीचन्द्रातपमूर्ध्वके मधुपुरी तत्कणीकायां यजेत्॥ ६४-२५॥

तत्कणीकामध्यनिगूढदेशे।

सम्भाति नित्यं मधुपूरदेशः।

तन्मध्यदेशेऽष्टपुरीप्रकाशः।

कौलक्रियासाधनसिद्धये स्यात्॥ ६४-२६॥

पूर्वादिताः प्रेमकलाधिनाथाः।

प्रभान्ति माध्वीरसरसारस्निग्धाः।

तेषां प्रणामः क्रियते यतीन्द्रै--

र्ध्येयाः सदा कण्ठदलप्रकाशः॥ ६४-२७॥

वामेश्वरः पूर्वगृहं प्रयाति।

राहुर्गृहं ज्येष्ठगणेश्वरीशः।

रौद्रात्मको मृत्युपतेर्गृहं तथा।

कालीश्वरो नैर्ऋतिहेममन्दिरम्॥ ६४-२८॥

सकलविकरणीशो वारुणां मन्दिरं तत्।

सवनधिकरणीशो पावनः मन्दिरं तत्।

सबलविमथनीशो मन्दिरं चोत्तरस्थं।

समवति निजगेहं सर्वभूताधिदेवः॥ ६४-२९॥

मध्यं मनोन्मनीनाथः सर्वालम्भस्तदूर्ध्वकम्।

मन्दिरं हेमजडितं नानारत्नविनिमीतम्॥ ६४-३०॥

एतेषां शक्तयो ध्येयाः स्वस्ववामपदोज्ज्वलाः।

तासां नाम्ना योजयित्वा स्वमन्त्रैः प्रणवेन वा॥ ६४-३१॥

सम्पुटीकृत्य जप्त्वा च असाध्यं खलु सिध्यति।

नवकोणोर्ध्वगेहे च पूर्वस्यां दिशि राजते॥ ६४-३२॥

वामा देवी महातेजोमयी भुजचतुष्टया।

नानालङ्कारशोभाङ्गी साधकाऽभीष्टदा सदा॥ ६४-३३॥

वह्नौ हेममन्दिरे च ज्येष्ठा देवी चतुर्भुजा।

सर्वालङ्कारसंयुक्ता पद्ममालाविराजिता॥ ६४-३४॥

ध्येया सदा योगिमुख्यैः सर्वसिद्धिसमृद्धये।

यमस्वर्णमन्दिरे च रौद्री परमसिद्धिदा॥ ६४-३५॥

चतुर्भुजा त्रिनेत्रा च ध्येयालङ्कारमण्डिता।

नैर्ऋते हेमगेहे च काली देवी चतुर्भुजा॥ ६४-३६॥

सर्वालङ्कारशोभाढ्या त्रिनेत्रा वरदायिनी।

सर्वास्त्रधारिणी देवी मुण्डमालासुशोभिता॥ ६४-३७॥

ध्येया योगेन्द्रविद्याभिः परमा ज्ञानदायिनी।

कलविकरणी देवी भाति वारुणमन्दिरे॥ ६४-३८॥

चतुर्भुजा योगिमाता त्रिनेत्रा भरणान्विता।

सा ध्येया योगिमुख्यैश्च अणिमाद्यष्टसिद्धिदा॥ ६४-३९॥

पावने स्वर्णगेहे च ध्येया साधकसत्तमैः।

बन्धूकपुष्पसङ्काशा केयूरहारमालिनी॥ ६४-४०॥

बलविकरणी देवी सर्वाभरणभूषिता।

चतुर्भुजा त्रिनेत्रा च सर्वादिसिद्धिदायिनी॥ ६४-४१॥

बलप्रमथिनी देवी धनदा मोक्षदा सदा।

कुबेरहेमगेहस्था सर्वानन्दकरोद्यता॥ ६४-४२॥

श्रीसर्वभूतदमनी ध्येया ईशानमन्दिरे।

प्रथमारुणसङ्काशा करवीरस्रजान्विता॥ ६४-४३॥

चतुर्भुजा त्रिनेत्रा च सर्वालङ्कारशोभिता।

मध्ये श्रीकणीकायाश्च ध्येया सर्वजनेश्वरैः॥ ६४-४४॥

सूर्यप्रभा सदा ध्येया देवी श्रीदा मनोन्मनी।

चतुर्भुजा महादीप्तिरलङ्कारोपशोभिता॥ ६४-४५॥

त्रिनेत्रा वरदा सर्वा सर्वान्तः करणस्थिता।

सकलगुणात्मशक्तियुक्ता देवी चतुर्भुजा॥ ६४-४६॥

अरुणायुतसङ्काशा रुण्डमालाविराजिता।

अनन्तानन्तमहिमा ध्येया साद्या चतुर्भुजा॥ ६४-४७॥

त्रिनेत्रा रक्तवसना सर्वालङ्कारमण्डिता।

एतासां ध्यानमाकृत्य पूजयेद्विधिवत् ततः॥ ६४-४८॥

मनःकल्पितद्रव्यैश्च साक्षात्कल्पितद्रव्यकैः।

जप्त्वा नाम्ना योजयित्वा समर्प्य विधिवत्सुधीः॥ ६४-४९॥

कृत्वा मांसासवैर्योगी तर्पयेन्मधुधारया।

अभिषेकं कुलद्रव्यैः साधकैर्योगिभिः सह॥ ६४-५०॥

भोजयेद् योगिमुख्यांश्च ब्राह्मणान् वेदपारगान्।

नानाविधकुलद्रव्यै र्भक्ष्यैर्भोज्यैश्च योगिराट्॥ ६४-५१॥

ततः प्रकाशमाप्नोति मनोयोगेन वार्पयेत्।

एतत्प्रकारः कण्ठस्य सञ्चारः परमेश्वर॥ ६४-५२॥

लभ्यते विधिनानेन दिव्यभावेन वार्पयेत्।

ततः सिद्धिमवाप्नोति साकिनीदर्शनं तथा॥ ६४-५३॥

पत्न्या सार्धं साधकेन्द्रः सिद्धमन्त्रमवाप्नुयात्।

अथ वक्ष्ये महाकाल राक्षसीं परमां क्रियाम्॥ ६४-५४॥

येन कर्मसाधनेन शिवत्वमपि लभ्यते।

चीनाचारं राक्षसीनां कुलीनानां सदाशिव॥ ६४-५५॥

राक्षसी वेदभाषा च वेदमन्त्रविशोधिता।

चीनाचारं राक्षसीनां साधनादेव सिध्यति॥ ६४-५६॥

चीनाचारं प्रवक्ष्यामि राक्षसीनां महाफलम्।

अष्टादश प्रकारन्तु चीनाचारं प्रचक्षते॥ ६४-५७॥

सर्वत्र शुद्धसद्भावः प्रयोजनविरागवित्।

उत्तमोत्तमसंज्ञं चानुत्तमोत्तममेव च॥ ६४-५८॥

अत्यन्तोत्तमसंज्ञं चात्यन्तानुत्तममेव च।

अनुत्तमोत्तमं नाथ चात्युत्तममथापरम्॥ ६४-५९॥

उत्तमं सप्तविधञ्च चीनाचारेषु योजयेत्।

अत्यन्तमध्यमं चीने चातिमध्यममेव च॥ ६४-६०॥

मध्यमध्यमसञ्ज्ञञ्च मध्यमं तु चतुर्विधम्।

अत्यन्ताधमसञ्ज्ञञ्चात्यन्ताधममेव च॥ ६४-६१॥

अत्यधमाधमं चैवात्यन्ताधमाधमं तथा।

अत्यधमं तथा नाथाधमाधममथापरम्॥ ६४-६२॥

अधमं सप्तमं विद्धि राक्षसीचीनसाधने।

दिनपक्षमासवर्षभेदेषु कारयेत् क्रमात्॥ ६४-६३॥

आदावुत्तमसिद्धान्तश्रवणं कुरु शङ्कर।

यदा ऋतुमती पृथ्वी त्रिदिनं चाम्बुवाचिषु॥ ६४-६४॥

तद्दनात्तु दिनं यावत्तावद्धि मांसचर्वणम्।

चीनद्रुमासवानन्दपञ्चतत्त्वनिषेवणम्॥ ६४-६५॥

अबाधतो यः करोति चोत्तमोत्तमेव तत्।

अनुत्तमोत्तमं वक्ष्ये पूजाकालेषु योजयेत्॥ ६४-६६॥

केवलं गुप्तभावेन पञ्चतत्त्वनिषेवणम्।

अत्यागं स्वीयबीजं तु कुलपीठस्य मन्थनम्॥ ६४-६७॥

तत्पीठमथनोद्भूतसुधारसनियोजनम्।

आसवेषु च सर्वेषु तदासवनिषेवणम्॥ ६४-६८॥

अष्टप्रकारमांसाढ्यं सदा चर्वणतत्परम्।

पूजाकालं विना द्रव्यं नाहरेत् साधकोत्तमः॥ ६४-६९॥

अनुत्तमोत्तमं तद्धि सर्वदेशे च सर्वदा।

अत्यन्तोत्तमचीनं तु वक्ष्याम्यत्र विधानतः॥ ६४-७०॥

येन सिद्धो भवेन्मन्त्री सदाशिवादिदर्शनम्।

प्रत्यहं वत्सरं व्याप्य निशायामर्धरात्रके॥ ६४-७१॥

पञ्चतत्त्वं समानीय अष्टनायिकया सह।

पूजयेत् क्रमतो मन्त्री तत्कथाश्रवणोत्सुकः॥ ६४-७२॥

क्रमेण मथनं कृत्वाऽऽसवे संयोज्य नित्यशः।

शुद्धभावेन गृह्णीयाद् ब्राह्मण्यां बीजमर्पयेत्॥ ६४-७३॥

तद्बीजेन समासिञ्चेन्मस्तकादिषु पङ्कजे।

दत्वा ताभ्यो दक्षिणादीन् स्वातन्त्र्यमपि चाचरेत्॥ ६४-७४॥

अत्यन्तोत्तममेतद्धि न चारम्भो विशां विना।

अत्यन्तानुत्तमं विद्धि येन सिद्धो भवेन्मनुः॥ ६४-७५॥

आनन्दे त्यागमापन्ने पुनरानन्दमाश्रयेत्।

सर्वदानन्दसंयुक्तः प्रजपेद्यजनादिषु॥ ६४-७६॥

न विशेषो दिवारात्रौ सर्वदारसुसंयुतः।

उक्तासनोपविष्टस्तु निर्जने कुलसाधनम्॥ ६४-७७॥

अनुत्तमोत्तमं विद्धि मायाजालनिकृन्तनम्।

कालाकालं विहायादौ स्वकुलं परमेव वा॥ ६४-७८॥

तन्नाम्नाहूय यत्नेन दापयेदासनादिकम्।

महाशङ्खं समानीय कुलद्रव्यं तथानघ॥ ६४-७९॥

विधिना पूजनं कृत्वा कुलवारे च साधकः।

दाता भोक्ता संविदश्च शोधितस्य कुलेश्वर॥ ६४-८०॥

स्वीयाङ्गे न्यासजालादीन् तासामङ्गे ततः परम्।

शिवपूजां ततः कृत्वा कुलपूजां समारभेत्॥ ६४-८१॥

पीठे संयोज्य शम्भुं चाक्षुब्धोऽयुतजपं चरेत्।

जपं समर्पयेत् तस्या वामहस्ताम्बुजे सुधीः॥ ६४-८२॥

विसर्जनं स्वबीजस्य ततो नित्याप्रतर्पणम्।

आसवे योजयित्वा तु तया सार्धं पिबेन्मधु॥ ६४-८३॥

वामभागे कुलं कृत्वा लक्षजाप्यं समापयेत्।

कुलद्रव्यैश्च होमः स्यात् तद्दशांशेन तर्पणम्॥ ६४-८४॥

तद्दशांशाभिषेकं तु दशांशं विप्रभोजनम्।

ततः कुमारीभोज्यञ्च मधुमांसासवैः प्रभो॥ ६४-८५॥

प्रत्यहं वत्सरं व्याप्य कुलवारे कुजे शनौ।

वत्सरान्ते मम पदाम्भोजं पश्यति निश्चितम्॥ ६४-८६॥

अनुत्तमोत्तमञ्चैतद् राक्षसीचीनसाधने।

अत्युत्तमं प्रवक्ष्यामि सावधानावधारय॥ ६४-८७॥

सदा जितेन्द्रियो भूत्त्वा योगाभ्यासपरायणः।

मांसासवाद्यैः सन्तर्प्य कालिकां घोरनिःस्वनाम्॥ ६४-८८॥

एकादशीव्यतीपाते कुलवारे कुले तिथौ।

कुलमानीय साक्षाद्वै परंब्रह्ममयो भवन्॥ ६४-८९॥

केवलं लयभावेन देवीपूजां समारभेत्।

कुलदृष्ट्या च तद्बुद्ध्या तत्तद्ध्यानपरायणः॥ ६४-९०॥

मूलाधारे महाचक्रे योगिनीकोटिराजिते।

कोटिब्रह्मालये सिद्धे सूक्ष्ममार्गेण साधकः॥ ६४-९१॥

ज्योतिराकाशगङ्गाभिर्यथाधाराभिराप्लुताम्।

पृथिवीं ब्रह्मजननीं ब्रह्मानन्दस्वरूपिणीम्॥ ६४-९२॥

तथा कुलमयीं नित्यां नित्यानन्दस्वरूपिणीम्।

कुलकुण्डलिनीं देवीं विश्वमातां त्रिलोचनाम्॥ ६४-९३॥

महाघनरसोल्लासां महोन्मादादिबिन्दुभिः।

गलिताभिर्महाधाराजन्याब्धिशतकोटिभिः॥ ६४-९४॥

परिच्छिन्नाभिरुद्धते ज्योतीरन्ध्रे महापथे।

अत्रैव सततं भाति सूक्ष्मात्सूक्ष्मतराऽपरा॥ ६४-९५॥

बिन्दूद्भवा महाधारा कोटिसौदामिनीप्रभा।

तस्या रूपस्य का पूजा कुलदेव्या महाप्रभो॥ ६४-९६॥

केवलं बिन्दुधाराभिस्तर्पयामि सदानघाम्।

कुलदेवीं जगद्रूपां स्थूलसूक्ष्मस्वरूपिणीम्॥ ६४-९७॥

मूलादिब्रह्मरन्ध्रान्तं तर्पयामि सुरेश्वरीम्।

इत्येवं मनसा यस्य तस्य किं बाह्यपूजया॥ ६४-९८॥

तथापि कल्पयाम्यत्र सा(शा)रदीये महोत्सवे।

यथा कुलवतीं दुर्गां तथाहं कुलनायिकाम्॥ ६४-९९॥

मूलपद्मात्समाकृष्य नागिनीं नागकन्यकाम्।

कुहकोद्भवरूपस्थां मनुष्यगणकन्यकाम्॥ ६४-१००॥

वामेऽहं कल्पयाम्यत्र कुलपीठे मनोरमे।

कुलदेवीं वामभागे पूजयाम्यधुनामुना॥ ६४-१०१॥

तर्पयामि महाबिन्दूद्भवासवघटामृतैः।

मांसाष्टकयुतैर्नीत्यं मुद्राभिर्मीनमिश्रितैः॥ ६४-१०२॥

यथान्तःकरणे सा तु तथा मे बाह्यतर्पणम्।

शुभं भवतु नित्यं मे महारात्रिश्च सौख्यदा॥ ६४-१०३॥

कुलं भवतु सौख्यं मे बाह्यपूजा शुभा मम।

इत्येवं मनसा यस्य तस्याः सौख्यं कुतः प्रभो॥ ६४-१०४॥

सर्वदा पूजनं तस्य चैव कालो निरर्थकः।

अभेदबुध्या सर्वत्र पूजनं भावसाधने॥ ६४-१०५॥

अत्युत्तममिति प्रोक्तं कौलानां योगसाधने।

जातिवृत्तं न तत्रैव यदीच्छति फलोदयम्॥ ६४-१०६॥

उत्तमं सम्प्रवक्ष्येऽहं यथोचितफलोदयम्।

अत्र तन्त्रे क्रिया गुप्ता गुप्तमामन्त्रितं कुलम्॥ ६४-१०७॥

गुप्तं कुलरसं नित्यं गुप्तपानं सदा प्रभो।

वर्षे वर्षे पूर्णसिद्धिं प्राप्नुयान्नात्र संशयः॥ ६४-१०८॥

मासे मासे तर्पणं तु पक्षे पक्षे कुलक्रिया।

दिने दिने सदा पानं कौलानामिति लक्षणम्॥ ६४-१०९॥

गुप्तक्रियाभिः सिध्येत न प्रकाश्यं कदाचन।

सर्वत्यागी तदैव स्यात् प्रकाशो जायते यदि॥ ६४-११०॥

उत्तमं भावमालम्ब्य क्षिप्रं सिद्ध्यति साधकः।

तस्यैव लक्षणं नित्यं तन्त्रनाथे निरूपितम्॥ ६४-१११॥

शिवोक्तिलक्षणे प्रोक्तं भैरवेण मया सह।

तत्सर्वं ज्ञानमालम्ब्य चोत्तमस्त्वं भविष्यसि॥ ६४-११२॥

अत्यन्तमध्यमं वक्ष्ये चीनाचारक्रमेण तु।

यत्कृत्वा मुनयः सर्वे कौललक्षणभावकाः॥ ६४-११३॥

पीठोपपीठमध्ये च महापीठे कुलार्णवे।

महाचीनद्रुमलतावेष्टिते साधकान्विते॥ ६४-११४॥

तत्रैकमासनं कृत्वा तिथित्रयदिने शुभे।

उक्तासनमुपानीय तत्र निश्चयचेतसा॥ ६४-११५॥

लक्षमेकं जपेन्नित्यं कामनाविषयस्थितः।

कृष्णे वा शुक्लपक्षे वा होमादिविधिमाचरेत्॥ ६४-११६॥

कुमारीं भोजयित्वा तु कण्ठे तौ भावयेत्सदा।

मासेन सिद्धिमाप्नोति कुलद्रव्यप्रसादतः॥ ६४-११७॥

अत्यन्तमध्यमं चीनं कथितं तव यत्नतः।

अतिमध्यममावक्ष्ये यज्ज्ञात्वा योगिराड् भवेत्॥ ६४-११८॥

कालाकालं विहायाथ सदान्तःकरणस्थितः।

भावयित्वा सुधादेवीं डाकिन्यादिस्वरूपिणीम्॥ ६४-११९॥

पञ्चशक्तिं समानीय पूजयेत्कुलजै रसैः।

कुलपुष्पैः साधकेन्द्रः कुलीनं भावयेत्ततः॥ ६४-१२०॥

यथा बाह्ये तथा हृद्ये कण्ठे मणिगृहे तथा।

वैकुण्ठे विष्णुकमले मूलाधारे पुनः पुनः॥ ६४-१२१॥

ध्यात्वा ध्यात्वा तर्पयेद्यः स कामविजयी भवेत्।

अतिमध्यममेतत्तु योगिनामपि दुर्लभम्॥ ६४-१२२॥

मध्यमध्यममावक्ष्ये कुलीनफलसागरम्।

वाञ्छासिद्धिकरं साक्षात् शिववद्विहरेन्मुदा॥ ६४-१२३॥

मासमध्ये पञ्चवारं पञ्चतत्त्वनिषेवणम्।

यजनं भावनं नित्यं होमकर्म समापयेत्॥ ६४-१२४॥

बाह्यक्रियासु निपुणः श्मशाने विपिनेऽपि वा।

भावयेत् कान्तं शिरसि काकिनीं साकिनीं कलाम्॥ ६४-१२५॥

पञ्चशक्तिं द्वयं वापि गृहीत्वा तर्पणं चरेत्।

तर्पणान्ते जपेद्विद्यामहनीशमनातुरः॥ ६४-१२६॥

होमतर्पणकाले तु कुलशक्तिं प्रपूजयेत्।

आसनं स्वागतं पाद्यमर्घमाचमनीयकम्॥ ६४-१२७॥

मधुपर्कं च मनस्नानवसनाभरणानि च।

गन्धपुष्पधूपदीपनैवेद्यं शीतलं जलम्॥ ६४-१२८॥

पक्वान्नं पक्वमांसञ्च पक्वञ्च व्यञ्जनादिकम्।

कर्पूरवासितं नीरं ताम्बूलं तदनन्तरम्॥ ६४-१२९॥

लवङ्गादिसमायुक्तं दत्वा गन्धानुलेपनम्।

गन्धमाल्यादिकं दत्वा प्रार्थयेत्सुहितं वरम्॥ ६४-१३०॥

तस्यै दत्वा स्वमात्मानं कुलपीठे स्थिरो भवेत्।

कण्ठपद्मे मनो याति शक्तिमन्त्रप्रभावतः॥ ६४-१३१॥

मध्यमध्यममेतद्धि कुलीनविप्रभोजनम्।

क्रमशः सिद्धिमाप्नोति मध्यमं शृणु भैरव॥ ६४-१३२॥

यथा काले कुलद्रव्यं समानीय प्रयत्नतः।

नवशक्तिमेकशक्तिं त्रिशक्तिं वासमाहरेत्॥ ६४-१३३॥

गुप्तस्थाने समानीय गुप्तद्रव्यैः प्रपूजयेत्।

दशोपचारविधिना पूजयेदिष्टदेवताम्॥ ६४-१३४॥

प्रातःकाले च मध्याह्ने सायाह्ने मध्यरात्रिके।

सहस्रजपमाकृत्यार्चनं वारचतुष्टयम्॥ ६४-१३५॥

मध्यरात्रौ शक्तिमात्रं स्थापयेदग्रतः सुधीः।

साक्षान्मूर्त्तौ दिगम्बर्यां मुद्रया परिपूजयेत्॥ ६४-१३६॥

जयन्ती मङ्गला काली भद्रकाली कपालिनी।

दुर्गा शिवा क्षमा धात्री स्वाहा स्वधा नमोऽस्तु ते॥ ६४-१३७॥

अनेन मनुनाभ्यर्च्च्य परंब्रह्मस्वरूपिणीम्।

कुलद्रव्यं पिबेत् पश्चाच्छक्तिदत्तं पुनः पुनः॥ ६४-१३८॥

शक्तिप्रसादं विधिना संशोध्य पानमाचरेत्।

शोधयामि परां देवीं कुलास्यपद्मनिर्गताम्॥ ६४-१३९॥

पिबामि परमानन्दैस्तत्प्रसादात्कुलेश्वरि।

इत्यादि मध्यमं प्रोक्तं चीनाचारेषु दुर्लभम्॥ ६४-१४०॥

अत्यन्ताधमचीनं तु वक्ष्याम्यत्र विशेषतः।

मासमध्ये त्रिदिनं तु तर्पणं तु त्रयं त्रयम्॥ ६४-१४१॥

अष्टोत्तरशतं जाप्यं केवलं शक्तिशोधनम्।

ऋषिमातृकराङ्गादिन्यासं स्वीयतनौ चरेत्॥ ६४-१४२॥

कुलाङ्गेऽपि समाकृत्य पीठे शम्भुं नियोजयेत्।

धर्माधर्मकलास्नेहमात्माग्नौ मनसा स्रुचा॥ ६४-१४३॥

सुषुम्नावर्त्मना नित्यमक्षवृत्तीर्जुहोम्यहम्।

स्वाहान्तमन्त्रमुच्चार्य नियोज्य जपमाचरेत्॥ ६४-१४४॥

जपं समर्प्य विधिना स्तोत्रं कवचमापठेत्।

कवचान्ते ततो मन्त्री स्वबीजहोममाचरेत्॥ ६४-१४५॥

कुलत्रिकोणगगनवायूज्वलकुलानले।

कुलप्रकाशिते पद्मतले च मनुनामुना॥ ६४-१४६॥

प्रकाशाकाशहस्ताभ्यामवलम्ब्योन्मनीस्रुचा।

धर्माधर्मकलास्नेहपूर्णमग्नौ जुहोम्यहम्॥ ६४-१४७॥

स्वाहेति मन्त्रमुच्चार्य ततस्तेनैव तर्पणम्।

तर्पणान्ते चाभिषेकं स्वशक्तिकुलजै रसैः॥ ६४-१४८॥

शक्तीनां ब्राह्मणस्थाने भोजनञ्च समापनम्।

केवलं त्रिदिनं मासे चात्यन्ताधमलक्षणम्॥ ६४-१४९॥

अत्यन्तात्यधमं चीनं वक्ष्यामि कुलवल्लभ।

राक्षसीक्रियया व्याप्तं भुजङ्गाकारभोजनम्॥ ६४-१५०॥

अहमेव परंब्रह्म बुद्ध्यात्मानं प्रतर्पयेत्।

आत्मम्भरी स्वयं नित्यं शक्तित्यागपरो नरः॥ ६४-१५१॥

अन्तरे च न तु त्यागो मनसा कर्मसाधनम्।

पञ्चतत्त्वं स्वयं पीत्वा सदानन्दस्वरूपवान्॥ ६४-१५२॥

बीजत्यागं न करोति लिङ्गं वक्त्रे पुनः पुनः।

दन्तावलियुते वक्त्रे बीजोच्चारणमुच्चकैः॥ ६४-१५३॥

उपांशु मानसं वापि जप्त्वा ब्रह्ममयो भवेत्।

न तु बाह्ये महापूजा एकादशीव्रतं विना॥ ६४-१५४॥

एकादश्यामवश्यं तु पूजयेत्सुरसुन्दरीम्।

यथाविधि विधानेन शक्तिं सन्तोषयेत् सुधीः॥ ६४-१५५॥

सर्वदेशे सर्वपीठे तत्राशुचिर्न विद्यते।

अशुचेर्भावमालब्य नरकं खलु गच्छति॥ ६४-१५६॥

विष्ठायां गन्धनिबिडे मांसमेदादिगन्धके।

सुगन्धदेशके वापि एकभावेन पूजयेत्॥ ६४-१५७॥

पूजान्ते षट्सहस्राख्यस्तोत्रं कवचमापठेत्।

तदन्ते विहरेद्वीरो मदनाह्लादवजीतः॥ ६४-१५८॥

अन्तरे कुण्डलीयुक्तः कामकर्ता स्वयं भवेत्।

न तु बाह्ये स्वबीजस्य त्याग एव सुरेश्वर॥ ६४-१५९॥

तदा योगे स्थिरो याति चात्यन्तात्यधमादिभिः।

अत्यधमाधमं वक्ष्ये कालात्मञ्छृणु सादरम्॥ ६४-१६०॥

मासमध्ये वारमेकं कुलाचारं सचीनकम्।

कुलमालां समानीय कुलेन पुटितं मनुम्॥ ६४-१६१॥

शक्तियुक्तो जपेन्मन्त्री मन्त्रध्यानपरायणः।

चतुर्दण्डगतो रात्रौ जपारम्भ उदीरितः॥ ६४-१६२॥

जपेत्तु सकलां रात्रिं वेददण्डस्थिते न तु।

भयं नैव तु कर्तव्यं हास्यं तत्र विवर्जयेत्॥ ६४-१६३॥

कालीतन्त्रविधानेन तारातन्त्रक्रमेण वा।

पूजाजपं समर्प्याथ शक्तिं सम्प्रार्थयन्मुदा॥ ६४-१६४॥

स्तोत्रं कवचमुच्चार्य विहरेच्च यथाविधिम्।

मासमध्ये दिनमेकं कृत्वा योगी भवेन्नरः।

पशुत्वं न समायाति वीरतन्त्रप्रसादतः।

एतदन्यदिने नाथ पञ्चतत्त्वाक्ततण्डुलम्॥ ६४-१६५॥

वदनाम्भोरुहे दत्त्वा जपेत्तद्गतमानसः।

एवं वत्सरपर्यन्तं कृत्वा योगी भवेन्नरः॥ ६४-१६६॥

अत्यधमाधमं कृत्वा पशुत्वमपि मुञ्चति।

कुलेश परमानन्द वक्ष्येऽत्यन्ताधमाधमम्॥ ६४-१६७॥

भवेयुः साधकाग्र्याश्च वीराः पशुगुणोदयाः।

उच्चदेशे गृहं कृत्वा मण्डलाकारमेव च॥ ६४-१६८॥

शक्तिं बिना चरेत्कार्यं नृणां मुण्डत्रयोदशे।

आसनं तत्र संस्कृत्य जपेत्तु शङ्खमालया॥ ६४-१६९॥

अनुकल्पितद्रव्येण साक्षात्कल्पितद्रव्यकैः।

पूजयेत्परया भक्त्या स्वात्मानं शक्तिकुण्डलीम्॥ ६४-१७०॥

एकाकी निर्जने देशे तद्गतः प्रजपेन्मनुम्।

कुलपूजाक्रमेणैव आत्मशक्तिं प्रतर्पयेत्॥ ६४-१७१॥

सहस्रनामयोगाङ्गं षट्चक्रभेदनक्रमात्।

पठित्वा स्तोत्रकवचं विन्यसेदात्मनो हृदि॥ ६४-१७२॥

गुप्तजाप्यक्रमेणैव सिद्धो भवति मानवः।

इत्येतत्कथितं नाथ महासिद्धिकरं परम्॥ ६४-१७३॥

दिवारात्रौ साधकस्य विशेषो नास्ति शङ्कर।

पशुभावं परित्यज्य सिद्धोऽत्यन्ताधमाधमम्॥ ६४-१७४॥

अत्यधमं प्रवक्ष्यामि चीनाचारक्रमेण तु।

येन सिद्धो भवेन्मन्त्री पशुभावं विमुञ्चति॥ ६४-१७५॥

श्रृणु प्राणेश वरद सिद्धानामधिपाधिप।

पातालमण्डपं कृत्वा गन्धनिर्गमवजीतम्॥ ६४-१७६॥

तत्रासनं समाकृत्य तत्र मुण्डत्रयं त्रयम्।

तन्मध्ये निवसेन्नाथ कुलविद्यासमन्वितः॥ ६४-१७७॥

कुलीनां पण्डितां नारीं दिव्यालङ्कारमण्डिताम्।

सर्वदानन्दनिलयां रसिकां क्रोधवजीताम्॥ ६४-१७८॥

सुन्दरीं यौवनाह्लादललितां देवयोगिनीम्।

एवंभूतां देवशक्तिं वामभागे नियोजय च॥ ६४-१७९॥

पूजयेत्परया भक्त्या यथेष्टदेवतां प्रभो।

केवलं पूजनं कृत्वा त्रिदिनं कुलमन्दिरे॥ ६४-१८०॥

अथ सप्तदिनान् वापि पूजाजपविधिं चरेत्।

शक्तिं सन्तर्पयेद् भक्त्या नवकन्यामथापि व॥ ६४-१८१॥

वस्त्रालङ्कारभूषाद्यैः कुलद्रव्यैर्यथाविधि।

सन्तोषयेत् सदा कामी लिङ्गध्यानपरायणः॥ ६४-१८२॥

धूपदीपौ तथा दद्यात् सर्वदा साधकोत्तमः।

यथा तत्त्वान्तनाशः स्यात्तथा तच्चित्ततामसम्॥ ६४-१८३॥

नश्यत्येव महाकाल अत्यधमप्रसादतः।

अधमाधममावक्ष्ये यथोक्तफलसिद्धये॥ ६४-१८४॥

मन्त्री पीठे समागम्य मुक्तकेशो दिगम्बरः।

घृणालज्जाविरहितो निर्जने विपिनेऽपि वा॥ ६४-१८५॥

गङ्गागर्भे गिरौ वापि बिल्वमूले चतुष्पथे।

वटमूलेऽश्वत्थमूले चीनद्रुमतलेऽपि वा॥ ६४-१८६॥

कृष्णपक्षे चतुर्दश्यां समारभ्य प्रयत्नतः।

मुण्डमेकमधः क्षिप्त्वा गन्धचन्दनलेपितम्॥ ६४-१८७॥

हस्तार्धमानतो नाथ चाण्डालं हीनजातिगम्।

तत्र स्थित्वा जपेन्मन्त्री भयमात्रं विवर्जयेत्॥ ६४-१८८॥

चाण्डालीशक्तिमानीय कुलद्रव्यं तथा प्रभो।

तद्दनात्तद्दनं यावत्तावदष्टोत्तरं शतम्॥ ६४-१८९॥

विधिना शोधनं कृत्वा शक्त्यै दत्वा स्वयं पिबेत्।

आनन्दसागरे मग्नः सर्वदर्शी निरामयः॥ ६४-१९०॥

मांसमुद्राचर्वणं तु सदानन्दमयो भवन्।

प्रत्यहं साधनं कृत्वा वर्षमध्ये च मासकम्॥ ६४-१९१॥

मासेन सिद्धिमाप्नोति राक्षसीक्रमतः प्रभो।

अधमाधमकार्येण पशुश्रीनाश्रितो भवेत्॥ ६४-१९२॥

अधमं शृणु यत्नेन कौलानामतिदुर्लभम्।

अधमादिक्रमेणैव वत्सरान्मां प्रपश्यति॥ ६४-१९३॥

पशुवत्सकलं कार्यं रात्रौ चापि कुलक्रिया।

कुलदेव्यास्त्रिरात्रौ च कुलपीठे मनोरमे॥ ६४-१९४॥

पूजयेत् परमानन्दैः कुलध्यानपरायणः।

कुलपुष्पैः कुलद्रव्यैः साङ्गोपाङ्गैर्वीधानतः॥ ६४-१९५॥

कुलपूजां मध्यरात्रौ ब्राह्मणौ ब्राह्मणीयुतः।

क्षत्रियः क्षत्रियायुक्तौ वैश्यो वैश्यान्वितः सदा॥ ६४-१९६॥

शूद्रः शूद्रकलायुक्तो निजाभावे परायुतः।

जुहुयात् कालसपीण्या वदनाम्भोजसुन्दरे॥ ६४-१९७॥

पुरश्चरणवत् कार्यं दिवारात्रौ प्रतर्पयेत्।

अकालमृत्युजेता स्यात् परानन्दमयो भवन्॥ ६४-१९८॥

अनायासेन सिद्धिः स्यादधमस्य प्रसादतः।

रिपुविद्वेषणं वक्ष्ये देवदेव शृणु प्रभो॥ ६४-१९९॥

यस्य प्रसादमात्रेण निःशत्रुरवरान् भवेत्।

कण्ठपद्मे दृढो भूत्वा साकिनीं श्रीसदाशिवम्॥ ६४-२००॥

पूजयित्वा विधानेन भावयेत् तद्गतो यदि।

मञ्जुघोषस्य मनुना पुटीकृत्य सदाशिवम्॥ ६४-२०१॥

तारयद्वयमुच्चार्य रक्षात्मानं युगं तथा।

परपक्षं छेदयति योगशत्रून् विनाशय॥ ६४-२०२॥

युगलं युगलं तत्र रमावह्नित्रयं त्रयम्।

ततो मारययुग्मं तु खादयद्वयमेव च॥ ६४-२०३॥

शत्रुकण्ठत्रिशूल्यन्ते निकण्ठरिपुपञ्चकान्।

हारयद्वयमुच्चार्य स्वाहान्तमनुमाजपेत्॥ ६४-२०४॥

स भवेद्रिपुविद्वेषी योगाभ्यासी स्वयं भवेत्।

अन्यमन्त्रं प्रवक्ष्यामि सावधानोऽवधारय॥ ६४-२०५॥

अघोरमन्त्रपुटितं साकिनीनिजमन्त्रकम्।

तदन्ते कामराजं तु रिपुं मे योगविघ्नदम्॥ ६४-२०६॥

दारयद्वयमुच्चार्य विद्वेषयद्वयं वदेत्।

परपक्षं छेदयेति कालजालं हरद्वयम्॥ ६४-२०७॥

स्वाहान्तमन्त्रमुच्चार्य जपेत् कण्ठाधिदेवताम्।

स भवेद्रिपुविद्वेषी योगविघ्नादिविघ्नहृत्॥ ६४-२०८॥

मङ्गलोदयमावक्ष्ये येन योगी भवेन्नरः।

रात्रिशेषे समुत्थाय जपेन्मध्यन्दिनावधि॥ ६४-२०९॥

योगध्यानं सर्वदैव कण्ठपद्मे स्थिरो भवेत्।

मङ्गलोदयमाप्नोति चिरजीवी भवेद् ध्रुवम्॥ ६४-२१०॥

विस्मयाह्लादमावक्ष्ये यत्कृत्वा योगिनीपतिः।

स्वीकृत्य च कुलं द्रव्यं परानन्दमयो भवन्॥ ६४-२११॥

ध्यानाद्विलयमाप्नोति तस्य नाशः कुतः प्रभो।

क्रमेण परतां याति क्रयविक्रयवजीतः॥ ६४-२१२॥

तस्मिन् प्रलयमापन्ने कुतो देहः कुतो मृतिः।

तस्यैव सर्वदा पूजा बाह्यपूजा निरथीका॥ ६४-२१३॥

एतस्मिन् प्रलये याते कुतः सृष्टिस्थितिर्भवेत्।

सृष्टिस्थितिमयो भूत्वा विलयं याति निश्चितम्॥ ६४-२१४॥

कालसाधनमावक्ष्ये यथा कुण्डलिनीपदम्।

यदा समरमानन्दः सानन्दचेतसान्वितः॥ ६४-२१५॥

तदैव फलदं कालं तस्मिन् काले च साधयेत्।

साधनादेव सिद्धिः स्यात् तत्कालसाधनञ्चरेत्॥ ६४-२१६॥

श्रृणु नाथ नवीनत्वं येन याति नरोत्तमः।

प्रातःकालं समारभ्य यावद्दण्डचतुष्टयम्॥ ६४-२१७॥

शौचं स्नानादिकं कृत्वा चासनाभ्यासमाश्रयेत्।

ततो योगधारणाञ्च ततः पूजादिकं प्रभो॥ ६४-२१८॥

ततो जपादिकं कृत्वा प्राणायामं समाचरेत्।

षड्षोडशद्वादशं तु कुण्डलीवायुधारणम्॥ ६४-२१९॥

ततो न्यासं स्तोत्रपाठं कवचं नाममङ्गलम्।

पठित्वा देवतां हृद्ये पुनरानीय यत्नतः॥ ६४-२२०॥

चरणादकपानं तु पञ्चासवनिषेवणम्।

दुग्धपानं ततः पश्चात् सन्ध्यावधि विधानतः॥ ६४-२२१॥

रात्रौ ध्यानं सदा कृत्वा समाधिं क्रमतो लभेत्।

एवं क्रमेण देवेश नवीनत्वं समाप्नुयात्॥ ६४-२२२॥

मम ध्यानं प्रवक्ष्यामि सावधानोऽवधारय।

अनाश्रयं सदा ध्यायेदानन्दप्रणयादिभिः॥ ६४-२२३॥

निराश्रयं निराकारं मम ध्यानमुदीरितम्।

रूपातीतं निवीकल्पं सर्वज्ञं योगवारिदम्॥ ६४-२२४॥

कोटिसूर्यप्रतीकाशं तेजोबिम्बं निराकुलम्।

ज्वालामालासहस्राढ्यं कालानलशतोपमम्॥ ६४-२२५॥

दंष्ट्रकरालदुर्धर्षं जटामण्डलमण्डितम्।

त्रिशूलं वरहस्तञ्च घोररूपं भयानकम्॥ ६४-२२६॥

अनन्तानन्तमहिमं सर्वगामिनमीश्वरम्।

सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम्॥ ६४-२२७॥

सर्वमावृत्यं तिष्ठन्तं कण्ठस्थं कण्ठवायुगम्।

मम ध्यानं सदा कृत्वा परं ब्रह्ममयो भवेत्॥ ६४-२२८॥

ममाज्ञा गुरुसद्भावं श्रृणु यत्नेन भैरव।

कण्ठस्थं दैवतं देवगुरुरूपं महागुणम्॥ ६४-२२९॥

आनन्दभैरवं पश्चान्महाकालं ततः परम्।

ज्ञानानन्दं सदानन्दं भैरवानन्दमेव च॥ ६४-२३०॥

श्यामानन्दं शिवानन्दं कालानन्दमतः परम्।

सुधानन्दं हरानन्दं सुरानन्दमतः परम्॥ ६४-२३१॥

कुलानन्दं प्रियानन्दं यज्ञानन्दमतः परम्।

ध्यानानन्दं परानन्दं योगानन्दं ततः परम्॥ ६४-२३२॥

क्रोधानन्दं क्रियानन्दं बोधानन्दं ततः परम्।

देवानन्दं जयानन्दं विजयानन्दमेव च॥ ६४-२३३॥

ब्रह्मानन्दं प्रभानन्दं पूर्णानन्दं ततः परम्।

जगदानन्दरूपं च ममाज्ञागुरुचक्रगम्॥ ६४-२३४॥

ममाज्ञागुरुसद्भावं कृत्वाऽभ्यर्च्य विभावयेत्।

कण्ठपद्मे स्थिरो याति साधकः स्थिरचेतसा॥ ६४-२३५॥

वक्ष्येऽहं देवदेवेश कुलपीठप्रदर्शनम्।

कामस्थानं कामकलावेष्टितं योगिनीपदम्॥ ६४-२३६॥

कामरूपं महापीठं कुलपीठं प्रकीतीतम्।

तस्य दर्शनमात्रेण जीवन्मुक्तो न संशयः॥ ६४-२३७॥

तत्प्रकारविधिं वक्ष्ये सावधानोऽवधारय।

कुलपीठे समागम्य यद तद्गतमानसः॥ ६४-२३८॥

तदैव पूजनं कृत्वा किं न सिध्यति भूतले।

आदौ भवेत् कालरूपभूपतिः सिद्धिदर्शकः॥ ६४-२३९॥

कूलपूजाविधानेन निजपीठे प्रपूजयेत्।

कामेश्वरीं कालकन्यां कामकौतूहलोज्ज्वलाम्॥ ६४-२४०॥

कालरूपां प्रपूज्याथ सर्वभावेन पूजयेत्।

सुधादानं पाद्यदानं अर्घ्यमांसादि मुद्रया॥ ६४-२४१॥

आचमनीयं सकुलं गन्धमालिङ्गनादिकम्।

नखदंष्ट्रक्षतादीनि पुष्पाणि विविधानि च॥ ६४-२४२॥

समूहधूपदानं तु कुलपीठप्रदर्शकम्।

तत्स्पर्शनं भवेद्दीपः प्रवेशो हि कुलान्तरे॥ ६४-२४३॥

तन्नैवेद्यं महासौख्यं सर्वतन्त्रेषु गोपितम्।

कुलद्रव्यं तु पानार्थं ततस्ताम्बूलभक्षणम्॥ ६४-२४४॥

स्थापनं तर्पणं विद्धि मम पूजाक्रमादिकम्।

तन्मूलेन यथा नाथ पूर्वोक्तेन प्रकारयेत्॥ ६४-२४५॥

कुण्डलीगमनं वक्ष्ये संक्षेपाच्छृणु वल्लभ।

कायशोधनमाकृत्य आसनादिकमाचरेत्॥ ६४-२४६॥

प्राणायामं त्रिधा कृत्वा भूतन्यासं समाचरेत्।

अङ्गन्यासकरन्यासौ बीजन्यासेषु षोढया॥ ६४-२४७॥

व्यापकं पञ्चधा कृत्वा भूतशुद्धिं समाचरेत्।

जीवेनैक्यं विभाव्यैव ब्रह्मरन्ध्रे निवेशयेत्॥ ६४-२४८॥

ब्रह्मरन्ध्रे ततो गत्वा सुषुम्नामुखमाश्रयेत्।

तन्मध्ये कणीकास्थानं तन्मध्ये च चतुर्दलम्॥ ६४-२४९॥

चतुर्दलान्ते सा देवी विभाति तामुपाश्रयेत्।

तामुपकुञ्च्य यत्नेन सिद्धरूपी प्रबुद्धयेत्॥ ६४-२५०॥

देवैः सार्धं ततो गच्छेत् षड्दले काकिनीस्थले।

तया सार्धं कुण्डलिन्या देवैर्गच्छेद् दशच्छदे॥ ६४-२५१॥

एवं क्रमेण हृत्पद्मं षोडशारं ततः परम्।

द्विदलं भेदमाकृत्य बोधिनीचक्रमाश्रयेत्॥ ६४-२५२॥

ततः कटाहमाभेद्य पूर्णशैलं समाश्रयेत्।

ततोऽसौ ह्युन्मनीं भित्वा घटाधारे मनोलयम्॥ ६४-२५३॥

तदूर्ध्वे प्रलयाकारं ब्रह्मचक्रं निराकुलम्।

तदूर्ध्वे ब्रह्मदण्डं तु तदूर्ध्वे केवलं जलम्॥ ६४-२५४॥

सर्वं जलं समालम्ब्य सहस्रारं प्रभामयम्।

तदूर्ध्वे कर्णीकास्थानं सिद्धखड्गं तदूर्ध्वके॥ ६४-२५५॥

सर्वबीजमयं नाथ मातृकामण्डलं ततः।

मातृकामण्डलोर्ध्वे च प्रेतबीजं सुधामयम्॥ ६४-२५६॥

प्रेतासनोपरि ध्यायेन्महाकालकुलेश्वरीम्।

तत्रैव श्रीपदाम्भोजतले संस्थापयेन्मनः॥ ६४-२५७॥

पूर्वोक्तदेवताभिस्तु लययोगेन लेपयेत्।

तत्रैव स्थित्वा संध्यायेन्मूलेऽनलमनुं प्रभो॥ ६४-२५८॥

वायुबीजेन प्रज्वाल्य दहेद्देहं यतीश्वरः।

तन्नेत्रद्वयपर्यन्तं कर्णयुग्मावधि प्रभो॥ ६४-२५९॥

प्रदह्य भ्रूदले नेत्रे वह्नौ वह्निलयं चरेत्।

तच्छिखापटलेनैव क्षरन्ति ब्रह्मबिन्दवः॥ ६४-२६०॥

तद्बिन्दुधारया देहं वरुणैः प्लावयेत्ततः।

शुद्धदेहं ततो ध्यायेद् बीजेन प्रथमाङ्कुरम्॥ ६४-२६१॥

अधोमार्गेण सन्ध्यायेत् कुण्डलिन्या गमागमम्।

इत्येतत् कथितं नाथ कुण्डलीगमनादिकम्॥ ६४-२६२॥

साधकालम्बनं वक्ष्ये येन सिद्धो हि साधकः।

प्राणविद्यासुसिद्धिः स्यादायुरारोग्यमालभेत्॥ ६४-२६३॥

श्रीकारुणोऽकारणगुप्तभावे।

विभावयामि प्रियपादपद्मम्।

एवं मनोयोगमुपेत्य नित्यं।

श्रीसाधकालम्बनमेव सम्पदम्॥ ६४-२६४॥

नित्योपलब्धिविज्ञाने सुन्दरीचरणाम्बुजे।

आत्मानमर्पयन् भावैः साधकालम्बनं हि तत्॥ ६४-२६५॥

वर्णध्यानं शृणु प्रीतः शङ्कर प्राणशङ्कर।

मूलादिब्रह्मरन्ध्रान्तमकारादीन् स्मरेद् बुधः॥ ६४-२६६॥

स्मृत्वा ग्रथित्वा मनुना विलोमेन पुनः पुनः।

भावयेन्मनसां योगी सत्त्वाधिष्ठानतत्परः॥ ६४-२६७॥

कोटिसूर्यायुताभासं प्रत्येकग्रन्थिभेदतः।

मन्त्राक्षरं परंब्रह्म ध्यात्वा ध्यात्वा विभाकरम्॥ ६४-२६८॥

भित्वा सहस्रारमध्यं क्षकारं भाति चन्द्रगम्।

अनुलोमविलोमेन विभाव्य ध्यानमाचरेत्॥ ६४-२६९॥

अकारादिक्षकारान्तं वर्णध्यानं समीरितम्।

दलभेदं प्रवक्ष्यामि यत्र यत्र पदे स्थितिः॥ ६४-२७०॥

विसर्गाद् बिन्दुपर्यन्तो दलभेदः प्रकीतीतः।

तथापि श्रृणु योगेन्द्र सङ्केतार्थविनिर्णयम्॥ ६४-२७१॥

देवतादक्षिणावर्त्या योगेन भावयेद्दलम्।

एवं मूलादिपद्मानां भेदः श्रीकण्ठभूषण॥ ६४-२७२॥

एवं सहस्रारपद्मदलभेदः प्रकीतीतः।

स्फूतीविद्यां प्रवक्ष्यामि अकस्मात्सिद्धिदायिनीम्॥ ६४-२७३॥

निरन्तरं जपेद्विद्यां समभावपरायणः।

अकस्मात्स्फूतीविद्यः स्यात्काव्यवाक्पतिरीश्वरः॥ ६४-२७४॥

वाचां सिद्धिः करे तस्य कुब्जिकासिद्धिरेव च।

यदि कण्ठाम्बुजे ध्यायेत् काकचञ्चुपुटस्थितः॥ ६४-२७५॥

इत्येताः स्फूतीविद्या हि सर्वपद्मदलस्थिताः।

वियोगं सम्प्रवक्ष्यामि येन मन्त्री च निर्भयः॥ ६४-२७६॥

स्त्रीपुत्रधनमित्रादिलोभमोहादिपातकम्।

वर्जयित्वा तनुक्लेशं विवेकं समुपाश्रयेत्॥ ६४-२७७॥

वियोगः स हि विज्ञेयो मन्त्रन्यासपरायणः।

अथ वक्ष्ये त्रियोगेन्द्र पूर्वज्ञानसमोदयम्॥ ६४-२७८॥

काले काले क्रियासिद्धिश्चण्डिकापार्श्वगो भवेत्।

पूर्वस्यां दिशि पूर्वाह्णे वदनाम्भोजमण्डलः॥ ६४-२७९॥

ज्ञानद्रव्यसमरसैरुदयं भावयेद् रविम्।

पूर्वं पूर्वस्वजन्मादिज्ञानसमोदयं लभेत्॥ ६४-२८०॥

आकाशे च मनो दत्वा आकाशाख्यं स्मरन्मनुम्।

पूर्वजन्मादिसञ्ज्ञानं जानाति समभावकः॥ ६४-२८१॥

इति ते कथितं नाथ पूर्वज्ञानसमोदयम्।

अथात्र संप्रवक्ष्यामि सिद्धः शुद्धः फलार्थभाक्॥ ६४-२८२॥

येन क्रमेण सम्भूयात् खेचरीमेलनं प्रभो।

या या समरसप्राप्तिः सा सैव फलसिद्धिदा॥ ६४-२८३॥

शृणु संक्षेपतो वक्ष्ये पश्चाद्वक्तव्यमेव तत्।

आसनादिकमाकृत्य कायसङ्कोचमाचरन्॥ ६४-२८४॥

कामलता क्षुद्रतरैर्भेदिता वसनाग्रकैः।

तालुमूलोत्तरे मूले नियोज्य मधुपो भवेत्॥ ६४-२८५॥

तदैव जपमाकृत्य वायुं धृत्वा मधुं पिबेत्।

सा स्यात्समरसप्राप्तिः कामलिङ्गे स्थिरो भवेत्॥ ६४-२८६॥

इत्येषा कथिता विद्या लताभेदं शृणु प्रभो।

श्वेतवाट्यालसूत्रेण निर्मीता या लता शुभा॥ ६४-२८७॥

अथवा पद्मसूत्रेण लतां कुर्याद्विचक्षणः।

अष्टादशाङ्गुलमितं नातिसूक्ष्मं प्रमाणवत्॥ ६४-२८८॥

जित्वाधः सन्निवेश्याथ घर्षयेत् कामसुन्दर।

तदा जित्वा स्वयं याति घर्षणेन पुनः पुनः॥ ६४-२८९॥

पश्चाज्जित्वा क्रियां कुर्यात्तालुमूले निधाय च।

क्रमेणामृतमाप्नोति जिह्वाधश्छेदने ध्रुवम्॥ ६४-२९०॥

सा स्यात्समरसप्राप्तिर्यदि मन्त्राक्षरं भजेत्।

जीवब्रह्मबुद्धिमन्तास्तु तिष्ठन्ति निरञ्जने॥ ६४-२९१॥

कूष्माण्डाकारदेही च ब्रह्मसाधनतत्परः।

सदा समरसप्राप्तिरनायासेन लभ्यते॥ ६४-२९२॥

जले स्थले भूमिगर्ते शरीरं नापि नश्यति।

अजरामरदेही स्याद् योगोऽयं योगिदुर्लभः॥ ६४-२९३॥

कायकल्पनमावक्ष्ये येन सिद्धपतिर्भवेत्।

श्रृणुष्वैकमनाः शम्भो गृहस्थानां तु दुर्लभम्॥ ६४-२९४॥

महारण्ये पद्मवने शीतले गन्धशोभिते।

कायकल्पनमाकृत्य भावयेत् कण्ठपङ्कजम्॥ ६४-२९५॥

उदारचित्तः सर्वत्र वैष्णवाचारतत्परः।

पद्मे पद्मे स्वदेहस्य कल्पना च दले दले॥ ६४-२९६॥

क्रमशः कण्ठपद्मे च स्वीयदेहस्य कल्पना।

क्रियते यदि योगेन्द्रैस्तदा देहस्य रक्षणम्॥ ६४-२९७॥

अन्यथा मृत्युवश्यः स्याद् योगभ्रष्टो भवेन्नरः।

एवं क्रमेण सर्वत्र कुर्यात् कायस्य कल्पनम्॥ ६४-२९८॥

जरामरणदुःखाद्यैर्मुच्यते मोहसङ्कटात्।

अथान्यत् सम्प्रवक्ष्यामि कायकल्पनमेव तत्॥ ६४-२९९॥

नानापीठे त्वसाध्ये च चक्षुरिन्द्रियवजीते।

मनोगम्ये स्थिरो भूत्वा स्वदेहमपि कल्पयेत्॥ ६४-३००॥

वाराणस्यादिपीठे च महाज्वालामुखीपदे।

कुरुक्षेत्रे प्रयागे च दक्षिणे द्वारकादिषु॥ ६४-३०१॥

हरिद्वारोदये तीर्थे मार्कण्डेये च कापिले।

वृन्दावने गुह्यपीठे गङ्गायमुनयोस्तटे॥ ६४-३०२॥

पुष्करे पृथिवीतीर्थे कायतीर्थे गयादिषु।

कालकल्पनमाकृत्य श्रद्धावान् पूजयेत्परम्॥ ६४-३०३॥

सदाशिवं साकिनीशं शाकिनीयोगिनीगणैः।

वेष्टितं परया भक्त्या ध्यात्वा देहं प्रकल्पयेत्॥ ६४-३०४॥

प्रकल्प्य स्वतनुं तत्र ततो देवस्य कल्पयेत्।

येषां मनसि यद्वप्नं तद्ध्यानं कायकल्पनम्॥ ६४-३०५॥

एतत्कायकल्पनेन मौनी वाक्सिद्धिमाप्नुयात्।

इदानीं कामदेवस्य मथनं शृणु भैरव॥ ६४-३०६॥

कामदेवस्य मथनं सुखदं मोक्षदं परम्।

यावद् बिन्दुः स्थिरो देहे तावन्मृत्युभयं कुतः॥ ६४-३०७॥

बिन्दुपाताद्भवेन्नाशस्ततो हि बिन्दुरक्षणम्।

तत्तदौषधमावक्ष्ये येन बिन्दुः स्थिरो भवेत्॥ ६४-३०८॥

नित्यं सेवनमाकुर्या देतेषां मूलमाहरन्।

श्वेतापराजितामूलं सिद्धिमूलं ततः परम्॥ ६४-३०९॥

शतपणीमूलमेकं कदम्बमूलमेव च।

श्वेतकुन्दपुष्पमूलं करवीरं तथाशितम्॥ ६४-३१०॥

कृष्णधुस्तूरमूलं तु सेफालीमूलमेव च।

चितामूलं तथा शम्भो निर्गुण्डीमूलमाहरन्॥ ६४-३११॥

एकीकृत्य विधानेन रविवारेऽर्कमूलकैः।

समभागेन योगेन्द्र चूर्णीकृत्य पृथक् पृथक्॥ ६४-३१२॥

शुक्रवारे च पूर्वाह्णे मिश्रं कुर्याद्दनत्रयम्।

षड्रात्रि शोधयेत् काममुद्राभिर्वामदेवताः॥ ६४-३१३॥

मध्यमाङ्गुलिमुत्तोल्य दक्षिणेनापि मुष्टिना।

धृत्वा च शोधयेदादौ द्रव्यमूलानि साधकः॥ ६४-३१४॥

विजयाचूर्णयोगेन पिबेच्चूर्णं द्वितोलकम्।

अर्धतोलकमुनैक्यं विजयाः सार्धतोलकाः॥ ६४-३१५॥

मिश्रीकृत्य विधानेऽपि तत्तत्कुजदिने शुभे।

एतत्प्रभक्षणेनैव मदनं वशमानयेत्॥ ६४-३१६॥

यदा मनसि आयाति पुष्पधन्वा महाबली।

तदा तं पूजयित्वा च कामदेवं निवारयेत्॥ ६४-३१७॥

इति कामस्य मथनं देहे व्यवस्थितं शृणु।

अङ्गुष्ठगुल्फजानूरुसिमनीलिङ्गनाभिषु॥ ६४-३१८॥

हृद्ग्रीवाकण्ठदेशेषु लम्बिकायां तथा नसि।

भ्रूमध्ये मस्तके मूर्ध्नि वाय्वाकाशप्रियालये॥ ६४-३१९॥

वायुरूपं स्वदेहं तु स्थापयित्वा मनुं जपेत्।

कुम्भकप्राणयोगेन निजदेहव्यवस्थितिः॥ ६४-३२०॥

कण्ठाम्भोजे स्थिरो यो हि तं जनं श्रृणु भैरव।

योगारम्भावधिर्यो हि स्त्रीसंसर्गं विवर्जयेत्॥ ६४-३२१॥

मातृणां गमनं नास्ति यस्य स कण्ठसंस्थितः।

नित्यं करोति योगं यो धर्मात्मा स्थिरचेतसा॥ ६४-३२२॥

स एव कण्ठपद्मे च स्थिरो भवति निश्चितम्।

भावज्ञानी च यो विद्वान् तं विदामि दयार्णव॥ ६४-३२३॥

कुण्डलीस्पर्शमात्रेण तन्मयो जायते क्षणात्।

सर्व देवे परं भावं कृत्वा ज्ञानेन पूजयेत्॥ ६४-३२४॥

सर्वपीठे स्थिरो भूत्वा ज्ञानात्मा परिपूजयेत्।

क्रमेण कण्ठभेदः स्याद् योगी भवति सत्वरम्॥ ६४-३२५॥

धनं धान्यं धरां धर्मं कीतीमायुर्यशः श्रियम्।

तुरगान् दन्तिनः पुत्रान् लोकान् सर्वस्वस्वोदयम्॥ ६४-३२६॥

एतज्ज्ञानप्रसादेन लभ्यते परमेश्वरम्॥ ६४-३२७॥

ज्ञात्वा योगेन्द्रचक्रं त्रिभुवनविवरध्वान्तजाल प्रकाशं।

मूलाम्भोजे रसाख्ये दशदलविमले हृत्स्वपद्मे विलासम्।

कण्ठाम्भोजे मनोज्ञे द्विदलस्वकमले भावयन्तं सुरेन्द्रैः।

श्वेताम्भोजे परेशं निरवधिगगनं पूजये भावयामि॥ ६४-३२८॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षट्चक्र-- प्रकाशे भैरवीभैरव संवादे कण्ठपद्मभेदविज्ञानविन्यासो। नाम चतुष्षष्टितमः पटलः॥ ६४॥

अथ पञ्चषष्टितमः पटलः

श्रीनन्दभैरवी उवाच

अथ कान्त प्रवक्ष्यामि समुदायफलोदयम्।

कण्ठाम्भोजस्य वर्णानां ध्यानं मन्त्रं शृणु प्रभो॥ ६५-१॥

शाकिनीसहितं नित्यं पूजयित्वा सदाशिवम्।

मूढोऽपि योगिनां श्रेष्ठः किमन्ये ध्यानयोगिनः॥ ६५-२॥

ध्यात्वा सम्पूजयेद्यस्तु सोऽभीष्टं फलमाप्नुयात्।

ततो ध्यानं प्रवक्ष्यामि वीरनाथ शृणु प्रभो॥ ६५-३॥

आदौ श्रीशाकिनीध्यानं पश्चाद् ध्यानं सदाशिवे।

द्वयोरभेदबुद्ध्या च कामजेता स्वयं भवेत्॥ ६५-४॥

वन्दे नित्यां सुशीलां त्रिभुवनवरदां शाकिनीं पीतवस्त्रां।

वेदाद्यां वेदमातां सुखमयललितां वेदहस्तोज्ज्वलाङ्गीम्।

ध्याये पीयूषधारामलघटसुधया स्निग्धदेहां हसन्तीं।

मायां शम्भोर्ल्ललाटे विधुकिरणकरां श्रीसदानन्दयुक्ताम्॥ ६५-५॥

अम्भोजास्त्रादिमुद्रासिवरदजटा धारयन्तीं करालं।

श्यामां पीनस्तनाढ्यां त्रिनयनकमलां प्रेतलिङ्गासनस्थाम्।

सर्वाङ्गालङ्कृतां श्रीं विधुशतवदनाम्भोजशोभां वहन्तीं।

शम्भोरानन्दकर्त्रीं चरमगुणपदां स्थूलसूक्ष्मस्वरूपाम्॥ ६५-६॥

एवं ध्यायेन्महायोगी स्थूलसूक्ष्मस्वरूपिणीम्।

अभेद्यभेदकरणीं शङ्कर प्रेमवल्लभ॥ ६५-७॥

या विद्या वाग्भवाढ्या हरिविधुकमला केवले निष्फलन्ते।

मायालक्ष्मीस्त्रिकूटं शशिमुखितदधः शाकिनी क्षेत्रपालम्।

वक्षद्वन्द्वं त्रिकूटं वधुमधरमिवासिद्धिमिष्टां विधेहि।

स्वाहान्तोऽयं महेशत्रिभुवनभविकाह्लादहेतोः प्रकाशः॥ ६५-८॥

प्रणवं पूर्वमुद्धृत्य वाग्भवं तदनन्तरम्।

शाकिनी त्वं तदन्ते तु मम दोषान् विनाशय॥ ६५-९॥

युगलं वह्निकान्तां च मन्त्रार्थाः सारदाः स्मृताः।

कामराजं समुद्धृत्य हिरण्याक्षि सनातनि॥ ६५-१०॥

शाकिन्यन्ते महामाये मायावह्निश्रिया युतम्।

एषा मन्त्रात्मिका विद्या कण्ठाम्भोजप्रकाशिनी॥ ६५-११॥

शाकम्भरी महाविद्या तस्य वामे विभाति च।

तस्य मन्त्रं प्रवक्ष्यामि ज्ञात्वैव योगवित् प्रभुः॥ ६५-१२॥

महामन्त्रस्य माहात्म्यं कथितुं नैव शक्यते।

भावमात्रेण सिद्धिः स्यात् किं पुनर्मोक्षसाधनम्॥ ६५-१३॥

विद्यां कामकलां विचित्रवसनां पद्मासनस्थां शिवां।

कामाख्यां सकलान् स्वरान् त्रिजगतां शाकैर्महायोगिनी।

नित्यं या परिपाल्यते भगवतीं शाकम्भरीं तां भजे।

सा योगाधिप--रक्षका निशि दिशि श्रीकण्ठपद्मे प्रभा॥ ६५-१४॥

अद्यापि प्रियकण्ठपद्मनिकरे सम्भाति शाकम्भरी।

विद्यावाक्कमलायुतं स्मितमुखि प्रान्ते च शाकम्भरि।

वह्निर्वारुणवायुबीजमनलद्वन्द्वं हि वक्षद्वयं।

वह्निप्रेमकलान्वितो मनुवरः साक्षाज्जगत्क्षोभकृत्॥ ६५-१५॥

शाकम्भरीं महामायां पूजयेद् द्वारदेवताम्।

तदन्ते सर्वदेवाश्च शक्रादीन् परिपूजयेत्॥ ६५-१६॥

ध्यात्वा च शाकिनीं देवीं शाकम्भर्याश्च दक्षिणे।

पूजयेत् परया भक्त्या पूर्वोक्तविधिना प्रभो॥ ६५-१७॥

शाकम्भरीं त्रिनयनां सूर्येन्दुवह्नियोजिताम्।

रक्तपद्मस्थितां श्यामां वेदबाहुश्रियोज्ज्वलाम्॥ ६५-१८॥

वराभयकरां खड्गकपालकमलान्विताम्।

नानालङ्कारशोभाङ्गी मुक्तकुन्तलभूषिताम्॥ ६५-१९॥

प्रसन्नवदनाम्भोजस्मितहास्यविराजिताम्।

साधकाभीष्टदां नित्यां महाविद्यां भजाम्यहम्॥ ६५-२०॥

ततो मानसपूजाञ्च ध्यानान्ते तु समाचरेत्।

पुनर्ध्यानं ततः कृत्वा चित्तावाहनमाचरेत्॥ ६५-२१॥

पाद्याद्यैः पूजयेन्नित्यं भक्त्या च योगसिद्धये।

ततो जपेच्छतं वापि चाष्टोत्तरसहस्रकम्॥ ६५-२२॥

एवं लक्षसमाप्ते तु कण्ठे देवीं प्रपश्यति।

होमादीन् क्रमशः कुर्याद् ब्राह्मणानां तु भोजनम्॥ ६५-२३॥

तदन्ते शाकिनीपूजा प्रथमे वापि कारयेत्।

तत्प्रकारं श्रृणु प्राणवल्लभे कामसुन्दरि॥ ६५-२४॥

आदौ जलं शोधयित्वा हस्तौ पादौ च विग्रहम्।

क्षालयित्वा द्विराचम्य मूलमन्त्रेण साधकः॥ ६५-२५॥

शिखाबन्धनमाकृत्य चासनं परिशोधयेत्।

ततोऽर्घ्यस्थापनं कृत्वा पीठं निर्माय यत्नतः॥ ६५-२६॥

पीठचक्रं शोधयित्वा पीठपूजां समाचरेत्।

ततो ध्यानं भूतशुद्धिं न्यासजालं समाचरेत्॥ ६५-२७॥

पुनः प्राणायामयुग्मं कृत्वा देहं दृढं नयेत्।

ततो ध्यानं मानसार्चा मुद्रादर्शनमेव च॥ ६५-२८॥

ततः पाद्यं तथार्घ्यं तु चारुशङ्खेन कारयेत्।

आचमनीयं ततः स्नानं पुनराचमनं तथा॥ ६५-२९॥

गन्धं पुष्पाणि सर्वाणि बिल्वपत्राणि दापयेत्।

निजावरणदेवांश्च पूजयित्वा क्रमेण तु॥ ६५-३०॥

धूपदीपौ निवेद्याथ नैवेद्यं पानकं ततः।

पुनराचमनं दत्वा बलिद्रव्याणि दापयेत्॥ ६५-३१॥

बलिं दत्वा जपेन्मन्त्रं सहस्रं वा शताष्टकम्।

दिवसे यज्जपं कुर्याद्रात्रौ तज्जाप्यमाश्रयेत्॥ ६५-३२॥

जपं समर्पयेद् विद्वान् गुह्यातिगुह्यमन्त्रकैः।

प्राणायामं त्रिषट्कृत्वा वन्दनं च प्रदक्षिणम्॥ ६५-३३॥

स्तोत्रञ्च कवचं नित्यं सहस्रनाममङ्गलम्।

पठेद् भक्त्या कण्ठपद्मे कायकल्पनकृन्नरः॥ ६५-३४॥

एवं विधिविधानेन पूजयित्वा सदाशिवम्।

अस्मिञ्छास्त्रे क्रिया गुप्ता गुप्तनारी प्रपूजनम्॥ ६५-३५॥

अथवा मनसा सर्वं पूजायागजपं चरेत्।

यथा देव्यास्तथा शम्भोर्जपयागः समीरितः॥ ६५-३६॥

एवं क्रमेण पूज्याश्च बाह्यस्था मुनयः क्रमात्।

पूज्या वर्णकला नाथ तद्बाह्यस्थानं प्रपूजयेत्॥ ६५-३७॥

एवं हि मासकार्येण वरं सिद्धिं समाप्नुयात्॥ ६५-३८॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे भैरवीभैरवसंवादे शाकिनीसदाशिवार्चनं नाम पञ्चषष्टितमः पटलः॥ ६५॥

## अथ षष्टषष्टितमः पटलः।

आनन्दभैरवी उवाच

कैलासशिखरारूढ पञ्चवक्र त्रिलोचन।

सर्वभूतप्रपूज्याथ शाकिनीयजनं शृणु॥ ६६-१॥

पूजनं त्रिविधं प्रोक्तं मनः साक्षाद्वचोमयम्।

मानसं योगिनां प्रोक्तं साक्षात् पूजागृहं प्रभो॥ ६६-२॥

वाचामयं तामसानां नृपाणां कामिनां प्रभो।

एका पूजा च त्रिविधा कथिता परमेश्वर॥ ६६-३॥

सा पूजा सिद्धिदा काले त्रिकाले सर्वकालके।

काले सिद्धिर्गृहस्थानां त्रिकाले ब्रह्मचारिणाम्॥ ६६-४॥

योगिनां सर्वकालेऽपि विफला दुष्टचेतसाम्।

भावत्रयं हि पूजानां रजः सत्त्वतमोमयम्॥ ६६-५॥

त्रिशक्तिपूजनं नाथ सर्वत्र परिकीतीतम्।

ब्रह्माणीं वैष्णवीं तत्र पूजयेत् तां महेश्वरीम्॥ ६६-६॥

त्रिभावेन पूजयित्वा शक्तिं ब्रह्मत्रयेण च।

पशुरूपवीररूपदिव्यरूपेण पूजयेत्॥ ६६-७॥

बलिदानं हि सर्वत्र परं मोक्षाय केवलम्।

क्रमेण शृणु योगेश सर्वाविद्यादिपूजनम्॥ ६६-८॥

यत्कृत्वा सम्भवेद् योगी परं ब्रह्ममयोऽचिरात्॥ ६६-९॥

स्थानं वीक्ष्य महेन्द्र कोटिसदृशं श्रीलक्षणैर्लक्षितं।

देवानां दिवि वीरनाथ रुचिरं पुण्यं पवित्रं सुखम्।

रम्यं देवगृहान्वितं परजलैर्व्याप्तं तरुच्छायया।

सौगन्धादिषु मान्यशैलपवनं काले वसन्तेऽपि वा॥ ६६-१०॥

शून्ये देवगृहे तले वरतरोश्चित्तापीतात्मा यति--।

श्चाम्भोजासनसंस्थितो मृदुकटे व्याघ्राजिने वारणे।

आदौ पादयुगं भुवि स्थितमिति व्याशोध्य हस्तौ तथा।

नीरं निर्मलगन्धराजमिलितं संक्षाल्य पद्मासनः॥ ६६-११॥

जलशोधनमन्त्रस्तु श्रूयतां परमेश्वर।

प्रणवं स्तरणप्रान्ते वज्रोदकमतः परम्॥ ६६-१२॥

शोधयामि ततः स्वाहा जलमन्त्र उदाहृतः।

प्रक्षिपेत्तज्जलं भिन्नजले भैरवशङ्कर॥ ६६-१३॥

हस्तौ पादौ तज्जलेन क्षालयेत् काममायया।

विग्रहं मूलमन्त्रेण चाचमने द्वे उदाहृते॥ ६६-१४॥

शिखाबन्धनमन्त्रस्तु शृणून्मत्तकुमारक।

अप्रकाश्यं महामन्त्रं शिखाबन्धनमासनम्॥ ६६-१५॥

शोधयेत् त्रिपुरानाथ कालाग्निशिखयोज्ज्वल।

आसनं शोधयाम्यद्य द्वारपालो भवानिशम्॥ ६६-१६॥

प्रणवाद्यैर्नमोऽन्तेन शोधयेत् परमेश्वर।

शोधयेत् त्रिपुरानाथ कालाग्निशिखयोज्ज्वल॥ ६६-१७॥

शिखाग्रं बन्धयाम्यद्य द्वारपालो भवानिशम्।

ततोऽर्घ्यं स्थापयेद् विद्वान् शङ्खाधारे मनोरमे॥ ६६-१८॥

मूलमन्त्रेण संक्षाल्य ततो मूलेन पूरयेत्।

रक्तचन्दनयुक्तेन जलेन चन्दनेन च॥ ६६-१९॥

ततो दूर्वार्घ्यं पुष्पाणि साधारे दापयेत् सुधीः।

दशधा मूलमन्त्रं तु तत्र जप्त्वा सुधामयम्॥ ६६-२०॥

धेनमुद्रां मत्स्यमुद्रां योनिमुद्रां प्रदर्शयेत्।

जपेत् तत्र सारमन्त्रमाच्छाद्य मत्स्यमुद्रया॥ ६६-२१॥

आत्मानं प्रोक्षयेदादौ ततो द्रव्याणि प्रोक्षयेत्।

ततः पीठं सुनिर्माय ताम्रे हेमशलाकया॥ ६६-२२॥

नवकोणं विलिख्याथ षट्कोणञ्च तदन्तरे।

बाह्ये च मण्डलद्वन्द्वं षोडशार्णं ततो लिखेत्॥ ६६-२३॥

तद्बाह्ये च चतुर्द्वारं भूबिम्बद्वितयं पुनः।

एवं पीठं विनिर्माय दलेऽर्णान् विलिखेत्ततः॥ ६६-२४॥

ओं सुरेखायै नमः स्वाहा मन्त्रेण परिलेखयेत्।

प्रणवञ्च महारेखाशब्दान्ते शोधयामि युक्॥ ६६-२५॥

वह्निबीजायादिमनून् शोधयेत् पीठचक्रकम्।

पीठपूजां ततः कुर्यात् प्रणवादिनमोऽन्तकैः॥ ६६-२६॥

सांपदं पूर्वमुच्चार्य हृदयाय नमस्ततः।

षड्दीर्घभाजा बीजेन पूजयेद् वामतः सुधीः॥ ६६-२७॥

पूर्वादीशानपर्यन्तं चतुर्दीक्षु च मध्यके।

पूजयित्वा च तन्मध्ये वर्णोच्चारणपूर्वकैः॥ ६६-२८॥

पीठशक्तिं पूजयित्वा पीठनायकमर्चयेत्।

प्रणवादिनमोऽन्तेन सर्वत्र प्रतिपूजयेत्॥ ६६-२९॥

पीठशक्तिं शाकिनीं तु तथा शाकम्भरीं शिवाम्।

लक्ष्मीं सरस्वतीं दुर्गां चण्डिकां गणनायिकाम्॥ ६६-३०॥

भद्रकालीं विशालाक्षीं श्रद्धां मायां दयां कलाम्।

रणचण्डां मधुमतीं प्रसन्नां रत्नमालिनीम्॥ ६६-३१॥

हिरण्यवर्णां कौमारीं वाग्देवीं त्रिजटां महीम्।

त्रिशूलिनीं वेदमातां सिद्धाद्यां मधुनायिकाम्॥ ६६-३२॥

मधुपुरेश्वरीं कुब्जां तथा मधुमतीं यजेत्।

शाकाख्यां शाकचक्षाञ्च वरहस्तां हसन्मुखीम्॥ ६६-३३॥

कपालिनीं खड्गहस्तां वनमालाञ्च माधवीम्।

विचित्राङ्गी ललज्जिह्वां चेकितानां प्रभामयीम्॥ ६६-३४॥

सर्वां सर्वाकर्षीणीञ्च बहुरूपां सुरां सुधाम्।

सर्वमयीं वर्णमयीं मुण्डमालां त्रिकालिकाम्॥ ६६-३५॥

विश्वेश्वरीं विश्वमातां महाविद्यां सनातनीम्।

एता विद्याः पूजनीयाः प्रणवादिनमोऽन्तिकाः॥ ६६-३६॥

ततो ध्यानं प्रवक्ष्यामि संक्षेपतः श्रृणु प्रिये।

शाकिनीं श्रीवेदविद्यां स्थूलसूक्ष्मस्वरूपिणीम्॥ ६६-३७॥

पीतवर्णां त्रिनयनां वेदहस्तां हसन्मुखीम्।

सदाशिवयुतां गौरीं सर्वालङ्कारमण्डिताम्॥ ६६-३८॥

त्रिलोचनां सूर्यचन्द्रवह्निमण्डलमण्डिताम्।

कपालपद्मविमलवराभयकराम्बुजाम्॥ ६६-३९॥

देवदानवगन्धर्वयोगिसिद्धप्रपूजिताम्।

षोडशारमहापद्मसंस्थितां वनमालिनीम्॥ ६६-४०॥

शाकम्भरीदेवविद्यामाधवीशक्तिशोभिताम्।

मुनिदेव महेन्द्रादिब्रह्मविष्णुशिवाश्रयाम्॥ ६६-४१॥

ध्यायेऽहं कण्ठपद्मस्थां सर्वसिद्धिसमृद्धिदाम्।

एवं ध्यात्वा कण्ठपद्मे भूतशुद्धिं ततश्चरेत्॥ ६६-४२॥

भूतशुद्धिं प्रवक्ष्यामि येन कण्ठे स्थिरो भवेत्।

आकाशगामिनी सिद्धिर्लभ्यते नात्र संशयः॥ ६६-४३॥

संयोज्य जीवं कुलवस्त्रमध्ये।

श्री कुण्डलिन्या सह मूलपद्मम्।

क्रमेण भित्वा समयोर्ध्वतुण्डो।

विशुद्धपद्मे लयमाचरेद् बुधः॥ ६६-४४॥

शाकिनीपार्श्वभागे तु जीवं संस्थापयेत् सुधीः।

कुण्डलिन्या लयं कृत्वा वह्निबीजेन भस्मसात्॥ ६६-४५॥

देहं तदा विदधीत वायुबीजेन शोषयेत्।

वरुणेनामृतं कृत्वा वेदनारहितो भवेत्॥ ६६-४६॥

धैर्येण भावयेद्देवं शाकिनीशं सदाशिवम्।

त्रैलोक्यान्वितमीशानं पञ्चवक्त्रं त्रिलोचनम्॥ ६६-४७॥

पूर्वोक्तध्यानमाकुर्यान्मन्त्राक्षराणि भावयेत्।

चिच्छक्तौ परमात्मानं भावयित्वा पुनः पुनः॥ ६६-४८॥

आत्मलग्नं तत्र पदे कृत्वा चिन्तामणिं भजेत्।

धूम्राकारं महाकाशं विचिन्त्य तेजसावृतम्॥ ६६-४९॥

लीलामयं देवताया रूपं सम्पूज्य मानसैः।

क्रमेण नासिकाद्वारात् सोऽहंबीजेन चालयेत्॥ ६६-५०॥

आनीय संमुखे पीठे संस्थाप्य जीवमर्पयेत्।

तत्रैव संस्थिरो भूत्वा तत्प्राणान् तत्र स्थापयेत्॥ ६६-५१॥

आं ह्रीं क्रों शब्दमुच्चार्य यं रं लं वं ततः परम्।

इत्याद्यैः स्थापयेत् प्राणान् ततोऽर्चविधिमाचरेत्॥ ६६-५२॥

न्यासजालं ततः कुर्यात् शृणु तत्त्वासनादिकम्।

सदाशिव ऋषिश्चास्य मस्तके संन्यसेत् सुधीः॥ ६६-५३॥

सदाशिवाय ऋषये नमः प्रणवमाद्यके।

मुखे प्रणवमुच्चार्य चानुष्टुप्छन्दसे नमः॥ ६६-५४॥

हृदि प्रणवमुच्चार्य शाकिन्यै तदनन्तरम्।

सदाशिवप्रयुक्तायै देवतायै नमस्ततः॥ ६६-५५॥

कराङ्गन्यासौ सङ्कुर्यात् षड्दीर्घस्वरसंयुतैः।

सकारैर्देवदेवेश मातृकां बीजसम्पुटाम्॥ ६६-५६॥

मातृकास्थानमालम्ब्य सांबीजेन तु वा चरेत्।

व्यापकषोडशवारं प्राणयामयुगं चरे॥ ६६-५७॥

पुनर्ध्यानं मानसार्चा योनिमुद्रां प्रदर्शयेत्।

पद्ममुद्रां ततः कृत्वा पाद्याद्यैः परिपूजयेत्॥ ६६-५८॥

आदौ मूलं समुच्चार्य एतत्पाद्यं ततः स्मरेत्।

सदाशिवप्रयुक्तायै शाकिन्यै नम इत्यपि॥ ६६-५९॥

एवं क्रमेण पूर्वार्घ्यमाचमनीयं निवेदयेत्।

स्नानीयं क्रमतो दद्यात् पुनराचमनीयकम्॥ ६६-६०॥

गन्धं पुष्पाणि मूलेन दद्याद् भक्त्या सदाशिवे।

बिल्वपत्राणि मूलेन दत्वा वरुणमर्चयेत्॥ ६६-६१॥

धेनुमुद्रां मत्स्यमुद्रां सिंहमुद्रां प्रदर्शयेत्।

प्रणवं सां हृदयाय नमश्चाग्नौ प्रपूजयेत्॥ ६६-६२॥

प्रणवञ्च सीं शिरसे स्वाहया नैर्ऋते यजेत्।

प्रणवं सूं शिखायै वषड् वायौ यजेत् क्रमात्॥ ६६-६३॥

प्रणवं सैं कवचाय कूर्चमीशे प्रपूजयेत्।

मध्ये सौं नेत्रत्रयाय वौषट् प्रणवमाद्यके॥ ६६-६४॥

चतुर्दीक्षु ततः पश्चात् सः अस्त्राय ततो हि फट्।

प्रणवाद्यं पूजयित्वा मस्तके ऋषिमर्चयेत्॥ ६६-६५॥

प्रणवं मूलऋषये सदाशिवाय कृत्ततः।

पूर्वादिवामतः पूज्याः परिवारादिदेवताः॥ ६६-६६॥

आनन्दभैरवं पश्चान्महाकालं समर्चयेत्।

( ज्ञानानन्दं सदानन्दं भैरवानन्दमेव च।

श्यामानन्दं शिवानन्दं कालानन्दं ततः परम् )

सुधानन्दं हरानन्दं सुरानन्दं समर्चयेत्॥ ६६-६७॥

कुलानन्दं प्रियानन्दं यज्ञानन्दमतः परम्।

ध्यानानन्दं परानन्दं योगानन्दं समर्चयेत्॥ ६६-६८॥

क्रोधानन्दं क्रियानन्दं बोधानन्दं तथार्चयेत्।

देवानन्दं जयानन्दं विजयानन्दमेव च॥ ६६-६९॥

ब्रह्मानन्दं प्रभानन्दं पूर्णानन्दं समर्चयेत्।

जगदानन्दरूपं तु ममाज्ञागुरुचक्रगम्॥ ६६-७०॥

पूजयित्वा देहशक्तिमेतेषां पार्श्वके यजेत्।

कल्याणीं कामकन्यां त्रिपुरां षोडशीं तथा॥ ६६-७१॥

विद्याधरीं नीलवर्णां श्यामां सिंहासनस्थिताम्।

चण्डिकामुपकन्याञ्च चन्द्रचूडसरस्वतीम्॥ ६६-७२॥

कपिलां मेघदूताञ्च धूम्रवर्णां जटाधराम्।

त्रिलोचनां खेचरीञ्च गगनां कामरूपिणीम्॥ ६६-७३॥

पीनकुचां व्याघ्रमुखीं मधुपानां मदोन्मदाम्।

रम्यां स्नेहकलां धर्मां तथा मधुमतीं हराम्॥ ६६-७४॥

हारमालां वनमालां चकोरां कुलकामिनीम्।

पूजितां गुरुसर्वाणीं सर्वतत्त्वस्वरूपिणीम्॥ ६६-७५॥

पूजयेत् सर्वतः शक्त्या ईशानान्तं क्रमेण तु।

तन्मध्ये केशवं ध्यात्वा दलस्वरमुपार्चयेत्॥ ६६-७६॥

अकारादिषोडशार्णान् प्रणवादिनमोऽन्तिकान्।

नीलवर्णान् सरक्ताढ्यान् कुङ्कुमालक्तवेष्टितान्॥ ६६-७७॥

विद्युत्कोटिसमाभासपद्मरागसमोज्ज्वलान्।

मनोरथपूर्णकरान् जगदानन्दवर्धकान्॥ ६६-७८॥

सुप्रियाकण्ठताल्वादिपरमात्मप्रदर्शकान्।

तेषां नाम्ना पूजयित्वा यथा मार्तण्डमण्डले॥ ६६-७९॥

तथाऽत्र ते पूजिताः स्युः स्वस्वनामप्रचोदिताः।

शृणु नाथ महाकाय मदोन्मत्त दिगम्बर॥ ६६-८०॥

स्थिरचेताः सदा भूत्वा पूजय त्वं हि शाकिनीम्।

तत्र पद्मकणीकायां शवरूपं सदाशिवम्॥ ६६-८१॥

ध्यात्वा तद्गतमध्ये तु पीठचक्रं प्रपूजयेत्।

मूलाधारे कामरूपं कामचक्रं त्रिलक्षणम्॥ ६६-८२॥

पीठाय नम उच्चार्य चाद्यतारकमुच्चरेत्।

हृदि जालन्धरं पीठं सिद्धपीठं त्रिचक्रकम्॥ ६६-८३॥

ललाटे पूर्णगिर्याख्यं हिङ्गुलादं सुपीठकम्।

उड्डियानं तदूर्ध्वे तु मेघकुञ्जं स्वपीठकम्॥ ६६-८४॥

महापीठं भ्रुवोर्मध्ये वाराणसीञ्च लिङ्गक।

लोचनत्रयमध्ये तु ज्वलन्तीसिद्धपीठकम्॥ ६६-८५॥

ज्वालामुखी त्रिवेणी च पीठत्रयमुदाहृतम्।

त्रिलोचने त्रिपीठं मे अवश्यं परिपूजयेत्॥ ६६-८६॥

मुखाम्बुजे पूजयेद् वै मायारतिं सुभद्रिकाम्।

कम्पिल्लनगरं वंशनगरं कामभञ्जनम्॥ ६६-८७॥

हिरण्यनगरं तत्र एकदन्तारसायनाम्।

कपालपीठं ताल्वाख्यं फणिपीठं मुखे यजेत्॥ ६६-८८॥

कण्ठे मधुपुरीपीठं सुधापीठं तदन्तिके।

आह्लादपीठं श्रीपीठं शून्यपीठं प्रियाञ्जलम्॥ ६६-८९॥

पुरञ्जनाख्यं भद्राख्यं कण्ठे अम्भपुरी मम।

नाभौ महापीठराजमयोध्याभवपीठकम्॥ ६६-९०॥

लक्ष्मीपीठं ब्रह्मपीठं लाङ्गलीपीठमेव च।

मानपीठं ज्ञानपीठं रुद्रपीठं तदन्तिके॥ ६६-९१॥

लाकिनी कुलपापीठं वलाकापीठमेव च।

रौद्रप्रभामहापीठं म्लेच्छवासिसुपीठकम्॥ ६६-९२॥

मक्कासिद्धकरीपीठं निरञ्जनस्वपीठकम्।

ब्राह्मीपीठं दत्तपीठमभयापीठमेव च॥ ६६-९३॥

रंगिणीपीठमेवं हि फेत्कारीपीठमर्चयेत्।

गर्गरीसिद्धपीठं च चन्द्रशेखरशैलकम्॥ ६६-९४॥

हरिद्वाराख्यपीठं तु समुद्रपीठमर्चयेत्।

कट्यां सङ्केतपीठं च काञ्चीपीठं त्रिघर्घरम्॥ ६६-९५॥

शूलिनीपीठमभ्यर्च्य लङ्कापीठं समर्चयेत्।

वारुणीपीठमभ्यर्च्य वज्रपीठं समर्चयेत्॥ ६६-९६॥

सिद्धकटाहपीठञ्च महासंहारपीठकम्।

षट्पीठं द्राविडापीठं विष्णुपीठं रसान्वितम्॥ ६६-९७॥

दलपीठं तथा राधापीठं पञ्चनलाख्यकम्।

कुण्डलीचक्रपीठं तु कामपीठं समर्चयेत्॥ ६६-९८॥

महावाय्वाकाशपीठं त्रिकालचक्रपीठकम्।

ब्रह्मपीठं धरापीठं शत्रुपीठं समर्चयेत्॥ ६६-९९॥

कुञ्जराख्यं महापीठं कालधर्माख्यपीठकम्।

तद्वामे डाकिनीपीठं गर्भपीठं तदन्तिके॥ ६६-१००॥

मयूरपीठमभ्यर्च्य गारुडीपीठमर्चयेत्।

प्रणवं पूर्वमुच्चार्य चात्र पीठस्थितान् स्वरान्॥ ६६-१०१॥

पूजयामि पद्मपुष्पैः प्रसन्नाः प्रभवन्तु ते।

पूजयित्वा पीठलोकं शिवलोकं समर्चयेत्॥ ६६-१०२॥

क्षेत्रपाललोकमेवं धूम्रलोकं त्रिलोककम्।

पूजयेत् सागरान् सप्त भुवनानि चतुर्दश॥ ६६-१०३॥

ताराग्रहगणक्रान्तलोकपालयुतानि च।

पूजयित्वा तद्बाह्ये च शक्तिविद्याः प्रपूजयेत्॥ ६६-१०४॥

डाकिनी राकिणी पूज्या लाकिनी काकिनी तथा।

शाकिनी हाकिनी पश्चात् प्रभा नीला च बोधिनी॥ ६६-१०५॥

उन्मनी भाविनी चिन्ता प्रियाङ्गी मानसेश्वरी।

उल्कामुखी क्रोधमुखी विप्रचित्ता सुभद्रिका॥ ६६-१०६॥

नागिनी नागमाला च पृथिवीतीर्थवासिनी।

अकलङ्का जाह्नवी च स्वर्गगङ्गा मनोन्मनी॥ ६६-१०७॥

सं सत्वस्था रं रजःस्था तं तमः स्था प्रपूजयेत्।

सर्वां देवीं पूजयेद् वै प्रणवादिनमोऽन्तिकाम्॥ ६६-१०८॥

धूपदीपौ स्वमूलेन दद्यात् साधकयोगिराट्।

नैवेद्यं शोधयित्वा च दद्यात् पानार्थकं प्रभो॥ ६६-१०९॥

पुनराचमनं दत्वा विशेषबलिमर्पयेत्।

पूर्वोक्तस्तु मामानेन पञ्चतत्त्वक्रियादिभिः॥ ६६-११०॥

अनेन मनुना दद्यात् बलित्रयमनुत्तमम्।

प्रणवं कालमायेऽन्ते सर्वपीठनिवासिनि॥ ६६-१११॥

तदन्ते कालिकाबीजं स्वबीजं तदनन्तरम्।

आकाशवाहिनीत्यन्ते बलिं गृह्ण ततः परम्॥ ६६-११२॥

पञ्चतत्त्वादिमिलितं कपाले तदनन्तरम्।

परिगृह्णयुगं पश्चात् शब्दबीजं ततो द्विजः॥ ६६-११३॥

अनेन मनुना दद्याद् बलित्रयमनुत्तमम्।

सर्वत्र मानसैर्योगी ददाति पूजनं बलिम्॥ ६६-११४॥

प्राणायामं त्रिधा कृत्वा जपेन्मन्त्रं यथाविधि।

सहस्रं वा शतं वापि चाष्टोत्तरसमन्वितम्॥ ६६-११५॥

दिवसे यज्जपं कुर्याद्रात्रौ तज्जाप्यमाश्रयेत्।

जपं समर्पयेद् देव्या वामहस्ते तु मन्त्रकैः॥ ६६-११६॥

गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम्।

सिद्धिर्भवतु मे देवि त्वत्प्रसादात् सुरेश्वरि॥ ६६-११७॥

प्राणायामं त्रिषट्कृत्वा वन्दनं च प्रदक्षिणम्।

संवन्दे वरदे देवि त्रैलोक्यकुलपावनि॥ ६६-११८॥

सर्वसिद्धिप्रदे देवि शाकिनी त्वां नमाम्यहम्।

वेदविद्याप्रकाशे त्वं नानाविद्याविनोदिनि॥ ६६-११९॥

भवानि सिद्धिदे देवि वरदा भव सर्वदा।

सर्वदानवहन्त्री त्वं मम शत्रून् विनाशय॥ ६६-१२०॥

अकालमृत्युहरणं कुलकौमारिशाकिनि।

सदाशिवयुते नित्ये सदाशिवविहारिणि॥ ६६-१२१॥

अमरत्वं सदा देहि भक्तिं मुक्तिं प्रयच्छ मे।

शाकिनी प्राणदे देवि देवानां प्राणरक्षिणि॥ ६६-१२२॥

शाकम्भरि नमस्तेऽस्तु मम देहं समाश्रय।

वाञ्छाकल्पतरोर्मूले स्थायिनि प्रेमदायिनि॥ ६६-१२३॥

सर्वलोकाचीते सिद्धिकण्ठपद्मे स्थिरा भव॥ ६६-१२४॥

कण्ठाम्भोरुहमण्डले सुविमले वाञ्छाफले ज्वालिनी।

कामाख्ये प्रणमामि शाकिनि पदं मातही शाकम्भरि।

देवानां जगतां हिताय विनये सम्यग्वरश्रीप्रदे।

स्थित्यादिक्रमसंस्थिता भव महाकाशप्रभाचञ्चले॥ ६६-१२५॥

इति प्रणम्य भावेन भुक्तिमुक्ती लभेद् ध्रुवम्।

पूजाफलमवाप्नोति प्रदक्षिणरतो नरः॥ ६६-१२६॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षट्चक्रप्रकाशे भैरवभैरवीसंवादे शाकिनीयजनं नाम षष्ठषष्टितमः पटलः॥ ६६॥

अथ सप्तषष्टितमः पटलः

श्रीनन्दभैरवी उवाच

कुरु नाथ वन्दनं भो पूजनं कवचं पठ।

वर्णाध्यानं कण्ठपद्मे स्थिरो भव जगत्पते॥ ६७-१॥

परमा शाकिनी विद्या महामोहनिवारिणी।

योगिनीकोटिभिः सार्धं राजते सूर्यवत् सदा॥ ६७-२॥

वाराणसीपुरे स्थित्वा कण्ठपद्मस्थितां भज।

स्तोत्रेणानेन विधिना भक्तिं कुरु महाशिवे॥ ६७-३॥

अखण्डे नीलपङ्केरुहविमलकरे स्थापितां षोडशारे।

हेमाभां विद्युताभां सुकणकवलयां चन्द्रकोटिप्रभावाम्।

श्रीकन्यां शाकिनीशां त्रिपुरहरकराम्भोजपूजाविनोदीं।

कामाख्यां रुद्रमायां वधुनयनयुतां शक्रकान्तप्रकाशाम्॥ ६७-४॥

सिन्धुस्थां भावयामि प्रमथगणवधूप्रोज्ज्वलां वेदयुक्तां।

योगेन्द्रानन्दकर्त्रीं कमलवलयां नीलजीमूतनेत्राम्।

ओङ्कारां कारणाख्यां मधुगृहनिकरामष्टगेहप्रकाशा--।

मानन्दज्ञाननित्यां द्विविनदलकलां कण्ठवैकुण्ठशोभाम्॥ ६७-५॥

धर्मार्थज्ञानदात्रीं त्रिभुवनभुविकाह्लादहेतोः प्रकाश्यां।

विन्ध्यस्थां पीठकन्यां त्रिकमलनयनां वेदहस्तां प्रसन्नाम्।

स्मेरास्यां चन्द्रवक्त्रां हरिहरविधिभिर्ध्यानगम्यां कदाचि--।

च्छम्भुस्थां चारुरूपां भवभयहरणीं तारिणीं भावयामि॥ ६७-६॥

सूक्ष्मां स्थूलप्रभाढ्यां चरणतलविभाकोटिबन्धूककान्तिं।

कान्तानां कामकान्तां जयरतिभवतीं शाकिनीं शोकहन्त्रीम्।

शब्दान्तःप्रान्तरस्थां स्थितिलयगगनां पद्मरागस्त्रजाढ्यां।

कान्त्या विश्वं ज्वलन्तीं मदनवधुरमाबीजमालां स्मरामि॥ ६७-७॥

व्याघ्रस्थां व्याघ्रवस्त्रां हरिणनयनकैः केवलानन्दरूपां।

वामां शक्तिं प्रवालां त्रिकुलजलकलां कालराजेश्वरीं याम्।

आनन्दाब्धौ प्रभान्तीं प्रभुगणभयहां मातृकाबीजभूषां।

घोरामट्टाट्टहास्यां दशनसुहसनां चारुनेत्रां भजामि॥ ६७-८॥

बालादित्यायुताभां चरमपदमदां मद्यमाधुर्यभक्षां।

क्षोणीसिंहासनस्थां मणिमयजपमालाभिर्वरानन्दहस्ताम्।

मातल्लीलाकलापां तरतनुविमलां चामले कण्ठपमे।

नित्यज्ञानप्रकाशां भजति मम सदानन्दचित्तावसन्नाम्॥ ६७-९॥

हालापानोद्यताङ्गीं परमसुखमयीं वेदसन्तानकर्त्रीं।

योगानन्दादिकर्त्रीं तरुणघनघटाघोररूपां करालाम्।

आकाशाम्भोजमध्येऽविकलकरयुषा व्यापकाङ्गप्रकाशां।

सा माता श्रीं वहन्तीं परिसमयकलौ मोक्षभक्तिं भजे त्वाम्॥ ६७-१०॥

सा विद्याधर्मचिन्तामणिगुणजनिता योजिता जातु भीतौ।

शब्दब्रह्मैकहेतुस्थलनिलयमहाज्ञानसाक्षिप्रतीता।

त्वं माता वेदमाता हर हर कलुषं बालिशं तारयन्ती।

जीवात्मानं द्विरक्षक्षयमरणभयभ्रान्तिमाभञ्जयन्ती॥ ६७-११॥

ज्वाला मालाविलोला कलयति कलुषं शाकिनी सैव माता।

यातायातप्रभातोदयदिवसनिशाभ्रान्तिमोहारिनाशा।

दासानामामवासा वसति शशिगृहे कातीकेशासुवंशा।

संसारेऽशादिहंसा चल चल चपलं त्वं कलाषोडशारे॥ ६७-१२॥

बीजात्मा यज्ञकुण्डे रचयति चरणाच्छन्दसां गद्यपद्यैः।

पाताले भूकराले कुलयुगदलके निर्गता वेदशक्तिः।

पश्यन्ती मध्यमाद्या नयनवचनगा वैखरी वाक्स्वरूपा।

कण्ठे हृत्पद्ममूले कथयति कविता स्तम्भितास्त्वां प्रयामि॥ ६७-१३॥

परा सा पर्वा सा रहितमतहासा प्रविश मे।

घनश्यामे वामे द्विकमलललाटेऽतिशिखया।

वहन्ती सिन्दूरं त्रिजपपरयानामपरया

मुखाम्भोजे वश्या भवभवयुगं षोडशदले॥ ६७-१४॥

रमा लज्जा माया वधुमदनकूर्चास्त्रसहिते।

हिते मातः शाकम्भरि धरणि बाला कमलया।

निशार्धे शत्र्वङ्गं हन हन करे संहर रिपुं।

त्रितारी षट्कूटा मदनवधुजाह्विजाया हर अघम्॥ ६७-१५॥

योगेन्द्रानन्दमुद्रां तरतनुतपनां तापिनीं तप्तदेहां।

मुग्धानां मोहमुग्धां मुकुटशशिमणिच्छायायाच्छन्नवेशाम्।

कामाख्यां ब्रह्मबीजध्वनिमदनकुलाद्यादिबीजप्रतिष्ठां।

स्वाहान्तां भावयामि क्षितिसुरपतिहंसाख्यब्रह्मास्त्रविद्याम्॥ ६७-१६॥

सायाह्ने कामलक्ष्मीः पवनविधुयुता दीर्घनेत्रा त्रिनेत्रा।

सावित्री मध्यकाले न चलति चलति श्रद्धया मस्तकोर्ध्वे।

कोट्यर्काभासमाना न नमति कुटिलं तेजसा व्याकुलालं।

कालोल्काकोटिकूटं रमयति धवलास्यारुणाङ्गी प्रभाते॥ ६७-१७॥

गायत्री वर्णमात्रामितवनवनिता मानिता भालकूपे।

हालाकालानलाङ्गी तिमिरहरपदालीढपादारविन्दा।

त्वं विद्या वाग्भवाद्या प्रणवतनुमयी देवलक्ष्मीः प्रसादा।

नादाद्याचार्धचन्द्रोज्ज्वलयुगलं षोडशारे ममारे॥ ६७-१८॥

जाया माया विमाया हयमुखि विमले केवले तारहारे।

हारार्कचित्रिताङ्गि स्ववधुयुगयुगे तारयद्वन्द्वचन्द्रे।

स्वाहा मेधा स्वधा त्वं श्रुतिनुतिसुनतिग्रन्थिवाग्वादिनी त्वं।

मामेकं रक्षयुग्मं धरणिधरसुखं सञ्चयाग्निप्रियान्ता॥ ६७-१९॥

एतत् स्तववरं पठेद्यदि सदा ध्यात्वा नरेन्द्रः सुखी।

धन्यः पुण्यमुपैति देवविलयं पीठादिसन्दर्शनम्।

योगानामपि सिद्धिभाक्प्रियतरं ज्ञानं धनं लभ्यते।

राजानं वशयन्ति ते च सहसा साक्षात् कटाक्षै रमाम्॥ ६७-२०॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षट्चक्रप्रकाशे भैरवीभैरवसंवादे शाकिनीस्तोत्रविन्यासो नाम सप्तषष्टितमः पटलः॥ ६७॥

अथाष्टषष्टितमः पटलः

श्रीनन्दभैरव उवाच

त्रैलोक्यरक्षणार्थाय पूजयामि तवानघे।

संसारविलयार्थाय तव श्रीचरणाम्बुजम्॥ ६८-१॥

महादेवि जगद्धात्रि परमानन्दवर्धिनि।

भवानि भैरवि प्राणे वर्णध्यानं वदामलम्॥ ६८-२॥

श्रीनन्दभैरवी उवाच

अथ कामेश गौराङ्ग धर्माधर्मप्रदर्शक।

इदानीं शृणु सर्वज्ञ महाज्ञाननिरूपणम्॥ ६८-३॥

वर्णध्यानं तव स्नेहात् कथये मम रूपकम्।

अकस्मात् सिद्धिदं ध्यानं ज्ञानमात्रेण सिध्यति॥ ६८-४॥

अकारं ध्यायेऽहं हरिहरचतुर्वक्त्रविबुधैः।

सदा ध्येयं शुक्लं विधुमुखिवधुश्रीश्रुतिभुजम्।

विधेयं कौमारं त्रिनयनमलङ्कारजडितं।

कपालाब्जास्त्राहिमहितशितांशुप्रभकरम्॥ ६८-५॥

आं बीजाढ्यां प्रभासां कनकघटमधुप्रीतिमानां विमानां।

शुक्लच्छायां वहन्तीं श्रुतिभुजसहितां पद्मनालाख्यमालाम्।

खड्गं तां धारयन्तीं मुकुटमणिरुचिं क्रोधमाकाशदेशं।

नानालङ्कारदीप्तिं हिमकरकपिलावाहनीं भावयामि॥ ६८-६॥

इं मायां भुवनस्थितां वधुयुतां श्रीषोडशीसंयुतां।

मायालक्षणलक्षितां त्रिजगतां विद्याभयश्रीपदाम्।

हस्ताम्भोजचतुष्टयां त्रिनयनां शूलासिमालाम्बुजां।

नानारत्नजनूपुरां सुरनतां ध्याये विशुद्धाम्बुजे॥ ६८-७॥

कोट्यर्काभासमानां कनकमयमहालङ्कृतां ध्यानगम्यां।

ईकाराकारमूर्तीं त्रिनयनकमलां वेदहास्योज्ज्वलाङ्गीम्।

शङ्खाम्भोजासिघण्टासहिततनुवरां देवसिंहासनस्थां।

वेदस्थां वेदसिद्धां रुधिरशितयुतां बाललीलां भजामि॥ ६८-८॥

उकारं ब्रह्माणं त्रिमुनिसहितं काञ्चनरसं।

हयं हंसारूढं इवरसनयुतं मन्दिराजालवाद्यम्।

विशालं वेदास्यं शतरविसुवर्णं त्रिनयनं।

जटाकुण्डाह्लादं तरुणपुरुषं नौमि सततम्॥ ६८-९॥

उं****कारं सर्वरूपं विधुशतजटितं काञ्चनाभं त्रिसर्गं।

मन्दारैर्मानसाप्तं प्रचयघनरसं शुद्धसूत्राक्षमालम्।

हस्तौ द्वौ संवहन्तं फणिगणललनामालयानन्दरूपं।

सिद्धानामिष्टसिद्धिं कुलकमलघनं भावये षोडशारे॥ ६८-१०॥

ॠंकारं सप्तरेखासहितविमलया मालया शोभिताङ्गं।

मायाविस्थं प्रसन्नाननकमलवरं वारणाकारदेहम्।

पुण्यं यज्ञादिसिद्धं मदनशशिकलामादनं षड्भुजाढ्यं।

घण्टाचार्वस्त्रखङ्गामलकमलकपालाङ्गमेकं भजामि॥ ६८-११॥

ॠं बीजं चातिथीशं शितकमलमुखं शुक्लवर्णं त्रिनेत्रं।

मायालक्ष्मीस्वरान्तं तरुणरविकरं षड्भुजं नीलवस्त्रम्।

नानालङ्कारशोभातरमुकुटतटं चन्द्रबिम्बस्वभावं।

खड्गाब्जज्ञानमुद्रामधुधर--सुगदा पाशपाणिं भजामि॥ ६८-१२॥

ऌंकारं स्थाणुकेशं त्रिनयनवदनाम्भोजतेजःप्रकाशं।

पूर्णात्मानं परेशं त्रिगुणघनमयं नीलवर्णं त्रिभावम्।

षड्बाहुं पिङ्गकेशामलगलितशिरोमण्डलं मालयाढ्यं।

वेदासिज्ञानमालाम्बुजवरगदया शोभितं भावयामि॥ ६८-१३॥

ॡंकारं शितवसनयुक्शुक्लकिरणं।

सुधामग्नं ध्याये हरिणनयनं वेदभुजगम्।

भुजङ्गाम्भोजासिप्रियवरदभावं शुभकरं।

करालं भूपालं सुरमुनिगणैः सेव्यमनिशम्॥ ६८-१४॥

एंबीजं कालवर्णं शतयुवतिगतं वेष्टितं देवमुख्यैः।

सूर्याभं बिन्दुसर्गं भुजयुगसहितं पद्मभालं करालम्।

सालङ्कारं किरीटं त्रिनयनममरं नूपुरेन्दुप्रकाशं।

झिण्टीशं शम्बरीशं प्रमथसुतगणैर्व्यापितं भावयामि॥ ६८-१५॥

शुक्लाभं वा भवार्णं त्रिवलितनयनं शुद्धबन्धूकवस्त्रं।

रत्नालङ्कारहारं त्रिभुवनवचनं षड्भुजं बीजसारम्।

ध्यायेऽहं षोडशारे त्रिमदनरमणे भावितं पञ्चरश्ंमि।

योगाद्यं भौतिकेशं गगनपथकरं वह्निजायास्वरान्तम्॥ ६८-१६॥

भजे प्रणवलक्षणं शितकरं चलत्कुण्डलं।

चतुर्भुजविभाकरं कमलशङ्खशूलाभयम्।

अलङ्कृतकलेवरं विमलपीतवस्त्रं मुखं।

शुक्लांशुशतवेष्टितं मुकुटनूपुराढ्यं परम्॥ ६८-१७॥

ध्याये चानुग्रहेशं प्रणवधवल औङ्काररूपं सुसूक्ष्मं।

ब्रह्माद्वारप्रभेदं श्रुतिभुजललितं खड्गबाणास्त्रमालम्।

जन्तूनां कोटिकान्तिं शतरविमुकुटं क्रोधराजं महेशं।

रत्नालङ्कारशोभं चरलतलरिभामण्डलं सारुणाभम्॥ ६८-१८॥

अङ्कारं बिन्दुभावं ललितदशभुजं व्याघ्रचर्माम्बराढ्यं।

पञ्चास्यं तं त्रिनेत्रं स्वकणकवलयं चन्द्रकोटिप्रकाशम्।

शूलास्त्रासीषु चक्रप्रतनफलगदाखेटकाम्भोजमालं।

ध्याये चाक्रूरदेवं परशुखरपदं सारदं स्थूलसूक्ष्मम्॥ ६८-१९॥

अःकारं श्रीविसर्गं कमलदलगतं दीनदातारमेकं।

शुक्लाभं कोटिसूर्यं शतभुजललितं वेदविद्यास्त्रखङ्गम्।

सर्वाङ्गारक्तधारं त्रिनयनकमलानन्दितं मन्दहास्यं।

पञ्चाशद्वक्रशोभाभवतनुकिरणं कारणं भावयामि॥ ६८-२०॥

एवं ध्यात्वा षोडशारे स्थिरचेताः प्रपूजयेत्।

वर्णरूपं शक्तियुतं लोकनाथं सदाशिवम्॥ ६८-२१॥

तदा प्रसन्ना बुद्धिः स्यादमरो जायतेऽचिरात्।

खेचरत्वं वाक्यसिद्धिं जलस्तम्भादिसिद्धिभाक्॥ ६८-२२॥

पूर्वादिवामतो ध्यायेत् कामनाभयवजीतः।

गुप्तस्थाने ध्यानकार्यं यत्र विद्याः स्फुरन्ति ताः॥ ६८-२३॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षड्चक्रप्रकाशे भैरवीभैरवसंवादे विशुद्धवर्णध्यानं नाम अष्टषष्टितमः पटलः॥ ६८॥

## अथैकोनसप्ततितमः पटलः

श्रीनन्दभैरवी उवाच

कैलासशिखरारूढ पञ्चवक्त्र त्रिलोचन।

अभेद्यभेदकप्राणवल्लभ श्रीसदाशिव॥ ६९-१॥

भवप्राणप्ररक्षाय कालकूटहराय च।

प्रत्यङ्गिरापादुकाय दान्तं शब्दमयं प्रियम्॥ ६९-२॥

इच्छामि रक्षणार्थाय भक्तानां योगिनां सताम्।

अवश्यं कथयाम्यत्र सर्वमङ्गललक्षणम्॥ ६९-३॥

अष्टोत्तरसहस्राख्यं सदाशिवसमन्वितम्।

महाप्रभावजननं दमनं दुष्टचेतसाम्॥ ६९-४॥

सर्वरक्षाकरं लोके कण्ठपद्मप्रसिद्धये।

अकालमृत्युहरणं सर्वव्याधिनिवारणम्॥ ६९-५॥

योगसिद्धिकरं साक्षाद् अमृतानन्दकारकम्।

विषज्वालादिहरणं मन्त्रसिद्धिकरं परम्॥ ६९-६॥

नाम्नां स्मरणमात्रेण योगिनां वल्लभो भवेत्।

सदाशिवयुतां देवीं सम्पूज्य संस्मरेद् यदि॥ ६९-७॥

मासान्ते सिद्धिमाप्नोति खेचरीमेलनं भवेत्।

आकाशगामिनीसिद्धिः पठित्वा लभ्यते ध्रुवम्॥ ६९-८॥

धनं रत्नं क्रियासिद्धिं विभूतिसिद्धिमालभेत्।

पठनाद् धारणाद्योगी महादेवः सदाशिवः॥ ६९-९॥

विष्णुश्चक्रधरः साक्षाद् ब्रह्मा नित्यं तपोधनः।

योगिनः सर्वदेवाश्च मुनयश्चापि योगिनः॥ ६९-१०॥

सिद्धाः सर्वे सञ्चरन्ति धृत्वा च पठनाद् यतः।
ये ये पठन्ति नित्यं तु ते सिद्धा विष्णुसम्भवाः॥ ६९-११॥
किमन्यत् कथनेनापि भुक्तिं मुक्ंति क्षणाल्लभेत्॥ ६९-१२॥

अस्य श्रीभुवनमङ्गलमहास्तोत्राष्टोत्तरसहस्रनाम्नः सदाशिवऋषिर्गायत्रीच्छन्दः सदाशिवशाकिनीदेवता पुरुषार्थाष्टसिद्धिसमययोगसमृद्धये विनियोगः।

ओं शाकिनी पीतवस्त्रा सदाशिव उमापतिः
शाकम्भरी महादेवी भवानी भुवनप्रियः॥ ६९-१३॥
योगिनी योगधर्मात्मा योगात्मा श्रीसदाशिवः।
युगाद्या युगधर्मा च योगविद्या सुयोगिराट्॥ ६९-१४॥
योगिनी योगजेताख्यः सुयोगा योगशङ्करः।
योगप्रिया योगविद्वान् योगदा योगषड्गुवि॥ ६९-१५॥
त्रियोगा जगदीशात्मा जापिका जपसिद्धिदः।
यत्नी यत्नप्रियानन्दो विधिज्ञा वेदसारवित्॥ ६९-१६॥
सुप्रतिष्ठा शुभकरो मदिरा मदनप्रियः।
मधुविद्या माधवीशः क्षितिः क्षोभविनाशनः॥ ६९-१७॥
वीतिज्ञा मन्मथघ्नश्च चमरी चारुलोचनः।
एकान्तरा कल्पतरुः क्षमाबुद्धो रमासवः॥ ६९-१८॥
वसुन्धरा वामदेवः श्रीविद्या मन्दरस्थितः।

अकलङ्का निरातङ्क उतङ्का शङ्कराश्रयः॥ ६९-१९॥

निराकारा निर्विकल्पो रसदा रसिकाश्रयः।

रामा रामननाथश्च लक्ष्मी नीलेषुलोचनः॥ ६९-२०॥

विद्याधरी धरानन्दः कनका काञ्चनाङ्गधृक्।

शुभा शुभकरोन्मत्तः प्रचण्डा चण्डविक्रमः॥ ६९-२१॥

सुशीला देवजनकः काकिनी कमलाननः।

कज्जलाभा कृष्णदेहः शूलिनी खड्गचर्मधृक्॥ ६९-२२॥

गतिग्राह्यः प्रभागौरः क्षमा क्षुब्धः शिवा शिवः।

जवा यतिः परा हरिर्हराहरोऽक्षराक्षरः॥ ६९-२३॥

सनातनी सनातनः श्मशानवासिनीपतिः।

जयाक्षयो धराचरः समागतिः प्रमापतिः॥ ६९-२४॥

कुलाकुलो मलाननो वलीवला मलामलः।

प्रभाधरः परापरः सरासरः कराकरः॥ ६९-२५॥

मयामयः पयापयः पलापलो दयादयः।

भयाभयो जयाजयो गयागयः फलान्वयः॥ ६९-२६॥

समागमो धमाधमो रमारमो वमावमः।

वराङ्गणा धराधरः प्रभाकरो भ्रमाभ्रमः॥ ६९-२७॥

सती सुखी सुलक्षणा कृपाकरो दयानिधिः।

धरापतिः प्रियापतिर्वीरागिणी मनोन्मनः॥ ६९-२८॥

प्रधाविनी सदाचलः प्रचञ्चलातिचञ्चलः।

कटुप्रिया महाकटुः पटुप्रिया महापटुः॥ ६९-२९॥

धनावली गणागणी खराखरः फणिः क्षणः।

प्रियान्विता शिरोमणिस्तु शाकिनी सदाशिवः॥ ६९-३०॥

रुणारुणो घनाघनो हयी हयो लयी लयः।

सुदन्तरा सुदागमः खलापहा महाशयः॥ ६९-३१॥

चलत्कुचा जवावृतो घनान्तरा स्वरान्तकः।

प्रचण्डघर्घरध्वनिः प्रिया प्रतापवह्निगः॥ ६९-३२॥

प्रशान्तिरुन्दुरुस्थिता महेश्वरी महेश्वरः।

महाशिवाविनी घनी रणेश्वरी रणेश्वरः॥ ६९-३३॥

प्रतापिनी प्रतापनः प्रमाणिका प्रमाणवित्।

विशुद्धवासिनी मुनिवीशुद्धविन्मधूत्तमा॥ ६९-३४॥

तिलोत्तमा महोत्तमः सदामया दयामयः।

विकारतारिणी तरुः सुरासुरोऽमरागुरुः॥ ६९-३५॥

प्रकाशिका प्रकाशकः प्रचण्डिका विभाण्डकः।

त्रिशूलिनी गदाधरः प्रवालिका महाबलः॥ ६९-३६॥

क्रियावती जरापतिः प्रभाम्बरा दिगम्बरः।

कुलाम्बरा मृगाम्बरा निरन्तरा जरान्तरः॥ ६९-३७॥

श्मशाननिलया शम्भुर्भवानी भीमलोचनः।

कृतान्तहारिणीकान्तः कुपिता कामनाशनः॥ ६९-३८॥

चतुर्भुजा पद्मनेत्रो दशहस्ता महागुरुः।

दशानना दशग्रीवः क्षिप्ताक्षी क्षेपनप्रियः॥ ६९-३९॥

वाराणसी पीठवासी काशी विश्वगुरुप्रियः।

कपालिनी महाकालः कालिका कलिपावनः॥ ६९-४०॥

रन्ध्रवर्त्मस्थिता वाग्मी रती रामगुरुप्रभुः।

सुलक्ष्मीः प्रान्तरस्थश्च योगिकन्या कृतान्तकः॥ ६९-४१॥

सुरान्तका पुण्यदाता तारिणी तरुणप्रियः।

महाभयतरा तारास्तारिका तारकप्रभुः॥ ६९-४२॥

तारकब्रह्मजननी महादृप्तः भवाग्रजः।

लिङ्गगम्या लिङ्गरूपी चण्डिका वृषवाहनः॥ ६९-४३॥

रुद्राणी रुद्रदेवश्च कामजा काममन्थनः।

विजातीया जातितातो विधात्री धातृपोषकः॥ ६९-४४॥

निराकारा महाकाशः सुप्रविद्या विभावसुः।

वासुकी पतितत्राता त्रिवेणी तत्त्वदर्शकः॥ ६९-४५॥

पताका पद्मवासी च त्रिवार्ता कीतीवर्धनः।

धरणी धारणाव्याप्तो विमलानन्दवर्धनः॥ ६९-४६॥

विप्रचित्ता कुण्डकारी विरजा कालकम्पनः।

सूक्ष्माधारा अतिज्ञानी मन्त्रसिद्धिः प्रमाणगः॥ ६९-४७॥

वाच्या वारणतुण्डश्च कमला कृष्णसेवकः।

दुन्दुभिस्था वाद्यभाण्डो नीलाङ्गी वारणाश्रयः॥ ६९-४८॥

वसन्ताद्या शीतरश्मिः प्रमाद्या शक्तिवल्लभः।

खड्गना चक्रकुन्ताढ्यः शिशिराल्पधनप्रियः॥ ६९-४९॥

दुर्वाच्या मन्त्रनिलयः खण्डकाली कुलाश्रयः।

वानरी हस्तिहाराद्यः प्रणया लिङ्गपूजकः॥ ६९-५०॥

मानुषी मनुरूपश्च नीलवर्णा विधुप्रभः।

अधश्चन्द्रधरा कालः कमला दीर्घकेशधृक्॥ ६९-५१॥

दीर्घकेशी विश्वकेशी त्रिवर्गा खण्डनिर्णयः।

गृहिणी ग्रहहर्ता च ग्रहपीडा ग्रहक्षयः॥ ६९-५२॥

पुष्पगन्धा वारिचरः क्रोधादेवी दिवाकरः।

अञ्जना क्रूरहर्ता च केवला कातरप्रियः॥ ६९-५३॥

पद्मामयी पापहर्ता विद्याद्या शैलमर्दकः।

कृष्णजिह्वा रक्तमुखो भुवनेशी परात्परः॥ ६९-५४॥

वदरी मूलसम्पर्कः क्षेत्रपाला बलानलः।

पितृभूमिस्थिताचार्यो विषया बादरायणिः॥ ६९-५५॥

पुरोगमा पुरोगामी वीरगा रिपुनाशकः।

महामाया महान्मायो वरदः कामदान्तकः॥ ६९-५६॥

पशुलक्ष्मीः पशुपतिः पञ्चशक्तिः क्षपान्तकः।

व्यापिका विजयाच्छन्नो विजातीया वराननः॥ ६९-५७॥

कटुमूर्तीः शाकमूर्तीस्त्रिपुरा पद्मगर्भजः।

अजाब्या जारकः प्रक्ष्या वातुलः क्षेत्रबान्धवा॥ ६९-५८॥

अनन्तानन्तरूपस्थो लावण्यस्था प्रसञ्चयः।

योगज्ञो ज्ञानचक्रेशो बभ्रमा भ्रमणस्थितः॥ ६९-५९॥

शिशुपाला भूतनाशो भूतकृत्या कुटुम्बपः।

तृप्ताश्वत्थो वरारोहा वटुकः प्रोटिकावशः॥ ६९-६०॥

श्रद्धा श्रद्धान्वितः पुष्टिः पुष्टो रुष्टाष्टमाधवा।

मिलिता मेलनः पृथ्वी तत्त्वज्ञानी चरुप्रिया॥ ६९-६१॥

अलब्धा भयहान्त्या दशनः प्राप्तमानसा।

जीवनी परमानन्दो विद्याढ्या धर्मकर्मजः॥ ६९-६२॥

अपवादरताकाङ्क्षी विल्वानाभद्रकम्बलः।

शिविवाराहनोन्मत्तो विशालाक्षी परन्तपः॥ ६९-६३॥

गोपनीया सुगोप्ता च पार्वती परमेश्वरः।

श्रीमातङ्गी त्रिपीठस्थो विकारी ध्याननिर्मलः॥ ६९-६४॥

चातुरी चतुरानन्दः पुत्रिणी सुतवत्सलः।

वामनी विषयानन्दः किङ्करी क्रोधजीवनः॥ ६९-६५॥

चन्द्रानना प्रियानन्दः कुशला केतकीप्रियः।

प्रचला तारकज्ञानी त्रिकर्मा नर्मदापतिः॥ ६९-६६॥

कपाटस्था कलापस्थो विद्याज्ञा वर्धमानगः।

त्रिकूटा त्रिविधानन्दो नन्दना नन्दनप्रियः॥ ६९-६७॥

विचिकित्सा समाप्ताङ्गो मन्त्रज्ञा मनुवर्धनः।

मन्त्रिका चाम्बिकानाथो विवाशी वंशवर्धनः॥ ६९-६८॥

वज्रजिह्वा वज्रदन्तो विक्रिया क्षेत्रपालनः।

विकारणी पार्वतीशः प्रियाङ्गी पञ्चचामरः॥ ६९-६९॥

आंशिका वामदेवाद्या विमायाढ्या परापरः।

पायाङ्गी परमैश्वर्या दाता भोक्री दिवाकरः॥ ६९-७०॥

कामदात्री विचित्राक्षो रिपुरक्षा क्षपान्तकृत्।

घोरमुखी घर्घराख्यो विलज्वा ज्वालिनीपतिः॥ ६९-७१॥

ज्वालामुखी धर्मकर्ता श्रीकर्त्री कारणात्मकः।

मुण्डाली पञ्चचूडाश्च त्रिशावर्णा स्थिताग्रजः॥ ६९-७२॥

विरूपाक्षी बृहद्गर्भो राकिनी श्रीपितामहः।

वैष्णवी विष्णुभक्तश्च डाकिनी डिण्डिमप्रियः॥ ६९-७३॥

रतिविद्या रामनाथो राधिका विष्णुलक्षणः।

चतुर्भुजा वेदहस्तो लाकिनी मीनकुन्तलः॥ ६९-७४॥

मूर्धजा लाङ्गलीदेवः स्थविरा जीर्णविग्रहः।

लाकिनीशा लाकिनीशः प्रियाख्या चारुवाहनः॥ ६९-७५॥

जटिला त्रिजटाधारी चतुराङ्गी चराचरः।

त्रिश्रोता पार्वतीनाथो भुवनेशी नरेश्वरः॥ ६९-७६॥

पिनाकिनी पिनाकी च चन्द्रचूडा विचारवित्।

जाड्यहन्त्री जडात्मा च जिह्वायुक्तो जरामरः॥ ६९-७७॥

अनाहताख्या राजेन्द्रः काकिनी सात्त्विकस्थितः।

मरुन्मूतीः पद्महस्तो विशुद्धा शुद्धवाहनः॥ ६९-७८॥

वृषली वृषपृष्ठस्थो विभोगा भोगवर्धनः।

यौवनस्था युवासाक्षी लोकाद्या लोकसाक्षिणी॥ ६९-७९॥

बगला चन्द्रचूडाख्यो भैरवी मत्तभैरवः।

क्रोधाधिपा वज्रधारी इन्द्राणी वह्निवल्लभः॥ ६९-८०॥

निर्विकारा सूत्रधारी मत्तपाना दिवाश्रयः।

शब्दगर्भा शब्दमयो वासवा वासवानुजः॥ ६९-८१॥

दिक्पाला ग्रहनाथश्च ईशानी नरवाहनः।

यक्षिणीशा भूतिनीशो विभूतिर्भूतिवर्धनः॥ ६९-८२॥

जयावती कालकारी कल्क्यविद्या विधानवित्।

लज्जातीता लक्षणाङ्गो विषपायी मदाश्रयः॥ ६९-८३॥

विदेशिनी विदेशस्थोऽपापा पापवर्जीतः।

अतिक्षोभा कलातीतो निरिन्द्रियगणोदया॥ ६९-८४॥

वाचालो वचनग्रन्थिमन्दरो वेदमन्दिरा।

पञ्चमः पञ्चमीदुर्गो दुर्गा दुर्गतिनाशनः॥ ६९-८५॥

दुर्गन्धा गन्धराजश्च सुगन्धा गन्धचालनः।

चार्वङ्गी चर्वणप्रीतो विशङ्का मरलारवित्॥ ६९-८६॥

अतिथिस्था स्थावराद्या जपस्था जपमालिनी।

वसुन्धरसुता तार्क्षी तार्कीकः प्राणतार्कीकः॥ ६९-८७॥

तालवृक्षावृतोन्नासा तालजाया जटाधरः।

जटिलेशी जटाधारी सप्तमीशः प्रसप्तमी॥ ६९-८८॥

अष्टमीवेशकृत् काली सर्वः सर्वेश्वरीश्वरः।

शत्रुहन्त्री नित्यमन्त्री तरुणी तारकाश्रयः॥ ६९-८९॥

धर्मगुप्तिः सारगुप्तो मनोयोगा विषापहः।

वज्रावीरः सुरासौरी चन्द्रिका चन्द्रशेखरः॥ ६९-९०॥

विटपीन्द्रा वटस्थानी भद्रपालः कुलेश्वरः।

चातकाद्या चन्द्रदेहः प्रियाभार्या मनोयवः॥ ६९-९१॥

तीर्थपुण्या तीर्थयोगी जलजा जलशायकः।

भूतेश्वरप्रियाभूतो भगमाला भगाननः॥ ६९-९२॥

भगिनी भगवान् भोग्या भवती भीमलोचनः।

भृगुपुत्री भार्गवेशः प्रलयालयकारणः॥ ६९-९३॥

रुद्राणी रुद्रगणपो रौद्राक्षी क्षीणवाहनः।

कुम्भान्तका निकुम्भारिः कुम्भान्ती कुम्भिनीरगः॥ ६९-९४॥

कूष्माण्डी धनरत्नाढ्यो महोग्राग्राहकः शुभा।

शिविरस्था शिवानन्दः शवासनकृतासनी॥ ६९-९५॥

प्रसंशा समनः प्राज्ञा विभाव्या भव्यलोचनः।

कुरुविद्या कौरवंशः कुलकन्या मृणालधृक्॥ ६९-९६॥

द्विदलस्था परानन्दो नन्दिसेव्या बृहन्नला।

व्याससेव्या व्यासपूज्यो धरणी धीरलोचनः॥ ६९-९७॥

त्रिविधारण्या तुलाकोटिः कार्पासा खार्पराङ्गधृक्।

वशिष्ठाराधिताविष्टो वशगा वशजीवनः॥ ६९-९८॥

खड्गहस्ता खड्गधारी शूलहस्ता विभाकरः।

अतुला तुलनाहीनो विविधा ध्याननिर्णयः॥ ६९-९९॥

अप्रकाश्या विशोध्यश्च चामुण्डा चण्डवाहनः।

गिरिजा गायनोन्मत्तो मलामाली चलाधमः॥ ६९-१००॥

पिङ्गदेहा पिङ्गकेशोऽसमर्था शीलवाहनः।

गारुडी गरुडानन्दो विशोका वंशवर्धनः॥ ६९-१०१॥

वेणीन्द्रा चातकप्रायो विद्याद्या दोषमर्दकः।

अट्टहासा अट्टहासो मधुभक्षा मधुव्रतः॥ ६९-१०२॥

मधुरानन्दसम्पन्ना माधवो मधुनाशिका।

माकरी मकरप्रेमो माघस्था मघवाहनः॥ ६९-१०३॥

विशाखा सुसखा सूक्ष्मा ज्येष्ठो ज्येष्ठजनप्रिया।

आषाढनिलयाषाढो मिथिला मैथिलीश्वरः॥ ६९-१०४॥

शीतशैत्यगतो वाणी विमलालक्षणेश्वरः।

अकार्यकार्यजनको भद्रा भाद्रपदीयकः॥ ६९-१०५॥

प्रवरा वरहंसाख्यः पवशोभा पुराणवित्।

श्रावणी हरिनाथश्च श्रवणा श्रवणाङ्कुरः॥ ६९-१०६॥

सुकर्त्री साधनाध्यक्षो विशोध्या शुद्धभावनः।

एकशेषा शशिधरो धरान्तः स्थावराधरः॥ ६९-१०७॥

धर्मपुत्री धर्ममात्रो विजया जयदायकः।

दासरक्षादि विदशकलापो विधवापतिः॥ ६९-१०८॥

विधवाधवलो धूर्तः धूर्ताढ्यो धूर्तपालिका।

शङ्करः कामगामी च देवला देवमायिका॥ ६९-१०९॥

विनाशो मन्दराच्छन्ना मन्दरस्थो महाद्वया।

अतिपुत्री त्रिमुण्डी च मुण्डमाला त्रिचण्डिका॥ ६९-११०॥

कर्कटीशः कोटरश्च सिंहिका सिंहवाहनः।

नारसिंही नृसिंहश्च नर्मदा जाह्नवीपतिः॥ ६९-१११॥

त्रिविधस्त्री त्रिसर्गास्त्रो दिगम्बरो दिगम्बरी।

मुञ्चानो मञ्चभेदी च मालञ्चा चञ्चलाग्रजः॥ ६९-११२॥

कटुतुङ्गी विकाशात्मा ऋद्धिस्पष्टाक्षरोऽन्तरा।

विरिञ्चिः प्रभवानन्दो नन्दिनी मन्दराद्रिधृक्॥ ६९-११३॥

कालिकाभा काञ्चनाभो मदिराद्या मदोदयः।

द्रविडस्था दाडिमस्थो मज्जातीता मरुद्गतिः॥ ६९-११४॥

क्षान्तिप्रज्ञो विधिप्रज्ञा वीतिज्ञोत्सुकनिश्चया।

अभावो मलिनाकारा कारागारा विचारहा॥ ६९-११५॥

शब्दः कटाहभेदात्मा शिशुलोकप्रपालिका।

अतिविस्तारवदनो विभवानन्दमानसा॥ ६९-११६॥

आकाशवसनोन्मादी मेपुरा मांसचर्वणः।

अतिकान्ता प्रशान्तात्मा नित्यगुह्या गभीरगः॥ ६९-११७॥

त्रिगम्भीरा तत्त्ववासी राक्षसी पूतनाक्षरः।

अभोगगणिका हस्ती गणेशजननीश्वरः॥ ६९-११८॥

कुण्डपालककर्ता च त्रिरूण्डा रुण्डभालधृक्।

अतिशक्ता विशक्तात्मा देव्याङ्गी नन्दनाश्रयः॥ ६९-११९॥

भावनीया भ्रान्तिहरः कापिलाभा मनोहरः।

आर्यादेवी नीलवर्णा सायको बलवीर्यदा॥ ६९-१२०॥

सुखदो मोक्षदाताऽतो जननी वाञ्छितप्रदः।

चातिरूपा विरूपस्थो वाच्या वाच्यविवजीतः॥ ६९-१२१॥

महालिङ्गसमुत्पन्ना काकभेरी नदस्थितः।

आत्मारामकलाकायः सिद्धिदाता गणेश्वरी॥ ६९-१२२॥

कल्पद्रुमः कल्पलता कुलवृक्षः कुलद्रुमा।

सुमना श्रीगुरुमयी गुरुमन्त्रप्रदायकः॥ ६९-१२३॥

अनन्तशयनाऽनन्तो जलेशी जह्नजेश्वरः।

गङ्गा गङ्गाधरः श्रीदा भास्करेशो महाबला॥ ६९-१२४॥

गुप्ताक्षरो विधिरता विधानपुरुषेश्वरः।

सिद्धकलङ्का कुण्डाली वाग्देवः पञ्चदेवता॥ ६९-१२५॥

अल्पातीता मनोहारी त्रिविधा तत्त्वलोचना।

अमायापतिर्भूभ्रान्तिः पाञ्चजन्यधरोऽग्रजा॥ ६९-१२६॥

अतितप्तः कामतप्ता मायामोहविवजीतः।

आर्या पुत्रीश्वरः स्थाणुः कृशानुस्था जलाप्लुतः॥ ६९-१२७॥

वारुणी मदिरामत्तो मांसप्रेमदिगम्बरा।

अन्तरस्थो देहसिद्धा कलानलसुराद्रिपः॥ ६९-१२८॥

आकाशवाहिनी देवः काकिनीशो दिगम्बरी।

काकचञ्चुपुटमधुहरो गगनमाब्धिपा॥ ६९-१२९॥

मुद्राहारी महामुद्रा मीनपो मीनभक्षिणी।

शाकिनी शिवनाथेशः काकोर्ध्वेशी सदाशिवः॥ ६९-१३०॥

कमला कण्ठकमलः स्थायुकः प्रेमनायिका।

मृणालमालाधारी च मृणालमालमालिनी॥ ६९-१३१॥

अनादिनिधना तारा दुर्गतारा निराक्षरा।

सर्वाक्षरा सर्ववर्णा सर्वमन्त्राक्षमालिका॥ ६९-१३२॥

आनन्दभैरवो नीलकण्ठो ब्रह्माण्डमण्डितः।

शिवो विश्वेश्वरोऽनन्तः सर्वातीतो निरञ्जनः॥ ६९-१३३॥

इति ते कथितं नाथ त्रैलोक्यसारमङ्गलम्।

भुवनमङ्गलं नाम महापातकनाशनम्॥ ६९-१३४॥

अस्य प्रपठनेऽपि च यत्फलं लभते नरः।

तत्सर्वं कथितुं नालं कोटिवर्षशतैरपि॥ ६९-१३५॥

तथापि तव यत्नेन फलं श्रृणु दयार्णव।

राजद्वारे नदीतीरे सङ्ग्रामे विजनेऽनले॥ ६९-१३६॥

शून्यागारे निर्जने वा घोरान्धकाररात्रिके।

चतुष्टये श्मशाने वा पठित्वा षोडशे दले॥ ६९-१३७॥

रक्ताम्भोजैः पूजयित्वा मनसा कामचिन्तयन्।

घृताक्तैर्जुहुयान्नित्यं नाम प्रत्येकमुच्चरन्॥ ६९-१३८॥

मूलमन्त्रेण पुटितमाज्यं वह्नौ समर्पयेत्।

अन्तरे स्वसुखे होमः सर्वसिद्धिसुखप्रदः॥ ६९-१३९॥

सद्योमधुयुतैर्मांसैः सुसुखे मन्त्रमुच्चरन्।

प्रत्येकं नामपुटितं हुत्वा पुनर्मुखाम्बुजे॥ ६९-१४०॥

कुण्डलीरसजिह्वायां जीवन्मुक्तो भवेन्नरः।

धृत्वा वापि पठित्वा वा स्तुत्वा वा विधिना प्रभो॥ ६९-१४१॥

महारुद्रो भवेत्साक्षान्मम देहान्वितो भवेत्।

योगी ज्ञानी भवेत् सिद्धः सारसङ्केतदर्शकः॥ ६९-१४२॥

अपराजितः सर्वलोके किमन्यत् फलसाधनम्।

धृत्वा राजत्वमाप्नोति कण्ठे पृथ्वीश्वरो भवेत्॥ ६९-१४३॥

दक्षहस्ते तथा धृत्वा धनवान् गुणवान् भवेत्।

अकालमृत्युहरणं सर्वव्याधिनिवारणम्॥ ६९-१४४॥

हुत्वा रोजेन्द्रनाथश्च महावाग्मी सदाऽभयः।

सर्वेषां मथनं कृत्वा गणेशो मम कातीकः॥ ६९-१४५॥

देवनामधिपो भूत्वा सर्वज्ञो भवति प्रभो।

यथा तथा महायोगी भ्रमत्येव न संशयः॥ ६९-१४६॥

प्रातःकाले पठेद् यस्तु मस्तके स्तुतिधारकः।

जलस्तम्भं करोत्येव रसस्तम्भं तथैव च॥ ६९-१४७॥

राज्यस्तम्भं नरस्तम्भं वीर्यस्तम्भं तथैव च

विद्यास्तम्भं सुखस्तम्भं क्षेत्रस्तम्भं तथैव च॥ ६९-१४८॥

राजस्तम्भं धनस्तम्भं ग्रामस्तम्भं तथैव च

मध्याह्ने च पठेद् यस्तु वह्निस्तम्भं करोत्यपि॥ ६९-१४९॥

कालस्तम्भं वयःस्तम्भं श्वासस्तम्भं तथैव च।

रसस्तम्भं वायुस्तम्भं बाहुस्तम्भं करोत्यपि॥ ६९-१५०॥

सायाह्ने च पठेद् यस्तु कण्ठोदरे च धारयन्।

मन्त्रस्तम्भं शिलास्तम्भं शास्त्रस्तम्भं करोत्यपि॥ ६९-१५१॥

हिरण्यरजतस्तम्भं वज्रस्तम्भं तथैव च।

अकालत्वादिसंस्तम्भं वातस्तम्भं करोत्यपि॥ ६९-१५२॥

पारदस्तम्भनं शिल्पकल्पना ज्ञानस्तम्भनम्।

आसनस्तम्भनं व्याधिस्तम्भनं बन्धनं रिपोः॥ ६९-१५३॥

षद्वह्मस्तम्भनं कृत्वा योगी भवति निश्चितम्।

वन्ध्या नारी लभेत् पुत्रं सुन्दरं सुमनोहरम्॥ ६९-१५४॥

भ्रष्टो मनुष्यो राजेन्द्रः किमन्ये साधवो जनाः।

श्रवणान्मकरे लग्ने चित्रायोगे च पर्वणि॥ ६९-१५५॥

हिरण्ययोगे वायव्यां लिखित्वा माघमासके।

वैशाखे राजयोगे वा रोहिण्याख्या विशेषतः॥ ६९-१५६॥

श्रीमद्भुवनमगलं नाम यशोदातृ भवेद् ध्रुवम्।

जायन्ते राजवल्लभा अमराः खेचरा लिखनेन॥ ६९-१५७॥

धर्मार्थकाममोक्षं च प्राप्नुवन्ति च पाठकाः।

कीतीरात्मदृष्टिपातं लभते नात्र संशयः॥ ६९-१५८॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षट्चक्रप्रकाशे भैरवीभैरवसंवादे शाकिनीसदाशिवस्तवनमङ्गलाष्टोत्तरसहस्रनाम-- विन्यासो नाम एकोनसप्ततितमः पटलः॥ ६९॥

## अथ सप्ततितमः पटलः

श्रीनन्दभैरव उवाच

कथितं शाकिनीसारं सदाशिवफलोदयम्।

श्रुतं परमकल्याणं भेदभाषाक्रमोदयम्॥ ७०-१॥

इदानीं श्रोतुमिच्छामि कवचं सारदुर्लभम्।

यस्य विज्ञानमात्रेण भवेत् साक्षात् सदाशिवः॥ ७०-२॥

वद कान्ते शब्दमयि यदि स्नेहोऽस्ति मां प्रति।

आनन्दभैरवं नत्वा सोवाचानन्दभैरवी॥ ७०-३॥

श्रीनन्दभैरवी उवाच

गुरोः परमकल्याणं कवचं कथये तव।

सदाशिवस्य शाकिन्या भैरवानन्दविग्रह॥ ७०-४॥

श्रृणुष्व कामदं नामाद्भुतं कवचमङ्गलम्।

त्रैलोक्यसारभूतं च सर्वज्ञानविवर्धनम्॥ ७०-५॥

सर्वमन्त्रौघनिकरं ज्ञानमात्रेण सिद्ध्यति।

सर्वगूढप्रियानन्दं सामरस्यं कुलान्तरम्॥ ७०-६॥

प्रचण्डचण्डिकातुल्यं सर्वनिर्णयसाक्षिणम्।

सर्वबुद्धिकरानन्दं कुलयोगिमनोगतम्॥ ७०-७॥

रामसेव्यं शिवं शम्भुसेवितं विषनाशनम्।

अप्रकाश्यं महायोगं धनारोग्यविवर्धनम्॥ ७०-८॥

सर्वसौभाग्यजननं सर्वानन्दकरं परम्।

सर्वतन्त्रदुर्लभं यत् कथितं रुद्रयामले॥ ७०-९॥

अस्य श्रीशाकिनीसदाशिवकामनानाममहाकवचस्य सदाशिवऋषिर्गायत्रीच्छन्दः शाकिनी देवता

सकलहरीं जीवबीजं मायास्त्रशक्तिः कामस्वाहा कीलकं वज्रं

दंष्ट्रघोरघर्घरामहोग्राशाकिनीशक्तिः सदाशिवमहामन्त्रसिद्धये विनियोगः।

ओं प्रभावा सदा पातु महाकाशाधिशाकिनी।

त्रिगुणा चण्डिका पातु क्रोधदंष्ट्र करालिनी॥ ७०-१०॥

अनन्ताऽनन्तमहिमा महास्त्रदलपङ्कजम्।

पूर्वाह्णं पातु सततं गायत्री सविता मम॥ ७०-११॥

आकाशवाहिनी देवी शिरोमङ्गलमद्भुतम्।

सर्वदा पातु मे गुह्यं लिङ्गं चक्रं सुधामयम्॥ ७०-१२॥

महामण्डलमध्यस्था पातु मे भालमण्डलम्।

सहस्रशतकोटीन्दुयोगिनीगणमण्डलम्॥ ७०-१३॥

महाचक्रेश्वरी पातु महाचक्रेश्वरो मम।

मुखाब्जं चण्डिका देवी दन्तावलिमनन्तकः॥ ७०-१४॥

जिह्वाग्रं तालुमूलस्था तालुमूलं मनोजवः।

तीक्ष्णदंष्ट्र दन्तमध्यं कण्ठाग्रं चिबुकं शिवः॥ ७०-१५॥

सदा पातु षोडशारं शाकिनी श्रीसदाशिवः।

कण्ठमध्यस्थितं पातु महामोहविनाशिनी॥ ७०-१६॥

प्रेतराजः सदा पातु महादेवी स्वपङ्कजम्।

विद्यादेवी महाशक्तिः कूटस्थानं सदाशिवः॥ ७०-१७॥

महाकाशावलघ्नी मे धूम्रां भोजञ्च धूर्जटी।

कौमुदी पटलाङ्गी मे वर्णषोडशसंज्ञकम्॥ ७०-१८॥

अकारादिकान्तवर्णान् श्रीदेवी परिपातु मे।

हेमचित्ररथस्था मे चित्रिणी पातु मे मधु॥ ७०-१९॥

अपर्णा या विशुद्धं मे षोडशी षोडशाक्ष्यकम्।

पञ्चदुर्गा सहदेवः प्रत्येकं पातु मे दलम्॥ ७०-२०॥

दीपमासहल्कीं मे प्रवरा पातु मे बला।

व्यापिनी चानवच्छिन्ना पातु मे दलमण्डलम्॥ ७०-२१॥

अकालतारिणी दुर्गा शुक्रं चक्रं सदावतु।

शाकिनीशो महामाया परिवारान्विताऽवतु॥ ७०-२२॥

पञ्चरश्मिनीलकण्ठो मधुपूरं स्वपीठकम्।

सदा पातु कण्ठपङ्केरुहाश्रयस्वरानपि॥ ७०-२३॥

कण्ठस्वर्गः सदा पातु कन्दर्पेशो मनोगतिः।

शाकिनी शाकविभवा शाकेशी शाकसम्भवा॥ ७०-२४॥

शाकम्भरीश्वरा पातु सुमना दलषोडशम्।

सदाशिवः सदा पातु परिवारगणैः सह॥ ७०-२५॥

हृदयं शाकिनी देवी शिरःस्थानं सदावतु।

काकिनीसहितं पातु द्वादशारं कुलेश्वरी॥ ७०-२६॥

दलद्वादशकं पातु कामनाथः सदाशिवः।

अभेदरूपिणी पातु कादिठान्ताक्षरं मम॥ ७०-२७॥

वाणी मे हृदयग्रन्थिर्देशं तु कपिलेश्वरः।

पायान्मेघं च सूर्यास्या विमाया हृत्सु कणीकाम्॥ ७०-२८॥

तालहस्ता महावाणी पातु मे हृदयान्तरम्।

शोषिणी मोहिनी वह्निः पातु मे हृदयाम्बुजम्॥ ७०-२९॥

पिलापिप्पलादेशो रतिर्मे हृदयेप्सितम्।

योगिनीकुलदन्तश्च पातु मे हृत्स्वरानपि॥ ७०-३०॥

केकरेशो गूढसंज्ञा वज्रधारी हृदम्बुजम्।

एकलिङ्गी सदा पातु हृदयान्तः शिवं मम॥ ७०-३१॥

तदधो मण्डलं पातु भेदाभेदविवर्जीता।

अकाललक्षणः पातु पाशिनी नाभिमण्डलम्॥ ७०-३२॥

कालकूटस्वरूपो मे नाभिपद्मं प्रपातु मे।

चन्द्रचूडा विधुमुखी शाकिनी मे दशाम्बुजम्॥ ७०-३३॥

त्रिवृत्ताकारमुद्रा मे पातु रुद्रश्च लाकिनीम्।

त्रिखण्डारोहणः पातु डादिफान्ताक्षरानपि॥ ७०-३४॥

कालिका कपिला कृष्णा घनावाला कपालिनी।

ललिता तारिणी सर्वां महामाया दशाच्छदम्॥ ७०-३५॥

परिपातु कामदुर्गा लाकिनी पातु मे सदा।

सदाशिवः पातु नित्यं मणिपूरं कुलस्थलम्॥ ७०-३६॥

जाड्यनाशकरी दुर्गा मुण्डमालाविभूषिता।

मां पातु सप्तरोधात्मा केशवेशी महापदम्॥ ७०-३७॥

अभया चण्डिका कृष्णा कालिका कुलपण्डिता।

वज्रवर्णा धारणाख्या धरा धात्री क्षमा रमा॥ ७०-३८॥

वासुकी वसुधा वाच्या सर्वाणी सर्वमङ्गला।

पार्वती सर्वशक्तिस्था पार्वणे परिपातु माम्॥ ७०-३९॥

रणे राजकुले द्यूते वादे मानापमानके।

गेहेऽरण्ये प्रान्तरे च जले चानलमध्यके॥ ७०-४०॥

सर्वाणी सर्वदा पातु महातन्त्रार्थभूषिता।

विजया पद्मनी जाया जानकी कमलावती॥ ७०-४१॥

एताः पान्तु दिग्विदिक्षु महापातकनाशनाः।

अन्तरं पातु लिङ्गस्था लिङ्गमूलाम्बुजं मम॥ ७०-४२॥

कणीकां पातु सततं काञ्चीपीठस्थिता शिवा।

अतिवेगान्विता पातु वह्निमण्डलमेव मे॥ ७०-४३॥

राक्षसीशा सदा पातु जम्बुद्वीपनिवासिनी।

जाह्नवी भास्करा मौना मलयस्था मलाङ्गजा॥ ७०-४४॥

मतितप्ता पापहन्त्री परिपातु विभाकरी।

लयस्थानं सदा पातु कुञ्जरेश्वरसंस्थिता॥ ७०-४५॥

विंशत्यर्णमहाविद्या लम्बमाना कुलस्थली।

मन्दिरे पातु मां नित्यं वित्तसंहारकारिणी॥ ७०-४६॥

अनन्तशयना पातु वटमूलनिवासिनी।

प्रलये मां काली पातु वटपत्रनिवासिनी॥ ७०-४७॥

केवलाख्या सदा पातु महाकूर्चस्वरूपिणी।

आयुरारोग्यदात्री मे धनं राज्यं सदावतु॥ ७०-४८॥

कामरूपं गृहं पीठं परिपातु महाबला।

बलाका घोरदंष्ट्र मे उदरं पातु सर्वदा॥ ७०-४९॥

सर्वरोगहरा पातु मुण्डमालाविभूषिता।

आनन्दो नन्दनाथो मे हृदूर्ध्वाब्जं सदाऽवतु॥ ७०-५०॥

षद्पद्मं सर्वदा पातु नानारूपविहारिणी।

अकलङ्का निराधारा नित्यपुष्टा निरिन्द्रिया॥ ७०-५१॥

षोडशोर्ध्वं महापद्मं द्विदलं पातु सर्वदा।

दिग्विदिक्षु सदा पातु शाकिन्याद्यष्टशक्तयः॥ ७०-५२॥

अतिगुप्तस्थलं पातु पापनाशकरी परा।

क्षालनाख्या लिङ्गगुह्ये पातु मे पावनं प्रभा॥ ७०-५३॥

विप्रचित्ता कोटराक्षी लिपिभूता सरस्वती।

चतुर्दलं सदा पातु विभूतिः कामया सह॥ ७०-५४॥

पान्तु विद्याः सदैताश्च रिपुपक्षविनाशनाः।

कटिदेशं सदा पातु चामुण्डा शूलधारिणी॥ ७०-५५॥

त्रिनेत्रा सर्वदा पातु भूर्भुवःस्वःस्वरूपिणी।

वसन्तादिकलाः पान्तु पामरोग्रप्रतापिनी॥ ७०-५६॥

षड्भुजा सर्वदा पातु वेदहस्ता प्रपातु माम्।

अतिविद्या सर्वविद्या चण्डविद्या प्रपातु माम्॥ ७०-५७॥

वारुणी मदिरा पातु सर्वाङ्ग शाकिनी मम।

गृहोदरी सदा पातु सर्वाङ्गं वज्रधारिणी॥ ७०-५८॥

उल्कामुखी सदा पातु भृगुवंशसमुद्भवा।

अकालतारिणी दुर्गा ललिता धर्मधारिणी॥ ७०-५९॥

विंशत्यर्णा महाविद्या सर्वत्र सर्वदाऽवतु।

हसकलहरीं विद्या परिपातु सदाशिवा॥ ७०-६०॥

सहस्रवदना वाणी परिपातु जलोदरी।

जलरूपा सदा पातु महोज्ज्वलकलेवरा॥ ७०-६१॥

षोडशी सकलहरीं सर्वाणी पातु पार्वती।

महामत्ता सदा पातु कामनाथप्रपूरका॥ ७०-६२॥

वामदेवी सदा पातु सर्वाङ्गे देहदेवता।

कामपीठस्थिता दुर्गा परिवारगणावृता॥ ७०-६३॥

सदाशिवः सदा पातु सामवेदस्वरूपगा।

श्मशानवासिनी देवी महाकालसमन्विता॥ ७०-६४॥

आर्या देवी सदा पातु माता पातु महाकला।

सर्वत्र कपिला पातु महाभगवतीश्वरी॥ ७०-६५॥

इति ते कथितं नाथ महाविद्याफलप्रदम्।

कवचं दुर्लभं लोके तव स्नेहात् प्रकाशितम्॥ ७०-६६॥

अतिगुह्यतरं ज्ञानं कवचं सर्वसिद्धिदम्।

अमलोदारचित्तः सन् पूजयित्वा सदाशिवम्॥ ७०-६७॥

तथा श्रीशाकिनीदेव्याः पूजनं सुमहत्फलम्।

राज्यदं धनदं वाञ्छासिद्धिदं धर्मसिद्धिदम्॥ ७०-६८॥

वाचां सिद्धिं करे प्राप्य अष्टसिद्धिः करे भवेत्।

काकिनीदर्शनं प्राप्य शाकिनीदर्शनं भवेत्॥ ७०-६९॥

मन्त्रसिद्धिं तन्त्रसिद्धिं क्रियासिद्धिं लभेद् ध्रुवम्।

आकाशगामिनी सिद्धिः करे तस्य विराजते॥ ७०-७०॥

पुरुषो दक्षिणे बाहौ योषिद्वामभुजे तथा।

धृत्वा कवचराजं तु राजत्वं लभते ध्रुवम्॥ ७०-७१॥

महापातककोटीश्च हत्वा राजत्वमालभेत्।

वने वृक्षतलेऽश्वत्थमूले स्थित्वा पठेद् यदि॥ ७०-७२॥

त्रिसन्ध्यं दशधा जप्त्वा शतधा वा सहस्रधा।

स भवेत् कल्पवृक्षेशो भूमीशो नात्र संशयः॥ ७०-७३॥

कोटिवर्षसहस्राणि चिरजीवी स योगिराट्।

महासिद्धो भवेद् धीमान् महापातकनाशकृत्॥ ७०-७४॥

मासार्धेन भवेद् योग्यो विप्रो गुणसमन्वितः।

वर्षैकेण क्षत्रियश्च वैश्यो वर्षचतुष्टये॥ ७०-७५॥

शूद्रो द्वादशवर्षेण योगी भवति पाठतः।

एवं महाफलं नित्यं कवचं यः पठेत् सुधीः॥ ७०-७६॥

भोगमोक्षौ करे तस्य किमन्यैर्बहुभाषितैः॥ ७०-७७॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षट्चक्रप्रकाशे भैरवभैरवीसंवादे सदाशिवशाकिनीकवचफलादेशो। नाम सप्ततितमः पटलः॥ ७०॥

अथैकसप्ततितमः पटलः

श्रीनन्दभैरवी उवाच

श्रूयतां देव कल्याण त्रैलोक्यविजयात्मक।

सदाशिवमनुं नाथ महापातकनाशनम्॥ ७१-१॥

आयुरारोग्यफलदं सर्वशत्रुनिवारणम्।

अतिगुह्यतमं ध्यानं बालिशानां सुखावहम्॥ ७१-२॥

आद्याबीजं समुद्धृत्य कामबीजं तदन्तरम्।

रुद्रबीजं रमाबीजं कालबीजं ततः सदा॥ ७१-३॥

शिवनाथप्रियानन्दं ज्ञानं देहि युगं द्विठः।

फणिबीजं समुद्धृत्य राजराजेश्वरीमनुम्॥ ७१-४॥

वैष्णवीबीजमुद्धृत्य शिवबीजं तदन्तिके।

सदाशिवाय शब्दान्ते हृल्लेखा वह्निसुन्दरी॥ ७१-५॥

आदिबीजं समुद्धृत्य ततो वामतनुस्थिता।

शब्दबीजं मूलबीजं सदाशिव नमोऽस्तु ते॥ ७१-६॥

द्विठान्तोऽयं मनुः श्रेष्ठः सर्वरत्नसमृद्धिदः।

वासुदेवसमो विद्वान् स भवेन्नात्र संशयः॥ ७१-७॥

वैष्णवो वा महाशाक्तो महाशैवोऽथवा पुनः।

गृह्णीयान्मनुराजेन्द्रं यत्प्रसादाच्छिवो भवेत्॥ ७१-८॥

विमला वाक्यसिद्धिः स्यात्कार्य सिद्धिर्न संशयः।

शिवमन्त्रं प्रवक्ष्यामि येन सर्वार्थपारगः॥ ७१-९॥

अकालेऽपि च योगी स्यात् कामधेनुस्वरूपवान्।

हालाहलं समुद्धृत्य ततो माहेशबीजकम्॥ ७१-१०॥

श्रीबीजं धर्मबीजञ्च क्षेत्रपालमनुं तथा।

नीलकण्ठमनुं पश्चात् प्रियागुं बीजमुद्धरेत्॥ ७१-११॥

शिवबीजं तदन्ते तु सदाशिवाय धीमहि।

तन्नः शिवः प्रचोशब्दाद्दयादेवं द्विठो मनुः॥ ७१-१२॥

आवाहनं पाद्यमर्घ्यमाचमनीयमनन्तरम्।

गन्धपुष्पबिल्वपत्रकोटिभिः परिपूजयेत्॥ ७१-१३॥

स्तोषणं पोषणं पुष्टं दारणं मारणं तथा।

सुप्तं कलहमुक्तानां पूजनं सुमहत्फलम्॥ ७१-१४॥

शर्वादीन् परिपूज्याथ सद्योजातादिमर्चयेत्।

प्राणायामत्रयं कृत्वा जपेत् तद्गतमानसः॥ ७१-१५॥

देवं पिनाकपाणिं च पञ्चवक्रं त्रिलोचनम्।

शूलखट्वाङ्गमुशलगदापाणिं महाभुजम्॥ ७१-१६॥

देवदेवं महादेवं सर्वभूतात्मकं गुरुम्।

त्रैलोक्यरक्षकं शम्भुं भुजङ्गहारभूषितम्॥ ७१-१७॥

अट्टहासादिशक्तीनां सहस्रगणमण्डितम्।

वृषासनस्थं नीलेशं नीलकण्ठं सदाशिवम्॥ ७१-१८॥

एवं ध्यात्वा जपेन्मन्त्रं सहस्रं प्रत्यहं शुचिः।

विशेषेण दिवारात्रौ समभागेन सञ्जपेत्॥ ७१-१९॥

तत्रैव त्र्यम्बकं ध्यात्वा तत्तद्रूपेण साधकः।

तद्बुध्वा पूजयित्वा च त्र्यम्बकं यो जपेन्नरः॥ ७१-२०॥

तस्य हस्ते त्रिभुवनं हस्तामलकवद् भवेत्।

भोगमोक्षौ करे तस्य किमन्यत् साधनेन च॥ ७१-२१॥

सदाशिवेन मनुना सम्पुटीकृत्य यो जपेत्।

तस्य सर्वार्थसिद्धिः स्याद् यद्यन्मनसि वर्तते॥ ७१-२२॥

प्रणवं पूर्वमुच्चार्य त्र्यम्बकं तदनन्तरम्।

यजामहे समुद्धृत्य सुगन्धिं पुष्टिवर्धनम्॥ ७१-२३॥

उर्वारुकमिवान्ते तु बन्धनात् पदमुद्धरेत्।

मृत्योर्मुक्षीयशब्दान्ते मामृताद्वह्निसुन्दरी॥ ७१-२४॥

सदाशिवेन पुटितं मन्त्रं यो जपते नरः।

स भवेत् कल्पतरुपः पूजनेनामृतं लभेत्॥ ७१-२५॥

सर्वकालं सुखी भूत्वा मोक्षमाप्नोति निश्चितम्।

अन्यं त्र्यम्बकमन्त्रं तु शृणुष्व सर्वकामदम्॥ ७१-२६॥

राज्यदं घनदं मन्त्रं महापातकनाशनम्।

शब्दब्रह्ममयं साक्षात् सर्वज्ञानं लभेद् ध्रुवम्॥ ७१-२७॥

कालकूटं समुद्धृत्य मृत्युञ्जयं समुद्धरेत्।

महापातकराशिं मे हरयुग्मं ततो द्विठः॥ ७१-२८॥

अन्यमन्त्रं प्रवक्ष्यामि सावधानोऽवधारय।

विद्याद्ये प्रणवं दत्वा कामबीजद्वयं द्वयम्॥ ७१-२९॥

मृत्युञ्जयं क्षेत्रपालं विशुद्धेशं स्थिरं कुरु।

युगलं कामबीजान्तं देव्यन्ते वह्निसुन्दरी॥ ७१-३०॥

अन्यं मन्त्रं प्रवक्ष्यामि सावधानोऽवधारय।

कामकालीयुगं पश्चात् संज्ञाबीजद्वयं ततः॥ ७१-३१॥

वटुकं कामबीजञ्च षोडशारं प्रकाशय।

युगलं शक्तिकूटञ्च शिवबीजं ततो द्विठः॥ ७१-३२॥

पूर्ववत् सकलं कुर्याज्जपपूजादिकं प्रभो।

सदाशिवपूजनं च ध्यानहोमादितर्पणम्॥ ७१-३३॥

अन्यं मन्त्रं प्रवक्ष्यामि महादेवं समुद्धरेत्।

वटुकं क्षेत्रपालं च गणेशस्य मनुं ततः॥ ७१-३४॥

कण्ठाब्जं मे सदानन्द प्रकाश युगं द्विठः।

अस्यापि ध्यानमाकृत्य जप्त्वा लक्षं समापयेत्॥ ७१-३५॥

करकलितकपालः कुण्डली दण्डपाणि--।

स्तरुणतिमिरनीलो व्यालयज्ञोपवीती।

क्रमसमयसपर्याविघ्नविच्छेदहेतु--।

र्जयति वटुकनाथः सिद्धिदः कौलिकानाम्॥ ७१-३६॥

वन्दे बालं स्फटिकसदृशं कुण्डलोल्लासिवक्त्रं।

दिव्याकल्पैर्नवमणिमयैः किङ्किणीनूपुराद्यैः।

दीप्ताकारं विशदवसनं सुप्रसन्नं त्रिनेत्रं।

हस्ताब्जाभ्यां दधतमनिशं शूलदण्डौ दधानम्॥ ७१-३७॥

उद्यद्भास्करसन्निभं त्रिनयनं रक्ताङ्गरागोज्ज्वलं।

स्मेरास्यं वरदं कपालमभयं शूलं दधानं करैः।

नीलग्रीवमुदारकौस्तुभधरं शीतांशुखण्डोज्ज्वलं।

बन्धूकारुणवाससं भयहरं देवं सदा भावये॥ ७१-३८॥

देवेशं वटुकं सदाशिवगुरुं त्रैलोक्यरक्षाकरं।

नानालङ्कृतभूषणं शशधरं बन्धूकपुष्पोज्ज्वलम्।

श्वेताश्वेतविभूषणं मणिमयं कृष्णं सनीलं शिवं।

देवानामधिदैवतं सुखकरं नाथं सदा भावये॥ ७१-३९॥

एवं ध्यात्वा महायोगी नीलकण्ठं सदाशिवम्।

कण्ठपद्मे स्थिरो भूत्वा शाकिनीदर्शनं लभेत्॥ ७१-४०॥

भूत्वा महावीरनाथो मनोयोगमवाप्नुयात्।

सिद्धमन्त्रं प्रवक्ष्यामि येन सर्वत्र पारगः॥ ७१-४१॥

आकाशगामिनी सिद्धिः स्तम्भनादिसुसिद्धिभाक्।

वाक्सिद्धिं कायसिद्धिञ्च जरामरणवजीतः॥ ७१-४२॥

शिवबीजं समुद्धृत्य विजयाबीजमुद्धरेत्।

कामकालीयुगान्ते तु रमात्रिकूटमुद्धरेत्॥ ७१-४३॥

बीजत्रयं समुद्धृत्य (स्फें स्फें स्फें) कामनाथाय शब्दतः।

सदाशिवाय शब्दान्ते वरदाय नमो द्विठः॥ ७१-४४॥

एतन्मन्त्रप्रसादेन योगी स्यान्नात्र संशयः।

अन्यं मन्त्रं प्रवक्ष्यामि यथावदवधारय॥ ७१-४५॥

क्षान्तबीजं समुद्धृत्य लान्तबीजत्रयं तथा।

भवानीबीजमुद्धृत्य सद्बट्टयुगलं ततः॥ ७१-४६॥

क्रोधराजबीजयुग्मं लक्ष्मीशपतये ततः।

वरदाय हृत्पदान्ते कामदाय ततो द्विठः॥ ७१-४७॥

अन्यं मन्त्रं प्रवक्ष्यामि येन योगी भवेन्नरः।

गगनाबीजमुद्धृत्य कामराजं समुद्धरेत्॥ ७१-४८॥

मायान्ते देवदेवाय हृच्छिवाय द्विठो मनुः।

एतन्मन्त्रप्रसादेन किन्न सिद्ध्यति भूतले॥ ७१-४९॥

अनायासेन योगी स्यात् किं पुनः साधनेन च।

केवलं जपमात्रेण योगी स्यान्नात्र संशयः॥ ७१-५०॥

अन्यं वक्ष्ये भैरवेन्द्र प्रणवं कामराजकम्।

श्रीबीजं वह्नियुगलं रिपुहरयुगं ततः॥ ७१-५१॥

सिद्धिं देहि ततः स्वाहा मन्त्रोऽयं योगिदुर्लभः।

पूर्ववद्ध्यानमेवं हि कृत्वाऽमरत्वमश्नुते॥ ७१-५२॥

अन्यं मन्त्रं प्रवक्ष्यामि येन पीठस्थिरो भवेत्।

अमादिबीजमाभाष्य ततो महापदं स्मरेत्॥ ७१-५३॥

कालाय विकरणाय कलान्ते तु समुद्धरेत्।

बलाय बलविकरणाय षोडशारदलं ततः॥ ७१-५४॥

निवेशाय युगं वित्तं स्थापयान्ते सदाशिव।

काकिनीशाभावह्निसुन्दरीकामदो मनुः॥ ७१-५५॥

एकाक्षरं प्रवक्ष्यामि येन सिद्धो मनुर्भवेत्।

क्षान्तबीजं बिन्दुयुक्तं चन्द्रबीजं तथोद्धरेत्॥ ७१-५६॥

अधो दन्तयुतं कृत्वा जपेत् तद्गतमानसः।

प्रत्येकदलमध्ये तु ध्यात्वा देवं सदाशिवम्॥ ७१-५७॥

अनायासेन सिद्धिः स्यात् प्राणरक्षा सदा भवेत्।

पुनरेकाक्षरं वक्ष्ये येन सिद्ध्यन्ति मानवाः॥ ७१-५८॥

न देयं पार्श्वेभ्यश्च निन्दकेभ्यो विशेषतः।

शिवं चन्द्रबिन्दुयुक्तं महामन्त्रं प्रकीतीतम्॥ ७१-५९॥

अस्य साधनमात्रेण योगिनां वल्लभो भवेत्॥ ७१-६०॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षट्चक्रप्रकाशे भैरवीभैरवसंवादे एकसप्ततितमः पटलः॥ ७१॥

## अथ द्विसप्ततितमः पटलः

श्रीनन्दभैरवी उवाच

महाकाल शिवानन्द परमानन्दनिर्भर।

त्रैलोक्यसिद्धिद प्राणवल्लभ श्रूयतां स्तवः॥ ७२-१॥

शाकिनी हृदये भाति सा देवी जननी शिवा।

कालीति जगति ख्याता सा देवी हृदयस्थिता॥ ७२-२॥

निरञ्जना निराकारा नीलाञ्जनविकासिनी।

आद्या देवी कालिकाख्या केवला निष्कला शिवा॥ ७२-३॥

अनन्ताऽनन्तरूपस्था शाकिनी हृदयस्थिता।

तामसी तारिणी तारा महोग्रा नीलविग्रहा॥ ७२-४॥

कपाला मुण्डमालाढ्या शववाहनवाहना।

ललज्जिह्वा सरोजाक्षी चन्द्रकोटिसमोदया॥ ७२-५॥

वाय्वग्निभूजलान्तस्था भवानी शून्यवासिनी।

तस्मात् स्तोत्रमप्रकाश्यं कृष्णकाल्याः कुलोदयम्॥ ७२-६॥

श्रीकृष्णभगवत्याश्च नीलदेव्या कुलार्णवम्।

गोपनीयं प्रयत्नेन सावधानोऽवधारय॥ ७२-७॥

महाभैरवी उवाच

श्रीकालीचरणं चराचरगुणं सौदामिनीस्तम्भनं।

गुञ्जद्वर्वगुरुप्रभानखमुखाह्लादैककृष्णासनम्।

प्रेतारण्यासननिमीतामलकजा नन्दोपरिश्वासनं।

श्रीमन्नाथ करारविन्दमिलनं नेत्राञ्जनं राजते॥ ७२-८॥

दीप्तिः प्राप्तिः समाप्तिः प्रियमतिसुगतिः सङ्गतिः शीतनीतौ।

मिथ्यामिथ्यासुरथ्या नतिररतिसती जातिवृत्तिर्गुणोक्तिः।

व्यापारार्थी क्षुधार्थी वसति रतिपतिर्ज्योतिराकाशगङ्गा।

श्रीदुर्गाशम्भुकालीचरणकमलकं सर्वदा भाति सूक्ष्मम्॥ ७२-९॥

देवेन्द्राः पञ्चभूता रविशशिमुकुटाः क्रोधवेतालकोलाः।

कैलासस्थाः प्रशस्ताः स्तवनमपि तत्प्रत्यहं सम्पठन्ति।

आत्मानं श्रीदकालीकुलचरणतलं हृत्कुलानन्दपद्मे।

ध्यात्वा ध्यात्वा प्रवीरा अहमनुबहुधीः स्तौमि किं ध्याननिष्ठः॥ ७२-१०॥

श्रुत्वा स्तोत्रगुणं तवैव चरणाम्भोजस्य वाच्छाफलं।

प्रेच्छामीहयति प्रियाय कुरुते मोक्षाय तत्त्वार्थतः।

मातर्मोहिनिदानमानतरुणी कातीति मन्यामहे।

योग्यश्रीचरणाम्बुजे त्रिजगतामानन्दपुञ्जे सुखम्॥ ७२-११॥

पुत्रौ श्रीदेवपूज्यौ प्रकुरुत इतिहासादिगूढार्थगुप्तिं।

श्यामे मातः प्रसन्ना भव वरदकरी कारणं देहि नित्यम्।

योगानन्दं शिवान्तः सुरतरुफलदं सर्ववेदान्तभाष्यं।

सत्सङ्गं सद्विवेकं कुरु कुरु कवितापञ्चभूतप्रकाशम्॥ ७२-१२॥

आह्लादोद्रेककारी परमपदविदां प्रोल्बणार्थप्रकाशः।

प्रेष्यः पारार्थचिन्तामणिगुण सरलः पारणः प्रेमगानः।

सारात्मा श्रीस्तवोऽयं जयसुरवसतां शुक्रसंस्कारगन्ता।

मन्ता मोहादिकानां सुरगणतरुणी कोटिभिर्ध्येय इन्द्रैः॥ ७२-१३॥

नामग्रहणविमलपावनपुण्यजलनिधिमन्थनेन।

निर्मलचित्तगसुरगुणपारग सुखसुधाकरस्थितहास्येन।

योगधराधरनरवर कुञ्जरभुजयुगदीर्घपद्ममृणालेन॥ ७२-१४॥

हरिविधिहर अपरपरसरभावकपाल सेवनेन।

सुन्दरी काली चरणेन॥ ७२-१५॥

भास्वत्कोटिप्रचण्डानलगुणललिताभाविता सिद्धकाली।

प्रोक्तं यद्योगगीतावचनसुरचनामङ्गलं योगिनाद्या।

श्यामानन्दद्रुमाख्ये भजनयजनगङ्गाङ्गतीरप्रकाशं।

सर्वानन्दोत्सवत्वं वरदसुरवदासम्भवे मय्यभावे॥ ७२-१६॥

एतत्प्रथमे कुलं गुरुकुलं लावण्यलीलाकुलं।

प्राणानन्दकुलं कुलाकुलकुलं कालीकुलं सङ्कुलम्।
मातः कालियुगादि कौलिनि शिवे सर्वन्तराङ्गस्थितं।
नित्यं तत्र नियोजय श्रुतिगिरा श्रीधर्मपुत्रं भवे॥ ७२-१७॥
हेरम्बादि कुलेशयोगजननि त्वं योगतत्त्वप्रिया।
यद्येवं कुरुते पदाम्बुजरजो योगं तवानन्ददम्।
सः स्यात्सङ्कटपाटलारिसदनं जित्वा स्वयं मन्मथं।
श्रीमान्मन्मथमन्मथः प्रचयति ह्यष्टाङ्गयोगं परम्॥ ७२-१८॥
योगी याति परं पदं सुखपदं वाञ्छास्पदं सम्पदं।
त्रैलोक्यं परमेश्वरं यदि पुनः पारं भवाम्भोनिधेः।
भावं भूधरराजराजदुहिते ज्ञातं विचारं तव।
श्रीपादाम्बुजपूजनं प्रकुरुते ते नीरदप्रोज्ज्वले॥ ७२-१९॥
आदावष्टाङ्गयोगं वदति भवसुखं भक्तिसिद्धान्तमेकं।
भूलोके पावनाख्यं पवनगमनगं श्रीनगेन्द्राङ्गजायाः।
सिद्धीनामष्टसिद्धिं यमनियमवशादासनप्राणयोगात्।
प्रत्याहारं विभोर्ध्यारुणगुणवसनं ध्यानमेवं समाधिम्॥ ७२-२०॥
मातः शान्तिगुणावलम्बिनि शिवे शान्तिप्रदे योगिनां।
दारे देवगुणे विधेहि सकलं शान्तिक्रियामङ्गलम्।
यज्ञानामुदयं प्रयाति सहसा यस्याः प्रसादाद् भुवं।
तां सर्वां प्रवदामि कामदहनस्तम्भाय मोहक्षयात्॥ ७२-२१॥
एको जीवति योगिराडतिसुखी जीवन्ति न श्रीसुताः।

ससर्वं योगभवं भवे विभवगाः पश्यन् स्वकीयायुषम्।

इत्येवं परिभाव्य सर्वविषयं शान्तिं समालम्ब्यकौ।

मूले वेददलोज्ज्वले कुलपथे श्रीकुण्डली भावय॥ ७२-२२॥

शान्तिभ्रान्तिनिकृन्तनी स्वरमणी प्रेमोद्गता भक्तिदा।

लावण्याम्बुधिरत्नकोटिकिरणाह्लादैकमूर्तीप्रभा।

एकाकारपराक्रमादपयमा क्रोधक्रमक्षोभिणी।

या मूलामलपङ्कजे रचयति श्रीमाधुरी तां भजे॥ ७२-२३॥

रे रे पामर दुर्भग प्रतिदिनं किं कर्म वा राधसे।

व्यापारं विषयाश्रयं प्रकुरुषे न ध्यायसे श्रीपदम्।

मिथ्यैतत्क्षणभङ्गुरं त्यज मुदा संसारभावं विषं।

श्रीकालीं कुलपण्डितां गुणवतीं शान्तिं समाराधय॥ ७२-२४॥

शिवस्त्री या शान्तिः परमसुखदा भावजनिका।

विवेकः संजातो वहसि च तया भाति नियतम्।

विवेकोऽसौ त्यागी जनयति सुधासिन्धुसुन्दर--।

मदो ब्रह्मज्ञानं परमममले योगिनि परे॥ ७२-२५॥

द्वयं ब्रह्मज्ञानं परमममले चागममयं।

विवेकोद्भूतं स्यादमलपरमं शब्दमपरम्।

द्वयोर्मूलीभूता हृदि सपदि शान्तिः प्रियतमा।

प्रभा कालीपादाम्बुजयुगलभक्तिप्रलयदा॥ ७२-२६॥

कुलश्रीकुण्डल्याः परमरसभावं नवमयं।

पदं मातुः काल्याः प्रथमरविकान्त्याः सुखमयम्।

वदामि प्रोत्साहे वशषसशुभे हाटकनिभे।

विधिः श्रीडाकिन्याऽमरपतिधरित्रीति च भजेत्॥ ७२-२७॥

त्रयं स्थानं नित्यं रविशशिकलावह्निघटितं।

महातीर्थं सम्यक् पवनगगनस्थं भवकरम्।

विभिन्नं सङ्कृत्य द्वयमपि कुलग्रन्थिसहितं।

सुषुम्नाश्रीतीर्थे महति गगने पूर्णलयवान्॥ ७२-२८॥

त्रयं संशोध्यादौ परमपदवीं गच्छति महान्।

सुदृष्टाङ्गैर्योगैः परिभवति शुद्धं मम तनुम्।

अतो योगाष्टाङ्गं कलुषसुखमुक्तं वितनुते।

क्रियादौ सङ्कुर्याद्यमनियमकार्यं यतिवरः॥ ७२-२९॥

अहिंसासत्यार्थी प्रचयति सुयोगं तव पदं।

धनस्ते यद्योगी शुचिधृतिदयादाननिपुणः।

क्षमालध्वाहारी समगुणपरानन्दनिपुणः।

स्वयं सिद्धः सद्ब्राह्मणकुलपताकी सुखमयी॥ ७२-३०॥

तपः सन्तोषाढ्यो हरयजन आस्तिक्यमतिमान्।

यतीनां सिद्धान्तश्रवणहृदयप्राणविलयः।

जयानन्दामग्नो हवनमनलेपः प्रकुरुते।

महाभक्तः श्रीह्रीर्मतिरकुलीनस्तव पदः॥ ७२-३१॥

सुषुम्नामुखाम्भोरुहाग्रे च पद्मं।

दलं चेदहेमाक्षरं मूलदेशे।

स्थिरापृष्ठवंशस्य मध्ये सुषुम्ना--

न्तरे वजिरणी चित्रिणीभासिपद्मैः॥ ७२-३२॥

सुषुम्नादिनाड्या युगात् कर्णमूला।

त्प्रकाशप्रकाशा बहिर्युग्मनाडी।

इडा पिङ्गला वामभागे च दक्षे।

सुधांशूरवी राजसे तत्र नित्यम्॥ ७२-३३॥

विसर्गं बिन्द्वन्तं स्वगुणनिलयं त्वं जनयसि।

त्वमेका कल्याणी गिरिशजननी कालिकलया।

परानन्दं कृत्वा यदि परिजपन्ति प्रियतमाः।

परिक्षाल्य ज्ञानैरिह परिजयन्ति प्रियपदम्॥ ७२-३४॥

अष्टादशाङ्गुलगतं ऋजुदन्तकाष्ठं।

स्वीयाङ्गुलार्धघटितं प्रशरं शनैर्यः।

संयोज्य तालुरसनागलरन्ध्रमध्ये।

दन्तीक्रियामुपचरेत् तव भावनाय॥ ७२-३५॥

नाडीक्षालनमाकरोति यतिराड् दण्डे त्रयं धारयन्।

युष्मच्छ्रीचरणार्पणो नवमदण्डस्यानिलस्तम्भनात्।

प्राणायामफलं यतिः प्रतिदिनं संवर्धते सुश्रमा--

दानन्दाम्बुधिमज्जनं कुलरसैर्मुक्तो भवेत् तत्क्षणात्॥ ७२-३६॥

वदामि परमश्रिये पदपद्मयोगं शुभं।

हिताय जगतां मम प्रियगणस्य भागश्रिये।

सदा हि कुरुते नरः सकलयोगसिद्धिं मुदा।

तदैव तव सेवको जननि मातरेकाक्षरम्॥ ७२-३७॥

करुणासागरे मग्नः सदा निर्मलतेजसा।

तवाङ्घ्रिरकोमलाम्भोजं ध्वात्वा योगीश्वरो भवेत्॥ ७२-३८॥

करुणासागरे मग्नो येन योगेन निर्मलः।

तद्योगं तव पादाब्जं को मूर्खः कः सुपण्डितः॥ ७२-३९॥

यमनियमसुकाले नेलीयोगशिक्षा।

प्रभवति कफनाशा नाशरन्ध्रे त्रिसूत्री।

हृदयकफविनाशा धोतिका योगशिक्षा।

गलविलगलवस्त्रं षष्टिहस्तं वहन्ती॥ ७२-४०॥

सुसूक्ष्मरसनस्य च स्वभुजषष्टिहस्तं गल।

प्रमाणमिति सन्ततप्रसरपञ्चयुग्माङ्गुलम्।

पवित्रशुचिधोतिकारं भवसि सर्वपीडापहा।

स्वकण्ठकमलोदयाममलभीतदामा भजे॥ ७२-४१॥

भजति यदि कुमारीं नेली योगदृष्ट्या।

स भवति परवेत्ता मोहजालं छिनत्ति।

स्मितमुखि भवति त्वां मूढ एवातिजीवो।

भ्रमितमुदवधूर्ना कारसिद्धिं ददासि॥ ७२-४२॥

शनैर्दन्ती योगं स्वपदयुगपद्मे वितनुते।

शिवे योगी मासादपि भवति वायुं स्थगयति।
असौ मन्त्री चाम्रातकदलं सुदण्डं गलविले।
नियोज्यादौ ध्यात्वा तव चरणपङ्केरुहतलम्॥ ७२-४३॥
कुलाकुलचेतता परिकरोषि विल्वच्छदी।
सुशान्तिगुणदा जया परमभक्तिनिर्गुण्डिका।
मुकुन्दतुलसी प्रिया गुणिनि मुक्तिदा योगिनी।
ददास्यमरसम्पदं दलवियोगमूर्ध्वोदरीम्॥ ७२-४४॥
पञ्चामरासाधनयोगकर्त्री पञ्चामरानाम महौषधिः स्थिता।
त्वमेव सर्वेश्वररूपधारिणी यैः पूज्यते सोऽहिकपारमेष्ठी॥ ७२-४५॥
पठति यदि भवान्याः शाकिनीदेहदेव्याः।
स्तवनमरुणवर्णामार्कलक्ष्म्याः प्रकाशम्।
व्रजति परमराज्यं देवपूज्यः प्रतिष्ठो।
मनुजपनसुशीलो लीलया शम्भुरूपम्॥ ७२-४६॥
प्रातर्मध्याह्नकाले च सायाह्ने च त्रिसप्तके।
शतं पठित्वा मोक्षः स्यात् पुरश्चर्याफलं लभेत्॥ ७२-४७॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षट्चक्र--। प्रकाशे
भैरवीभैरवसंवादे शाकिनीकृत कालीस्तवनं नाम द्विसप्ततितमः पटलः॥ ७२॥

अथ त्रिसप्ततितमः पटलः

श्रूयतां कोमलाम्भोजस्थितवक्त्रविराजिते।

अत्यद्भुतं महागीतं श्रृणोति साधको हि यत्॥ ७३-१॥

ध्वनिरन्तर्गतं ज्योतिर्ज्योतिरन्तर्गतं मनः।

तन्मनो विलयं याति ध्वनिषु ज्ञानकोटिषु॥ ७३-२॥

तद्ध्वनिज्ञानसंज्ञानं श्रृण्वन्ति योगिनो जनाः॥ ७३-३॥

परमगुणगभीरे धीरनीरे शरीरे।

भवनवभवकान्तौ संप्रशात्मा नितान्तम्।

विमलमधुरवाक्यालङ्कृतज्ञानसिन्धौ।

सकलवचनरत्नं स्थापयामास वाणी॥ ७३-४॥

ओं तुण्डोग्रस्थिरवचनगा मोहयञ्जीववर्णं।

शङ्कातङ्कारहितचरिता मोहिता ज्ञानतन्द्रे।

सालङ्कारा खरतरकरा वाक्यमालां वहन्ती।

सा पश्यन्ती विमलकरुणा राध्यतां मूलचक्रे॥ ७३-५॥

संसारे सारभागे सयुवतिसुकृपालक्षणैर्लक्षिताङ्गे।

सिद्धान्तज्ञानजीवं चरमसमगुणं भूपतेर्योगिनो वा।

विप्रेन्द्राणामनन्तं ध्वनिगुरुमधुरं व्यापितं पार्वतीशे।

हे हे कालप्रकालप्रियतनुशिखरे वेशमासं चयत्वम्॥ ७३-६॥

सञ्चारे परमस्थिरे हरिहरे विद्याधरे भूधरे।

साकारे करुणाकरे स्वविलये ते पादपङ्केरुहे।

नित्यज्ञानमयं जयं सुरतरुच्छायालयं पूजये।

मातः कालि कलाधरे गलबिले शाकम्भरि शाकिनि॥ ७३-७॥

भास्वत्कोटिरविच्छटाभरसुखश्रीकण्ठवीरालये।

हृत्पङ्केरुहमध्यसारघटितं सारस्वतोत्पत्तिदम्।

श्रीदेवीगुरुरूपिणीचरणपद्मान्तःप्रभामण्डलं।

शैलेन्द्रोदयकारिणीमणिगृहं मापद्मनाभेरधः॥ ७३-८॥

वाञ्छाकल्पद्रुमस्था स्थितिलयफलदा योगिनी योगमाता।

सूक्ष्मानन्दप्रशंसा तरुणरविकला कोकिलालापमुग्धा।

स्निग्धा स्निग्धाङ्गसङ्गा नवशशिमुकुटा चारुवर्णा विशाला।

सा दुर्गा दुःखहन्त्री भवतु शिवगृहे कामनासिद्धिदात्री॥ ७३-९॥

निराश्रयमहं पदं भवति कालि भक्त्याश्रये।

श्रिये विमलभावदे सकलभावगो गोगणः।

मयि प्रियधनं मुदा वितर चारुदृष्ट्या सुखं।

तदैव गलभागकृद्गगनपद्ममध्यस्थले॥ ७३-१०॥

नित्ये निष्फलरूपभूतिनिकरे त्रैलोक्यरक्षाकरे।

धर्मध्वान्तनिकेतने गणयति ज्ञानप्रयोगान्तरम्।

ते पादाम्बुजसम्भवः प्रियगणः प्राणाश्रितः पाथीवो।

मातः पर्वतराजराजदुहिते पुण्यं पवित्राप्तये॥ ७३-११॥

भीभर्गो भारसर्गो भवरवविभवो भूतिभारावलम्बी।

भावाभावः प्रभावः प्रभवति भुवने भीमभक्तिप्रकाशः।

भूभूतोद्धूतभीतिप्रभृतिभयभवासम्भवानन्दभावो।

मातस्ते पादपङ्केरुहविमलतलानन्दसेवाभिवृध्या॥ ७३-१२॥

नित्यं पातु गणेश्वरी गणपतेर्माता रमे मातरं।

प्राणं प्रत्यय पूर्वसिद्धिकरणी सिद्धासने रक्षतु।

आनन्दाम्बुधिमज्जनैकसुखदा भालस्थलस्थापिनी।

कण्ठाम्भोरुहकणीका सुरगणान् गीता परा सुस्वरान्॥ ७३-१३॥

कृपापारावारा विमलपुरुषं गौरिवपुषं।

धरावक्षे मुख्ये धरणिसुतबुध्याऽधमनरम्।

न जाने त्वत्कामं तनुविरहचिन्तामणिमयं।

तव स्नेहाध्वीनां गमयति न पारं सुरवरः॥ ७३-१४॥

जयति जय जयाज्योतिराधारजेता।

सुरनरगणपूज्यः खेटचक्रस्य मध्ये।

भवकमलकराढ्यं नम्रभावं प्रतापं।

गमयति तव पादाम्भोजसेवाबलेन॥ ७३-१५॥

इत्येतैः श्लोकमुख्यैस्तु स्तुत्वा गीतरसान्तरैः।

परब्रह्ममयीं ध्यात्वा स्वयं ब्रह्मतनुं गतः॥ ७३-१६॥

अकस्माद् भोगसम्पत्तिर्मोक्षपद्धतयः शुभाः।

प्रभवन्ति स्वयं विद्या अष्टादश गुणोदयाः॥ ७३-१७॥

नीलजीमूतसङ्काशं चन्द्रशेखरमीश्वरम्।

सदाशिवं महाशक्तिशाकिनीवामसंस्थितम्॥ ७३-१८॥

चतुर्भुजं देवदेवमनन्तमक्षरं हरम्।

भावगीतं पुनर्गीत्वा परं ब्रह्मसमो भवेत्॥ ७३-१९॥

कण्ठषोडशसम्पूर्णमध्ये योगी स्थिराशयः।

अष्टसिद्धीश्वरो भूत्वा भावसिद्धिं लभेद् ध्रुवम्॥ ७३-२०॥

त्वया सह समाह्लाददर्शनं सिद्धिमाप्नुयात्॥ ७३-२१॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षट्चक्र--

प्रकाशे भैरवीभैरवसंवादे वाणीगीतविन्यासो नाम त्रिसप्ततितमः पटलः॥ ७३॥

अथ चतुःसप्ततितमः पटलः

श्रीनन्दभैरव उवाच

शैलजे देवदेवेशि सर्वाम्नायप्रपूजिते।

सर्वं मे कथितं देवि कवचं न प्रकाशितम्॥ ७४-१॥

प्रासादाख्यस्य मन्त्रस्य कवचं मे प्रकाशय।

सदाशिवमहादेवभावितं सिद्धिदायकम्॥ ७४-२॥

अप्रकाश्यं महामन्त्रं भैरवीभैरवोदयम्।

सर्वरक्षाकरं देवि यदि स्नेहोऽस्ति मां प्रति॥ ७४-३॥

श्रीनन्दभैरवी उवाच

श्रूयतां भगवन्नाथ महाकाल कुलार्णव।

प्रासादमन्त्रकवचं सदाशिवकुलोदयम्॥ ७४-४॥

प्रासादमन्त्रदेवस्य वामदेव ऋषिः स्मृतः।

पङ्क्तिश्छन्दश्च देवेशः सदाशिवोऽत्र देवता॥ ७४-५॥

साधकाभीष्टसिद्धौ च विनियोगः प्रकीतीतः।

शिरो मे सर्वदा पातु प्रासादाख्यः सदाशिवः॥ ७४-६॥

षडक्षरस्वरूपो मे वदनं तु महेश्वरः।

अष्टाक्षरशक्तिरुद्रश्चक्षुषी मे सदाऽवतु॥ ७४-७॥

पञ्चाक्षरात्मा भगवान् भुजौ मे परिरक्षतु।

मृत्युञ्जयस्त्रिबीजात्मा आयू रक्षतु मे सदा॥ ७४-८॥

वटमूलसमासीनो दक्षिणामूतीरव्ययः।

सदा मां सर्वतः पातु षट्त्रिंशद्वर्णरूपधृक्॥ ७४-९॥

द्वाविंशार्णात्मको रुद्रः कुक्षिं मे परिरक्षतु।

त्रिवर्णाढ्यो नीलकण्ठः कण्ठं रक्षतु सर्वदा॥ ७४-१०॥

चिन्तामणिर्बीजरूपोऽर्धनारीश्वरो हरः।

सदा रक्षतु मे गुह्यं सर्वसम्पत्प्रदायकः॥ ७४-११॥

एकाक्षरस्वरूपात्मा कूटव्यापी महेश्वरः।

मार्तण्डो भैरवो नित्यं पादौ मे परिरक्षतु॥ ७४-१२॥

तुम्बुराख्यो महाबीजस्वरूपस्त्रिपुरान्तकः।

सदा मारणभूमौ च रक्षतु त्रिदशाधिपः॥ ७४-१३॥

ऊर्ध्वमूर्ध्वानमीशानो मम रक्षतु सर्वदा।

दक्षिणास्यं तत्पुरुषोऽवतु मे गिरिनायकः॥ ७४-१४॥

अघोराख्यो महादेवः पूर्वास्यं परिरक्षतु।

वामदेवः पश्चिमास्यं सदा मे परिरक्षतु॥ ७४-१५॥

उत्तरास्यं सदा पातु सद्योजातस्वरूपधृक्।

मृत्युजेता सदा पातु जलेऽरण्ये महाभये॥ ७४-१६॥

पर्वते विषमस्थाने विषहर्ता सदाऽवतु।

कालरुद्रः सदा पातु सर्वाङ्गं कालदेवता॥ ७४-१७॥

कालाग्निरुद्रः सम्पातु महाव्याधिभयादिषु।

अकालतारकः पातु खड्गधारी सदाशिवः॥ ७४-१८॥

कवची वामदेवश्च सदा पातु महाभये।

कालभक्षः पातु रुद्रो रुरुकः क्षेत्रपालकः॥ ७४-१९॥

मातृकामण्डलं पातु सम्पूर्णचन्द्रशेखरः।

चिरायुः शाकिनीभर्ता चायुषं पातु मे सदा॥ ७४-२०॥

सिंहस्कन्धः सदा पातु रुद्राणीवल्लभोऽवतु।

भालं पातु वज्रदम्भालेखकः क्रान्तिरूपकः॥ ७४-२१॥

निरूपकः सदा पातु खेचरीखेचरप्रियः।

रत्नमालाधरः पातु रक्तमुखीश्वरोऽवतु॥ ७४-२२॥

वदनं चक्षुषी कर्णौ पातु पञ्चाननो मम।

वेदध्वनिः सदा पातु नासारन्ध्रद्वयं मम॥ ७४-२३॥

कपालधारकः पातु गण्डयुग्मं युगान्तकृत्।

रक्तजिह्वापतिः पातु ममोष्ठाधरवासिनम्॥ ७४-२४॥

दन्तावलियुगं पातु भृगुरामेश्वरः शिवः।

तालुमूलं सदा पातु विश्वभोजी रसामृतम्॥ ७४-२५॥

जिह्वाग्रं वाक्पतीशश्च भवानीशः शिवो मम।

मुखवृत्तं सदा पातु महासेनः कवीश्वरः॥ ७४-२६॥

क्रोधनाथः सदा पातु दक्षहस्तादिमूलकम्।

दक्षकूर्परमापातु तदग्रं कुक्कुरेश्वरः॥ ७४-२७॥

चिरजीवी सदा पातु चाङ्गुलीमूलदेशकम्।

अङ्गुल्यग्रं सदा ब्रह्मा ब्रह्मलिङ्गधरः प्रभुः॥ ७४-२८॥

विद्यापतिः पार्वतीशो वामहस्तादिमूलकम्।

पातु वामकूर्परं मे वामकेश्वर ईश्वरः॥ ७४-२९॥

कुण्डवासी सदा पातु कूर्परराग्रं कुलाचलः।

वेदमातृपतिः पातु कामधेनुपतिः प्रभुः॥ ७४-३०॥

ममाङ्गुलीमूलदेशं पातु पञ्चमुखो मम।

वामाङ्गुल्यग्रभागं मे पातु पर्वतपूजितः॥ ७४-३१॥

तनुमूलाग्रभागं मे कूर्मचक्रधरः प्रभुः।

शाकिनीवल्लभः पातु दक्षाङ्घ्रिमध्यदेशकम्॥ ७४-३२॥

गुल्फाग्रं गर्गरीनाथः पादाग्रं मूलदेवता।

अभयावल्लभः पातु दक्षाङ्गुल्यग्रभागकम्॥ ७४-३३॥

पातु स्मरहरो योगी वामोरुमूलदेशकम्।

वामपादमध्यदेशं मध्यदेशेश्वरोऽवतु॥ ७४-३४॥

पातु मे भगवाञ्छम्भुर्मम गुल्फाग्रदेशकम्।

मूलदेशं वामपादं पातु मेऽङ्गुष्ठमूलकम्॥ ७४-३५॥

कारणात्मा नीलकण्ठः प्रभाधारी यमान्तकः।

अङ्गुष्ठाग्रं सदा पातु सुषुम्नानाडिकेश्वरः॥ ७४-३६॥

महारुद्रेश्वरः पातु मम नाभिमनोभवम्।

उदरं गगनाधारः कामहर्ता हृदम्बुजम्॥ ७४-३७॥

सर्वानन्दात्मकः पातु मम स्कन्धयुगं शिवः।

हृदयाद् दक्षहस्ताग्रपर्यन्तं पातु शोकहा॥ ७४-३८॥

हृदयाद् वामहस्ताग्रपर्यन्तं परमेश्वरः।

हृदयान्मम दक्षाङ्घ्रिनखान्तं मे शिवोऽवतु॥ ७४-३९॥

सदानन्दा सदा पातु हृदाद्यङ्घ्रिं तु उन्मदः।

वासुकीवल्लभः पातु हृदादिगुददेशकम्॥ ७४-४०॥

अनन्तनाथ आपातु हृदादिमूर्धदेशकम्।

व्यापकः सर्वदा पातु सदाशिव उमापतिः॥ ७४-४१॥

तारात्मकः कायसिद्धः शक्तीशः शुक्रदेवता।

पञ्चचूडः सदा पातु पञ्चतत्त्वाङ्गरूपकम्॥ ७४-४२॥

शीर्षादिपादपर्यन्तं कामधेनुः सदाऽवतु।

जलेऽरण्ये घोरवने सङ्कटे च महापथे॥ ७४-४३॥

प्रान्तरे पातु गुप्ताक्षः कामराजः परापरः।

अर्धनारीश्वरः पातु मातृकापरमेश्वरः॥ ७४-४४॥

मातृकामन्त्रपुटितः स्वस्वस्थानं सदावतु।

धर्मात्मा धर्मसन्ंधिं मे पिङ्गलां पातु चण्डिकाम्॥ ७४-४५॥

विह्वलः सर्वदा पातु भोलानाथः सदाऽवतु।

सर्वदेशे सर्वपीठे कामरूपे विशेषतः॥ ७४-४६॥

सर्वदा योगिनीनाथः परमात्मा सदाऽवतु।

कामरूपाख्यपीठादि पञ्चाशत् पीठदेवताः॥ ७४-४७॥

पञ्चाशत्पीठमाया तु कामरूपं सदाशिवः।

भवो रुद्रो महेशश्च शङ्करो मन्मथान्तकः॥ ७४-४८॥

गुह्यकेशः पापहर्ता कपाली शूलधारकः।

पञ्चवक्त्रो दशभुजो भुजङ्गभूषणो हरः॥ ७४-४९॥

महाकालो महारुद्रो महावीरो हृदि स्थितः।

महादेवो महागुह्यो महामाया महागुणः॥ ७४-५०॥

पशुपतिर्वीरूपाक्षो हरीशो धवलेश्वरः।

वटुकेशः क्रमाचार्यः पञ्चशूली हृदुद्भवः॥ ७४-५१॥

उन्मनीशः साहसिकः पराख्यः पर्वतेश्वरः।

सर्वात्मा च महात्मा च शिवात्मा च श्मशानगः॥ ७४-५२॥

क्रोधवीरः कालकारी सूक्ष्मधर्मा धुरन्धरः।

श्यामकः क्रूरहर्ता च गणेशः कालमाघवः॥ ७४-५३॥

ज्ञानात्मा कपिलात्मा च सिद्धात्मा योगिनीपतिः।

कोटिसूर्यप्रतीकाश एकपञ्चाशदीश्वराः॥ ७४-५४॥

सदा पान्तु मातृकस्थाः स्थितिसर्गलयात्मकाः।

आदिपीठं कामरूपं काञ्चीपीठं तदन्तिके॥ ७४-५५॥

अयोध्यापीठनगरं तदूर्ध्वे जालकन्धरम्।

जालन्धरं तदूर्ध्वे तु सिद्धपीठं तदन्तिके॥ ७४-५६॥

कालीपीठं तदूर्ध्वे तु चण्डिकापीठमग्रके।

अष्टपुरीमहापीठं कण्ठदेशं सदाशिवः॥ ७४-५७॥

सदा पातु महावीरः कालधर्मी परात्परः।

मधुपुरीमहापीठं चाष्टपुरान्तरस्थितम्॥ ७४-५८॥

मायावतीमहापीठं तदूर्ध्वे परिकीतीतम्।

वाराणसीमहापीठं धर्मपीठं तदन्तिके॥ ७४-५९॥

ज्वालामुखीमहापीठं तदन्तःस्थं प्रकीतीतम्।

तदूर्ध्वे च महापीठं ज्वलन्तीपीठमेव च॥ ७४-६०॥

तदूर्ध्वे पूर्णगिर्याख्यं कुरुक्षेत्रं तदन्तिके।

उड्डयानं तदूर्ध्वे तु कमलापीठमेव च॥ ७४-६१॥

हरिद्वारं महापीठं बदरीपीठमेव च।

व्यासपीठं नारदाख्यं तदूर्ध्वे वाडवानलम्॥ ७४-६२॥

हिङ्गुलादं तदूर्ध्वे तु लङ्कापीठं तदूर्ध्वके।

तदूर्ध्वे शारदापीठं रतिपीठं तदूर्ध्वके॥ ७४-६३॥

लिङ्गपीठं कलापीठं द्वारकापीठमेव च।

कपालपीठं हर्याख्ये वरदापीठमुत्तरे॥ ७४-६४॥

कालीपीठं तदूर्ध्वे तु तारापीठं तदूर्ध्वके।

उग्रतारामहापीठं महोग्रापीठमेव च॥ ७४-६५॥

नीलसरस्वतीपीठं जरापीठं तदूर्ध्वके।

तदूर्ध्वे गगनापीठं खेचरीपीठमेव च॥ ७४-६६॥

तदूर्ध्वे तारिणीपीठं सहस्रदलमध्यके।

कर्त्रीपीठं तदूर्ध्वे च देवीपीठं तदूर्ध्वके॥ ७४-६७॥

राजराजेश्वरीपीठं षोडशीपीठमेव च।

सहस्रदलमध्ये तु सहस्रपीठमेव च॥ ७४-६८॥

मध्ये एकजटापीठं कर्त्रीतीरकलोपरि।

षोडशीमुखविद्याभिर्वेष्टिता तारिणीकला॥ ७४-६९॥

काली नीला महाविद्या त्वरिता छिन्नमस्तका।

वाग्वादिनी चान्नपूर्णा देवी प्रत्यङ्गिरा पुनः॥ ७४-७०॥

कामाख्या वासली बाला मातङ्गी शैलवासिनी।

षोडशी भुवनेशानी भैरवी बगलामुखी॥ ७४-७१॥

धूमावती वेदमाता हरसिद्धा च दक्षिणा।

एता विद्या महाविद्याः शिवसेवनशोभिताः॥ ७४-७२॥

द्वाविंशतिमहाविद्या द्वारं द्वाविंशतिस्थलम्।

महापीठे सहस्रारे सर्वदा पान्तु मां कलाः॥ ७४-७३॥

सदाशिवः शक्तियुक्तः पातु चण्डेश्वरो हरः।

पञ्चामराधरः पातु देवीनाथः सदाऽवतु॥ ७४-७४॥

पार्वतीप्राणनाथो मे सर्वाङ्गं पातु सर्वदा।

अघोरनाथ ईशानो वरदो मदनान्तकः॥ ७४-७५॥

यज्ञहर्ता दक्षखण्डो वीरभद्रो दिगम्बरः।

अष्टादशभुजो रौद्रो नीलपङ्कजलोचनः॥ ७४-७६॥

त्रिलोचनः कालकामो महारुद्रो गणेश्वरः।

काकिनीवल्लभः शूली योगकर्ता महेश्वरः॥ ७४-७७॥

वागीश्वरः स्मरहरो महामन्त्रो हलायुधः।

श्रीनाथः पूजितो बालो बालेन्द्रो बलवाहनः॥ ७४-७८॥

बलरामः कृष्णरामो गोविन्दो माधवीश्वरः।

जितामित्रेश्वरश्चूडामणीशो मानदः सुखी॥ ७४-७९॥

मुखं वृन्दावनं पातु षड्दलाम्भोरुहस्थितम्।

वैष्णवीवल्लभः पातु ब्रह्माणं कुलकुण्डली॥ ७४-८०॥

विष्णुनाथः सदा पातु ब्रह्माग्निं गरुडध्वजः।

ज्वालामालाधरः पातु कालानलधरोऽवतु॥ ७४-८१॥

काकिनीवल्लभः पातु ईश्वरो भैरवेश्वरः।

महारुद्रो नीलकण्ठो मणिपूरं सुलाकिनीम्॥ ७४-८२॥

सदा पातु मणिगृहं रुद्राणीप्रियवल्लभः।

महारुद्रो नीलकण्ठो महाविष्णुं सदावतु॥ ७४-८३॥

राकिणीं विष्णुलक्ष्मीं च पातु मे वैष्णवीं कलाम्।

सदाशिवो नीलकण्ठो मम पातु हृदि स्थलम्॥ ७४-८४॥

ईश्वरं परमात्मानं मम रक्षतु शाकिनीम्।

सदाशिवं सदा पातु द्विदलस्थोऽपरो हरः॥ ७४-८५॥

हाकिनीशक्तितः पातु सहस्रारं शिवोऽवतु।

तारानाथविधिः पातु सहस्रारनिवासिनीम्॥ ७४-८६॥

महाकाशं सदा पातु तदधो वायुमण्डलम्।

वह्निमण्डलमापातु तदधः शाकिनीश्वरः॥ ७४-८७॥

तदात्मकः सदा पातु कीलालं कौलदेवता।

पृथिवीं पार्थीवः पातु सर्वदैकं सदाशिवः॥ ७४-८८॥

इत्थं रक्षाकरं नाथ कवचं देवदुर्लभम्।

प्रातःकाले पठेद्यस्तु सोऽभीष्टं फलमाप्नुयात्॥ ७४-८९॥

पूजाकाले पठेद्यस्तु कवचं साधकोत्तमः।

कीर्तीश्रीकान्तिमेधायुर्बृंहितो भवति ध्रुवम्॥ ७४-९०॥

अप्रकाश्यं महावीरकवचं सर्वसिद्धिदम्।

ज्ञानमात्रेण भूर्लोके जेता कालस्य योगिराट्॥ ७४-९१॥

अस्य धारणमात्रेण कालसूत्रान्तको भवेत्।

अस्य धारणपाठेन सर्वज्ञो भवति ध्रुवम्॥ ७४-९२॥

सर्वे व्यासवशिष्ठादिमहासिद्धाश्च योगिनः।

पठित्वा धारयित्वा ते प्रधानास्तत्त्वचिन्तकाः॥ ७४-९३॥

कण्ठे यो धारयेदेतत् कवचं त्वत्स्वरूपकम्।

मद्वक्राम्भोरुहोद्भूतं विद्यावाक्सिद्धिदायकम्॥ ७४-९४॥

युद्धे विजयमाप्नोति द्यूते वादे च साधकः।

कवचं धारयेद्यस्तु साधको दक्षिणे भुजे॥ ७४-९५॥

देवा मनुष्या गन्धर्वास्तस्य वश्या न संशयः।

कवचं शिरसा यस्तु धारयेद् यतमानसः॥ ७४-९६॥

करस्थास्तस्य देवेशि अणिमाद्यष्टसिद्धयः।

भूर्जपत्रे त्विमां विद्यां शुक्लपट्टेन वेष्टिताम्॥ ७४-९७॥

रजतोदरसंविष्टां कृत्वा च धारयेत् सुधीः।

सम्प्राप्य महतीं लक्ष्मीमन्ते तव शरीरधृक्॥ ७४-९८॥

यस्मै कस्मै न दातव्यं न प्रकाश्यं कदाचन।

शिष्याय भक्तियुक्ताय साधकाय प्रकाशयेत्॥ ७४-९९॥

योगिने ज्ञानयुक्ताय देयं धर्मात्मने सदा।

अन्यथा सिद्धिहानिः स्यात्सत्यं सत्यं न संशयः॥ ७४-१००॥

तव स्नेहान्महादेव कथितं कवचं शुभम्।

न देयं कवचं सिद्धं यदीच्छेदात्मनो हितम्॥ ७४-१०१॥

यदि भाग्यफलेनापि कवचं यदि लभ्यते।

धूर्तो वा कपटी वापि खलो वा दुर्ग्रहस्थितः॥ ७४-१०२॥

निजकर्मफलत्यागमवश्यं खलु कारयेत्।

तदा सिद्धिमवाप्नोति धर्मधाराधरो भवेत्॥ ७४-१०३॥

सिद्धिपूजाफलं तस्य दिवसे दिवसे सुधीः।

धूर्ततां खलतां मिथ्यां कापट्यं स विहाय च॥ ७४-१०४॥

राजराजेश्वरो भूत्वा जीवन्मुक्तो न संशयः।

योऽर्चयेद् गन्धपुष्पाद्यैः कवचं मन्मुखोदितम्॥ ७४-१०५॥

तेनार्चिता महादेव सर्वदेवा न संशयः।

राजसिकं मानसिकं तामसिकं परन्तपः॥ ७४-१०६॥

हृद्ये मानसिकं ध्यायन् पूजा राजसिकं स्मृतम्।

तामसिकं लोकमध्ये कवचार्चा त्रिधा मता॥ ७४-१०७॥

सिद्धकवचमाख्यातं केवलं ज्ञानसिद्धये।

मोक्षाय जगतां शम्भोः प्रियाय परमेश्वर॥ ७४-१०८॥

तन्त्रेऽस्मिन् सारसङ्केतं पूजाऽप्यारोपणादिकम्।

अन्तःकरणमध्ये तु सर्वकार्यमुदीरयेत्॥ ७४-१०९॥

राज्ये च प्रपठेत् स्तोत्रं कवचं ज्ञानसिद्धये।

इति ते कथितं नाथ परमात्मनि मङ्गलम्॥ ७४-११०॥

यस्याराधनमात्रेण शिवत्वमुत किं प्रभो॥ ७४-१११॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे। षट्चक्रप्रकाशे भैरवीभैरवसंवादे सदाशिवकवचपाठो। नाम चतुःसप्ततितमः पटलः॥ ७४॥

अथ पञ्चसप्ततितमः पटलः

आनन्दभैरव उवाच

कथितं शारदं धाम अप्रकाश्यं फलोदयम्।

इदानीं कथय प्राणवल्लभे वरदा भव॥ ७५-१॥

कण्ठाभोजे कीदृशी या सभा परममोहिनी।

गायन्ती योगिभिनीत्यं परमानन्दवधीनी॥ ७५-२॥

सभोत्कृष्टां सिद्धसभां वर्तय ब्रह्मवादिनि।

तदा मे सफलं ज्ञानं सफलं सारनिर्णयम्॥ ७५-३॥

यदि सा कथ्यते देवि सभा सर्वप्रतिष्ठिता।

श्रीनन्दभैरवी उवाच

श्रूयतां देवदेवेश सर्वानन्दप्रपूरक॥ ७५-४॥

सभा ज्ञानमयी नित्या षोडशारप्रकाशिनी।

विस्तीर्णा सप्ततिं चैव योजनानां शितप्रभा॥ ७५-५॥

तपसा निमीता लक्ष्मीर्ज्ञानमङ्गलमण्डिता।

राशिप्रभा खेचरी सा कैलासशिखरोपमा॥ ७५-६॥

गुह्यकैरूह्यमाना सा मधुरध्वनिपूरणी।

दिव्यहेममयैरुच्चैः पादपैरुपशोभिता॥ ७५-७॥

रश्मिमती भास्वती च दिव्यगन्धमनोरमा।

शिताभ्रशिखराकारा हेमतोरणशोभिता॥ ७५-८॥

दिव्यहेममयैः शृङ्गैर्विद्युद्भिरिव चित्रिता।

षोडशारकर्णीकायां प्रतिभा विश्वजित्वरी॥ ७५-९॥

तस्यां सदाशिवो नाथो विचित्राभरणायुधः।

स्त्रीसहस्रावृतः श्रीमानास्ते ज्वलितकुण्डलः॥ ७५-१०॥

दिवाकरनिभे रम्ये दिव्यास्तरणसंयुते।

दिव्यपादोपधाने च निषण्णः परमासने॥ ७५-११॥

मन्दाराणामुदाराणां वनानि सुरभीणि च।

सौगन्धिकानां चादाय गन्धान् गन्धवहः शुचिः॥ ७५-१२॥

नलिन्याश्चाणकाख्यायाश्चन्दनानां वनस्य च।

मनोहृदयसंह्लादी वायुस्तमुपसेवते॥ ७५-१३॥

तत्र देवाः सगन्धर्वा गणैरप्सरसां वृताः।

दिव्यतालेन गायन्ति गीतानि परमेश्वर॥ ७५-१४॥

मिश्रकेशी च रम्भा च चित्रसेना शुचिस्मिता।

चारुनेत्रा घृताची च मेनका मुञ्जिकस्तनी॥ ७५-१५॥

विश्वाचा सहजन्या च प्रम्लोचा उर्वशी इरा।

वर्गा च सौरभेयी च समीची बुद्धिदा लता॥ ७५-१६॥

रत्नावती महामाया कमला गन्धकेशिका।

बाणमाता महाभर्गा ज्योतिः प्रज्ञा भवाऽभवा॥ ७५-१७॥

प्रभवा सम्भवा गुञ्जा साराङ्गी सारविक्रमा।

त्रिलोचनी त्रिवेदिस्था अम्बिका सप्तशायका॥ ७५-१८॥

विरला वरदा माया सिद्धा कात्यायनी तथा।

योगिनी खेचरी सिद्धा जीवाङ्गी दीर्घलोचनी॥ ७५-१९॥

रमणी च हिरण्याक्षी पद्मवक्त्रा हिरण्मयी।

एताः सहस्रश्चान्या नृत्यगीतविशारदाः॥ ७५-२०॥

ईशानमुपतिष्ठन्ति गन्धर्वाप्सरसाङ्गणाः।

अनिशं दिव्यवादित्रैर्नृत्यगीतैश्च सा स्त्रभा॥ ७५-२१॥

अशून्या रुचिरा भाति गन्धर्वाप्सरसां गणैः।

किन्नरोरगगन्धर्वा नरा नाम तथा परे॥ ७५-२२॥

मानभद्रोऽथ धनदः श्वेतभद्रोऽथ गुह्यकः।

काशवलो गण्डकण्डूः पत्योद्रश्च महाबलः॥ ७५-२३॥

कुस्तुम्बुरुः पिशाचाश्च गजकर्णे विशानकः।

वराहकर्णस्ताम्रौष्ठः फलभक्षः फलोदकः॥ ७५-२४॥

अङ्गचूडः शिखावर्तो हेमनेत्रो विभीषणः।

पुष्पाननः पिङ्गलकः शोणितोदः प्रवालकः॥ ७५-२५॥

वृकवांश्चानिकेतश्च चीरवासाश्च भावतः।

भरद्वाजो वारिधरी महामायो धनञ्जयः॥ ७५-२६॥

कपिलः कपिलाचार्यो महायोगी क्षमाधरः।

एते चान्ये च बहवो यक्षा शतसहस्रशः॥ ७५-२७॥

सदा भगवती लक्ष्मीस्तथैव नलकूबरः।

तयोः परिजनाः सर्वे वारुणीमद्यकारकाः॥ ७५-२८॥

अतो मधुपुरी नाम चाष्टपूरं मधुस्थलम्।

तद्बाह्ये सा सभा भाति चन्द्रकोटिसमोदया॥ ७५-२९॥

अहञ्च निवसाम्यस्यां भवन्त्यन्ये च मद्विधाः।

ब्रह्मर्षयो भवन्त्यत्र तथा देवर्षयो परे॥ ७५-३०॥

क्रव्यादा राक्षसाश्चान्ये गन्धर्वाश्च महाबलाः।

उपासन्ते महात्मानं तस्यां शिवदमीश्वरम्॥ ७५-३१॥

भगवान् भूतसङ्घैश्च वृतः शतसहस्रशः।

उमापतिः पशुपतिः शूलधृग् भगनेत्रहा॥ ७५-३२॥

त्र्यम्बको राजशार्दूलो देवी च विगतक्रमाः

वामनैर्वीकटैः कुब्जैः प्रिययक्षैर्महाबलैः॥ ७५-३३॥

मेदोमांसासवैरुग्रैरुग्रधन्वा महाबलः।

नानाप्रहरणैर्घोरैर्घातैरिव महाजवैः॥ ७५-३४॥

वृतः सहायैस्तत्रास्ते सदैव श्रीसदाशिवः।

प्रकृष्टाः सततञ्चा(पि?)प्यवन्तु शम्भुपरिच्छदाः॥ ७५-३५॥

गन्धर्वाणाञ्च पतयो विश्वावसुर्हाहा हुहूः।

तुम्बुरुः पर्वतश्चैव शैलूरश्च तथापरः॥ ७५-३६॥

चित्रसेनश्च गीतज्ञस्तथा चित्ररथोऽपि च।

एते चान्ये च गन्धर्वाः सदाशिवमुपासते॥ ७५-३७॥

विद्याधराधिपश्चैव चक्रवर्मा (हि)मानुगः।

उपासतुस्ततस्तस्यां प्रभुं धनदमीश्वरम्॥ ७५-३८॥

हिमवान् पारिभद्रश्च विन्ध्यकैलासमन्दराः।

किन्नराः शतशस्तत्र ज्ञानिनामीश्वरं प्रभुम्॥ ७५-३९॥

गणाश्च शतशस्तत्र भगदत्तपुरोगमाः।

द्रुमः किंपुरुषश्चैव उपास्ते वरदेश्वरम्॥ ७५-४०॥

राक्षसाधिपतिश्चैव महेन्द्रो गन्धमादनः।

सह यक्षैः सगन्धर्वैः सह सर्वैर्निशाचरैः॥ ७५-४१॥

विभीषणश्च धर्मीष्ठ उपास्ते श्रीसदाशिवम्।

मलयो मन्दरश्चैव महेन्द्रो गन्धमादनः॥ ७५-४२॥

इन्द्रकीलः सनाभश्च तथा दिव्यौ च पर्वतौ।

एते चान्ये च बहवः सर्वे मेरुपुरोगमाः॥ ७५-४३॥

उपासते महात्मानं सदाशिवमधीश्वरम्।

नन्दीश्वरश्च भगवान् महाकालस्तथैव च॥ ७५-४४॥

शक्तं कर्णमुखाः सर्वे देव्याः पारिषदास्तथा।

काष्ठभृकुटी मुखोदन्ती विजया च तपोऽधिका॥ ७५-४५॥

श्वेतश्च वृषभश्चैव नर्दन्नास्ते महाबलः।

वरदं राक्षसाश्चान्ये पिशाचाश्च समासते॥ ७५-४६॥

पार्षदैः संपरिवृतमुमया च महेश्वरम्।

सदा हि देवदेवेशं शिवं त्रैलोक्यभावनम्॥ ७५-४७॥

प्रणम्य मूर्ध्ना पौलस्त्यो बन्धुरूपमुमापतिम्।

ततोऽभ्यनुज्ञां सम्प्राप्य महादेवात् कुलेश्वरात्॥ ७५-४८॥

आस्ते कदाचिद् भगवान् भवो धनपतेः सखा।

निधिप्रवरमुख्यौ च शङ्खपद्मधनेश्वरौ॥ ७५-४९॥

सर्वान्निधीन् प्रगृह्याथ उपास्ताद्वै सदाशिवम्।

समता तादृशी रम्या मया गुप्तान्तरीक्षगा॥ ७५-५०॥

पितामहसभा तस्या ऊर्ध्वे भाति विभाविता।

दिक्पालानां सभाग्रे तु स्थिरविद्युत्समोदया॥ ७५-५१॥

महादेवं कीर्तयिष्ये सतां कण्ठसरोरुहे।

योगिनां मौनशीलानां ध्यानसिद्धिप्रदा सभाम्॥ ७५-५२॥

महापातककोटिघ्नी वर्णना नास्ति ब्रह्मणः।

सभाया वर्णने शक्तो नाहं वर्षशतैरपि॥ ७५-५३॥

तथापि तव सिद्ध्यर्थं संक्षेपाद् वर्ण्यते प्रभो।

पितामहसभां नाथ कथ्यमानां विशुद्धये॥ ७५-५४॥

शक्यते सा न निर्देष्टुमेवं रूपेति सोज्ज्वला।

सर्वदा संस्थिरा तत्र यथा नारायणे स्थिरा॥ ७५-५५॥

समरूपं संविभाव्य सभया श्रीपितामहः।

उपासते महात्मानं शाकिनी परमेश्वरम्॥ ७५-५६॥

अप्रमेयां सभां दिव्यां मानुषीं नित्यरूपिणीम्।

अनिर्देश्यां प्रभावेण सर्वभूतमनोरमाम्॥ ७५-५७॥

औषधैर्वा तथा युक्तैरुत्तमा या अनाशिनी।

मन्मथा सा सभा देवी न शीता न च घर्मदा॥ ७५-५८॥

न क्षुत्पिपाशे न ग्लानिं न भूतां नापि भाविताम्।

नानारूपैरिव कृता मणिभिः सहितायुधैः॥ ७५-५९॥

स्तम्भैर्न च धृता सा तु शाश्वती न च साक्षरा।

दिव्यैर्नानाविधैर्भावैर्भास्वद्भिरमितप्रभैः॥ ७५-६०॥

अतिचन्द्रञ्च सूर्यञ्च भासते सा प्रभा स्वयम्।

प्रदीप्ता नाकपृष्ठस्था भासयन्तीव भास्करम्॥ ७५-६१॥

तस्यां स भगवानास्ते विदधद् देवमानुषान्।

स्वयमेकोऽनिशं नाथ सर्वलोकपितामहः॥ ७५-६२॥

उपतिष्ठन्ति चाप्येनं प्रजानां पतयः प्रभुम्।

दक्षः प्रचेता पुलहो मरीचिः कश्यपो यतिः॥ ७५-६३॥

भृगुरत्रिर्वशिष्ठश्च गौतमोऽथाङ्गिरास्तथा।

पुलस्त्यश्च क्रतुश्चैव प्रह्लादः कर्दमस्तथा॥ ७५-६४॥

अथर्वाङ्गिरसश्चैव बालखिल्या मरीचिपाः।

मनोऽन्तरीक्षं विद्याश्च वायुस्तेजो जलं मही॥ ७५-६५॥

शब्दस्पर्शौ तथा रूपं रसो गन्धश्च धामीकः।

प्रकृतिश्चाहङ्कारश्च यच्चान्यत्कारणं भुवः॥ ७५-६६॥

अगस्त्यश्च महातेजा मार्कण्डेयो मुनीश्वरः।

जमदग्निर्भरद्वाजः संवर्तश्च्यवनस्तथा॥ ७५-६७॥

दुर्वासाश्चामरिर्जेता ऋष्यश्रृङ्गस्तपोधनः।

सनत्कुमारो भगवान् योगाचार्यो महातपाः॥ ७५-६८॥

असितो देवलश्चैव जैगीषव्यश्च तत्त्ववित्।

ऋषभो जितशक्रश्च महावीर्यस्तपोमुनिः॥ ७५-६९॥

आयुर्वेदस्तथाष्टाङ्गो देहवान् वीर्यधारकः।

ऊर्ध्वरेता महायोगी देवदत्तो भगीरथः॥ ७५-७०॥

कपिलाचार्य ईशाप्तो धनदः सारसङ्गतः।

महावाग्मीश्वरः कालः प्रियकर्मा च सुव्रतः॥ ७५-७१॥

वरुणः सार्वभौमश्च देवाचार्यो धनञ्जयः।

कामपुत्रो वशिष्ठश्च मन्दारोऽश्वत्थ एव च॥ ७५-७२॥

रविमुख्यो विधाता च नैर्ऋतो यम एव च।

अग्निः शक्रो विभाण्डश्च महावीरो गणेश्वरः॥ ७५-७३॥

कातीकेयो जीवनाथो ग्रहचक्रः शुभङ्करः।

वेदज्ञाता धर्मवेत्ता वारेन्द्रो नन्दनः प्रभुः॥ ७५-७४॥

बृहस्पतिः शुक्रदेवो विज्ञानी भास्वरास्त्रधृक्।

अन्ये च बहवः सन्ति ऊर्ध्वरेतार ईशगाः॥ ७५-७५॥

तस्यां भान्ति महाकाल  केवलानन्दविग्रहाः।

चन्द्रमा सह नक्षत्रैरादित्यैश्च गभस्तिभिः॥ ७५-७६॥

वायवः क्रतवश्चैव सङ्कल्पः प्राण एव च।

मूतीमन्तो महात्मानो महाव्रतपरायणाः॥ ७५-७७॥

एते चान्ये च बहवः सदाशिवमुपासते।

अर्थो धर्मश्च कामश्च हर्षोऽद्वेषस्तपो दमः॥ ७५-७८॥

आयान्ति तस्यां गन्धर्वाः सहिताप्सरसस्तथा।

विंशतिः सप्त चैवान्ये लोकपालाश्च सर्वशः॥ ७५-७९॥

नवग्रहास्तत्र सन्ति नानोपचारपण्डिताः।

मन्त्रो रथन्तरश्चैव हरिमान् वसुमानपि॥ ७५-८०॥

आदित्याः साधिराजानो नानावृन्दैरुपागताः।

मरुतो विश्वकर्मा च वसवश्च दिगीश्वराः॥ ७५-८१॥

तथा पितृगणाः सर्वे सर्वाणि च हवींष्यथ।

ऋग्वेदश्च सामवेदो यजुर्वेदः सदाशिवः॥ ७५-८२॥

अथर्ववेदस्तस्यान्तः सर्वशास्त्राणि चैव ह।

इतिहासोपदेशाश्च वेदाङ्गानि च सर्वशः॥ ७५-८३॥

ग्रहा यक्षाश्च सोमाश्च दैवतानि च सर्वशः।

सावित्री दुर्गतरणी वाणी सप्तविधा तथा॥ ७५-८४॥

स्मृतिर्मेधा धृतिश्चैव बुद्धिः प्रज्ञा क्षमा यशः।

स्तुतिशास्त्राणि सामानि गाथास्तु विविधास्तथा॥ ७५-८५॥

भाष्याणि तर्कवक्त्राणि देहवन्ति विभान्ति च।

नाटका विविधाः काव्याः कथाख्याधिककारिकाः॥ ७५-८६॥

तत्र तिष्ठन्ति ये पुण्या ये चान्ये गुरुपूजकाः।

क्षणा लवा मुहूर्ताश्च दिवारात्रिः प्रभातगा॥ ७५-८७॥

अर्धमासास्तथा मासा ऋतवः षट् च भैरव।

संवत्सराः पञ्च युगं मासा रात्रिश्चतुर्विधाः॥ ७५-८८॥

कालचक्रञ्च यद्दव्यं नित्यमक्षयमव्ययम्।

धर्मचक्रं तथा चापि नित्यमन्तेषु विग्रहाः॥ ७५-८९॥

अदितिर्दक्षकश्चैव सुरसा विनता इरा।

कालका सुरभी देवी सरमा चाथ गौतमी॥ ७५-९०॥

प्रधा कद्रूश्च वै देव्यो देवतानाञ्च मातरः।

रुद्राणी श्रीश्च लक्ष्मीश्च भद्रा षष्ठी तथापरा॥ ७५-९१॥

पृथिवी गाङ्गता देवी ह्रीः स्वाहा कीर्तीरेव च।

सुरा देवी शची चैव तथा पुष्टिरुन्धती॥ ७५-९२॥

संवृद्धिराशा नियतिरिडा देवी रतिस्तथा।

कामिनी परमानन्दा देवी श्रीत्रिपुरेश्वरी॥ ७५-९३॥

काममाता महाबाला वरदाद्या सरस्वती।

मन्दाकिनी वियद्गङ्गा स्वर्गगङ्गा मनोजवा॥ ७५-९४॥

त्रिस्रोता चन्द्रभागा च महावेगवती नदी।

पञ्चतीर्थकलापद्माः सागराः सागरोदयाः॥ ७५-९५॥

कालिन्दी वैष्णवी सिद्धा तरला पुष्करोदयाः।

भानुमती महावेगा चण्डशुक्रा महानदी॥ ७५-९६॥

वेत्रवती च कावेरी महाभर्गा वसुन्धरा।

विभावती पद्मलक्ष्मीः प्रभा भद्रा किरातिनी॥ ७५-९७॥

अम्बालिका त्वहल्या च त्रितुण्डा मण्डलेश्वरी।

मन्दोदरी मन्दवेगा मदिरा शारदा नदी॥ ७५-९८॥

निर्मला मन्दरग्रन्थिः प्रज्ञा ज्वालावती रतिः।

अवन्ती च रटन्ती च युगाद्या माघसप्तमी॥ ७५-९९॥

पञ्चतुण्डा घोरनादा सन्तोषी तुष्टव्ंशिनी।

भरद्वाजेश्वरी धर्मा शतधारा धरावती॥ ७५-१००॥

मल्लिका मालिनी मन्दा हिन्दोला लिङ्गवाहिनी।

वर्तुला सिद्धलङ्का च कुरुक्षेत्रस्थिता नदी॥ ७५-१०१॥

आकाशगङ्गा सिद्धाङ्गी गौतमी बालिका गया।

दैत्यजिह्वा कालजिह्वा चतुष्कोटिकलाऽमला॥ ७५-१०२॥

नाडिका सार्धवह्निस्था प्रत्येकस्थान संस्थिताः।

मूर्तीमत्यो विभान्त्यस्यां सिन्धुदेव्यस्तथा पराः॥ ७५-१०३॥

सभायां कृष्णनाम्नी च नदी कुलवती बला।

तस्यां प्रधाना त्रिनदी वामदक्षिणमध्यतः॥ ७५-१०४॥

इडावती पिङ्गलाख्या सुषुम्नाद्या सरस्वती।

त्रिमध्ये पूजिता देवी सुषुम्ना बहुरूपिणी॥ ७५-१०५॥

नदाश्चापि च तत्सङ्ख्याः सार्धत्रिकोटयः स्मृताः।

नदः शोणो महाशोणो वटुको बलवान् हरः॥ ७५-१०६॥

तरुणस्तारको भद्रो विभद्रो नर्मदापतिः।

प्रभानाथो वीरमुख्यो विशालो बलदेवकः॥ ७५-१०७॥

पद्मरागो मारकेतस्त्रिवृत्तो नन्दनो घनः।

अकालजिह्मो हिंसाढ्यो विधृतो ह्यवधूतकः॥ ७५-१०८॥

ब्रह्मपुत्रो विभाकारः कपिलोऽञ्जन एव च।

साम्ब एको महासंख्यो मण्डलाख्यो बृहन्नलः॥ ७५-१०९॥

शतनालाधरो रुद्रो विश्वगामी धनञ्जयः।

सहस्रवदनो वाक्यो घर्घरो दमनस्तथा॥ ७५-११०॥

सिताख्यो मानवो गर्तः कुलाख्यो विसमापतिः।

भवकुण्डो विसर्गाख्यो ज्योतिष्टोम्ः फलाकरः॥ ७५-१११॥

धवलो बदराख्यश्च वीरभद्रो मखस्तथा।

मर्महन्ता शूलगर्तो मानभङ्गो दिवागमः॥ ७५-११२॥

शूरश्चैव कालकूटो मधुगामी जलान्तकः।

दधिधारो घृताख्यश्च सुधाधारो महानदः॥ ७५-११३॥

हिङ्गुलाख्यो मालकेतुः पयस्वान् पयसः पतिः।

लवणाख्यो धर्मपुत्रो जीवपुत्रो धनाकरः॥ ७५-११४॥

मायापतिः कलानाथो विन्ध्यलो लवणाश्रयः।

इक्षुधाराधरो मानो विधुवर्णो धराजलः॥ ७५-११५॥

पुष्करो दुष्कराख्यश्च शङ्करश्च सदाशव।

एते चान्ये च बहवः पुष्करं समुपासते॥ ७५-११६॥

त्रयाणां पुष्करः श्रेष्ठः सुषुम्नानाडिकाश्रयः।

इडायां पुष्कराख्यश्च पिङ्गलायाञ्च शङ्करः॥ ७५-११७॥

नदाश्चापि बहुतरा मूतीमन्तो विभान्ति च।

नद्यश्च मूतीमत्यश्च सदाशिवमुपाश्रिताः॥ ७५-११८॥

पूजयन्ति कणीकायां सभायां ब्रह्मणः प्रभो।

सदाशिवसभामध्ये ब्रह्मणः सभयोज्ज्वला॥ ७५-११९॥

तस्यां देवसभा भाति शक्रस्यापि मनोहरा।

पूर्वादिक्रमयोगेन ध्येया च खेचरीव वा॥ ७५-१२०॥

वह्निकोणेऽनलसभा महातेजोमयी परा।

कणीकाया दक्षिणे च धर्मराजमहासभा॥ ७५-१२१॥

नैर्ऋते राक्षसेन्द्रस्य सभा सकलमोहिनी।

वरुणे भाति दीप्ताख्या वारुणीया सभाऽपरा॥ ७५-१२२॥

वायुकोणे वायुसभा कौबेरी चोत्तरे सभा।

अधो नन्दसभा भाति चोर्ध्वं ब्रह्मसभा प्रभो॥ ७५-१२३॥

मध्ये च भाति सूर्याभां शतायुतसमोदयाम्।

सदाशिवसभां नाथ ब्रह्माण्डे मण्डलोद्भवाम्॥ ७५-१२४॥

सूक्ष्ममार्गे सदा भान्तीमीश्वरस्यापि रूपिणीम्।

आदित्या वसवो रुद्रा मरुतश्चाश्विनावपि॥ ७५-१२५॥

विश्वेदेवाश्च साध्याश्च पितरश्च महर्षयः।

एक एव तु राजषीः प्रधानस्तत्र भाति हि॥ ७५-१२६॥

त्रयोदशगुणोपेता भान्ति राजर्षयस्तथा।

पृथुश्चैव धर्मराजो हरिश्चन्द्रो युधिष्ठिरः॥ ७५-१२७॥

रामचन्द्रो रमानाथो भगीरथ इलापतिः।

प्रह्लादः कर्दमश्चैव विभीषणश्च धामीकः॥ ७५-१२८॥

नलश्चैव रुक्ममाली विक्रमोद्धततापसाः।

वामपार्श्वे अधोभागे प्रदीप्ता ह्यासनावनौ॥ ७५-१२९॥

अन्ये च मुनयः सन्ति समावेष्ट्य सदाशिवम्।

महाभक्ताः प्रपश्यन्ति सदाशिवपरं पदम्॥ ७५-१३०॥

अकालमृत्युहरणं सर्वव्याधिविनाशनम्।

स्मरणात् पठनाद्ध्यानात् सदाशिवपतेः प्रभोः॥ ७५-१३१॥

अनायासेन सिद्ध्यन्ति ये ये भक्ता महीतले।

वृद्धा वा बालका वापि यौवनस्था नरा अपि॥ ७५-१३२॥

अनायासं फलं लब्ध्वा प्रपश्यन्ति सदाशिवम्।

एतेषां ध्यानमाकृत्य चार्चयन्ति सदाशिवम्॥ ७५-१३३॥

स याति सहसा नाथ सदाशिवपरं पदम्।

देवीनां यजनं कृत्वा ये ध्यायन्ति सदाशिवम्॥ ७५-१३४॥

त्रैलोक्यं सहसा दृष्ट्वा प्रपश्यन्ति सदाशिवम्।

यथाकाले निर्जने च गवीनां कुहरेऽपि वा॥ ७५-१३५॥

स्थित्वा चैकमना ध्यायेत् सदाशिवपरं पदम्।

शिवत्वं याति सहसा ध्यानाद् ब्रह्मागतस्य च॥ ७५-१३६॥

ब्राह्मणः सहसा याति सदाशिवपरं पदम्।

एवंभूतं ध्यायतीह सदाशिवपदाम्बुजम्॥ ७५-१३७॥

रत्ननूपुरनादाढ्यं चलद्भूषणमण्डितम्।

पद्मरागस्याङ्गुलीभिर्मण्डितं रक्तपङ्कजम्॥ ७५-१३८॥

सिद्धसभासेवितञ्च सिद्धानामाश्रयाकरम्।

देवदानव गन्धर्वसिद्धचारणसेवितम्॥ ७५-१३९॥

मुनीन्द्रगणपूज्यञ्च धर्मसिन्धुमयं ध्रुवम्।

वाञ्छादिफलदं कान्तं शतारुणसमप्रभम्॥ ७५-१४०॥

सर्वविद्यामयं ध्यायेद् हंसमार्गे निरञ्जने॥ ७५-१४१॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षट्चक्र-- प्रकाशे भैरवभैरवी संवादेऽकालमृत्युहरणसभावर्णनं नाम पञ्चसप्ततितमः पटलः॥ ७५॥

अथ षष्ठसप्ततितमः पटलः

श्रीनन्दभैरवी उवाच

कथयामि महाकाल चात्यन्ताद्भुतमसाधनम्।

कवचं काकिनीदेव्या अष्टोत्तरशताक्षरम्॥ ७६-१॥

यस्य गेहे करे शीर्षे कण्ठे च चित्तमध्यके।

भुजमध्ये च कट्यां वा धारयित्वा महीतले॥ ७६-२॥

किं न सिद्धिं करोत्येव साधको योगिनीपतिः।

योगसिद्धिः क्रियासिद्धिः शिवासिद्धिस्तथा परा॥ ७६-३॥

महासिद्धिः खेचरी च सुषुम्णासिद्धिरेव च।

फलसिद्धिः कालसिद्धिः क्रियासिद्धिः शिवाम्बिका॥ ७६-४॥

जङ्घासिद्धिः परासिद्धिः खड्गसिद्धिः सुसूक्ष्मगा।

अणिमाद्यष्टसिद्धिश्च करे तस्य स्थिरा भवेत्॥ ७६-५॥

कवचं काकिनीदेव्याः सर्वसिद्धिप्रदायकम्।

अकाले वा सुकाले वा पठनाद् धर्मसञ्चयम्॥ ७६-६॥

जयी धर्मसञ्चयेन जयो यत्र शिवस्ततः।

यत्र शिवा तत्र शिवः कवचात्मा द्वयं प्रियौ॥ ७६-७॥

कर्तारौ तौ सदा तारौ पार्वतीपरमेश्वरौ।

कार्यकारणस्रष्टारौ उभौ तत्र परात्परौ॥ ७६-८॥

कवचात्मकमूर्त्तौ च स्थातारौ प्रभवात्मकौ।

तस्य नामाक्षरं वक्ष्ये शृण्गुष्व भैरवेश्वर॥ ७६-९॥

भैरवी भीमरूपा च विरूपा रूपविवजीता।

सूक्ष्मातिसूक्ष्मरूपा च स्वप्रकाशा च शाकिनी॥ ७६-१०॥

जपला जञ्चला भीमा चन्द्रदेवी परापरा।

कमलाक्षी देवमाता खड्गकपालधारिणी॥ ७६-११॥

गुर्वी गौरी घनच्छाया ओंकाराद्या चरुप्रिया।

छाया जया जाञ्जना च ओङ्कारात्मा कलावती॥ ७६-१२॥

अङ्कारिणी डाकिनी च टङ्कादेवी रुणप्रिया।

तारिणी स्थूलपुष्टा च दयाधर्मप्रिया नुतिः॥ ७६-१३॥

परमा बुद्धिशक्तिश्च फलदा फाल्गुनी कला।

बसुधारा वासुकी च भद्रकाली भवाभवा॥ ७६-१४॥

मनसा मोहिनी माता यशोदा याज्ञिका यशा।

रूपेश्वरी रणप्राणा लक्ष्मीर्लक्षणशोभिता॥ ७६-१५॥

वसुप्रिया वसुरता बालरक्षा शशिप्रभा।

षडक्षरी शारदा च हरिद्रा हारमालिनी॥ ७६-१६॥

लावण्यनिरता लङ्का क्षयरोगविनाशिनी।

क्षेत्रपाला च क्षेत्री च क्षत्रिया क्षेमदा क्षमा॥ ७६-१७॥

क्षुन्निवृत्तिकरी क्षुब्धा क्षालनाख्या क्षराक्षरा।

अनन्ताख्या उमा दुर्गा ऋषभा ईश्वरप्रिया॥ ७६-१८॥

ऌकारबीजकुटस्था ॡकारदीर्घजीविका।

एरण्डरणचामुण्डा एन्द्री डट्टप्रियान्तरा॥ ७६-१९॥

तुनुतुण्डा ओषधी च उत्तमाधममध्यमा।

औद्वेषिणी औषधस्था अट्टहासात्मसङ्गता॥ ७६-२०॥

अर्थदा अष्टहस्ता च अर्ककोटिमयूखगा।

अर्धनारीश्वरा अर्च्या अर्बुदास्त्रधरा समा॥ ७६-२१॥

अष्टैश्वर्यप्रदा अर्घा अम्भस्था चाप्यरुन्धती।

अर्पणाख्या अर्कमुनी अर्पणा अस्खलस्थिता॥ ७६-२२॥

अर्चनाढ्या अर्चनास्था अराती अरुणाधरा।

अष्टोत्तराख्यममृतं पठित्वा कवचं पठेत्॥ ७६-२३॥

तदा फलसमृद्धिः स्यादायुरारोग्यसाधनम्।

शाकिनीकवचस्यास्य सदाशिव ऋषिः स्मृतः॥ ७६-२४॥

गायत्रीच्छन्द एवापि शाकिनी देहदेवता।

ओं श्रीं क्लीं मे शिरः पातु ब्लू ह्लू मे ललाटकम्॥ ७६-२५॥

चक्षुषी खेचरी पातु कर्णौ मे शिवशाकिनी।

गण्डयुग्मं सदा पातु देवशाकम्भरी रमा॥ ७६-२६॥

स्वाहा पातु युग्मनासां ओष्ठाऽधरं शिरोऽवतु।

द्रीं हीं श्रीं मे दन्तपङ्क्तिं जिह्वाग्रं देहदेवता॥ ७६-२७॥

चिबुकं कमला देवी वाग्दात्री मे कपालकम्।

वदनं कालिका पातु शब्दबीजात्मिका गलम्॥ ७६-२८॥

कण्ठदेवी शाकिनी च पातु मे कण्ठपङ्कजम्।

सुरादेवी सदा पातु हृत्पद्मं कामरूपिणी॥ ७६-२९॥

कलावती कामकामा काममाला विशुद्धकम्।

सदाशिवपथं पातु लक्ष्मीर्मे नाभिपङ्कजम्॥ ७६-३०॥

उल्कामुखी सदा पातु देवमाता षडक्षरम्।

सदा पातु विष्णुपद्मं राकिणी पातु मे दलम्॥ ७६-३१॥

कटिदेशं सदा पातु भेगदा ज्ञानमोक्षदा।

मूलाधारं सदा पातु काकिनी परमेश्वरी॥ ७६-३२॥

एकरूपा सदा पातु लिङ्गाधारं विरूपिणी।

मार्कण्डपूजिता देवी मृकुण्डा मूलवासिनी॥ ७६-३३॥

सदा मे पातु देवेशि अभया चारुदेशकम्।

दर्शनाख्या महादेवी लिङ्गाधारं पदान्तरम्॥ ७६-३४॥

पातु देवी हिरण्याक्षी सर्वाङ्गं सर्वदेवता।

विधात्री सूक्ष्मरूपस्था स्थूलाङ्गी च कृशोदरी॥ ७६-३५॥

सर्वत्र सर्वदा पातु देवी शाकम्भरी मम।

हृत्कालिका सदा पातु सर्वाङ्गं सर्वदेशके॥ ७६-३६॥

इति ते कथितं नाथ कवचं देवदुर्लभम्।

पठित्वा सिद्धिप्राप्नोति राजत्वं लभते नरः॥ ७६-३७॥

अकस्मात् सूर्यतुल्यः स्यात् कामजेता स्वयं भवेत्।

धारणाद् देहवृद्धिः स्यादायुरारोग्यसम्पदम्॥ ७६-३८॥

वायुसिद्धिकरं साक्षादमृतानन्दविग्रहम्।

अग्निस्तम्भं जलस्तम्भं वायुस्तम्भं करोति हि॥ ७६-३९॥

खेचरो योगजेता स्यादाशाक्षयकरो भवेत्।

ततः पठेत् काममन्त्रं तदन्ते ध्यानमाचरेत्॥ ७६-४०॥

ओंश्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे।

नक्षत्राणि रूपमश्विनौ व्यात्तम्। इष्णन्निषाणा--

मुम्म इषाण सर्वलोकम्म इषाण॥ ७६-४१॥

जपित्वा काममन्त्रं हि सर्वकामफलं लभेत्।

ततो ध्यात्वा च कवचं ध्यायेद्यः शाकिनीशिवम्॥ ७६-४२॥

स वेदपारमायाति शाकिनीध्यानयोगतः॥ ७६-४३॥

प्राणाख्यां शुक्लपद्मे निरवधिनिलयां शाकिनीं पीतवस्त्रां

सूक्ष्मां भूषातिरुदोद्धतनुचपलां चञ्चलां सिद्धिलोलाम्।

हस्तैः पद्मैश्चतुभीः सुनयनकमलैर्भासमानां शिवाढ्यां

पद्माभीतिप्रचण्डासिचसहितां शाकमातां भजामि॥ ७६-४४॥

ध्यात्वा योगी श्मशाने गिरिवरकुरे डाकिनीदेशमध्ये।

शून्ये गर्तेवने वा गगनगृहतले शून्यगेहे सुप्रवासे।

ज्ञानात्मा यो वशी वा पठति च सततं शाकिनीदेहयोगं

गङ्गायां स्वीयगर्भे कवचमभयदं सर्वदं याति सिद्धिम्॥ ७६-४५॥

कवचं कारणैर्देवीं पूजयित्वा यथाविधि।

अकस्मात् कायसिद्धिः स्यादष्टैश्वर्यसमन्वितः॥ ७६-४६॥

मोक्षमाप्नोति भावेन सुखं तस्य पदे पदे।

मिरयन्तु बालका यस्याः काकवन्ध्या च या भवेत्॥ ७६-४७॥

धारयित्वा त्विमां विद्यामेतैर्दोषैर्न लिप्यते।

कण्ठे यो धारयेदेतां समरे काण्डधारिणीम्॥ ७६-४८॥

अक्षयत्वमवाप्नोति जीवमात्रः सदाशिवः।

गोरोजनाकुङ्कुमेन कालागुरुहरिद्रया॥ ७६-४९॥

लाक्षारसैर्लेखयित्वा धारयित्वाऽमृतं लभेत्॥ ७६-५०॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षट्चक्रप्रकाशे भैरवभैरवीसंवादे शकिनीकवचं नाम षष्ठसप्ततितमः पटलः॥ ७६॥

अथ सप्तसप्ततितमः पटलः

श्रीनन्दभैरव उवाच

इदानीं वद कौमारि सुन्दरि प्राणवल्लभे।

अशीतितमे पटले वद योगार्थसञ्चयम्॥ ७७-१॥

श्रीनन्दभैरवी उवाच

शृणु भैरवराजेन्द्र सदाशिवादिशाकिनीम्।

द्वयोराह्लादयोगो हि भोगमोक्षफलायते॥ ७७-२॥

आकाशपरमाणूनां विशिष्टामलचक्षुषाम्।

दर्शनं विद्युज्जडितं प्राप्नोति सहसा सुधीः॥ ७७-३॥

सदाशिवकुलस्थानोपरि श्रीशाकिनीपदम्।

द्वयोर्यो हि विशिष्टज्ञो ज्ञानखेचरसिद्धये॥ ७७-४॥

तत्कुलस्थानमावक्ष्ये यथावदवधारय।

षोडशाख्यदलाग्रेषु मध्यमूलेषु सर्वतः॥ ७७-५॥

सदाशिवकुलस्थानं चक्रराजं विचिन्तयेत्।

विचिन्त्य शतधा योगीं किं न सिध्यति भूतले॥ ७७-६॥

भूतानामधिपो भूत्वा स्थिरो भवति भूतले।

भगवन्तं महाकायं परदेवं सदाशिवम्॥ ७७-७॥

चक्रस्थं चक्रबाह्यस्थं बाह्यमभ्यन्तरं परम्।

पश्यत्येव महायोगी कालचक्रं ततः परम्॥ ७७-८॥

अनायासेन गगनग्रन्थिं भित्वा परे लयम्।

चक्रराजप्रसादेन सर्वसञ्चारगो भवेत्॥ ७७-९॥

द्वात्रिंशत्कठिनग्रन्थिं भित्वाकाशे खगोर्ध्वगः।

ततः परशिवानन्दचक्रं शक्त्यात्मकं ततः॥ ७७-१०॥

ततो हि शब्दनिकरं परास्थानं ततः परम्।

सकलानिष्कलास्थानं बोधनीमण्डलं ततः॥ ७७-११॥

तदूर्ध्वञ्चोन्मनीपीठं भित्वा च तदनन्तरम्।

भृगुपूरं ततो भित्वा नादपूरं ततः परम्॥ ७७-१२॥

नादान्तकं ततो भित्वा ब्रह्मविष्णुघटाकरम्।

क्रियाकरं प्राणलयं यज्ञस्थानं शिखापदम्॥ ७७-१३॥

पूर्णगिरिमुड्डयानं भित्वा च स्वपदं ततः।

दुर्गस्थानं ततो भित्वा प्रकाशस्थानमेव च॥ ७७-१४॥

तदूर्ध्वे पिङ्गलास्थानं तदूर्ध्वे तत्पदं ततः।

सुषुम्नामण्डलं भित्वा धौमिरकोणं महालयम्॥ ७७-१५॥

महाबिन्दुं तदूर्ध्वे तु षट्कोणं तु तदूर्ध्वके।

तदूर्ध्वे वासनापूरं बीजपूरं तदूर्ध्वके॥ ७७-१६॥

तदूर्ध्वे विष्णुचक्रं तु कुलालिचक्रवत्स्थितम्।

तं भित्वा कामनगरं सर्वकामफलप्रदम्॥ ७७-१७॥

तदूर्ध्वे शक्रचक्रं तु तदूर्ध्वे भूमिचक्रकम्।

तदूर्ध्वे कोषचक्रं तु तदूर्ध्वे वायुचक्रकम्॥ ७७-१८॥

तदूर्ध्वे वह्निचक्रं तु तदूर्ध्वेऽमृतचक्रकम्।

तदूर्ध्वे जलचक्रं तु दिवाचक्रं तदूर्ध्वके॥ ७७-१९॥

तदूर्ध्वे यामिनीचक्रं तदूर्ध्वे तारचक्रकम्।

तदूर्ध्वे धर्मचक्रं तु कालचक्रं तदूर्ध्वके॥ ७७-२०॥

सर्वकालं सदा व्याप्य जगत्स्थावरजङ्गमम्।

सदा तदूर्ध्वनिकरं सप्तसागरमण्डलम्॥ ७७-२१॥

तदूर्ध्वे भाति सततं श्रीजलान्तकमण्डलम्।

तदूर्ध्वे तु महाचक्रं महापद्मवनाकरम्॥ ७७-२२॥

टङ्कारोपरि संध्यायेत् सहस्रारे सुपङ्कजम्।

तं भित्वा ज्ञानपद्मं तु कर्णीकायां प्रपश्यति॥ ७७-२३॥

प्रेतरूपमहादेवशवाकारं तु निष्क्रियम्।

अस्योरसि प्रेतबीजं सूर्यायुतसमप्रभम्॥ ७७-२४॥

ऊरुमूले च तस्यापि क्रोधबीजं शतारुणम्।

तस्योपरि महाकालीमवश्यं परिपश्यति॥ ७७-२५॥

प्रत्यालीढपदामम्बामम्बुजाक्षीं हसन्मुखीम्।

चतुर्भुजां खड्गमुण्डवराभयकराम्बुजाम्॥ ७७-२६॥

त्रैलोक्यजननीं ब्रह्मरूपिणीं मुकुटोज्ज्वलाम्।

मुण्डमालां संवहन्तीं सर्वास्त्रां सर्वकारणाम्॥ ७७-२७॥

अनन्तकोटिब्रह्माण्डब्रह्मव्यापकरूपिणीम्।

प्रसन्नवदनां घोरां शवकर्णां करालिनीम्॥ ७७-२८॥

योगीन्द्रजननीं नित्यां भवानीं भवमोचिनीम्।

विमलां निर्मलानन्दां ज्ञानानन्दस्वरूपिणीम्॥ ७७-२९॥

धर्मार्थकाममोक्षस्थां मुक्तकेशीं दिगम्बरीम्।

ललितां सुन्दरीं श्यामां महाकालनिषेविताम्॥ ७७-३०॥

महोग्रां चन्द्रघण्टाढ्यनितम्बरत्नमेखलाम्।

सहस्रानन्तसूर्योग्रतेजोरूपां कुलप्रियाम्॥ ७७-३१॥

श्मशानावासिनीं दुर्गां श्मशानालयवासिनीम्।

घोररावां महारौद्रीं कालिकां दक्षिणां पराम्॥ ७७-३२॥

कर्णावतंसतां नीतशवयुग्मभयानकाम्।

घोरदंष्ट्रं करालास्यां पीनोन्नतपयोधराम्॥ ७७-३३॥

शवानां करसङ्घातैः कृतकाञ्चीं प्रियंवदाम्।

सृक्कद्वय गलद्रक्तधाराविस्फुरिताननाम्॥ ७७-३४॥

बालार्क मण्डलाम्भोजनयनत्रयभूषिताम्।

दन्तुरां दक्षिणव्यापिमुक्तालम्बिकुचश्रियम्॥ ७७-३५॥

शवरूपमहादेवहृदयोपरि संस्थिताम्।

शिवाभिर्घोररावाभिश्चतुर्दीक्षु समन्विताम्॥ ७७-३६॥

महाकालव्यापकेन विपरीतरतातुराम्।

सुखप्रसन्नवदनां स्मेरारुणसरोरुहाम्॥ ७७-३७॥

मधुमांसचर्बणाढ्यां वरदां मदनातुराम्।

वेदवेदाङ्गविद्याभिरुदारगुणसम्भवाम्॥ ७७-३८॥

दैत्यदानवदर्पघ्नीं भगमालाकलेवराम्॥ ७७-३९॥

चिन्तयेत् कौलिकां कालीं कुलवृक्षतलस्थिताम्।

श्रीकल्पलतिकां विद्युत्कोटिमण्डितकुण्डलाम्॥ ७७-४०॥

नागयज्ञोपवीताढ्यां चन्द्रार्धकृतशेखराम्।

सर्वालङ्कारयुक्ताञ्च वह्न्यर्कशशिलोचनाम्॥ ७७-४१॥

ललज्जिह्वां कामरूपां कामपीठनिवासिनीम्।

अतिसौन्दर्यवदनां धाराविस्फुरितप्रभाम्॥ ७७-४२॥

कामदां सिद्धगन्धर्वदेवचारणनाटकैः।

स्तूयमानां ब्रह्मविष्णुशिवशक्रमहषीभिः॥ ७७-४३॥

सर्वदा वन्दितां कोटिजलदाभतनुप्रभाम्।

संसारतारिणीं तारां तारब्रह्मस्वरूपिणीम्॥ ७७-४४॥

इन्दुनीलमणिश्रेणिशोभाविद्युत्प्रकाशिनीम्।

श्रीवासमधुरानन्दप्रियप्रेमदिगम्बरीम्॥ ७७-४५॥

लज्जातीतां कुलातीतां ज्ञानातीतां निरञ्जनाम्।

क्रोधपुञ्ज समुद्भूतद्वीपिचर्मकटिप्रभाम्॥ ७७-४६॥

नीला--घना--बला--माया--मात्रा--मुद्रा--कलादिभिः।

सर्वदा पूजितां ध्यायेत् सहस्त्रारवराम्बुजे॥ ७७-४७॥

एवं ध्यात्वा महाकालीं श्यामां कामदुघां शिवाम्।

आकाशगामिनीं सिद्धिमवश्यं लभते वशी॥ ७७-४८॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षट्चक्रप्रकाशे सदाशिवकुलचक्रक्रमनिरूपणे भैरवीभैरवसंवादे योगार्थसञ्चयनं नाम सप्तसप्ततितमः पटलः॥ ७७॥

अथाष्टसप्ततितमः पटलः

श्रीनन्दभैरवी उवाच

शृणु भैरव वक्ष्यामि सङ्केतार्थविनिर्णयम्।

कुलचक्रक्रमं सिद्धं शक्तिसदाशिवस्य च॥ ७८-१॥

अस्य विज्ञानमात्रेण कण्ठपद्मे स्थिरो भवेत्।

पद्माग्रे च सारचक्रं योगिनामतिसुप्रियम्॥ ७८-२॥

ध्यानादेव महाबाहो सर्वचक्रप्रदर्शकम्।

ऊर्ध्वरेता कामजेता ज्ञानी मौनी दिगम्बरः॥ ७८-३॥

खेचरो धारकः श्रीमान् कौलिकः साधको भवेत्।

तच्चक्रध्यानमेवं तु द्विद्वारमग्रतो मुखे॥ ७८-४॥

तदन्ते चापि द्विद्वारं तिलार्धं भिन्नरेखया।

रेखाद्वये नैकद्वारमेवं द्वारद्वयं पुनः॥ ७८-५॥

अग्रादुत्तरपर्यन्तं ध्यायेद् वारद्वयं सुधीः।

द्वयोर्मध्ये चतुर्वेदरेखामण्डलमेव च॥ ७८-६॥

तदन्तरे च षट्कोणं द्विषट्कोणं तदन्तरे।

तन्मध्येऽष्टदलं पद्मं तन्मध्ये चन्द्रमण्डलम्॥ ७८-७॥

तन्मध्ये शून्यरूपं तु निराकारं निरञ्जनम्।

तत्त्वज्ञानाश्रितानन्दविद्यात्मानं ममास्पदम्॥ ७८-८॥

स्थूलसूक्ष्ममयं शुद्धं वाच्यवाचकभावनम्।

अभेदं तु ममात्मानं कोटिसूर्यसमप्रभम्॥ ७८-९॥

कोटिविद्युत्प्रभाकारं चन्द्रकोटिसुशीतलम्।

सर्वव्यापक मीशानमभेदज्ञानकारणम्॥ ७८-१०॥

विधातारं परब्रह्म सर्वज्ञं सर्वदर्शीनम्।

सर्वशास्त्रप्रवक्तारं ज्ञानज्ञेयं चराचरम्॥ ७८-११॥

अष्टहस्तं विशालाक्षं शूलिनं मुण्डमालिनम्।

जरातीतं निर्वीकल्पं तरुणं तारकं हरम्॥ ७८-१२॥

हरिं ब्रह्माणमीशानं त्रिलोकानां प्रभामयम्।

अभेद्यभेदकं सिद्धं सिद्धासनकरं सुरम्॥ ७८-१३॥

गन्धर्वनगरं देशं विशेषं सर्वतोमुखम्।

अकालतारकं स्वाहास्वधाशक्तिसमन्वितम्॥ ७८-१४॥

कोटिकालानलाकारं रौद्रं रुद्रात्मकं भवम्।

कन्याश्रीसुन्दरीकाटिमण्डलान्तःप्रकाशकम्॥ ७८-१५॥

तेजोबिम्बं भासमानं सर्वव्याधिनिकृन्तनम्।

हृषीकेशानन्दसिद्धं त्रिविक्रमफलोदयम्॥ ७८-१६॥

नृसिंहक्रोधनिलयं सर्वदैत्यविनाशनम्।

मीनावतारवेदार्थसमुद्धरणकारणम्॥ ७८-१७॥

कूर्मपृष्ठाधारचक्रं वराहदन्तभूषणम्।

नरसिंहाकारभक्तरक्षकं परमेश्वरम्॥ ७८-१८॥

महेन्द्ररक्षकं दैत्यदर्पघ्नं वामनं तनुम्।

दैत्यक्षत्रियदर्पघ्नं परशुरामं द्विजाधिपम्॥ ७८-१९॥

भृगुवंशपतिं सत्यज्ञानावतारमुत्तमम्।

श्रीरामं पावनं रक्षोहन्तारं तापसं गुरुम्॥ ७८-२०॥

त्रैलोक्याधारमानन्दरूपं हलधरं परम्।

अनन्तं योगिनामाद्यं सहस्राङ्कफणान्वितम्॥ ७८-२१॥

बुद्धं निराकारधर्मं सर्वशास्त्रार्थवर्धकम्।

नित्यश्रुत्युदितामोदधर्माधर्मविवजीतम्॥ ७८-२२॥

स्वयम्भुवं स्वप्रकाशं परमात्मानं मङ्गलम्।

एकाकारं धर्मचक्रवेदिनं स्वच्छसङ्गरम्॥ ७८-२३॥

दुष्टनिग्रहकर्तारं महावीरं धनञ्जयम्।

श्रीकृष्णं सर्वसेवाभिः पूजितं तन्मयं शुभम्॥ ७८-२४॥

विमदं रक्षकं ध्यानज्ञानमोक्षप्रकाशकम्।

राजराजेश्वरं वास्यं सर्वलोकनिषेवितम्॥ ७८-२५॥

सर्वदेहस्थितं धर्मं धर्मात्मानं विनोदिनम्।

व्यापकं व्यापकाधारं निर्वीकल्पं सुधामयम्॥ ७८-२६॥

विशिष्टं पञ्चपाषाणमहापीठनिवासिनम्।

अनन्तानन्तमहिमं कपालशूलधारिणम्॥ ७८-२७॥

त्रिरेखामण्डलस्थानं चतुर्वेदक्रमाकरम्।

एकवक्त्रं द्विपादं च द्विमुखञ्च चतुष्पदम्॥ ७८-२८॥

त्रिमुखं षड्भुजं नाथं चतुर्वक्त्रं विधिं परम्।

अष्टाम्भोजभुजाम्भोजं पञ्चवक्त्रं त्रिलोचनम्॥ ७८-२९॥

शिवं दशभुजं सौख्यं सुन्दरं श्रीषडाननम्।

नित्यं द्वादशहस्तञ्च सर्वास्त्रधारिणं ध्रुवम्॥ ७८-३०॥

सप्तमुखं महाकायं चतुर्दशभुजं प्रियम्।

अष्टमुखं शिवाह्लादं भुजषोडशमण्डितम्॥ ७८-३१॥

नवपद्ममुखाम्भोजमष्टादशभुजं विभुम्।

उन्मत्तभैरवं कोटिमहाविद्याद्यवल्लभम्॥ ७८-३२॥

अमरेशं महाकायमष्टादशभुजापतिम्।

कालराशिं कृष्णवर्णं चित्रसर्पसुमालिनम्॥ ७८-३३॥

शतवक्त्रं कोटिहस्तं सहस्रवदनाम्बुजम्।

शतकोटिमुखं नित्यानन्दसन्तानमन्दिरम्॥ ७८-३४॥

अनन्तचरणाम्भोजमनन्तजनसेवितम्।

अनन्तहस्तकमलमनन्तालङ्कृतोज्ज्वलम्॥ ७८-३५॥

अन्तःप्रकाशनिकरमनन्तगुणसम्भवम्।

अनन्तसृष्टिस्रष्टारमनन्तस्थितिकारणम्॥ ७८-३६॥

अनन्तकमलावन्ये चानन्तसंहृतिप्रियम्।

अनन्तबीजनिकरमनन्तशास्त्रनिश्चयम्॥ ७८-३७॥

अनन्ततापसन्तृप्तमनन्तजलमध्यगम्।

अनन्तपरमाधारमनन्तवह्निधारिणम्॥ ७८-३८॥

अनन्ताकाशनिकरमनन्तपृथिवीपतिम्।

अनन्तज्वालामालाढ्यमनन्तबुद्धिकारणम्॥ ७८-३९॥

अनन्तस्थानपूजाढ्यमनन्तनामसिद्धिदम्।

अनन्तगतिविज्ञानमनन्तराज्यदं सुखम्॥ ७८-४०॥

अनन्तधर्मशास्त्रार्थकिरणं काव्यपूजितम्।

अनन्तदेवतास्थानमनन्तकर्मसिद्धिदम्॥ ७८-४१॥

अनन्तमालागुटिकाजापिनं नित्यसिद्धिदम्।

अनन्तचित्तसञ्चारमनन्तानन्तविक्रमम्॥ ७८-४२॥

अनन्तजीवसंज्ञानमनन्तभावनाप्रियम्।

अनन्तनिर्मलानन्दमनन्तप्राणिवल्लभम्॥ ७८-४३॥

अनन्तगाथाकर्तारमनन्तसिन्धुसंस्थितम्।

सर्वतः पाणिपादान्तं सर्वतोऽक्षिशिरोमुखम्॥ ७८-४४॥

सर्वमावृत्य तिष्ठन्तमपराजितमीश्वरम्।

ध्यात्वाऽऽनन्दमयं देवं पीठमध्ये च साधकम्॥ ७८-४५॥

शाकिनीदेवशक्तिश्रीप्रेमाह्लादपरायणम्।

देवदेवं विश्वमयं शाक्यरूपं सनातनम्॥ ७८-४६॥

मम रूपं यदा नाम्ना स्तौति कामविनोदिनम्।

ध्यात्वा चक्रपुरे योगी निरालम्बो दिगम्बरः॥ ७८-४७॥

गगने चक्रसारं तु कुलनाम्ना प्रतिष्ठितम्।

ध्यात्वा भवति योगीन्द्रः खेचरो गतभीः प्रभुः॥ ७८-४८॥

अनायासेन सिद्धिः स्याद् ज्ञानी च ज्ञानवान् भवेत्।

ऊर्ध्वमुखं कण्ठपद्मं तदग्रे चक्रमण्डलम्॥ ७८-४९॥

अधोमुखं नेत्रपद्मं द्विदलं चातिसुन्दरम्।

तदग्रे च महाचक्रं तदाकारं महाप्रभम्॥ ७८-५०॥

द्विचक्रसङ्गमं यत्र दृश्यते रात्रियोगतः।

तदा भवति देवेश चतुर्द्वारं मनोहरम्॥ ७८-५१॥

चक्रं निरञ्जनं ज्ञानज्ञेयं मन्त्रमयं शिव।

यो जानाति महादेव स भवेत् कल्पपादपः॥ ७८-५२॥

इति कण्ठस्य माहात्म्यं संक्षेपात् कथितं मया।

जानाति योगी ध्यानेन ज्ञानयुक्तेन चेतसा॥ ७८-५३॥

पश्यत्येव महात्मानं ज्ञानज्ञेयं सुधामयम्।

कोटिवर्षशतेनापि कथितुं नैव शक्यते॥ ७८-५४॥

तव भक्त्या महादेव तवायुःक्षेत्ररक्षणात्।

इदानीं कथितं कण्ठपद्मसञ्चारमङ्गलम्॥ ७८-५५॥

अप्रकाश्यं महागुह्यं शब्दब्रह्मस्वरूपकम्।

निर्जने दोषरहिते व्याधिबाधाविवर्जिते॥ ७८-५६॥

सुभिक्षानिन्दारहिते स्थित्वा तत्र दृढव्रतः।

भावयेत् परया भक्त्या तव रूपं विचिन्तयन्॥ ७८-५७॥

अचिराद्योगसिद्धः स्यान्निदानज्ञानसिद्धिभाक्।

श्रीमातृका महादेवी लीलावती शुभा सती॥ ७८-५८॥

अम्बा गुर्वी गुरुशक्तिः पातु मामतिकातरम्।

तामम्बामम्बुजाक्षीं च प्रणम्य च पुनः पुनः॥ ७८-५९॥

इदानीं कथये नाथ भ्रूपद्मज्ञाननिर्णयम्॥ ७८-६०॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षट्चक्र--प्रकाशे भैरवीभैरवसंवादे कण्ठाम्भोजभेदप्रकाशो नाम। अष्टसप्ततितमः पटलः॥ ७८॥

अथैकोनाशीतितमः पटलः

श्रीनन्दभैरव उवाच

कथयस्व वरारोहे कामनासिद्धिमङ्गलम्।

अप्रकाश्यं महाज्ञानं यदि स्नेहोऽस्ति मां प्रति॥ ७९-१॥

अनादिशास्त्रगोप्यं तु सर्वतन्त्रेषु गोपितम्।

सुखस्नेहकृपादृष्ट्या सर्वतत्त्वसुमङ्गलम्॥ ७९-२॥

ज्ञानगम्यं शब्दजालं कोमलान्तःप्रकाशकम्।

आयुरारोग्यजननं धर्मार्थकाममोक्षदम्॥ ७९-३॥

भ्रूपद्मद्विदलं सिद्धमुनिमण्डलसङ्कुलम्।

ज्ञानिनामात्मसिद्धान्तरूपज्ञानसमागमम्॥ ७९-४॥

यामलस्य महारुद्रसेवितस्य वरानने।

वद विस्तार्य यत्नेन जीवन्मुक्तिपदं यतः॥ ७९-५॥

लभ्यते तत्क्षणादेव कृपया करुणामयि।

कालकूटप्रभावेण चात्मनो विस्मृतिर्गता॥ ७९-६॥

तां विस्मृतिं समाकृत्य स्मृतिज्ञानं विधेहि मे।

परमानन्दनिर्वाहनिर्वाणप्रथमाङ्कुरम्॥ ७९-७॥

श्री आनन्दभैरवी उवाच

वक्ष्येऽहं द्विदलं विभाण्डकमलं कालानलव्याकुलं।

शोभामोहनरञ्जनं सुचपलामालाकपालोज्ज्वलम्।

दीप्तिश्रेणि सुकणीकान्तरगतः श्रीशाकिनीवल्लभः।

प्राणिप्राणनिदानगः परशिवः सम्पातु सञ्चारगः॥ ७९-८॥

संहारोज्ज्वलकान्तिकान्तनिकरं संहारकूपोज्ज्वलं।

तेजोरूपमहाशिखासुखपदं पीयूषतैलप्रियम्।

ताराधीशदिनेशतैजसमयं मायापरादोद्यमं।

विद्यावल्लभभावसारविनुतं द्वे पत्रमित्रे भजे॥ ७९-९॥

आकाशाग्रे प्रभाग्रोग्रगमनधरणीधारसारे प्रचारे।

श्रीनाथेशः क्षितीशः प्रचुरविधुमणिश्रेणिमालाग्रकण्ठः।

श्रीकण्ठो नीलकण्ठः प्रभवति भुवनानन्दकर्तार्थकर्ता।

विद्या श्रीहाकिनीशः स्फटिकमणिगृहे रक्तशक्त्या च हंसः॥ ७९-१०॥

पुरो विभाति कणीकासुमध्यचक्रमण्डले।

विशिष्टशक्तिहाकिनी तथापि दुर्गतारिणी।

यदीह भाव्यते नरैः सुमन्त्रतन्त्रगायनै--।

स्तदा परत्वमाप्नुयाद्दवि स्थिरो भवेद्दते॥ ७९-११॥

द्विदलकमल मध्ये हाकिनी देवमाता।

विभवनवकुमारी योगिनी योगसिद्धा।

यदि चरति विलिप्ता चोर्ध्वमार्गे निषण्णा।

त्रिभुवनकरुणाभिः साधकस्य प्रसन्ना॥ ७९-१२॥

जपरटिपरमन्त्रप्राणजापी मनुष्यो।

भवति विमलचेता हाकिनीहोमदेव्याः।

मनुमपि हृदि नित्यं संविभाव्य प्रतिष्ठः।

परपुरकुलगामी ध्यानविज्ञानपुण्यः॥ ७९-१३॥

विषयमधुरतृष्णावजीतो निजीतारिः।

कुलयुगकमलान्तः सुप्रकाशस्वरूपः।

विधिकृतकुलदोषं भाति निर्जीत्य दोषं।

रतिपतिसमकान्तः साधको निर्णीतान्तः॥ ७९-१४॥

जपति मनुधनार्थं भ्रान्तिहोमोत्सवार्थं।

मनुजकुलवरेण्योऽन्यानि काल्या विहाय।

अयुतशतसुमन्त्रान्नाशपुञ्जाक्षराणि।

प्रसवति रिपुहन्ता साधको हाकिनीशः॥ ७९-१५॥

परशिवनवभावप्रावणान्तःप्रवेशी।

द्विदलकमलशोभा कोटिसंभाषयन्ती।

निजकुलपरिदेवैर्भाव्यते भावमानै--।

र्भवति चपलमाद्या हाकिनी सुप्रसन्ना॥ ७९-१६॥

आज्ञानाम सुपङ्कजं विधुशताह्लादप्रभापाटलं।

विद्युद्रश्मिभिरुन्नतं धवलपीठानन्दचिद्रूपदम्।

हस्ताभ्यां कनकप्रभादीप्ताभ्यां प्रकाशोज्ज्वलं।

हाकिन्याकलाभयाप्रचलितं ध्यायेत् परानन्दनम्॥ ७९-१७॥

ध्यानज्ञानादिधाम प्रचयति जयति क्षोभितारिप्रसारी।

हस्ताभ्यां हेमभाभ्यां तरुणरविशशीशोभिताभ्यां विधाय।

सूक्ष्मात्सूक्ष्मातिसूक्ष्मं विरचयति सुधां हाकिनी प्राप्य नाथं।

कोटीन्दुक्षेमकान्तिप्रसभधनरसा नन्दितामभ्रपीठे॥ ७९-१८॥

ध्यायेद् देवीं पराढ्यां त्रिभुवनजननीं षण्मुखीं वेदहस्तां।

विद्यामुद्राविरुण्डं जपवटिडमरुं धारयन्तीं ज्वलन्तीम्।

चेतः शान्तिप्रदात्रीं विधुमणिमुकुरां भीषमानां समानां।

षट्कोणे बिन्दुमूले युगदलकमले द्वारयुग्मद्वयाढ्ये॥ ७९-१९॥

एतच्चक्रस्य मध्ये सकलसुरगणविद्युताकारदीप्ता।

नित्यं संभाति पार्श्वावधिकमलमहामण्डलाकारभावे।

दोषाशेषापनाशे सकलबुधजनैः शोभिता पद्ममाला।

प्राणाख्या वह्निजिह्वा सुखमयाविमला योगिनी योगमुख्या॥ ७९-२०॥

मनोयोगचिन्हं प्रसिद्धं सुसूक्ष्मं।

शुभे पद्ममध्ये शिखाकारचित्तम्।

महायोनिचक्रे प्रिये कर्णीकायां।

शिवस्थानमुग्रं वशी वीक्ष्य शुक्लम्॥ ७९-२१॥

महाविद्युताकारणं भासमानं परं ब्रह्मसूत्रप्रबोधं विनोदम्।

महाकौलमार्गं स्थिरप्राणबुद्धिः क्रमेणैव तच्चिन्तयेत् साधकेन्द्रः॥ ७९-२२॥

महावेदसूत्रादिबीजप्रकाशं।

शतानन्दचन्द्रप्रभं भाव्यमानम्।

विभाव्याशु नाथप्रियं पञ्चचूडं।

महामोक्षगामी जितक्रोधकामः॥ ७९-२३॥

य एतत् स्वचित्तान्वितः साधकेन्द्रो।

विभुध्यानयुक्तः प्रियात्मा महात्मा।

पुरे शीघ्रगामी पराणां नराणां।

मुनीन्द्रः क्षितीन्द्रो महावेदवक्ता॥ ७९-२४॥

द्विधा बोधविज्ञानशून्यो वरेण्यो।

भवेत् सर्वदर्शी स सर्वज्ञराजः।

सदा पूर्णसिद्धिप्रसिद्धोऽरिहन्ता।

महासृष्टिसंहारपालादिकर्ता॥ ७९-२५॥

क्षणादाविभाव्य प्रभुर्दीर्घजीवी।

सुधीः सर्वशास्त्रार्थवेत्ता सुमन्त्री।

महाज्ञानयुक्तो भवेदेकचित्तो।

बली बाणतुल्यो विधातुः प्रशस्यः॥ ७९-२६॥

स्वचक्रमण्डलान्तरे त्रिकोणभूमिबिम्बके।

तदन्तरे च षोडशच्छदा विभान्ति वामके।

सुपत्रके मनोहरे प्रदीपभाशिखाकृति--

र्महोज्ज्वला स्फु(र)त्प्रभा चतुर्गृहं ततो बहिः॥ ७९-२७॥

प्रणवविरचनाभिः शोभितं चक्रराजं।

तदुपरि विलसच्छ्रीचन्द्रखण्डप्रकाशः।

तदुपरि विगलद् बिन्दुकान्तो मकार--।

स्तदुपरि शितनादो भाति पीयूषपुञ्जः॥ ७९-२८॥

ध्यायेद्यः क्रमतः सुधीः प्रियपदालीने इह क्षेत्रके।

बध्वा चेतसि भावपुञ्जनिकरां श्रीनाथसेवोदिताम्।

योगीन्द्रोदितयोगशासननिरालम्बां परां सादरा--।

मभ्यासान्नियतं वशी परनर उग्रां कलां पश्यति॥ ७९-२९॥

तन्मध्यान्तः प्रकाशामतिविमलकलामादिवात्मप्रकाशा--।

माद्यक्षे स्वप्रतिष्ठामतिसुखविभवामाश्रये स्थानसिद्धाम्।

हाकिन्याङ्गप्रभामण्डल कमलमहारूपलावण्यधैर्यं।

सौभाग्यं ध्याननिष्ठे विलसति मधुरं ध्यानमारोपयामि॥ ७९-३०॥

ज्वलत्कोटिदीपाकृतिस्नेहजालं

वहन्तं रटन्तं नवीनार्ककान्तम्।

स्फुरज्ज्योतिराकाशपृथ्वीन्दुमध्यं

भवेद् वै महेन्द्रो विलोक्याशु योगी॥ ७९-३१॥

इहानन्दबाह्ये परेशो हि साक्षान् महापूर्णभूतिप्रभावोऽव्ययो हि।

महावह्निचन्द्रार्कसन्मण्डलो वा महाविष्णुचक्रोपरि श्रीहरिः स्यात्॥ ७९-३२॥

महाविष्णुयोगी महायोगयोगीन्द्रसेव्यं महेन्द्रः।

विलोक्याशुभन्नार्थतन्त्रप्रतापं तदा तद्विशत्यत्र पञ्चत्वकाले॥ ७९-३३॥

लयस्थानमाकाशवायोरतीव प्रतापप्रियस्याञ्जनस्याशु पश्येत्।

महानादरूपं तदूर्ध्वे शिवार्धं विशालाक्षरूपं शिवाकारमानम्॥ ७९-३४॥

सुशान्तं महान्तं धराकान्तलान्तं वरं दातुमुत्फुल्लहस्तारविन्दम्।

सभीतिप्रदं शुद्धबुद्धप्रबोधं दयादानकर्तारमापश्यतीह॥ ७९-३५॥

गुरूणां पदाम्भोरुहाह्लादलीनो जनः पश्यति प्राणनाथं परेशम्।

दिनेशं रमेशं धनेशं नरेशं स योगी निरोगी महाशुद्धवेशम्॥ ७९-३६॥

स वाचां सुसिद्धिं समाप्नोति शुद्धिं।

वरं कामलक्ष्मीश्वरत्वं महत्त्वम्।

न भूयात् त्रिलोके पुनर्जन्मभावः।

सदा गायति श्रीपतिर्नारदो वा॥ ७९-३७॥

श्रीनन्दभैरव उवाच

न श्रुतं देवि कल्याणि हाकिनीकूटमन्त्रकम्।

तथा पूजाविधिं ध्यानं जपं वायुविनिर्गमम्॥ ७९-३८॥

इत्यादियोगं स्तोत्राणि सहस्रनाममङ्गलम्।

तथा श्रीवरनाथस्य कृपया वद सुन्दरि॥ ७९-३९॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे भैरवभैरवीसंवादे शाकिनीमन्त्रोद्देशो नाम एकोनाशीतितमः पटलः॥ ७९॥

## अथाशीतितमः पटलः

श्रीनन्दभैरवी उवाच

श्रृणुष्व परमानन्दहेतुपानप्रियङ्कर

अत्यद्भुतं परस्यापि हाकिन्या मन्त्रमेव च॥ ८०-१॥

त्रयाशीतितमे नाथ पठनाह्लादसागरे।

रहस्यं परमानन्दवर्धनं कामदं मनुम्॥ ८०-२॥

अस्यापि भावकर्ता यः स योगी न तु मानुषः।

अतिविद्या चातिधनं महाराज्यं सदाशिव॥ ८०-३॥

अस्याराधनमात्रेण स्वयमेव समाप्नुयात्।

इति हेतोः सङ्कथये मन्त्रोद्धारं क्रमेण तु॥ ८०-४॥

अत्यद्भुतं ज्ञाननिदानभावदं।

महामनुं मानसजापमाश्रयम्।

अनल्पविज्ञाननिधिप्रदं शुभं।

पुण्यं पवित्रं शृणु भैरवेन्द्र॥ ८०-५॥

तारं ब्रह्म मनुं श्मशानसहितं शम्भुं विभुं हान्तकं।

भान्तं रान्तजलं हुताशनमयं वायुञ्च वामाक्षिणम्।

वायोरक्षरसंयुतं त्रिपुरया श्रीकामकूटान्वितं।

चान्ते हाकिनि देवि वह्नियुवती मन्त्रोऽयमानन्ददः॥ ८०-६॥

भाषामारकलारमावधुयुता देवी शिवप्रेयसी।

विद्ये हाकिनी तारमन्त्रपुटितं मायाग्निजायान्वितम्।

योगेन्द्रावनतं महेन्द्रजपितं श्वासाभिरुच्छ्वासितं।

ये ध्यायन्ति महीतले प्रियमयी भार्या पतिप्रेमगा॥ ८०-७॥

आकाशं वह्निकूटं वधुशिवदयिताशक्तिकामत्रिकूटं।

हाकिन्यै परनाथभासुरगुरोः शक्त्यै नमोऽग्निप्रिया।

हाकिन्याः प्रेममन्त्रं जपति यदि सुधी राजरोजेश्वरः

स्यादानन्दाब्धौ निमग्नः प्रचयति किरणं भावराशिप्रकाशम्॥ ८०-८॥

द्वे लक्षे मन्त्रसिद्धिर्भवति निजकुले कामधेनुस्वरूपः।

क्षेत्रज्ञः क्षेत्रविज्ञो वशयति जगतां भावसारं नरेन्द्रः।

विद्याबीजं रमाढ्यं सुरधुनिसहितं कामकूटं तदन्ते।

शब्दाख्यं ब्रह्मतत्त्वं तरुणि भुवनेशि प्रेत्य हाकिनीं श्रीम्॥ ८०-९॥

स्वाहान्तो मन्त्रराजः सकलसुरपदानन्दितो भावपूज्यः।

महामन्त्रं प्रवक्ष्यामि येन सिद्धो भवेन्नरः॥ ८०-१०॥

शिवमन्त्रं हाकिनीश परनाथस्य भूपतेः।

यस्याराधनमात्रेण मृत्युजेता न संशयः॥ ८०-११॥

प्रेतबीजं समुद्धृत्य विषबीजं ततः परम्।

वह्निबीजं कालकूटबीजं तु तदनन्तरम्॥ ८०-१२॥

अत्यन्तं दुःखजालं मे हन युग्मं विदारय।

युगलं कामकूटं तु संहारबीजमेव च॥ ८०-१३॥

शिवबीजं तदन्ते तु हंसः सोऽहं ततो वदेत्।

स्वाहान्तमन्त्रो जप्तो हि लक्षमात्रं महेश्वर॥ ८०-१४॥

कुम्भकं रेचकं कृत्वा धारयेत् पवनं शुभम्।

एवं कृत्वा महादेव शिवानन्दं प्रकृत्य च॥ ८०-१५॥

महाप्रलयकालेऽपि सुस्थिरो भवति ध्रुवम्।

तस्यापि हस्तकमले सदा तिष्ठन्ति सिद्धयः॥ ८०-१६॥

जपित्वा युगलक्षं तु यत्नेन परमेश्वर।

वाक्सिद्धिं देवलोके तु गमनं निजदेहतः॥ ८०-१७॥

तस्य दर्शनमात्रेण लोकाः स्युही निरोगिणः।

अष्टादशलक्षजपाद् ब्रह्माण्डभेदको भवेत्॥ ८०-१८॥

सहस्रारे मनो याति तस्यैव नात्र संशयः।

तदा संसारसंहारपालनसृजनास्पदः॥ ८०-१९॥

तस्य संसारं सकलं कोटिब्रह्माण्डमेव च।

अनयोर्मन्त्रजापेन सिद्धार्थवद् भवेत् कविः॥ ८०-२०॥

सर्वशास्त्रार्थवेदार्थसाङ्ख्यार्थादिषु पारगः।

तस्य साक्षान्मूतीमन्तो विभान्ति पुरतो ध्रुवम्॥ ८०-२१॥

वारमेकं कदाचिद्वा चायाति मुखपङ्कजे।

चतुवीधा मुक्तिः कामसिद्धयः सर्वदा हृदि॥ ८०-२२॥

विभान्ति हि किमन्यद्वा कथितुं शक्यते मया।

वलान्ते रामपुत्रः स्यात् सश्रीकः कृष्ण एव सः॥ ८०-२३॥

कृष्णान्ते रामनाम स्यात् भूपतेः पालको भवेत्।

श्रीरुद्रस्य परदेवदेवस्य सुप्रियो भवेत्॥ ८०-२४॥

नवान्ते द्वीप--राशीनां चतुर्यामलपारगः।

चतुःषष्टितन्त्रवेत्ता चेत् कामनगरे स्थितः॥ ८०-२५॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षट्चक्रप्रकाशे।

भैरवीभैरवसंवादे भेदोपक्रमो नाम अशीतितमः पटलः॥ ८०॥

अथैकाशीतितमः पटलः

श्रीनन्दभैरवी उवाच

अथ वक्ष्यामि लोकेश मन्त्रोद्धारान्तकालके।

हाकिन्याः परनाथस्य साधनं पूजनं शृणु॥ ८१-१॥

त्रयाशीतितमान्ते तु चतुरशीतितमे मम।

परनाथस्य हाकिन्या यजनं चाद्भुतं महत्॥ ८१-२॥

अप्रकाश्यं महागोप्यं सारात्सारं परात्परम्।

भ्रूपद्मभेदनादीनां क्रमं शृणु महेश्वर॥ ८१-३॥

यो हि जानाति भ्रूमध्ये भ्रूपद्मभेदनक्रमम्।

स ममाग्रे समायाति जीवन्मुक्तो भवार्णवे॥ ८१-४॥

तत्क्रमोपक्रमज्ञानं महापातकनाशनम्।

अकस्मात् सिद्धिदं नित्यं सदानन्दपदप्रदम्॥ ८१-५॥

भार्या भवति कामेशी लक्ष्मीनाथो भवेद् ध्रुवम्।

आनन्दभैरव उवाच

अथ राज्यक्रियासारं केन प्राप्नोति भूतले॥ ८१-६॥

राजत्वं शिष्यवर्गाणां भेदनं केन वा भवेत्।

साक्षात् सिद्धिक्रमज्ञानं भ्रूपद्मभेदनक्रमम्॥ ८१-७॥

कृपया वद मे शीघ्रं यदि श्रद्धा दया मयि।

आनन्दभैरवी उवाच

विस्तार्य कथयाम्यत्र सारसङ्केतमङ्गलम्॥ ८१-८॥

श्रीगुरोर्वदनाम्भोजनिजमन्त्रप्रकाशितम्।

श्रुत्वा योगी योगयोग्यो भवत्येव न संशयः॥ ८१-९॥

अधोमुखे भाति महारविप्रभा।

ग्रन्थिप्रचण्डोपरिवारकाभिः।

शनैः शनैर्भेदनयोगकाले।

प्रयत्नमाकृत्य भवेद्धि योगी॥ ८१-१०॥

बद्धमेकासनं कृत्वा चित्तमारोप्य यत्नतः।

भ्रूपद्मनिकरे शोभामण्डलानन्दपूरिते॥ ८१-११॥

सत्त्वग्रन्थिपदं भित्वा स्थिरचेता भवेद् ध्रुवम्।

अकालमृत्युः कुत एव तस्य।

प्रभाकरज्ञाननिकेतशोभौ।

आकाशगामी भुवनाधिकारी।

स्थिराशयः प्रेमकलापगामी॥ ८१-१२॥

सप्तसु ग्रन्थिमुखेषु देवताः सप्तधा मुदा॥ ८१-१३॥

विभान्ति योगिरक्षायै योगमायावशाय च।

स्थिरमाया योगमाया कालमाया च लाकिनी॥ ८१-१४॥

देवमाया धर्ममाया विमाया सप्त देवताः।

ग्रन्थिमध्ये रत्नवर्णा निर्मलानन्ददायिकाः॥ ८१-१५॥

सत्त्वग्रन्थिर्महादेव आकाशाग्रति भाति हि।

आदौ तस्यापि भेदञ्च एकैकक्रमयोगतः॥ ८१-१६॥

सूक्ष्मवायुक्रमेणैव भित्वा च योगिमण्डले।

शीघ्रं याति मनो यस्य स वीरो न तु मानुषः॥ ८१-१७॥

ग्रन्थिनामानि वक्ष्यामि सावधानोऽवधारय।

खगिनी द्राविणी धूम्रा कठिना कर्कटी तथा॥ ८१-१८॥

श्यामला कपिला सप्त ग्रन्थिरूपप्रतिष्ठिता।

खगिनीमन्त्रमुच्चार्य सूक्ष्मश्वासक्रमेण तु॥ ८१-१९॥

ऊर्ध्वमार्गे विहायापि ह्यष्टोत्तरशतेन च।

प्रणवं भुवनेशानी खगिनीबीजमेव च॥ ८१-२०॥

भेदा भेदा भवान्ते तु पुनः खं बीजमेव च।

अस्त्रान्तं मन्त्रमुच्चार्य भेदने च दृढो भवेत्॥ ८१-२१॥

द्राविणीमन्त्रमुच्चार्य सूक्ष्ममार्गेण भैरव।

जपेदष्टोत्तरेणापि शतमन्त्रेण सर्वदा॥ ८१-२२॥

प्रणवं परमाबीजं ब्रह्मबीजं ततो बहिः।

वाग्भवं द्राविणीबीजं ग्रन्थिद्रावययुग्मकम्॥ ८१-२३॥

स्वाहास्त्र्यन्तं महामन्त्रं ध्यात्वा ध्यात्वा पुनः पुनः।

जप्त्वा भ्रूदलसूक्ष्मदृष्ट्या विलोक्य भ्रूदलान्तरम्॥ ८१-२४॥

अकस्माद् भेदमाप्नोति किं बन्धक्लेशतः प्रभो।

धूम्रामन्त्रं प्रवक्ष्यामि येन सिद्धो भवेन्नरः॥ ८१-२५॥

प्रणवं कमलाबीजं देवीबीजं ततः परम्।

धूम्राबीजं तदन्ते तु मृत्युनाशिनि शब्दतः॥ ८१-२६॥

ग्रन्थिं हनयुगान्ते तु चास्त्राय फडिति स्थितिः।

इति मन्त्रं सहस्रं वा शतं वाष्टोत्तरं जपेत्॥ ८१-२७॥

चक्रासनमुपाकृत्य भेकासनमथापि वा।

भ्रुवोरन्तर्गतं पद्मं द्विदलं चारुमण्डलम्॥ ८१-२८॥

तदन्तरे कर्णीकायां महापीठं विचिन्तयेत्।

बिन्दुषट्कोणमालिख्य त्रिकोणस्थान्तरः सुधीः॥ ८१-२९॥

तद्बहिः सप्तभूरेखं विचिन्त्य पङ्कजं शुभम्।

दिव्यं शतदलं विद्युत्कोटिकान्तिसमप्रभम्॥ ८१-३०॥

पत्रे पत्रे महामुद्रास्थानं परमदुर्लभम्।

दिव्यस्थानं परीवारस्थानं ध्यात्वा पुनः पुनः॥ ८१-३१॥

कर्णीकायां ततो ध्यायेद् हाकिनीपरमेश्वरम्।

कठिनामन्त्रमावक्ष्ये ग्रन्थिभेत्ता भवेदनु॥ ८१-३२॥

येन योगक्रमेणैव शास्त्रजालं वशं नयेत्।

प्रणवं वाग्भवं माया रमा कामस्ततः परम्॥ ८१-३३॥

कठिनग्रन्थि छेदयेति युगलं परमेश्वरि।

मायास्त्राय फडन्ताय महामन्त्र उदाहृतः॥ ८१-३४॥

शतमष्टोत्तरं नित्यं सहस्रं वा जपेद् बुधः।

अधो मुण्डासनं कृत्वा तत्र पद्मासने विशेत्॥ ८१-३५॥

भ्रूपद्मे चित्तमारोप्य महापीठे मनोरमे।

पीठं त्रिकोणमध्ये तु बिन्दुषड्कोणमेव च॥ ८१-३६॥

तद्बहिः सप्तभूबिम्बं तत्र पद्मं विचिन्तयेत्।

रक्तं शत दलं पद्मं चतुर्द्वारं तदुत्तरे॥ ८१-३७॥

पत्रे पत्रे केशराणि त्रीणि त्रीणि क्रमेण तु।

ब्रह्मविष्णुमहेशादिरूपाणि परिचिन्तयेत्॥ ८१-३८॥

कर्कटीमन्त्रमावक्ष्ये साक्षाद्भूमिविभेदनात्।

ब्रह्मबीजं मायाशब्दं मायाकर्कटीशब्दतः॥ ८१-३९॥

कूटग्रन्थिं भेदयेति द्वयं कामकला ततः।

अस्त्राय फडिति ख्यातो महामन्त्रोत्तमोत्तमः॥ ८१-४०॥

शतमष्टोत्तरं ध्यात्वा मन्त्रं चिच्छक्तिमण्डले।

श्यामलामन्त्रमावक्ष्ये भैरवेश महाप्रभो॥ ८१-४१॥

शृणुष्वाराधय ज्ञानं सार्वज्ञसिद्धिदायकम्।

प्रणवं कालिकाबीजं त्रिवारमुच्चरेत् सुधीः॥ ८१-४२॥

तदन्ते मायायुगलं श्रीबीजं तदनन्तरम्।

तदन्ते श्यामलाबीजं दृढग्रन्थिविभेदिनी॥ ८१-४३॥

विलं निर्मलं शब्दान्ते मा कुरु द्वयमेव च।

कामास्त्राय फडिति च मन्त्रसारः प्रयोगदः॥ ८१-४४॥

शतमष्टोत्तरं जाप्यं प्रत्यहं चासनस्थितः।

शनैःशनैः सिद्धियुक्तो ज्ञानी मौनी महागुणी॥ ८१-४५॥

भवेत् साधकमुख्यश्च मम देहाश्रितो भवेत्।

कपिलामन्त्रमावक्ष्ये श्रृणुष्व भैरवेश्वर॥ ८१-४६॥

प्रणवं बालाबीजं तु कपिलाबीजमुत्तमम्।

तां तु ग्रन्थिं भेदयेति युगलं छेदयेति च॥ ८१-४७॥

चित्तं मे भूगृहे पश्चात् समारोपय युग्मकम्।

पुनस्तु कपिलाबीजं मायाबीजं ततो वदेत्॥ ८१-४८॥

रमास्त्राय फडन्तोऽयं महामन्त्रोत्तमोत्तमः।

शतमष्टोत्तरं वापि सहस्त्रं प्रजपेद् यदि॥ ८१-४९॥

द्विमासा सप्तग्रन्थीनां भेत्ता स्याद् भैरवो यथा।

इति ग्रन्थिभेदनस्य क्रमज्ञानमुदाहृतम्॥ ८१-५०॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षड्चक्रप्रकाशे भैरवी--

भैरवसंवादे भ्रूपद्मसप्तग्रन्थिभेदो नाम एकाशीतितमः पटलः॥ ८१॥

अथ द्व्यशीतितमः पटलः

श्रीनन्दभैरवी उवाच

अथ कान्त प्रवक्ष्यामि साधय त्वं सदा निशि।

हृदि सिद्धान्तविज्ञानं सिद्धिमिष्टां यदिच्छसि॥ ८२-१॥

गोपय त्वं प्रयत्नेन सच्छिष्ये च निवेदय।

दुष्टेभ्यो वञ्चकेभ्यश्च पुत्रेभ्यो न प्रकाशय॥ ८२-२॥

निर्जने प्रातरुत्थाय प्रातः कीर्तीं समाचरन्।

देहबाह्यस्नानमादौ कृत्वा च साधकोत्तमः॥ ८२-३॥

आसनञ्च गोपनीयं प्रत्येकेनापि कारयेत्।

पूर्वोक्तयोगचिह्नानि आसनानि समाचरेत्॥ ८२-४॥

आदौ श्रीमत्स्यकूर्माम्बुजविकटकटस्वस्तिकेन्द्रासनानि।

चित्राथर्वापवर्गानन विषमसमाचन्द्रताज्ञानदानि।

कोकावाक्ताम्रचूडाशवभगमृगभीमाद्यवीरोत्कटानि।

क्रोधाक्षत्राङ्गसिद्धाहिगरुमुकुटायोनिभेकासनानि॥ ८२-५॥

चतुस्त्रिंशत्संख्याघटितकवलं चासनमिह।

प्रबुद्धं देहस्य क्षयमरणशङ्काविरहितम्।

महच्छब्देनाढ्यं यदि गदितसत्रत्रयमिति।

प्रभाते मध्याह्ने निशि विकुरुते योगहृदयः॥ ८२-६॥

गौरी गौरवगुर्वीणीन्द्रियमहागार्हाग्निदा योगदा।

योगानन्तभवद्गुणानुगमनाः को वा समर्थो मखैः।

यस्यास्तां सविता दधाति मतिमान् पादाम्बुजं कोमलं।

हाकिन्याः परनाथदेववपुषः सम्भाव्य सम्पूज्यते॥ ८२-७॥

एतान्यासनमूलानि कृत्वा दृढतरः सुधीः।

निर्जने पूजनं कुर्याद् यदि कल्याणमिच्छति॥ ८२-८॥

दिव्यशङ्खहस्तपद्मो योगी योगमुपाश्रयेत्।

आसनान्ते महापद्मासनं कृत्वाऽर्चयेन्मुदा॥ ८२-९॥

इति योगाभ्यासकाल इदानीं यजनं शृणु।

बाह्यपूजां समाप्यादौ हृद्यन्तर्यजनं चरेत्॥ ८२-१०॥

योगाभ्यासविधिज्ञानमिति शास्त्रार्थनिश्चयम्।

पूजानिर्घण्टनं नाथ शृणु संक्षेपतः प्रभो॥ ८२-११॥

तदन्ते तु प्रवक्तव्यं पूजाविधानमन्त्रकम्।

सदाभ्यासेन योगेन जीवन्मुक्तिपदं लभेत्॥ ८२-१२॥

आदावाचमनं नाथ तदन्ते जलशोधनम्।

आसनादिशोधनं तु चक्रमण्डलभावना॥ ८२-१३॥

शिखाग्रन्थिबन्धनं तु पीठनिर्माणमेव च।

पुष्पघण्टाशोधनं तु शङ्खशोधनमेव च॥ ८२-१४॥

पीठपूजा हृदि ध्यानं भूतशुद्धिस्ततः परम्।

न्यासजालं ततः सिद्धपुरुषाणाञ्च भावनम्॥ ८२-१५॥

पुनर्ध्यानम् ऋषिध्यानं हाकिनीपरदेवयोः।

जीवसंस्कारमेवं हि जीवदानं ततः परम्॥ ८२-१६॥

महामुद्रादर्शनं तु चावाहनादिमुद्रया।

पाद्यमर्घ्यस्थापनं तु कृत्वा युगलमेव च॥ ८२-१७॥

पाद्यादिभिः पूजनञ्च मङ्गलं सोपचारकम्।

दशोपचारं पञ्चोपचारं मूलेन कारयेत्॥ ८२-१८॥

अष्टादशोपचारं तु महाभक्त्या निवेदयेत्।

षोडशोपचारयुक्तैः पूजयेद् वापि साधकः॥ ८२-१९॥

ततः प्राणायाम युग्मं कृत्वा च साधकोत्तमः।

जपेत् सहस्रं शतं वा चाष्टोत्तरसमन्वितम्॥ ८२-२०॥

त्रिलक्षं लक्षमेकं वा जपेन्मन्त्रमनन्यधीः।

जपसमर्पणं कृत्वा प्राणायामत्रयं चरेत्॥ ८२-२१॥

ततो हि वन्दनं स्तोत्रकवचं सर्वदा जपेत्।

सहस्रनामसन्तानं चाष्टोत्तरशतान्वितम्॥ ८२-२२॥

पठित्वा भेदमाकृत्य नरो योगीश्वरो भवेत्।

श्रवणाद्दर्शनाज्ज्ञानान्मयि भावानुकीर्तनात्॥ ८२-२३॥

यादृशी जायते श्रद्धा सन्निकर्षं तमालभेत्।

त्रिलक्षं जपमाकृत्य तद्दशांशेन होमयेत्॥ ८२-२४॥

तद्दशांशतर्पणं तु तद्दशांशं चाभिषेकम्।

तद्दशांशं विप्रभोज्यं कुमारीभोजनं तथा॥ ८२-२५॥

कुमारीयजनं तत्र कुमारीतन्त्रमापठेत्।

कुमारीसहस्रनामानि पठेदावश्यकं नरः॥ ८२-२६॥

ततः कुलक्रियां कुर्याद्योगी योगेश्वरो भवेत्।

आद्याशक्तिप्रभावः स्यात्तस्य हृत्पद्ममण्डले॥ ८२-२७॥

यथा मूले स्वाधिष्ठाने मणिपूरे यथा मम।

हृत्पङ्कजे यथा पूजा या पूजा कण्ठपङ्कजे॥ ८२-२८॥

सा पूजा भ्रूमहापद्मे मम मन्त्रेण कारयेत्।

तदायेष्वथ सन्तोषः प्रीतिवृद्धिः सदा मम॥ ८२-२९॥

मम सन्तोषमात्रेण ग्रन्थिभेत्ता स्वयं भवेत्।

त्रिराचमनं कुर्यान्मूलमन्त्रेण शङ्कर॥ ८२-३०॥

तथा चाचमनं वारमेकं कृत्वा महासुधीः।

ततो जलं शोधयेद् वै मूलान्ते जलबीजकम्॥ ८२-३१॥

निर्मलं चन्द्रखण्डेन सुगन्धिचन्दनेन च।

मिलितं शोधयानन्दभैरव प्राणभैरवी॥ ८२-३२॥

एतन्मन्त्रेण संशोध्य चासनं परिशोधयेत्।

आसने संस्थिते देवि कूर्मचक्रनिवासिनी॥ ८२-३३॥

ममासनं शोधय त्वं सिद्धिदे परहाकिनि।

एवं संशोध्य मनुना भावयेच्चक्र मण्डलम्॥ ८२-३४॥

त्रैलोक्यव्यापिनं योगिमहाविष्णुसुमण्डलम्।

अत्युच्चं सर्वदा ध्यात्वा तस्योपरि निजासनम्॥ ८२-३५॥

विभाव्य पूजयेद् देवीं भ्रूपीठचक्रमण्डले।

शिखाबन्धनमन्त्रं तु श्रृणु भैरव भूपते॥ ८२-३६॥

यस्यापि कारणेनापि पलायन्तेऽतिविघ्नदाः।

प्रणवञ्च शिखाबन्धवालं बन्धयद्वयम्॥ ८२-३७॥

तारं मायास्त्राय फट् च मन्त्रोऽयं ज्ञानिदुर्लभः।

प्रणवान्ते वासग्रन्थिं बन्धयामि नमो द्विठः॥ ८२-३८॥

पीठनिर्माणमावक्ष्ये सावधानोऽवधारय।

त्रिकोणाभ्यन्तरे बिन्दुषट्कोणं संल्लिखेत् सुधीः॥ ८२-३९॥

तदन्ते सप्तभूबिम्बं ततः शतदलायुत।

चतुर्द्वारं समालिख्य मन्त्रसंस्कारमाचरेत्॥ ८२-४०॥

विस्तीर्णताम्रपात्रे तु लिखेत् स्वर्णशलाकया।

अथवा रौप्यलेखन्या चाथवा बिल्वकण्टकैः॥ ८२-४१॥

यन्त्रं निर्माय संस्कारं कुर्याच्छ्रीतत्त्वमुद्रया।

प्रणवं यन्त्रराजं तु रुचिरेखासमाकुलम्॥ ८२-४२॥

योषित्प्रियतराकारं कुलपीठं प्रशोधये।

स्वाहान्तं मूलमुच्चार्य रक्तवर्णं विचिन्तयेत्॥ ८२-४३॥

शुक्लचन्दनसारेण रक्तचन्दनकेन वा।

कुङ्कुमेनापि संल्लिख्य चानेन संस्क्रियां चरेत्॥ ८२-४४॥

पुष्पशोधनमावक्ष्ये प्रणवं भुवनेश्वरीम्।

शोधयामि वरं पुष्पं सुगन्धं रक्तपाटलम्॥ ८२-४५॥

श्वेतं पीतं नीलकृष्णं कुसुमं गन्धसागरम्।

शोधयामि युगं स्वाहा मन्त्रेणानेन शोधयेत्॥ ८२-४६॥

प्रणवं शब्दबीजं तु चाकाशबीजसेचनम्।

घं घण्टां शोधयाम्यद्य वरदा भव हाकिनी॥ ८२-४७॥

पीठे सम्पूजयेद् भक्त्या साधकेन्द्रो न चान्यधीः।

षड्दले च रक्तवर्णां पूजयेत् पीठनायिकाम्॥ ८२-४८॥

कमला सुन्दरी रम्या मोहिनी हरमेखला।

तेजोरूपा शिखावह्निज्वालाकालानलेश्वरी॥ ८२-४९॥

समया रमणी भीमा रतिः कामसरस्वती।

वीणावती मधुमती वामनाकर्षीणी तथा॥ ८२-५०॥

ईरा शुद्धात्मिका भद्रा शान्तिनीर्माल्यवासिनी।

अरुन्धती च सावित्री किरणाच्छादिनी तथा॥ ८२-५१॥

स्वाहा स्वधा विशालाक्षी मदना मदनातुरा।

भ्रान्तिः प्रभावती ज्ञानदात्री विज्ञानदायिनी॥ ८२-५२॥

कोकिलाक्षी कुरङ्गाक्षी बोधिनी सप्तमण्डली।

हिरण्या मन्दिरा चेतः शुद्धिदा सिद्धिदा तथा॥ ८२-५३॥

मन्दाकिनी बृहद्गङ्गा सिद्धा भोगवती तथा।

तरश्मिनी च मोहा च त्रिवेणी मूर्तधारिणी॥ ८२-५४॥

गुर्वी तरङ्गपूज्या च विमला त्रिपुरा परा।

त्रितारी तारिणी भद्रकालिका ग्रन्थिभेदिनी॥ ८२-५५॥

रत्नमाला पापहरा पार्वती मानसीश्वरा।

भगमालिन्युमा देवी देवमाता कलावती॥ ८२-५६॥

पञ्चानना कालजित्वा दृप्ता पञ्चशिखा तथा।

मदीनी रणमातङ्गी खड्गहस्ता हसन्मुखी॥ ८२-५७॥

पद्ममाला किङ्किणी च धरित्री च वसुन्धरा।

फाल्गुनी पञ्चपीठस्था दीप्ता घोषयसालसा॥ ८२-५८॥

पवित्रा धूमिनी दीर्घजङ्घा व्याघ्रमुखी तथा।

कातरा तरुणी हक्षा हाकिनीन्द्रावती जया॥ ८२-५९॥

जयदा पूजिता एताः शतच्छदनिकेतने।

पराशक्तिं पूजयित्वा मन्त्रशक्तिं प्रपूजयेत्॥ ८२-६०॥

तरला चञ्चला धात्री चारुणा सूर्यगा दया।

स्मृतिर्दीक्षा धारणाक्षा दंशिनी भद्रकालिका॥ ८२-६१॥

षङ्कालतारिणी रुद्रवलिता वर्णरूपिणी।

एताः पूज्या महादेव योगिन्यो मन्त्रशक्तयः॥ ८२-६२॥

हृदि ध्यानं प्रवक्ष्यामि ध्यानात्मा साधको यतः।

महाबीजं रक्तवर्णं विभावय न ... ... ... .. ८२-६३॥

महासुन्दररूपं तु कोटिसूर्यसमप्रभम्।

विभाव्य मनसा योगी भूतशुद्धिं समाचरेत्॥ ८२-६४॥

वह्निना दह्यमानं तु देहं ध्यात्वा पुनः पुनः।

वायुना शोष्य देहं तु जलेनाप्लावयन् पुनः॥ ८२-६५॥

मूलमन्त्रेण सर्वाङ्गं सुधासागरसम्भवम्।

ध्यात्वा दिव्यमयं पश्चान्मनःपूजां समाचरेत्॥ ८२-६६॥

न्यासजालं प्रवक्ष्यामि साधकानां हिताय च।

न्यासजालप्रभावेण साधको योगिराड् भवेत्॥ ८२-६७॥

अच्छेद्याभेद्यकायः स्यान्मृत्युजेता स्वयं भवेत्।

ऋषिमातृकरन्यासं चाङ्गन्यासं ततः परम्॥ ८२-६८॥

आचरेत् पूर्ववद् भक्त्या मूलं चाद्याक्षरेण च।

सदाशिव ऋषिः प्रोक्तो गायत्रीच्छन्द एव च॥ ८२-६९॥

देवता हाकिनी देवी परनाथप्रियङ्करी।

देवता क्लीं बीजसारं कीलकं मूलमेव च॥ ८२-७०॥

शीर्षे मुखे हृदि ग्रन्थौ मूलाधारे च विग्रहे।

ऋषिन्यासं सदा कुर्याद्धाकिनी प्रीतिवर्धनम्॥ ८२-७१॥

ओं पदान्ते च शिरसि सदाशिवाय शब्दतः।

ऋषये नम उच्चार्य मुखे शब्दं ततो वदेत्॥ ८२-७२॥

गायत्रीच्छन्दसे पश्चान्नमःशब्दं ततो वदेत्।

हृदि श्रीहाकिनीदेव्यै परशक्त्यै ततो वदेत्॥ ८२-७३॥

देवतायै नमः पश्चान्मूलाधारे ततो वदेत्।

क्लीं बीजाय नमः पश्चात् सर्वाङ्गे च ततो वदेत्॥ ८२-७४॥

मूलमार्यदेवतायै नमः शब्दं ततो वदेत्।

ततः कुर्यान्महादेव शृणु सर्वाङ्गसिद्धये॥ ८२-७५॥

हृदये हस्तमारोप्य श्रीतत्त्वमुद्रया सुधीः।

बिन्दुयुक्तं न्यसेदादौ ततो दक्षभुजे न्यसेत्॥ ८२-७६॥

एकारादि चतुर्वर्ण्यं मूलेन पुटितं प्रभो।

बिन्दुयुक्तं दक्षहस्ते विन्यसेत् साधकोत्तमः॥ ८२-७७॥

तथा वामभुजे न्यासमाचरेन्मनु सम्पुटम्।

ठादिढान्ताक्षरैबीन्द्युक्तैर्न्यासं समाचरेत्॥ ८२-७८॥

नादिभान्ताक्षरैंबीन्दुयुक्तैः स्वमनुसम्पुटैः।

दक्षपादे न्यसेद्धीमान् ततो वामपदे न्यसेत्॥ ८२-७९॥

मादिक्षान्ताक्षरैबीन्दुसंयुतैर्मनुसम्पुटैः।

मातृकान्यासमाकृत्य करन्यासं समाचरेत्॥ ८२-८०॥

ह्रींबीजेन करन्यासं षड्दीर्घभाक्स्वरेण च।

एवं चाङ्गन्यासं कार्यं विधानेन कुलेश्वर॥ ८२-८१॥

पूर्वोक्तेनापि सकलं न्यासजालं समापयेत्।

ततः षोढा समाकुर्याद्धाकिनीपरदेवयोः॥ ८२-८२॥

मूलाख्यां मातृकास्थाने न्यासस्थानं सुलक्षणम्।

रुद्रैस्तु प्रथमो न्यासो द्वितीयस्तु ग्रहैर्युतः॥ ८२-८३॥

लोकपालैस्तृतीयः स्याच्छिवशक्त्या चतुर्थकः।

शक्त्यादिभिः पञ्चमः स्यात् षष्ठः पीठैनीगद्यते॥ ८२-८४॥

मन्त्रेण पुटितं रुद्रं मातृस्थाने प्रविन्यसेत्।

श्रीकण्ठोऽनन्तसूक्ष्मेश त्रिमूर्तीशामरेशकौ॥ ८२-८५॥

अर्घीशो भारभूतीशोऽतिथीशो हि ततः परम्।

स्थाणुकेशो हरेशश्च झिण्टीशो भौतिकेश्वरः॥ ८२-८६॥

सद्योजातेश्वरः पश्चादनुग्राहेश्वरस्ततः।

अक्रूरेशो महासेनः सूराणामधिपेश्वरः॥ ८२-८७॥

क्रोधीशश्चापि चण्डेशः पञ्चान्तकेश एव च।

शिवोक्तमेशश्चात्रापि चैकरुद्रेश्वरस्ततः॥ ८२-८८॥

कूर्मेश एकनेत्रेशश्चतुरानन एव च।

अजेशश्चापि सर्वेशः सोमेशस्तदनन्तरम्॥ ८२-८९॥

लाङ्गलीशो दारूकेशोऽर्धनारीश्वर एव च।

उमाकान्तेश्वरः पश्चादाषाढीशस्ततः परम्॥ ८२-९०॥

दण्डीशो द्रीशमीनेशौ मेघेशस्तदनन्तरम्।

लोहितेशः शिखीशश्च छागलण्डेश एव च॥ ८२-९१॥

द्विरण्डेशो महाकालेश्वरो वाणीश एव च।

भुजङ्गेशः पिनाकीशः खङ्गीशस्तदनन्तरम्॥ ८२-९२॥

बकेश्वरश्च श्वेतेशो भृग्वीशस्तदनन्तरम्।

नकुलीशः शिवेशश्च संवर्तकेश एव च॥ ८२-९३॥

पञ्चाशदेकयुक्ताः स्यू रुद्राद्याः क्रोधभैरवाः।

आदौ मूलं ततो मातृवर्णमेकं क्रमेण तु॥ ८२-९४॥

मातृकास्थानमध्ये तु श्रीकण्ठादीश्वरास्ततः।

चतुर्थ्यन्ते नमः शब्दं ततो मूलं पुनः पुनः॥ ८२-९५॥

इति श्री कण्ठविन्यासः कथितः कुलभैरव।

तदिदानी ग्रहन्यासं शृणु वक्ष्यामि तत्त्वतः॥ ८२-९६॥

हृदये च भ्रुवोर्मध्ये लोचनत्रितये ततः।

हृदये च कण्ठकूपे गलदेशे ततः परम्॥ ८२-९७॥

नाभिमूले मुखाम्भोजे गुह्ये च विन्यसेद् ग्रहान्।

रविसोमौ मङ्गलश्च बुधो बृहस्पतिस्तथा॥ ८२-९८॥

शुक्रः शनैश्चरः पश्चाद् राहुः केतुस्ततः परम्।

न्यसेत्तु स्वस्वमुद्रया ममोक्तस्थानमण्डले॥ ८२-९९॥

स्वरैः सूर्यं यादिरान्तैः सोमं कादिशरैः कुजम्।

चादिपञ्चाक्षरं नाथ बुधं टादिशरैर्गुरुम्॥ ८२-१००॥

डादिहान्तैस्तथा शुक्रं पादिमान्तैः शनैश्चरम्।

शादिहान्तैस्तथा राहुं लक्षाद्यां केतुमेव च॥ ८२-१०१॥

लोकपालन्यासमादौ वक्ष्यामि कुलभैरव।

शिरोमण्डलमध्ये तु दक्षिणावर्तयोगतः॥ ८२-१०२॥

अधःपर्यन्तमाल्यस्य मूलेन पुटितं सदा।

इन्द्राय शक्तिहस्ताय सवाहनाय ओं नमः॥ ८२-१०३॥

ह्रस्वपञ्चस्वरेणापि मूलान्ते संन्यसेत् सुधीः।

एकादशस्वरेणापि युक्ताय वह्नये नमः॥ ८२-१०४॥

सवाहनाय सर्वास्त्रधारिणे तादृशाय च।

यमाय वाहनस्थाय शूलास्त्रधारिणे नमः॥ ८२-१०५॥

कादिपञ्चवर्णसारैर्मूलेन पुटितैरपि।

कर्णे दक्षिणमूलोर्ध्वे हस्तस्य तत्त्वमुद्रया॥ ८२-१०६॥

यमन्यासं प्रकृत्याशु नैर्ऋत्ये न्यासमाचरेत्।

आदौ बीजं चादिपञ्चबीजान्ते नैर्ऋताय च॥ ८२-१०७॥

वसोऽधिपतये सर्वास्त्रादिवाहनवाहिने।

नमोऽन्ते मूलमन्त्रं तु इति सर्वत्र भावना॥ ८२-१०८॥

मूलं टादिपञ्चवर्णं वरुणाय ततः परम्।

सवाहनाय सर्वास्त्रधारिणे नम एव च॥ ८२-१०९॥

तदन्ते मूलमन्त्रं तु वरुणाय समाचरेत्।

मूलान्ते तादिपञ्चार्णं सवाहनाय वायवे॥ ८२-११०॥

सर्वास्त्रधारिणे पश्चान्नमो मूलं ततः परम्।

ततः कुर्यात् कुबेरस्य न्यासं परमदुर्लभम्॥ ८२-१११॥

आदौ मूलं पादिपञ्चाक्षरमुच्चार्य साधकः।

कुबेराय सर्वास्त्रधारिणे नरवाहिने॥ ८२-११२॥

नमोऽन्ते मूलमन्त्रं तु वामकर्णोपरि न्यसेत्।

आदौ मूलं पादिवान्तमीशानाय ततः परम्॥ ८२-११३॥

सवाहनाय सर्वास्त्रधारिणे नम उच्चरेत्।

तदन्ते बीजविन्यासमीशानन्यास ईरितः॥ ८२-११४॥

आदौ मूलं शादिहान्तं शक्रोर्ध्वे हस्तमर्पयन्।

अधोऽनन्ताय देवाय सर्वास्त्रधारिणे ततः॥ ८२-११५॥

सवाहनाय हृच्छब्दं मूलं चापि तदन्तरे।

आदौ मूलं ततो लक्षं ब्रह्मणेऽस्त्रादिधारिणे॥ ८२-११६॥

सवाहनाय हृच्छब्दं मूलञ्च तदनन्तरम्।

ब्रह्मरन्ध्रे प्रविन्यस्य ब्रह्मज्ञानमवाप्नुयात्॥ ८२-११७॥

इति दिक्पालविन्यासः कथितः कालभैरव।

शिवशक्तिन्यासजालं शृणुष्व परमाद्भुतम्॥ ८२-११८॥

यस्य करणमात्रेण षट्चक्रभेदको भवेत्।

आदौ स्थानं प्रवक्ष्यामि यत्र न्यासं स्वमुद्रया॥ ८२-११९॥

मूलाधारपद्ममध्ये स्वाधिष्ठानाम्बुजे ततः।

मणिपूरे महापद्मे हृदयाम्भोजमण्डले॥ ८२-१२०॥

कण्ठे विशुद्धपद्मे च तथा भ्रूपद्ममण्डले।

एतेषु षट्सु पद्मेषु शक्तियुक्तं शिवं न्यसेत्॥ ८२-१२१॥

आदौ मूलं वादिसान्तं डाकिनीसहिताय च।

ब्रह्मणे नम उच्चार्य मूलमन्त्रं ततः परम्॥ ८२-१२२॥

आदौ मूलं बादिलान्तं राकिणीसहिताय च।

विष्णवे नम उच्चार्य मूलविद्यां ततो वदेत्॥ ८२-१२३॥

आदौ मूलं डादिफान्तं लाकिनीसहिताय च।

रुद्राय नम उच्चार्य ततो मूलं प्रविन्यसेत्॥ ८२-१२४॥

आदौ मूलं कादिठान्तं काकिनीसहिताय च।

ईश्वराय नमो मूलं विन्यसेत् साधकाग्रणीः॥ ८२-१२५॥

आदौ मूलं स्वरान् पश्चात् शाकिनीसहिताय च।

सदाशिवाय हृच्छब्दं मूलमुच्चार्य विन्यसेत्॥ ८२-१२६॥

आदौ मूलं ततो हं क्षं हाकिनीसहिताय च।

ततः परशिवायान्ते नमो मूलं प्रविन्यसेत्॥ ८२-१२७॥

शिवशक्तिन्यासमेवं कथितं तव यत्नतः।

इदानीं शक्तिविन्यासं कथयामि श‍ृणुष्व तत्॥ ८२-१२८॥

ब्रह्मरन्ध्रे ललाटे च भ्रूमध्ये कण्ठगह्वरे।

हृदये नाभिमूले च लिङ्गमूले स्वमूलके॥ ८२-१२९॥

ऊरुमूले तथा जङ्घायुगले विन्यसेत् सुधीः।

पादद्वये तथा गुह्ये युगले पादयोस्तले॥ ८२-१३०॥

क्रमेण विन्यसेद्धीमान् मूलमन्त्रेण सम्पुटम्।

शक्तिनाम श्रृणु प्राणवल्लभ प्राणरक्षक॥ ८२-१३१॥

शक्तिर्माया रमादेवी भवानी दीनवत्सला।

सुमना काकिनी हंसी तथा संसारतारिणी॥ ८२-१३२॥

योगिनी गोपिका माला वज्राख्या चित्रिणी तथा।

नटिनी भारवी दुर्गा रतिर्महिषमर्दीनी॥ ८२-१३३॥

एता अष्टादश(श)क्तिमुख्याः संन्यासकर्मणि।

आदौ मूलं स्वरं चैकं षोडशादिक्रमेण तु॥ ८२-१३४॥

तदन्ते शक्तिमुच्चार्य चतुर्थ्यन्तपदान्वितम्।

नमः शब्दं तदन्ते तु ततो मूलं वदेत् सुधीः॥ ८२-१३५॥

कादिनान्ताक्षराणां तु चाद्ये बीजं निधाय च।

रत्यै नमो मूलमन्त्रं चाङ्गुष्ठं युगले न्यसेत्॥ ८२-१३६॥

आदौ मूलं पादिक्षान्तं शक्तिञ्च तदनन्तरम्।

चतुर्थ्यन्तं नमो मूलं शक्तिन्यासः समीरितः॥ ८२-१३७॥

पीठन्यासं प्रवक्ष्यामि सावधानोऽवधारय।

मूलाधारे कामरूपं कामाख्यं लिङ्गमूलके॥ ८२-१३८॥

कामराजं त्रिकोणे तु हृदि ज्वालन्धरं तथा।

हृद्यूर्ध्वे मधुकरस्थानं तदूर्ध्वे गगनाख्यकम्॥ ८२-१३९॥

ललाटे पूर्णगिर्याख्यमुड्डयानं तदूर्ध्वके।

तदूर्ध्वे शाङ्करीपीठं रुद्रपीठं तदूर्ध्वके॥ ८२-१४०॥

तदूर्ध्वे करुणापीठं चोन्मनीपीठमेव च।

रोधनीपीठमेवं तु बिन्दुपीठं तदूर्ध्वके॥ ८२-१४१॥

तदूर्ध्वे रत्नपीठं तु तदूर्ध्वे शुक्रपीठकम्।

तदूर्ध्वे वासनापीठं विसर्गपीठमेव च॥ ८२-१४२॥

ब्रह्मपीठं तदूर्ध्वे तु कालीपीठं तदूर्ध्वके।

तदूर्ध्वे तारिणीपीठं एकपीठं तदूर्ध्वके॥ ८२-१४३॥

तदूर्ध्वे च जटापीठं पिङ्गलापीठमेव च।

वाराणसीमहापीठं भ्रुवोर्मध्ये प्रविन्यसेत्॥ ८२-१४४॥

लोचनत्रयमध्ये तु अवन्तीपीठमेव च।

मायावतीं मुखवृत्ते जिह्वाग्रे तु मधूत्तमम्॥ ८२-१४५॥

तन्मध्ये रसनापीठं दंष्ट्रपीठं तदन्तिके।

विद्यापीठं तदग्रे तु योगिनीपीठमेव च॥ ८२-१४६॥

कण्ठे चाष्टपुरीपीठं तथा मधुपुरीत्रयम्।

भुजद्वये भोगपीठं श्रीपीठं पार्श्वयुग्मके॥ ८२-१४७॥

उदरे रह्लपीठं धर्मपीठं निवीतके।

काञ्चीपीठं कटितटे देवपीठं तदुत्तरे॥ ८२-१४८॥

तदधः श्यामलापीठं गोपीपीठं तदन्तिके।

अयोध्यापीठचक्रं तु नाभिमूले प्रविन्यसेत्॥ ८२-१४९॥

श्मशानपीठं गुह्ये तु शिवापीठं तथा तले।

ऊरुयुग्मे शीतले वा पीठयुग्मं प्रविन्यसेत्॥ ८२-१५०॥

रङ्किणीपीठनगरं जङ्घायुग्मे उदाहृतम्।

स्तनयुग्मे क्षीरपीठमङ्गुष्ठे द्वे प्रविन्यसेत्॥ ८२-१५१॥

कालपीठं क्रोधपीठं विन्यसेत् साधकाग्रणीः।

पञ्चाशदेकपीठं तु केशाग्रे राज्यपीठकम्॥ ८२-१५२॥

आदौ मूलं ततो वर्णं स्थाननाम ततः परम्।

पीठनाम चतुर्थ्यंतं नमोमूलं ततः परम्॥ ८२-१५३॥

इति पीठन्यासमूलं कथितं तव यत्नतः।

अस्य करणमात्रेण योगी सिद्धिमवाप्नुयात्॥ ८२-१५४॥

चिरजीवी स्वयं देवः प्रभाकरसमो बली।

यन्नमन्ति महेशानि षोढापुटितविग्रहाः॥ ८२-१५५॥

अल्पायुः स भवेत् सद्यो देवता कम्पते भिया।

इति ते कथितं नाथ षोडान्यासं महाशुभम्॥ ८२-१५६॥

ततः सिद्धपुरुषाणां भावनं शृणु शङ्कर।

मीननाथो गुरुः श्रीमान् आगस्त्यो देवराजकः॥ ८२-१५७॥

कालाननः सोमराजो वीरनाथो धनञ्जयः।

कृष्णः कान्तमतिर्बुद्धी धर्मावतार एव च॥ ८२-१५८॥

वशिष्ठो नारदश्चैव शुकः प्रह्लाद एव च।

जनको भार्गवेशश्च कुरुक्षेत्रेश्वरस्तथा॥ ८२-१५९॥

विश्वामित्रो भरद्वाजो मैनाको मेरुरेव च।

अनन्तो योगनाथश्च महेन्द्रो मदिरेश्वरः॥ ८२-१६०॥

ब्रह्मानन्दशिवानन्दौ सनकानन्द एव च।

सर्वेश्वरः कामदेवः शुक्राचार्यः कुलेश्वरः॥ ८२-१६१॥

इति सिद्धपुरुषाणां ध्यानं कृत्वा विभावयेत्।

रक्तवर्णं महासत्त्वं पुरुषं सर्वभूषणम्॥ ८२-१६२॥

विभाव्य ध्यानमाकुर्याद् हाकिनीपरदेवयोः।

आदौ श्रीपरदेवस्य ध्यानं शृणु महेश्वर॥ ८२-१६३॥

शुक्लाभं परमेश्वरं परशिवं सूक्ष्मातिसूक्ष्मं गुरुं।

सर्वाऽलङ्कृतविग्रहं त्रिजगतां सारं परं निर्मलम्।

अद्वैतं दशहस्तपङ्कजतलं श्रीदं त्रिनेत्रं शिवं।

देवेन्द्रैः परिपूजितं सुखमयं सच्चित्परानन्ददम्॥ ८२-१६४॥

ध्यायेत् पञ्चमुखं महास्त्रवरदं भक्तैः सदा पूजितम्॥ ८२-१६५॥

एवं ध्यात्वा परनाथं मानसोग्रोपचारतः।

पूजयित्वा नमस्कृत्य हाकिनीध्यानमाचरेत्॥ ८२-१६६॥

त्रैलोक्योत्सववन्दितां त्रिजगतामानन्दपूर्णोदयां।

नानाऽलङ्कृतभूषणां सुमुकुटोल्लासैकबीजप्रभाम्।

श्यामां मोक्षदवेदहस्तकमलां कारुण्यवारांनिधिं।

शोभामण्डलमण्डितां पथि भजे श्री हाकिनीमीश्वरीम्॥ ८२-१६७॥

अस्याः सप्तकुलध्यानं पश्चाद् वक्तव्यमेव च।

महामुद्रादर्शनं तु चेदानीं शृणु भैरव॥ ८२-१६८॥

योनिमुद्रा महामुद्रा सर्वतन्त्रेषु गोपिता।

तया चावाहनं कुर्यात् साधको निश्चलात्मना॥ ८२-१६९॥

अर्घ्यद्वयं स्थापयित्वा पूर्वचक्र क्रमेण तु।

पुनर्ध्यात्वा तयोः पादाम्भोजे दद्यात् सदाशिवः॥ ८२-१७०॥

षोडशोपचारद्रव्यैस्ततः सम्पूजयेत् सुधीः।

ऋषिध्यानं प्रवक्ष्यामि यस्य मूर्ध्नि प्रविन्यसेत्॥ ८२-१७१॥

मूर्तं सदाशिवं देवं नानालङ्कारभूषितम्।

द्विभुजं पीतवसनं धर्माधर्मप्रदर्शकम्॥ ८२-१७२॥

वराभयकरं शान्तं हाकिनीशिरसि स्थितम्।

विभाव्य पूजयेत् तत्र गन्धपुष्पादिभिः प्रभो॥ ८२-१७३॥

जीवसंस्कारमावक्ष्ये येन जीवस्थितिर्भवेत्।

स्वहृदये दक्षहस्ते तत्र मुद्राक्रमेण तु॥ ८२-१७४॥

हाकिनीपरदेवस्य मन्त्रं स्मृत्वा पुनः पुनः।

स्थापयामि स्वचित्तं मे हाकिन्या सह सम्पदैः॥ ८२-१७५॥

स्थिरो भव महाजीव ममाज्ञां परिपालय।

स्वाहान्तं मन्त्रमुच्चार्य जीवं संस्कारयेत् ततः॥ ८२-१७६॥

जीवदानमतो वक्ष्ये हाकिनीपरदेवयोः।

आदौ श्रीहाकिनीदेव्या जीवदानं शृणु प्रभो॥ ८२-१७७॥

आं ह्रीं क्रा**** बीजमुच्चार्य पूर्ववज्जीवसंस्थितिम्।

एकविंशतिवारं तु हाकिनीहृदये जपेत्॥ ८२-१७८॥

स्वाहान्तेनापि मनुना जीवसंस्कार ईरितः।

एवं श्रीपरदेवस्य प्राणदानमुदाहृतम्॥ ८२-१७९॥

पुनर्ध्यानं प्रवक्ष्यामि शृणु भैरव बल्लभ।

यां ध्यात्वा सर्वग्रन्थीनां स्वयं भेत्ता स्वयं हरिः॥ ८२-१८०॥

अर्घ्यविन्यासयुगलं शृणु भद्रोदर प्रभो॥ ८२-१८१॥

वेदाङ्गोज्वलनप्रभां त्रिनयनानन्दैकचित्तोज्वलां।

लावण्यं प्रियवाक्य मोहनिकरां श्रीसन्मुखीं हाकिनीम्।

चण्डालामलभालमहाखङ्गप्रभापङ्कज।

छायापुत्रवरान् भवान् भयहरामश्रं हुयन्तीं भजे॥ ८२-१८२॥

श्रीं श्रीं श्रीं भैरवेशं सुखमयपुरुषं कोटिदीपप्रकाशं।

कोट्यलङ्कारभूषणं त्रिजगति वरदं व्याघ्रचर्माम्बराढ्यम्।

योगीन्द्रैर्योगिमुख्यैः सुरवरतरुणैः सर्वदा पूज्यमानं।

पञ्चास्यं शून्यचन्द्रायत भुजकिरणं योगिचूडामणीशम्॥ ८२-१८३॥

ध्यायेऽहं शरणागतं प्रियतमं मायाश्रयं शङ्करं।

रौप्याद्रिप्रभविग्रहं शवमुखं शून्येन्दुवक्राम्बुजम्।

षड्वानात्रशतार्क चन्द्रकिरणं भास्वत्त्रिनेत्रं परं।

निर्वाणाख्यपदप्रदं कुलकलानाथं भजे भ्रूदले॥ ८२-१८४॥

एवं ध्यात्वा महादेवीं हाकिनीं श्रीपरेश्वरम।

नित्यं स्वयम्भुं नागेन्द्रघण्टाडमरुनादितम्॥ ८२-१८५॥

महाकायकराम्भोजपूजितं पञ्चचूडिनम्।

अतिसौन्दर्यवदनं नागेन्द्रहारशोभितम्॥ ८२-१८६॥

महातेजोमयं कोटिचन्द्रकान्तिस्फुरत्प्रभम्।

घर्घरध्वनिमञ्जीरहंसाकारपदाम्बुजम्॥ ८२-१८७॥

वृषासनस्थं योगीन्द्रं हाकिनीपरमेश्वरम्।

हाकिनीसुन्दरीवामशोभाविद्युत्प्रकाशिनम्॥ ८२-१८८॥

अतिसौन्दर्यलहरीं योगमायास्वरूपिणीम्।

कामधेनुस्वरूपाख्यां स्वकान्त्या विश्वमोहिनीम्॥ ८२-१८९॥

रौप्याद्रिसदृशाकारां चित्रविद्रुमसल्लताम्।

मुक्तकेशीं मेघमालां रौप्याद्रयाच्छादनीं कियत्॥ ८२-१९०॥

चलद्भ्रमरकोटयर्क चन्द्र वह्नि त्रिलोचनाम्।

षण्मुखीं वेदहस्तां तु पद्मरागसमप्रभाम्॥ ८२-१९१॥

पद्मरागकान्तमालाधारिणीं हेतुसुप्रियाम्।

साधकानां हितार्थाय कपालासिभयानकाम्॥ ८२-१९२॥

सर्वसौभाग्यदां नित्यां डमरूजमालिकाम्।

धारयन्तीं महाविद्यामानन्दोदयसाक्षिणीम्॥ ८२-१९३॥

भ्रूपद्मकणीकामध्ये गतच्छदसुपङ्कजे।

शोभारूपं संप्रहन्तीं काकिनीसाकिनीप्रियाम्॥ ८२-१९४॥

लाकिनीराकिणीध्येयां डाकिनीपरिपूजिताम्।

कुण्डलीबन्धुजननीं पूजयामि महीतले॥ ८२-१९५॥

एवं ध्यात्वा चार्घ्यसारं क्रमतो युगलं चरेत्।

त्रिकोणमण्डलद्वन्द्वं चाग्रे कृत्वाऽङ्गुलेन च॥ ८२-१९६॥

तीर्थवाहनकालाद्यैः पूरयेद् गन्धकैस्ततः।

तदाद्ये चापि फट्कारैः खड्गाधारञ्च शङ्खकम्॥ ८२-१९७॥

क्षालयेन्मनुनानेन श्रृणुष्व कुलभैरव।

ओं शङ्खस्थं शङ्ख त्वं पुण्यं मङ्गलानाञ्च मङ्गलम्॥ ८२-१९८॥

विष्णुना विधृतो नित्यं मम शान्तिप्रदो भव।

ओं शङ्खाधारं शोधयामि कूर्माकारेण भास्वता॥ ८२-१९९॥

विसर्ग बिन्दुसर्गेऽहं त्रिकोणे स्थापयाम्यहम्।

धेनुयोनिं मत्स्यमुद्रां दशधा मन्त्रमाजपेत्॥ ८२-२००॥

आत्मानं प्रोक्षयेदादौ ततो द्रव्यादिप्रोक्षणम्।

एवं क्रमेण देवेश देवदेव महेश्वर॥ ८२-२०१॥

अर्घ्यद्वयं पुरः श्रीमान् स्थापयन् कौलिको जनः।

पूजां कुर्याद्विशेषेण रात्रिशेषे विशेषतः॥ ८२-२०२॥

महामुद्रादर्शनं तु चाधुनापि समाचरेत्।

अवश्यं सिद्धिमाप्नोति हेतुयुक्तो हि साधकः॥ ८२-२०३॥

महामुद्रा योनिमुद्रा सर्वतन्त्रे निरूपिता।

यो जानाति महादेव स योगी नात्र संशयः॥ ८२-२०४॥

महापूजां समाकुर्याद् देवदेव मयोदिताम्।

ध्यानयुक्तस्य या पूजा सा पूजा सफला भुवि॥ ८२-२०५॥

सदा कालीपूजनवत् पूजां कुर्यात् समाहितः।

तच्च देशे समागम्य गन्धर्वनगरेऽपि वा॥ ८२-२०६॥

पर्वते निर्जने वापि शून्यागरे श्मशानके।

महाविद्यां कामधेनुं हाकिनीं परिपूजयेत्॥ ८२-२०७॥

पद्यमन्त्रं प्रवक्ष्यामि प्रणवं रतिसुन्दरी।

रमाबीजं महादेवि तदन्ते पाद्यमुत्तमम्॥ ८२-२०८॥

गन्धोदितं गृह्ण गृह्ण हाकिन्यै ह्रू द्विठः प्रभो।

एवं सर्वत्र कर्तव्यं नामभेदेन कारयेत्॥ ८२-२०९॥

दापयेन्नामभेदैश्च सर्वद्रव्याणि भैरव।

आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम्॥ ८२-२१०॥

मधुपर्काचमनस्नानवसनाभरणानि च।

गन्धपुष्पे धूपदीपौ नैवेद्यं वन्दनं तथा॥ ८२-२११॥

पानार्थं जलदानं तु बलिदानं ततः परम्।

अष्टादशोपचाराश्च सर्वतन्त्रेषु गोपिताः॥ ८२-२१२॥

प्राणायामत्रयं कुर्यात् साधको निर्भयः शुचिः।

जपं कुर्याद् विशेषेण महामालाक्रमेण तु॥ ८२-२१३॥

अन्यं मनुवरं नाथ शृणु भैरव ईश्वर।

प्रणवं प्रेतराजं तु वह्निबीजं तदुत्तरे॥ ८२-२१४॥

हालाहलं महाकाल परनाथाय धीमहि।

कामबीजं हाकिनी च चतुर्थ्यन्तपदात्मिका॥ ८२-२१५॥

सोऽहं हंसस्ततः स्वाहा महामन्त्रं जपेद् बुधः।

लक्षजपेन सिद्धिः स्यादज्ञानी ज्ञानवान् भवेत्॥ ८२-२१६॥

असिद्धः सिद्धरूपी स्यादाख्या कीतीः प्रवर्धते।

महावाग्मी सर्वशास्त्रवेत्ता सर्वज्ञसिद्धिभाक्॥ ८२-२१७॥

वाचां सिद्धिरष्टसिद्धिः प्रकाश्या भान्ति तत्करे।

युगयुग्मपुरश्चर्याविधानेनामरो भवेत्॥ ८२-२१८॥

योगी स्यात् प्रलयस्थायी ध्यानात्मा ज्ञानवाञ्छुचिः।

अप्रकाश्यगुणी भूत्वा राजराजेश्वरो भवेत्॥ ८२-२१९॥

गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम्।

सिद्धिर्भवतु मे देवि त्वप्रसादात् परमेश्वरि॥ ८२-२२०॥

इति समर्प्य तद्धस्ते हेमरूपं विचिन्तयन्।

ततः प्राणायामयुतं मन्त्रं तु त्रिगतं जपेत्॥ ८२-२२१॥

बलिदानमनुं वक्ष्ये शृणु श्रीकुलपण्डित।

आदौ मूलं सिद्धबलिं सुधामांससमन्वितम्॥ ८२-२२२॥

मीनमुद्रासमाक्रान्तमथवा मिष्टसद्धलि।

गृह्णयुग्मं तथा गृह्णापयशुग्मं द्विठस्ततः॥ ८२-२२३॥

दापये साधकेन्द्रश्च भक्त्या कामसुसिद्धये।

ततः स्तोत्रं पठेद्धीमान् गद्यपद्यादिभेदतः॥ ८२-२२४॥

पठेच्च कवचं ब्रह्मसम्मतं देहरक्षणम्।

सहस्रनामसन्तानं पठेद् वा हरमुद्रया॥ ८२-२२५॥

स्वस्थाने स्थापयेन्नाथ हाकिन्या परमेश्वरम्॥ ८२-२२६॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षट्चक्रप्रकाशे हाकिनीपरशिवयजनं नाम द्व्यशीतितमः पटलः॥ ८२॥

## अथ त्र्यशीतितमः पटलः

श्रीनन्दभैरव उवाच

कथयस्व वरारोहे हाकिनीस्तोत्रमुत्तमम्।

यस्य प्रपाठनाद् वाग्मी कृपायासे दयामयि॥ ८३-१॥

श्रीनन्दभैरवी उवाच

अत्यद्भुतं स्तोत्रवरं श्रृणु प्रभो सर्वेश्वरैर्भावितमादिगुह्यम्।

यैः पठ्यते साधकचक्रनाथैस्तैरेव सिद्धैरतिधर्मविद्भिः॥ ८३-२॥

ब्रह्माख्यां कामविद्यां नरहरिजननीं कामकूटस्वरूपां।

हाकिन्याख्यां शम्भुजायां त्रिवधुमदनशां तारिणीं स्तौमि सिद्धाम्।

हेरम्बानन्दविद्यां त्रिसमनदमनीं दीर्घकेशीं त्रिनेत्रां।

मन्दारारण्यमध्ये विकसितवदनाम्भोजहासप्रकाशाम्॥ ८३-३॥

हिरण्यालङ्कारां त्रितयनयनां पट्टवसनां।

महास्निग्धां शुद्धां कुलजनवरामिन्दुवदनाम्।

सदा स्तौति श्रीदां भुवनकरुणां भावतरुणां।

त्रिवेणीश्वेताभां वसमयतनुं भ्रूयुगदले॥ ८३-४॥

महापद्मवनोद्रेकरम्यस्थाननिवासिनि।

हाकिनि त्वां मुदा स्तौमि तद्धर्मकुरुपागताम्॥ ८३-५॥

संसारार्णवतारिणीं नरहरिप्रेमाभिलाषोन्मनीं।

भावारम्भविसर्जनैकनिलया मायां महासुन्दरीम्।

भास्वत्कोटिसुरत्नसिंहवसतिं श्रीहाकिनीं द्राविणीं।

स्तौमि क्षेत्रनिरीक्षणाय नियतां श्रीभारतीभाविताम्॥ ८३-६ ॥

संस्कारश्रियमातनोति सहसा श्रीपार्वतीवल्लभे।

नानारत्नकलापदर्शनमहाज्ञानं निदानं धनम्।

सा साक्षादखिलेश्वरी परशिवानन्दैकबिन्दूज्ज्वला।

मामादौ परिरक्षतु प्रियकरी संस्तौमि पीठान्तरे॥ ८३-७॥

आकाशवेदलिङ्गे स्थितिपथिमिलिते भाति सा रक्तबर्हा।

सा मां पात्वम्ब काली कुलपथभविका क्रोधनिःक्रोधकर्त्री।

तस्याः श्रीपादपद्मत्रिभुवनभक्तकेशालिमाला।

युक्तं सर्वेन्द्रपूज्यं निरवधिकमले द्वे दले स्तौमि विद्याम्॥ ८३-८॥

साङ्गं द्वयं त्वत्प्रियं पदयुगं पत्रद्वयश्रेयसं।

मञ्जीराद्भुतहारपादकमलं सम्भाव्य संस्तौम्यहम्।

यद् ध्यात्वा हरिरीश्वरो गुणधरो जेता महारेःक्षणा--

दाशापाशविसर्जनैकनिलयं त्रैलोक्यसंरक्षकः॥ ८३-९॥

या यात्रा व्रतवासिनी शशिमुखी छागादिमांसप्रिया।

मामेकं परिपालय त्वमखिले त्वामेकरूपां शिवाम्।

स्तौमीन्द्रावनतिप्रियां वाञ्छोक्षसहितानन्दैकहेतुप्रदाम्॥ ८३-१०॥

वरं परं नमाम्यहं गिरीन्द्ररूपगर्वहं।

महेश्वरं परेश्वरं श्मशानबीजगह्वरम्।

हिरण्यरत्नभूषणं शतेन्दुतेजसं तथा।

शिवं तनुं पुनः परप्रभाप्रभाकरम्॥ ८३-११॥

शरेण्यं वरेण्यं महाकामधन्यं।

महादेवदेवं त्रिकालादिजन्यम्।

श्मशानोग्रधूलिप्रियाङ्गानुलेपं।

सदा स्तौमि संसारसारं निषेकम्॥ ८३-१२॥

परशिवं मनसा सहसा निशि।

प्रतिदिनं प्रणमाम्यहमादिमम्।

शशिमुखीशतचन्द्रिकयान्वितं।

भजनसाधक सत्फलदायकम्॥ ८३-१३॥

परशिवचरणाब्जं हाकिनीशक्तिसेव्यं।

त्रिभुवनसुखदानं ध्यानमात्रप्रकाशम्।

अतिसुललितहस्ताम्भोजशोभां वहन्तं।

भुवि निजकुलसारं स्तौमि योगीन्द्रगम्यम्॥ ८३-१४॥

शोकशोकावलीलामति हि कलयति प्राणदेहाभिलाषं।

हाकिन्याः प्राणनाथो भवशमनकरो हीरकास्त्रग्धरो वा।

सोऽसौ भ्रूपद्मसारे रचयित कलिकां चित्तदीपस्य नित्यां।

तस्य श्रीपादपद्मं गुणगणयजितं पूजितं स्तौमि भाले॥ ८३-१५॥

मेरुश्रृङ्गनिकेतनैकवसनं गोलोकसंसेवितं।

यज्ज्ञानन्दनिषेवितं परशिवं योगीन्द्रचित्तस्थलम्।

हालापाननिराकुलं पशुसमां सामोदनाचर्वणां।

वन्दे नन्दिमहादिभैरववरैर्वन्द्यं जगत्कारणम्॥ ८३-१६॥

मायापथच्छलकलाकपिलापतिस्त्वं।

त्वं भूरविपतिरूपापतिरेकचक्रः।

आपोऽनलत्वमखिले गगनप्रकाशा--।

वायुस्थमावसिमुखं शरणं प्रपद्ये॥ ८३-१७॥

वाञ्छाकल्पद्रुमतलगतं हेमसिंहासनस्थं।

श्रीहाकिन्या रमणनिरतं कामकेलिप्रकाशम्।

मायामोहं क्षयमतिसुखं विन्ध्यशैलाग्रसंस्थं

वन्दे नाथं हरपरशिवं रूपजालप्रकाशम्॥ ८३-१८॥

पठेद् यः स्तोत्रार्थं भवति स सुखी योगनिपुणः।

क्षुधातृष्णानाशः श्रवणधृतयशोवासिसरसः।

स योगीन्द्रो मासादतिशयपरानन्दघटकः

परीतः प्राणाख्ये रचयति सुधासिन्धुसुरसम्॥ ८३-१९॥

एतत् स्तोत्रं पठेद्विद्वान् ध्यानन्याससमन्वितम्।

शुक्लं रक्तं तथा पीतं नीलं कृष्णं विभाव्य च॥ ८३-२०॥

कालचतुष्टये नित्यं पठित्वा सिद्धिमाप्नुयात्।

आकाशे भूतले नाथ पाताले विघ्नकोटयः॥ ८३-२१॥

योगिनां पठनादेव नश्यन्ति तत्क्षणादिह।

सर्वत्र गामी स भवेदतिभाग्यफलोदयम्॥ ८३-२२॥

महापापहरं स्तोत्रं हाकिनीहृदयोद्भवम्।

सदाशिवप्रियं योगसिद्धिदं देवसेवितम्॥ ८३-२३॥

सहस्रवारपाठेन पुरश्चर्याफलं लभेत्।

पठित्वा स्तोत्रराजं तु श्मशाने निर्जने वने॥ ८३-२४॥

अन्तरीक्षेऽथवा नाथ योगी स्यादमरो महान्।

अस्य प्रपठनाद्वाग्मी ज्ञानवान् विजितेन्द्रियः॥ ८३-२५॥

ध्यानात्मा संभवेत् क्षिप्रं परिवारगणैः सह।

प्रातःकाले निशायां तु मध्याह्ने शेषकालके॥ ८३-२६॥

प्रपठेत् स्तोत्रसारं तु भावात्मा साधकोत्तमः।

अनायासेन भ्रूपद्मे स्थिरो भवति निश्चितम्॥ ८३-२७॥

श्रीगुरोश्चरणाम्भोजं हृदये ध्याननिर्णयम्।

यो ध्यात्वा पठ्यते स्तोत्रं स भवेत् कल्पपादपः॥ ८३-२८॥

इदानीं कथये नाथ कवचं पटलान्तरे॥ ८३-२९॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे भैरवीभैरवसंवादे हाकिनीपरनाथस्तोत्रविन्यासो नाम त्र्यशीतितमः पटलः॥ ८३॥

अथ चतुरशीतितमः पटलः

श्रीनन्दभैरव उवाच

अथादौ कथयानन्दभैरवि प्राणवल्लभे।

कवचं हाकिनीदेव्याः परमानन्दवर्धनम्॥ ८४-१॥

हेतुयुक्तं श्रद्धया मे करुणासागरस्थिते।

शीघ्रं विरचयानन्द कवचं सारमङ्गलम् ॥ ८४-२॥

श्रीनन्दभैरवी उवाच

आदौ शृणु महावीर परमानन्दसागर।

कवचं हाकिनीदेव्याः संसारार्णवतारकम्॥ ८४-३॥

यस्य स्मरणमात्रेण योगी योगस्थिरो भवेत्।

अन्तरिक्षे च भूलोके पाताले ये चराचराः ॥ ८४-४॥

स्तम्भिता वेपमानाः स्युर्वीद्याज्ञानादिपाठतः।

कवचध्वनिमात्रेण भूतप्रेतपिशाचकाः ॥ ८४-५॥

विद्रवन्ति भयार्ता वै कालरुद्रप्रभावतः।

यथाऽलोको वह्निमध्ये स्थिरो भवति निश्चितम्॥ ८४-६॥

ओं अस्याः श्रीहाकिनीदेव्याः सानन्दसारमङ्गलस्य महाकवचस्य सदाशिव ऋषि-- र्गायत्रीच्छन्दः

श्रीहाकिनीपरदेवता क्लीं बीजं स्वाहा शक्तिः सिद्धलक्ष्मी-- मूलकीलकं देहान्तर्गत

महाकामसिध्यर्थे जपे विनियोगः।

ओं पातु शीर्षचक्रं मे क्लीं पातु भालमण्डलम् ।

स्वमूलं पातु मे नित्यं लोचनत्रितयं मम ॥ ८४-६॥

गण्डयुग्मं सदा पातु वाग्भवाद्या मनोरमा ।

श्रीं ह्रीं पातु कर्णयुग्मं हाकिनी परदेवता ॥ ८४-७॥

महाविद्या सदा पातु ममोष्ठाधरसम्पुटम्।

दन्तावलियुगं पातु ह्रीं श्रीं स्वाहा परेश्वरी ॥ ८४-९॥

क्लीं ह्रीं श्रीं हाकिनीदेवी स्वाहा पातु रसप्रियाम्।

सृक्कनीं पातु सततं शक्तिः कामवरा मधुः ॥ ८४-१०॥

स्वाहा पातु शिखा शक्तिर्भ्रूमध्यं पातु सर्वदा।

हाकिनी मण्डलं पातु परानाथेश्वरी परा ॥ ८४-११॥

सुन्दरी सर्वदा पातु द्विदलं कामसुन्दरी।

अमृताख्या सदा पातु भ्रूप्रकाशस्थलं मम ॥ ८४-१२॥

वह्निज्वाला सदा पातु भ्रूश्मशानस्थलं मम।

सुरभी पातु मायास्त्रं स्वाहा मे भ्रूगतच्छदम् ॥ ८४-१३॥

त्रिकोणं पातु कामाख्या हाकिनी परमेश्वरी।

त्रिपुरा सुन्दरी पातु द्विषट्कोणं सदा मम ॥ ८४-१४॥

हिङ्गुलादेश्वरी पातु षट्कोणबिन्दुमण्डलम्।

सप्तभूबिम्बमापातु भूतलान्तःप्रकाशिनी ॥ ८४-१५॥

महाशतदलं पातु शतकोटिमरुप्रिया।

गुरुविद्यामयी पातु वाणी मे मत्तगामिनी ॥ ८४-१६॥

चतुर्द्वारं सर्वचक्रं पातु मे परमेश्वरी।

अत्यन्तदुःखहन्त्री मे मनश्चक्रं सदाऽवतु ॥ ८४-१७॥

शब्दब्रह्ममयी पातु चन्द्रमण्डलमेव मे।

अकालतारिणी दुर्गा सर्गस्थित्यन्तकारिणी ॥ ८४-१८॥

महापुरुषसंस्थानं हाकिनी मण्डलं मम।

पातु वर्णमयी तारा चन्द्रार्धं मे सुरेश्वरी ॥ ८४-१९॥

उन्मनीनगरं पातु वह्निकुण्डनिवासिनी।

मदिरा पातु सततं भालं विषहरा मम ॥ ८४-२०॥

धर्मदा ज्ञानदा पातु धर्मज्ञानपदं मम।

तालपत्नीश्वरी पातु अमृतानन्दकारिणी ॥ ८४-२१॥

वैराग्यनिकरं पातु बिन्दुस्थानं महाबला।

त्रितारी कूटशक्तिर्मे सदा पातु विशुद्धकम् ॥ ८४-२२॥

शाकिनीशं सदा पातु शाकिनी कुलभैरवी।

सप्तद्वीपेश्वरी पातु मम षोडशपङ्कजम् ॥ ८४-२३॥

शाकिनी भैरवी पातु चण्डदुर्गा सरस्वती।

कुमारी कुलजा लक्ष्मीः सिद्धार्थं मे सदाऽवतु ॥ ८४-२४॥

हृदयं पातु सततं शाकिनी परमेश्वरी।

बीजरूपा सदा देवी महामहिषघातिनी ॥ ८४-२५॥

उदरं पातु सततं योगिनीकोटिभिः सह।

उमा महेश्वरी पातु प्रचण्डा मम पृष्ठकम् ॥ ८४-२६॥

चामुण्डा भैरवी बाला पार्श्वयुग्मं सदाऽवतु।

परमा चेश्वरी पातु देवमाता स्तनद्वयम् ॥ ८४-२७॥

सौभाग्यहाकिनी देवी पायात्तु यक्षसः प्रियम्।

आद्या देवी शिखारूपा भुजयुग्मं सदाऽवतु ॥ ८४-२८॥

सर्वापराधहर्त्री मे कामविद्या दशच्छदम्।

मणिपूरं सदा पातु दशवर्णात्मिका शिवा ॥ ८४-२९॥

नाभिचक्रं सदा पातु लाकिनी पद्मवासिनी।

नित्यदेशदलं पातु पार्वती वेदपालिनी ॥ ८४-३०॥

महारुद्रेश्वरी पातु पीठरूपं मणिं मम।

तेजोमण्डलमापातु रुद्राणी शूलधारिणी ॥ ८४-३१॥

अभया सर्वदा पातु योगविद्या नितम्बकम्।

नितम्बाधारचक्रं मे पातु शैलं नितम्बिनीं ॥ ८४-३२॥

तरुणी मन्त्रजालस्था वैष्णवी लिङ्गमण्डलम्।

सदा पातु हाकिनीशा महाविष्णुस्थलं मम ॥ ८४-३३॥

वैष्णवी ललिता माया रमादेवी कटिं मम।

स्वाधिष्ठानं सदा पातु गुह्यरूपा सरस्वती ॥ ८४-३४॥

भवानी भगवत्पत्नी श्मशानकालिका गुदम्।

पातु मे रणमातङ्गी राकिनी कुलमण्डलम् ॥ ८४-३५॥

व्यक्ताव्यक्तस्वरूपा मे मूलाधारं सदाऽवतु।

चतुर्दलं चतुर्वर्णं पातु मे ज्ञानकुण्डली ॥ ८४-३६॥

तपस्विनी सदा पातु पावनी मूलमावतु।

रतिका घटिका वेश्या धरिणी कामसुन्दरी ॥ ८४-३७॥

वह्निकान्ता सदा पातु ममोरूयुगलं सदा।

उल्कामुखी क्षेत्रसिद्धा जङ्घायुग्मं सदाऽवतु ॥ ८४-३८॥

बालामुखी पातु सम्पत्प्रदा श्रीकुलभैरवी।

पादाम्बुजद्वयं पातु सर्वाङ्गं परहाकिनी ॥ ८४-३९॥

मदना मेदिनी धन्या चामुण्डा मुण्डमालिनी।

रमा कामकला ज्येष्ठा तथाज्ञा रतिसुन्दरी ॥ ८४-४०॥

मनोयोगा सदा पातु निर्मला विमलामला ।

काञ्चनी बगला रात्रिः पञ्चमी रतिसुन्दरी ॥ ८४-४१॥

सर्वत्र सर्वदा पातु योगाद्या प्रेमकातरा।

पर्वते विपिने शून्ये रणे घोरतरे भवे ॥ ८४-४२॥

श्मशानवासिनी पातु सर्ववाहनवाहना।

सर्वास्त्रधारिणी पातु पञ्चमी पञ्चमप्रिया ॥ ८४-४३॥

चतुर्भुजा सदा पातु हाकिनी देहदेवता।

सहस्रायुतकोटीन्दुवदना परमेश्वरी ॥ ८४-४४॥

योगिनीभिः सदा पातु सर्वदेशे तु सर्वदा।

अनन्ता सर्वदा पातु महाविघ्नविनाशिनी ॥ ८४-४५॥

जले चानलगर्ते वा व्याधिभीतौ रिपोर्भये।

व्याघ्रभीतौ चौरभीतौ महोन्मादभयादिषु ॥ ८४-४६॥

ग्रहभीतौ देवभीतौ दानवाद्रिभयेषु च।

अभया निर्भया भीतिहारिणी भयनाशिनी ॥ ८४-४७॥

महाभीमा भद्रकाली भैरवी मारकामला।

महाभूतेश्वरी माता जगद्धात्री सदाऽवतु ॥ ८४-४८॥

सर्वदेशे सर्वपीठे मातृका पातु नित्यशः।

इत्येतत् कवचं सर्वसिद्धिदं दुःखनाशनम् ॥ ८४-४९॥

कथितं तव यत्नेन महाकाल प्रभो  हर।

यः पठेत् प्रातरुत्थाय कवचं देवदुर्लभम् ॥ ८४-५०॥

स भवेत् कालजेताऽपि स देवो न तु मानुषः।

ध्यानात्मा साधकः श्रीमान् परमात्मा भवेत् स्वयम्॥ ८४-५१॥

आज्ञापद्मे स्थिरो भूत्वा नित्यो भवति निश्चितम्।

अकालमृत्युहरणं संसारार्णवतारणम् ॥ ८४-५२॥

कवचं देवदेवेश चानन्दसारमङ्गलम्।

यः पठेदतिभक्त्या च जीवन्मुक्तो भवेद् ध्रुवम् ॥ ८४-५३॥

चतुवीधा मुक्तिमाला तद्गले संस्थिरा ध्रुवम्।

भवन्ति योगमुख्यानां गुरुर्वेदान्तपारगः॥ ८४-५४॥

सर्वशास्त्रार्थवेत्ता स्याद् यामलार्थज्ञ ईश्वरः।

शान्तिं विद्यां प्रतिष्ठाञ्च निवृत्तिं प्राप्य निर्मलः॥ ८४-५५॥

योगात्मा चेश्वरत्वं हि प्राप्नोति नात्र संशयः।

कुजे वा शनिवारे वा संक्रान्त्यां रविवासरे ॥ ८४-५६॥

अमावास्यसु रिक्तायां धारयेत् कवचं शुभम्।

पुरुषो दक्षिणे हस्ते वामा वामभुजे तथा ॥ ८४-५७॥

सर्वसिद्धिमवाप्नोति यद्यन्मनसि वर्तते।

गोरोचनाकुङ्कुमेन चालक्तेन विलिख्य च ॥ ८४-५८॥

अवश्यं सिद्धिमाप्नोति हाकिनीयोगजापतः ॥ ८४-५९॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे भैरवीभैरवसंवादे

हाकिनीकवचं नाम चतुरशीतितमः पटलः॥ ८४॥

अथ पञ्चाशीतितमः पटलः

श्रीनन्दभैरवी उवाच

वरानने वरारोहे सर्वज्ञाननिदानदे ।

आनन्दहृदयोल्लासे परमानन्दवर्धीनि ॥ ८५-१॥

कथितं कवचं पुण्यं रहस्यं चातिदुर्लभम् ।

न चोक्तं ज्ञानगम्यं तु महाजालनिसेवितम् ॥ ८५-२॥

परनाथस्य कवचं सार्वज्ञज्ञानसिद्धिदम् ।

इदानीं वद मे यत्नादानन्दकुलभैरवी ॥ ८५-३॥

श्रीनन्दभैरवी उवाच

श्रूयतां योगिनीनाथ योगविद्यापते प्रभो ।

परनाथस्य कवचं ज्ञानगम्यं पुरातनम् ॥ ८५-४॥

अतिगोप्यं योगसारं सर्वतन्त्रेषु दुर्लभम् ।

इदानीं नाथ यत्नेन कथयामि परं पदम् ॥ ८५-५॥

अस्य श्रीपरनाथमहाकवचस्य सदाशिव ऋषिः परमात्मा देवता ह्सौः बीजं ज्ञानशक्तिरानन्दं

कीलकं सर्वाभीष्टसिद्ध्यर्थे विनियोगः।

ओङ्कारं वेदबीजं मे सदा पातु शिरोधनम्।

ह्सौः महाप्रेतराजः कपालं पातु सर्वदा॥ ८५-६॥

हाकिनीशः सहायाख्यः कामकेशगुणानि मे।

वाराणसीपुरः पातु भ्रूमध्यपरदेवता॥ ८५-७॥

षं रं शं वं सदा पातु हं क्षं पातु भुरवोर्दलम्।

बाणलिङ्गं सदा पातु भ्रूपद्मयुवती मम॥ ८५-८॥

कालानलः सदा पातु द्विदलस्थं परात्परम्।

भ्रूगह्वरं सदानन्दं पातु त्रिपुरभैरवः॥ ८५-९॥

अनाथलिङ्गः सर्वेशः पातु मे लोचनत्रयम्।

अभयो मङ्गलः पातु ध्रुवाख्ये लोलजिह्विकाम्॥ ८५-१०॥

पञ्चाननः सदा पातु वदनं कामसुन्दरः।

उन्मत्तभैरवेन्द्रोऽथ गण्डयुग्मं सदावतु॥ ८५-११॥

हिरण्याख्यः सदा पातु दन्ताग्रालिं श्मशानगः।

महादेवः सदा पातु महाकाशः श्रुती मम॥ ८५-१२॥

विकटाख्यो मञ्जुघोषः सदा पातु हनुस्थलम्।

प्रणवात्मा सदा पातु कण्ठं मे नीलकण्ठभृत्॥ ८५-१३॥

अपराजितः शुक्लवर्णः सदा पातु महामला।

गलदेशं महाकाशं त्रिपुरा परमेश्वरी॥ ८५-१४॥

मृत्युञ्जयश्च घोराख्यो विशुद्धं सर्वदाऽवतु।

स्वरानीश्वरसंयुक्तान् योगीशः सर्वदाऽवतु॥ ८५-१५॥

वामदेवः सदा पातु हृदयं परमेश्वरः।

ईश्वरः सर्वदा पातु परदेवः सदाशिवः॥ ८५-१६॥

अट्टहासः सदा पातु योगिनीकोटिभिः सह।

अकालचक्रः सर्वज्ञश्चावधूतेश्वरो भुजौ॥ ८५-१७॥

महाकालः सदा पातु भेरुण्डापतिरीश्वरः।

पार्श्वदेशं सदा पातु काकिनीपरवल्लभः॥ ८५-१८॥

अच्युतेशः सदा पातु कुक्षियुग्मं सदा मम।

अथर्वेशः सदानन्दः पातु पृष्ठं सुरेश्वरः॥ ८५-१९॥

तपिनीपतिरीशानो वीरभद्रो यतीश्वरः।

नाभिमण्डलमापातु ममोदरमुमापतिः॥ ८५-२०॥

घर्घरः पातु सततं रुद्रं राकिणिवल्लभम्।

जटाजूटधरः पातु रुद्राणीं रौद्रदेवताम्॥ ८५-२१॥

नितम्बं पातु योगेन्द्रः प्रभाद्यो मे कटिस्थलम्।

स्वाधिष्ठानं सदा पातु षड्दलान्तः प्रकाशकः॥ ८५-२२॥

अभयः सर्वदा पातु भर्गः पातु चतुर्दलम्।

तरुणीशः सदा पातु कुण्डलीं डाकिनीपदम्॥ ८५-२३॥

गुदरन्ध्रं सदा पातु पार्वतीपिरयवल्लभः।

यज्ञनाथः सदा पातु ऊरुयुग्मं स्वमन्त्रवित्॥ ८५-२४॥

जङ्घायुगं सदा पातु धर्मलक्ष्मीश्वरः प्रभुः।

महाकालः पातु पादतलयुग्मं महीश्वरः॥ ८५-२५॥

सर्वाङ्गं वरदः पातु वटुकः श्रीसदाशिवः।

महारुद्रः श्रीपतीशः सदा उग्रः प्रपातु माम्॥ ८५-२६॥

रणे द्यूते विवादे च शून्यागारे महाभये।

पाताले पर्वतेऽरण्ये पातु वाग्वादिनीश्वरः॥ ८५-२७॥

घण्टेश्वरः शङ्खनादो मुरारीशः प्रपातु माम्।

परमानन्ददः पातु हितार्थी पथि पातु माम्॥ ८५-२८॥

महाविद्यापतिः पातु प्रेतराजः प्रपातु माम्।

पुत्रं मित्रं कलत्रं मे बन्धुं स्वजनमेव च॥ ८५-२९॥

सर्वाधारः सदा पातु लिङ्गरूपी महेश्वरः।

परमात्मा सदा पातु गुह्यदेशस्थदेवताम्॥ ८५-३०॥

परिवारान्वितः पातु महाचन्द्रः सदाऽवतु।

मारणोच्चाटने स्तम्भे विद्वेषे पातु मोहनः॥ ८५-३१॥

मोहने द्रावणे स्थैर्ये वश्ये शान्तौ सदाशिवः।

परनाथो गुरुः पातु पारिजातवनाश्रयः॥ ८५-३२॥

सर्वभुक् कालरुद्रो मे सर्वत्र परिपातु माम्।

इत्येतत् कथितं सर्वसिद्धिदं कवचं शुभम्॥ ८५-३३॥

परनाथस्य देवस्य सार्वज्ञज्ञानसिद्धिदम्।

कवचं दुर्लभं लोके सर्वतन्त्रेषु गोपितम्॥ ८५-३४॥

यामले देवदेवेश प्रकाशितमहनीशम्।

यः पठेदेकवारं तु स रुद्रो नात्र संशयः॥ ८५-३५॥

कीतीश्रीकान्तिमेधायुर्बृंहितो भवति ध्रुवम्।

अस्य स्मरणमात्रेण राजत्वं योगिनां पतिः॥ ८५-३६॥

भवेत् कामक्रोधजेता मृत्युजेता महाकविः।

तस्यासाध्यं त्रिभुवने न किञ्चिदपि वर्तते॥ ८५-३७॥

यः कण्ठे मस्तके वापि धारयेत् कवचं शुभम्।

रक्तेन चन्दनेनापि कुङ्कुमेनापि वा लिखेत्॥ ८५-३८॥

स भवेद् वीरपुत्रश्च महापातककोटिहा।

अनायासेन देवेश योगसिद्धिमवाप्नुयात्॥ ८५-३९॥

शतमष्टोत्तरं जप्त्वा पुरश्चर्याफलं लभेत्॥ ८५-४०॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षट्चक्रप्रकाशे भैरवीभैरवसंवादे परशिवकवचपाठो नाम पञ्चाशीतितमः पटलः॥ ८५॥

अथ षडशीतितमः पटलः

श्रीनन्दभैरवी उवाच

आनन्दार्णवमध्यभावघटितश्रौतप्रवाहोज्ज्वले।

कान्ते दत्तसुशान्तिदे यमदमाह्लादैकशक्तिप्रभे।

स्नेहानन्दकटाक्षदिव्यकृपया शीघ्रं वदस्वाद्भुतं।

हाकिन्याः शुभनाम सुन्दरसहस्राष्टोत्तरं श्रीगुरोः॥ ८६-१॥

श्री आनन्दभैरवी उवाच

साक्षात्ते कथयामि नाथ सकलं पुण्यं पवित्रं गुरो।

नाम्नां शक्तिसहस्रनाम भविकं ज्ञानादि चाष्टोत्तरम्।

योगीन्द्रैर्जयकाङ्क्षिभिः प्रियकलाप्रेमाभिलाषाचीतैः।

सेव्यं पाठ्यमतीव गोप्यमखिले शीघ्रं पठस्व प्रभो॥ ८६-२॥

अस्य श्रीपरनाथमहाशक्तिहाकिनीपरमेश्वरीदेव्यष्टोत्तरसहस्रनाम्नः स्तोत्रस्य सदाशिव ऋषिः

गायत्रीच्छन्दः श्रीपरमेश्वरीहाकिनीमहाशक्तिर्देवता क्लीं।

बीजं स्वाहा शक्तिः सिद्धलक्ष्मीमूलकीलकं देहान्तर्गत--।

महाकायज्ञानसिद्ध्यर्थे जपे विनियोगः।

ओं हाकिनी वसुधा लक्ष्मी परमात्मकला परा।

परप्रिया परातीता परमा परमप्रिया॥ ८६-३॥

परेश्वरी परप्रेमा परब्रह्मस्वरूपिणी।

परन्तपा परानन्दा परनाथनिसेविनी॥ ८६-४॥

पराकाशस्थिता पारा परापारनिरूपिणी।

पराकाङ्क्षा पराशक्तिः पुरातनतनुः प्रभा॥ ८६-५॥

पञ्चाननप्रिया पूर्वा परदारा परादरा।

परदेशगता नाथा परमाह्लादवर्धीनी॥ ८६-६॥

पार्वती परकुलाख्या पराञ्जनसुलोचना।

परंब्रह्मप्रिया माया परंब्रह्मप्रकाशिनी॥ ८६-७॥

परंब्रह्मज्ञानगम्या परंब्रह्मेश्वरप्रिमया।

पूर्वातीता परातीता अपारमहिमस्थिता॥ ८६-८॥

अपारसागरोद्धारा अपारदुस्तरोद्धरा।

परानलशिखाकारा परभ्रूमध्यवासिनी॥ ८६-९॥

परश्रेष्ठा परक्षेत्रवासिनी परमालिनी।

पर्वतेश्वरकन्या च पराग्निकोटिसम्भवा॥ ८६-१०॥

परच्छाया परच्छत्रा परच्छिद्रविनिर्गता।

परदेवगतिः प्रेमा पञ्चचूडामणिप्रभा॥ ८६-११॥

पञ्चमी पशुनाथेशी त्रिपञ्चा पञ्चसुन्दरी।

पारिजातवनस्था च पारिजातस्रजप्रिया॥ ८६-१२॥

परापरविभेदा च परलोकविमुक्तिदा।

परतापानलाकारा परस्त्री परजापिनी॥ ८६-१३॥

परास्त्रधारिणी पूरवासिनी परमेश्वरी।

प्रेमोल्लासकरी प्रेमसन्तानभक्तिदायिनी॥ ८६-१४॥

परशब्दप्रिया पौरा परामर्षणकारिणी।

प्रसन्ना परयन्त्रस्था प्रसन्ना पद्ममालिनी॥ ८६-१५॥

प्रियंवदा परत्राप्ता परधान्यार्थवर्धिनी।

परभूमिरता पीता परकातरपूजिता॥ ८६-१६॥

परास्यवाक्यविनता पुरुषस्था पुरञ्जना।

प्रौढा मेयहरा प्रीतिवर्धनी प्रियवर्धिनी॥ ८६-१७॥

प्रपञ्चदुःखहन्त्री च प्रपञ्चसारनिर्गता।

पुराणनिर्गता पीना पीनस्तनभवोज्ज्वला॥ ८६-१८॥

पट्टवस्त्रपरीधाना पट्टसूत्रप्रचालिनी।

परद्रव्यप्रदा प्रीता परश्रद्धा परान्तरा॥ ८६-१९॥

पावनीया परक्षुब्धा परसारविनाशिनी।

परमेव निगूढार्थतत्त्वचिन्ताप्रकाशिनी॥ ८६-२०॥

प्रचुरार्थप्रदा पृथ्वी पद्मपत्रद्वयस्थिता।

प्रसन्नहृदयानन्दा प्रसन्नासनसंस्थिता॥ ८६-२१॥

प्रसन्नरत्नमालाढ्या प्रसन्नवनमालिनी।

प्रसन्नकरुणानन्दा प्रसन्नहृदयस्थिता॥ ८६-२२॥

पराभासरता पूर्वपश्चिमोत्तरदक्षिणा।

पवनस्था पानरता पवनाधारविग्रहा॥ ८६-२३॥

प्रभुप्रिया प्रभुरता प्रभुभक्तिप्रदायिनी।

परतृष्णावधीनी च प्रचया परजन्मदा॥ ८६-२४॥

परजन्मनिरस्ता च परसञ्चारकारिणी।

परजाता पारिजाता पवित्रा पुण्यवधीनी॥ ८६-२५॥

पापहर्त्री पापकोटिनाशिनी परमोक्षदा।

परमाणुरता सूक्ष्मा परमाणुविभञ्जिनी॥ ८६-२६॥

परमाणुस्थूलकरी परात्परतरा पथा।

पूषणः प्रियकर्त्री च पूषणा पोषणत्रया॥ ८६-२७॥

भूपपाला पाशहस्ता प्रचण्डा प्राणरक्षिणी।

पयःशिलाऽपूपभक्षा पीयूषपानतत्परा॥ ८६-२८॥

पीयूषतृप्तदेहा च पीयूषमथनक्रिया।

पीयूषसागरोद्भूता पीयूषस्निग्धदोहिनी॥ ८६-२९॥

पीयूषनिर्मलाकारा पीयूषघनविग्रहा।

प्राणापानसमानादिपवनस्तम्भनप्रिया॥ ८६-३०॥

पवनांशप्रभाकारा प्रेमोद्गतस्वभक्तिदा।

पाषाणतनुसंस्था च पाषाणचित्तविग्रहा॥ ८६-३१॥

पश्चिमानन्दनिरता पश्चिमा पश्चिमप्रिया।

प्रभाकारतनूग्रा च प्रभाकरमुखी प्रभा॥ ८६-३२॥

सुप्रभा प्रान्तरस्था च प्रेयत्वसाधनप्रिया।

अस्थिता पामसी पूर्वनाथपूजितपादुका॥ ८६-३३॥

पादुकामन्त्रसिद्धा च पादुकामन्त्रजापिनी।

पादुकामङ्गलस्था च पादुकाम्भोजराजिनी॥ ८६-३४॥

प्रभाभारुणकोटिस्था प्रचण्डसूर्यकोटिगा।

पालयन्ती त्रिलोकानां परमा परहाकिनी॥ ८६-३५॥

परावरानना प्रज्ञा प्रान्तरान्तःप्रसिद्धिदा।

पारिजातवनोन्मादा परमोन्मादरागिणी॥ ८६-३६॥

परमाह्लादमोदा च परमाकाशवाहिनी।

परमाकाशदेवी च प्रथात्रिपुरसुन्दरी॥ ८६-३७॥

प्रतिकूलकरी प्राणानुकूलपरिकारिणी।

प्राणरुद्रेश्वरप्रीता प्रचण्डगणनायिका॥ ८६-३८॥

पोष्ट्री पौत्रादिरक्षत्री पुण्ड्रका पञ्चचामरा।

परयोषा परप्राया परसन्तानरक्षका॥ ८६-३९॥

परयोगिरता पाशपशुपाशविमोहिनी।

पशुपाशप्रदा पूज्या प्रसादगुणदायिनी॥ ८६-४०॥

प्रह्लादस्था प्रफुल्लाब्जमुखी परमसुन्दरी।

परमाया परारामा पार्वणी पार्वणप्रिया॥ ८६-४१॥
प्रियङ्करी पूर्वमाता पालनाख्या परासरा।
पराशरसुभाग्यस्था परकान्तिनितम्बिनी॥ ८६-४२॥
परश्मशानगम्या च प्रियचन्द्रमुखीपला।
पलसानकरी प्लक्षा प्लवङ्गगणपूजिता॥ ८६-४३॥
प्लक्षस्था पल्लवस्था च पङ्केरुहमुखी पटा।
पटाकारस्थिता पाठ्या पवित्रलोकदायिनी॥ ८६-४४॥
पवित्रमन्त्रजाप्यस्था पवित्रस्थानवासिनी।
पवित्रालङ्कृताङ्गी च पवित्रदेहधारिणी॥ ८६-४५॥
त्रिपुरा परमैश्वर्यपूजिता सर्वपूजिता।
पललप्रियहृद्या च पलालचर्वणप्रिया॥ ८६-४६॥
परगोगणगोप्या च प्रभुस्त्रीरौद्रतैजसी।
प्रफुल्लाम्भोजवदना प्रफुल्लपद्ममालिनी॥ ८६-४७॥
पुष्पप्रिया पुष्पकुला कुलपुष्पप्रियाकुला।
पुष्पस्था पुष्पसङ्काशा पुष्पकोमलविग्रहा॥ ८६-४८॥
पौष्पी पानरता पुष्पमधुपानरता प्रचा।
प्रतीची प्रचयाह्लादो प्राचनाख्या च प्राञ्चिका॥ ८६-४९॥
परोदरे गुणानन्दा परौदार्यगुणप्रिया।
पारा कोटिध्वनिरता पद्मसूत्रप्रबोधिनी॥ ८६-५०॥
प्रियप्रबोधनिरता प्रचण्डनादमोहिनी।

पीवरा पीवरग्रन्थिप्रभेदा प्रलयापहा॥ ८६-५१॥

प्रलया प्रलयानन्दा प्रलयस्था प्रयोगिनी।

प्रयोगकुशला पक्षा पक्षभेदप्रकाशिनी॥ ८६-५२॥

एकपक्षा द्विपक्षा च पञ्चपक्षप्रसिद्धिदा।

पलाशकुसुमानन्दा पलाशपुष्पमालिनी॥ ८६-५३॥

पलाशपुष्पहोमस्था पलाशच्छदसंस्थिता।

पात्रपक्षा पीतवस्त्रा पीतवर्णप्रकाशिनी॥ ८६-५४॥

निपीतकालकूटी च पीतसंसारसागरा।

पद्मपत्रजलस्था च पद्मपत्रनिवासिनी॥ ८६-५५॥

पद्ममाला पापहरा पट्टाम्बरधरा परा।

परनिर्वाणदात्री च पराशा परशासना॥ ८६-५६॥

अप्रियविनिहन्त्री च परसंस्कारपालिनी।

प्रतिष्ठा पूजिता सिद्धा प्रसिद्धप्रभुवादिनी॥ ८६-५७॥

प्रयाससिद्धिदा क्षुब्धा प्रपञ्चगुणनाशिनी।

प्रणिपत्या प्राणिशिष्या प्रतिष्ठिततनूप्रिया॥ ८६-५८॥

अप्रतिष्ठा निहन्त्री च पादपद्मद्वयान्विता।

पादाम्बुजप्रेमभक्तिपूज्यप्राणप्रदायिनी॥ ८६-५९॥

पैशाची च प्रक्षपिता पितृश्रद्धा पितामही।

प्रपितामहपूज्या च पितृलोकस्वधापरा॥ ८६-६०॥

पुनर्भवा पुनर्जीवा पौनःपुन्यगतिस्थिता।

प्रधानबलिभक्षादिसुप्रिया प्रियसाक्षिणी॥ ८६-६१॥

पतङ्गकोटिजीवाख्या पावकस्था च पावनी।

परज्ञानार्थदात्री च परतन्त्रार्थसाधिनी॥ ८६-६२॥

प्रत्यग्ज्योतिः स्वरूपा च प्रथमाप्रथमारुणा।

प्रातःसन्ध्या पार्थसन्ध्या परसन्ध्यास्वरूपिणी॥ ८६-६३॥

प्रधानवरदा प्राणज्ञाननिर्णयकारिणी।

प्रभञ्जना प्राञ्जनेशी प्रयोगोद्रेककारिणी॥ ८६-६४॥

प्रफुल्लपददात्री च प्रसमाया पुरोदया।

पर्वतप्राणरक्षत्री पर्वताधारसाक्षिणी॥ ८६-६५॥

पर्वतप्राणशोभा च पर्वतच्छत्रकारिणी।

पर्वता ज्ञानहर्त्री च प्रलयोदयसाक्षिणी॥ ८६-६६॥

प्रारब्धजननी काली प्रद्युम्नजननी सुरा।

प्राक्सुरेश्वरपत्नी च परवीरकुलापहा॥ ८६-६७॥

परवीरनियन्त्री च परप्रणवमालिनी।

प्रणवेशी प्रणवगा प्रणवाद्याक्षरप्रिया॥ ८६-६८॥

प्रणवार्णजपप्रीता प्राणमृत्युञ्जयप्रदा।

प्रणवालङ्कृता व्यूढा पशुभक्षणतर्पणा॥ ८६-६९॥

पशुदोषहरा पाशुपतास्त्रकोटिधारिणी।

प्रवेशिनी प्रवेशाख्या पद्मपत्रत्रिलोचना॥ ८६-७०॥

पशुमांसासवानन्दा पशुकोटिबलिप्रिया।

पशुधर्मक्षया प्रार्या पशुतर्पणकारिणी॥ ८६-७१॥

पशुश्रद्धाकरी पूज्या पशुमुण्डसुमालिनी।

परवीरयोगशिक्षा परसिद्धान्तयोगिनी॥ ८६-७२॥

परशुक्रोधमुख्यास्त्रा परशुप्रलयप्रदा।

पद्मरागमालधरा पद्मरागासनस्थिता॥ ८६-७३॥

पद्मरागमणिश्रेणीहारालङ्कारशोभिता।

परमधूलिसौन्दर्यमञ्जीरपादुकाम्बुजा॥ ८६-७४॥

हर्त्री समस्तदुःखानां हिरण्यहारशोभिता।

हरिणाक्षी हरिस्था च हरा हारावती हिरा॥ ८६-७५॥

हारकुण्डलशोभाढ्या हारकेयूरमण्डिता।

हरणस्था हाकिनी च होमकर्मप्रकाशिनी॥ ८६-७६॥

हरिद्रा हरिपूज्या च हरमाला हरेश्वरी।

हरातीता हरसिद्धा ह्रींकारी हंसमालिनी॥ ८६-७७॥

हंसमन्त्रस्वरूपा च हंसमण्डलभेदिनी।

हंसः सोऽहं मणिकरा हंसराजोपरिस्थिता॥ ८६-७८॥

हीरकाभा हीरकसूकधारिणी हरमेखला।

हरकुण्डमेखला च होमदण्डसुमेखला॥ ८६-७९॥

हरधरप्रियानन्दा हलीशानी हरोदया।

हरपत्नी हररता संहारविग्रहोज्ज्वला॥ ८६-८०॥

संहारनिलया हाला ह्रींबीजप्रणवप्रिया।

हलक्षा हक्षवर्णस्था हाकिनी हरमोहिनी॥ ८६-८१॥

हाहा--हूहू--प्रियानन्दगायनप्रेमसुप्रिया।

हरभूतिप्रदा हारप्रिया हीरकमालिनी॥ ८६-८२॥

हीरकाभा हीरकस्था हराधारा हरस्थिता।

हालानिषेविता हिन्ता हिन्तालवनसिद्धिदा॥ ८६-८३॥

महामाया महारौद्री महादेवनिषेविता।

महानया महादेवी महासिद्धा महोदया॥ ८६-८४॥

महायोगा महाभद्रा महायोगेन्द्रतारिणी।

महादीपशिखाकारा महादीपप्रकाशिनी॥ ८६-८५॥

महादीपप्रकाशाख्या महाश्रद्धा महामतिः।

महामहीयसी मोहनाशिनी महती महा॥ ८६-८६॥

महाकालपूजिता च महाकालकुलेश्वरी।

महायोगीन्द्रजननी मोहसिद्धिप्रदायिनी॥ ८६-८७॥

आहुतिस्थाहुतिरता होतृवेदमनुप्रिया।

हैयङ्गबीजभोक्त्री च हैयङ्गबीजसुप्रिया॥ ८६-८८॥

हे सम्बोधनरूपा च हे हेतोः परमात्मजा।

हलनाथप्रिया देवी हिताहितविनाशिनी॥ ८६-८९॥

हन्त्री समस्तपापानां हलहेतुप्रदाप्रदा।

हलहेतुच्छलस्था च हिलिहिलिप्रयागिनी॥ ८६-९०॥

हुतासनमुखी शून्या हरिणी हरतन्त्रदा।

हठात्कारगतिप्रीता सुण्टकालङ्कृता इला॥ ८६-९१॥

हलायुधाद्यजननी हिल्लोला हेमबहीणी।

हैमी हिमसुता हेमपर्वतश्रृङ्गसंस्थिरा॥ ८६-९२॥

हरणाख्या हरिप्रेमवधीनी हरमोहिनी।

हरमाता हरप्रज्ञा हुङ्कारी हरपावनी॥ ८६-९३॥

हेरम्बजननी हट्टमध्यस्थलनिवासिनी।

हिमकुन्देन्दुधवला हिमपर्वतवासिनी॥ ८६-९४॥

होतृस्था हरहाला च हेलातीता अहर्गणा।

अहङ्कारा हेतुगर्ता हेतुस्था हितकारिणी॥ ८६-९५॥

हतभाग्यनिहन्त्री च हतासद्बुद्धिजीविका।

हेतुप्रिया महारात्री अहोराख्या हरोद्गमा॥ ८६-९६॥

अर्हणादिप्रिया चार्हा हाहाकारनिनादिनी।

हनुमत्कल्पसंस्थाना हनुमत्सिद्धिदायिनी॥ ८६-९७॥

हलाहलप्रियाघोरा महाभीमा हलायुधा।

हसौः बीजस्वरूपा च हसौं प्रेताख्यजापिनी॥ ८६-९८॥

आह्लादिनी इहानन्दा अर्घ्यक्रान्ता हरार्चना।

हरभीतिहराहःका बीजहःकामहक्षरा॥ ८६-९९॥

हेरम्बयोगसिद्धिस्था हेरम्बादिसुतप्रिया।

हननाख्या हेतुनाम्नी हठात् सिद्धिप्रयोगदा॥ ८६-१००॥

उमा महेश्वरी आद्या अनन्तानन्तशक्तिदा।

आधारार्हसुरक्षा च ईश्वरी उग्रतारिणी॥ ८६-१०१॥

उषेश्वरी उत्तमा च ऊर्ध्वपद्मविभेदिनी।

ऋद्धिसिद्धिप्रदा क्षुल्लाकाशबीजसुसिद्धिदा॥ ८६-१०२॥

तृतकस्थातृतकस्था तृस्वराखर्वबीजगा।

एरण्डपुष्पहोमाढ्या एश्वर्यदानतत्परा॥ ८६-१०३॥

ओड्रपुष्पप्रिया ओंकाराक्षरा औषधप्रिया।

अर्वणासारः अंशाख्या अःस्था च कपिला कला॥ ८६-१०४॥

कैलासस्था कामधेनुः खर्वा खेटकधारिणी।

खरपुष्पप्रिया खड्गधारिणी खरगामिनी॥ ८६-१०५॥

गभीरा गीतगायत्री गुर्वा गुरुतरा गया।

घनकोटिनादकरी घर्घरा घोरनादिनी॥ ८६-१०६॥

घनच्छाया चारुवर्णा चण्डिका चारुहासिनी।

चारुचन्द्रमुखी चारुचित्तभावार्थगामिनी॥ ८६-१०७॥

छत्राकिनी छलच्छिन्ना छागमांसविनोदिनी।

जयदा जीवी जन्या च जीमूतैरुपशोभिता॥ ८६-१०८॥

जयित्री जयमुण्डाली झङ्कारी झञ्झनादिका।

टङ्कारधारिणी टङ्कबाणकार्मुकधारिणी॥ ८६-१०९॥

ठकुराणी ठठङ्कारी डामरेशी च डिण्डिमा।

ढक्कानादप्रिया ढक्का तवमाला तलातला॥ ८६-११०॥

तिमिरा तारिणी तारा तरुणा तालसिद्धिदा।

तृप्ता च तैजसी चैव तुलनातलवासिनी॥ ८६-१११॥

तोषणा तौलिनी तैलगन्धामोदितदिङ्मुखी।

स्थूलप्रिया थकाराद्या स्थितिरूपा च संस्थिरा॥ ८६-११२॥

दक्षिणदेहनादाक्षा दक्षपत्नी च दक्षजा।

दारिद्र्यदोषहन्त्री च दारुणास्त्रविभञ्जिनी॥ ८६-११३॥

दंष्ट्रकरालवदनी दीर्घमात्रादलान्विता।

देवमाता देवसेना देवपूज्या दयादशा॥ ८६-११४॥

दीक्षादानप्रदा दैन्यहन्त्री दीर्घसुकुन्तला।

दनुजेन्द्रनिहन्त्री च दनुजारिविमर्दीनी॥ ८६-११५॥

देशपूज्या दायदात्री दशनास्त्रप्रधारिणी।

दासरक्षा देशरक्षा दिगम्बरदिगम्बरी॥ ८६-११६॥

दिक्प्रभापाटलव्याप्ता दरीगृहनिवासिनी।

दर्शनस्था दार्शनिका दत्तभार्या च दुर्गहा॥ ८६-११७॥

दुर्गा दीर्घमुखी दुःखनाशिनी दिविसंस्थिता।

धन्या धनप्रदा धारा धरणी धारिणी धरा॥ ८६-११८॥

धृतसौन्दर्यवदना धनदा धान्यवर्धीनी।

ध्यानप्राप्ता ध्यानगम्या ध्यानज्ञानप्रकाशिनी॥ ८६-११९॥

ध्येया धीरपूजिता च धूमेशी च धुरन्धरा।

धूमकेतुहरा धूमा ध्येया सर्वसुरेश्वरैः॥ ८६-१२०॥

धर्मार्थमोक्षदा धर्मचिन्ता धर्मप्रकाशिनी।

धूलिरूपा च धवला धवलच्छत्रधारिणी॥ ८६-१२१॥

धवलाम्बरधात्री च धवलासनसंस्थिता।

धवला हिमालयधरा धरणी साधनक्रिया॥ ८६-१२२॥

धवलेश्वरकन्या च धवलाध्वाधलामुखी।

धीरकन्या धर्मकन्या ध्रुवसिद्धिप्रदायिनी॥ ८६-१२३॥

ध्रुवानन्दा ध्रुवश्रद्धा ध्रुवसन्तोषवर्धीनी।

नारिकेलजलस्नाता नारिकेलफलासना॥ ८६-१२४॥

नारी नारायणीशाना नम्रपूजनसुप्रिया।

नरदेवरता नित्यगणगन्धर्वपूजिता॥ ८६-१२५॥

नरकविहारिणी चैव नरकान्तककारिणी।

नरक्षेत्रकलादेवी नवकोशनिवासिनी॥ ८६-१२६॥

नाक्षत्रविद्या नाक्षत्री नक्षत्रमण्डलस्थिता।

नृपोन्नाशकरी नारायणी नूपुरधारिणी॥ ८६-१२७॥

नृत्यगीतप्रियानीता नवीना नामशायिनी।

नौनूतनास्त्रधरा नित्या नवपुष्पवनस्थिता॥ ८६-१२८॥

नवपुष्पप्रेमरता नवचम्पकमालिनी।

नवरत्नहारमाला नवजाम्बूनदप्रभा॥ ८६-१२९॥

नमस्कारप्रिया निन्दा वादनादप्रणाशिनी।

पवनाक्षरमाला च पवनाक्षरमालिनी॥ ८६-१३०॥

परदोषभयङ्कारा प्रचरद्रूपसंस्थिता।

प्रस्फुटिताम्भोजमालाधारिणी प्रेमवासिनी॥ ८६-१३१॥

परमानन्दसप्तानहरी पृथुनितम्बिनी।

प्रवालमाला लोभाङ्गी पयोदा शतविग्रहा॥ ८६-१३२॥

पयोदकरुणाकारा पारम्पर्याप्रसादिनी।

प्रारम्भकर्मनिरता प्रारब्धभोगदायिनी॥ ८६-१३३॥

प्रेमसिद्धिकरी प्रेमधारा गङ्गाम्बुशोभिनी।

फेरुपुण्यवरानन्दा फेरुभोजनतोषणी॥ ८६-१३४॥

फलदा फलवर्धा च फलाह्लादविनोदिनी।

फणिमालाधरा देवी फणिहारादिशोभिनी॥ ८६-१३५॥

फणा फणीकारमुखी फणस्था फणिमण्डला।

सहस्त्रफणिसम्प्राप्ता फुल्लारविन्दमालिनी॥ ८६-१३६॥

वासुकी व्यासपूज्या च वासुदेवार्चनप्रिया।

वासुदेवकलावाच्या वाचकस्था वसुस्थिता॥ ८६-१३७॥

वज्रदण्डधराधारा विरदा वादसाधिनी।

वसन्तकालनिलया वसोर्द्धारा वसुन्धरा॥ ८६-१३८॥

वेपमानरक्षका च वपूरक्षा वृषासना।

विवस्वत्प्रेमकुशला विद्यावाद्यविनोदिनी॥ ८६-१३९॥

विधिविद्याप्रकाशा च विधिसिद्धान्तदायिनी।

विधिज्ञा वेदकुशला वेदवाक्यविवासिनी॥ ८६-१४०॥

बलदेवपूजिता च बालभावप्रपूजिता।

बाला वसुमती वेद्या वृद्धमाता बुधप्रिया॥ ८६-१४१॥

बृहस्पतिप्रिया वीरपूजिता बालचन्द्रिका।

विग्रहज्ञानरक्षा च व्याघ्रचर्मधरावरा॥ ८६-१४२॥

व्यथाबोधापहन्त्री च विसर्गमण्डलस्थिता।

बाणभूषापूजिता वनमाला विहायसी॥ ८६-१४३॥

वामदेवप्रिया वामपूजाजापपरायणा।

भद्रा भ्रमरवर्णा च भ्रामरी भ्रमरप्रभा॥ ८६-१४४॥

भालचन्द्रधरा भीमा भीमनेत्राभवाभवा।

भीममुखी भीमदेहा भीमविक्रमकारिणी॥ ८६-१४५॥

भीमश्रद्धा भीमपूज्या भीमाकारातिसुन्दरी।

भीमसङ्ग्रामजयदा भीमाद्या भीमभैरवी॥ ८६-१४६॥

भैरवेशी भैरवी च सदानन्दादिभैरवी।

सदानन्दभैरवी च भैरवेन्द्रप्रियङ्करी॥ ८६-१४७॥

भल्लास्त्रधारिणी भैमी भृगुवंशप्रकाशिनी।

भर्गपत्नी भर्गमाता भङ्गस्था भङ्गभक्षिणी॥ ८६-१४८॥

भक्षप्रिया भक्षरता भृकुण्डा भावभैरवी।

भावदा भवदा भावप्रभावा भावनाशिनी॥ ८६-१४९॥

भालसिन्दूरतिलका भाललोकसुकुण्डला।

भालमालालकाशोभा भासयन्ती भवार्णवा॥ ८६-१५०॥

भवभीतिहरा भालचन्द्रमण्डलवासिनी।

मद्भ्रमरनेत्राब्जसुन्दरी भीमसुन्दरी॥ ८६-१५१॥

भजनप्रियरूपा च भावभोजनसिद्धिदा।

भ्रूचन्द्रनिरता बिन्दुचक्रभ्रूपद्मभेदिनी॥ ८६-१५२॥

भवपाशहरा भीमभावकन्दनिवासिनी।

मनोयोगसिद्धिदात्री मानसी मनसो मही॥ ८६-१५३॥

महती मीनभक्षा च मीनचर्वणतत्परा।

मीनावतारनिरता मांसचर्वणतत्परा॥ ८६-१५४॥

मांसप्रिया मांससिद्धा सिद्धमांसविनोदिनी।

माया महावीरपूज्या मधुप्रेमदिगम्बरी॥ ८६-१५५॥

माधवी मदिरामध्या मधुमांसनिषेविता।

मीनमुद्राभक्षिणी च मीनमुद्राप्रतपीणी॥ ८६-१५६॥

मुद्रामैथुनसंतृप्ता मैथुनानन्दवधीनी।

मैथुनज्ञानमोक्षस्था महामहिषमदीनी॥ ८६-१५७॥

यज्ञश्रद्धा योगसिद्धा यत्नी यत्नप्रकाशिनी।

यशोदा यशसि प्रीता यौवनस्था यमापहा॥ ८६-१५८॥

रासश्रद्धातुरारामरमणीरमणप्रिया।

राज्यदा रजनीराजवल्लभा रामसुन्दरी॥ ८६-१५९॥

रतिश्चारतिरूपा च रुद्रलोकसरस्वती।

रुद्राणी रणचामुण्डा रघुवंशप्रकाशिनी॥ ८६-१६०॥

लक्ष्मीर्लीलावती लोका लावण्यकोटिसम्भवा।

लोकातीता लक्षणाख्या लिङ्गधारा लवङ्गदा॥ ८६-१६१॥

लवङ्गपुष्पनिरता लवङ्गतरुसंस्थिता।

लेलिहाना लयकरी लीलादेहप्रकाशिनी॥ ८६-१६२॥

लाक्षाशोभाधरा लङ्का रत्नमासवधारिणी।

लक्षजापसिद्धिकरी लक्षमन्त्रप्रकाशिनी॥ ८६-१६३॥

वशिनी वशकर्त्री च वश्यकर्मनिवासिनी।

वेशावेश्या वेशवेश्या वंशिनी वंशवर्धिनी॥ ८६-१६४॥

वंशमाया वज्रशब्दमोहिनी शब्दरूपिणी।

शिवा शिवमयी शिक्षा शशिचूडामणिप्रभा॥ ८६-१६५॥

शवयुग्मभीतिदा च शवयुग्मभयानका।

शवस्था शववक्षस्था शाब्दबोधप्रकाशिनी॥ ८६-१६६॥

षट्पद्मभेदिनी षट्का षट्कोणयन्त्रमध्यगा।

षट्चक्रसारदा सारा सारात्सारसरोरुहा॥ ८६-१६७॥

समनादिनिहन्त्री च सिद्धिदा संशयापहा।

संसारपूजिता धन्या सप्तमण्डलसाक्षिणी॥ ८६-१६८॥

सुन्दरी सुन्दरप्रीता सुन्दरानन्दवर्धिनी।

सुन्दरास्या सुनवस्त्री सौन्दर्यसिद्धिदायिनी॥ ८६-१६९॥

त्रिसुन्दरी सर्वरी च सर्वा त्रिपुरसुन्दरी।

श्यामला सर्वमाता च सख्यभावप्रिया स्वरा॥ ८६-१७०॥

साक्षात्कारस्थिता साक्षात्साक्षिणी सर्वसाक्षिणी।

हाकिनी शाकिनीमाता शाकिनी काकिनीप्रिया॥ ८६-१७१॥

हाकिनी लाकिनीमाता हाकिनी राकिणीप्रिया।

हाकिनी डाकिनीमाता हरा कुण्डलिनी हया॥ ८६-१७२॥

हयस्था हयतेजःस्था हसौंबीजप्रकाशिनी।

लवणाम्बुस्थिता लक्षग्रन्थिभेदनकारिणी॥ ८६-१७३॥

लक्षकोटिभास्कराभा लक्षब्रह्माण्डकारिणी।

क्षणदण्डपलाकारा क्षपाक्षोभविनाशिनी॥ ८६-१७४॥

क्षेत्रपालादिवटुकगणेशयोगिनीप्रिया।

क्षयरोगहरा क्षौणी क्षालनस्थाक्षरप्रिया॥ ८६-१७५॥

क्षाद्यस्वरान्तसिद्धिस्था क्षादिकान्तप्रकाशिनी।

क्षाराम्बुतिक्तनिकरा क्षितिदुःखविनाशिनी॥ ८६-१७६॥

क्षुन्निवृत्तिः क्षणज्ञानी वल्लभा क्षणभङ्गुरा।

इत्येतत् कथितं नाथ हाकिन्याः कुलशेखर॥ ८६-१७७॥

सहस्रनामयोगाङ्गमष्टोत्तरशतान्वितम्।

यः पठेन्नियतः श्रीमान् स योगी नात्र संशयः॥ ८६-१७८॥

अस्य स्मरणमात्रेण वीरो योगेश्वरो भवेत्।

अस्यापि च फलं वक्तुं कोटिवर्षशतैरपि॥ ८६-१७९॥

शक्यते नापि सहसा संक्षेपात् शृणु सत्फलम्।

आयुरारोग्यमाप्नोति विश्वासं श्रीगुरोः पदैः॥ ८६-१८०॥

सारसिद्धिकरं पुण्यं पवित्रं पापनाशनम्।

अत्यन्तदुःखदहनं सर्वसौभाग्यदायकम्॥ ८६-१८१॥

पठनात् सर्वदा योगसिद्धिमाप्नोति योगिराट्।

देहसिद्धिः काव्यसिद्धिर्ज्ञानसिद्धिर्भवेद् ध्रुवम्॥ ८६-१८२॥

वाचां सिद्धिः खड्गसिद्धिः खेचरत्वमवाप्नुयात्।

त्रैलोक्यवल्लभो योगी सर्वकामार्थसिद्धिभाक्॥ ८६-१८३॥

अप्रकाश्यं महारत्नं पठित्वा सिद्धिमाप्नुयात्।

अस्य प्रपठनेनापि भ्रूपद्मे चित्तमर्पयन्॥ ८६-१८४॥

यशोभाग्यमवाप्नोतिराजराजेश्वरो भवेत्।

डाकिनीसिद्धिमाप्नोति कुण्डलीवशमानयेत्॥ ८६-१८५॥

ध्यानात्मा साधकेन्द्रश्च यतिर्भूत्वा शुभे दिने।

ध्यानं कुर्यात् पद्ममध्यकर्णीकायां शिखालये॥ ८६-१८६॥

भ्रूमध्ये चक्रसारे च ध्यात्वा ध्यात्वा पठेद् यदि।

राकिणीसिद्धिमाप्नोति देवतादर्शनं लभेत्॥ ८६-१८७॥

भाग्यसिद्धिमवाप्नोति नित्यं प्रपठनाद्यतः।

साक्षात्सिद्धिमवाप्नोति शक्तियुक्तः पठेद्यदि॥ ८६-१८८॥

हिरण्याक्षी लाकिनीशा वशमाप्नोति धैर्यवान्।

रात्रिशेषे समुत्थाय पठेद् यदि शिवालये॥ ८६-१८९॥

पूजान्ते वा जपान्ते वा वारमेकं पठेद्यदि।

वीरसिद्धिमवाप्नोति काकिनीवशमानयेत्॥ ८६-१९०॥

रात्रिं व्याप्य पठेद्यस्तु शुद्धचेता जितेन्द्रियः।

शय्यायां चण्डिकागेहे मधुगेहेऽथवा पुनः॥ ८६-१९१॥

शाकिनीसिद्धिमाप्नोति सर्वदेशे च सर्वदा।

प्रभाते च समुत्थाय शुद्धात्मा पञ्चमे दिने॥ ८६-१९२॥

अमावास्यासु विज्ञायां श्रवणायां विशेषतः।

शुक्लपक्षे नवम्यां तु कृष्णपक्षेऽष्टमीदिने॥ ८६-१९३॥

भार्यायुक्तः पठेद्यस्तु वशमाप्नोति भूपतिम्।

एकाकी निर्जने देशे कामजेता महाबली॥ ८६-१९४॥

प्रपठेद् रात्रिशेषे च स भवेत् साधकोत्तमः।

कल्पद्रुमसमो दाता देवजेता न संशयः॥ ८६-१९५॥

शिवशक्तिमध्यभागे यन्त्रं संस्थाप्य यत्नतः।

प्रपठेत् साधकेन्द्रश्च सर्वज्ञाता स्थिराशयः॥ ८६-१९६॥

एकान्तनिर्जने रम्ये तपःसिद्धिफलोदये।

देशे स्थित्वा पठेद्यस्तु जीवन्मुक्ति फलं लभेत्॥ ८६-१९७॥

अकालेऽपि सकालेऽपि पठित्वा सिद्धिमाप्नुयात्।

त्रिकालं यस्तु पठति प्रान्तरे वा चतुष्पथे॥ ८६-१९८॥

योगिनीनां पतिः साक्षादायुर्वृद्धिदीने दिने।

वारमेकं पठेद्यस्तु मूर्खो वा पण्डितोऽपि वा॥ ८६-१९९॥

वाचामीशो भवेत् क्षिप्रं योगयुक्तो भवेद् ध्रुवम्।

सम्भावितो भवेदेकं वारपाठेन भैरव॥ ८६-२००॥

जित्वा कालमहामृत्युं देवीभक्तिमवाप्नुयात्।

पठित्वा वारमेकं तु यात्रां कुर्वन्ति ये जनाः॥ ८६-२०१॥

देवीदर्शनसिद्धिञ्च प्राप्तो योगमवाप्नुयात्।

प्रत्येकं नाममुच्चार्य यो यागमनुसञ्चरेत्॥ ८६-२०२॥

स भवेन्मम पुत्रो हि सर्वकामफलं लभेत्।

सर्वयज्ञफलं ज्ञानसिद्धिमाप्नोति योगिराट्॥ ८६-२०३॥

भूतले भूभृतांनाथो महासिद्धो महाकविः।

कण्ठे शीर्षे दक्षभुजे पुरुषो धारयेद्यदि॥ ८६-२०४॥

योषिद्वामभुजे धृत्वा सर्वसिद्धिमवाप्नुयात्।

गोरोचनाकुङ्कुमेन रक्तचन्दनकेन च॥ ८६-२०५॥

यावकैर्वा महेशानि लिखेन्मन्त्रं समाहितः।

आद्या देवी परप्राणसिद्धिमाप्नोति निश्चितम्॥ ८६-२०६॥

लिङ्गं पीठे पूर्णीमायां कृष्णचतुर्दशीदिने।

भौमवारे मध्यरात्रौ पठित्वा कामसिद्धिभाक्॥ ८६-२०७॥

किं न सिद्ध्यति भूखण्डे अजरामर एव सः।

रमणीकोटिभर्ता स्याद् वर्षद्वादशपाठतः॥ ८६-२०८॥

अष्टवर्षप्रपाठेन कायप्रवेशसिद्धिभाक्।

षड्वर्षमात्रपाठेन कुबेरसदृशो धनी॥ ८६-२०९॥

वारैकमात्रपाठेन वर्षे वर्षे दिने दिने।

स भवेत् पञ्चतत्त्वज्ञो तत्त्वज्ञानी न संशयः॥ ८६-२१०॥

सर्वपापविनिर्मुक्तो वसेत् कल्पत्रयं भुवि।

यः पठेत् सप्तधा नाथ सप्ताहनि दिने दिने॥ ८६-२११॥

रात्रौ वारत्रयं धीमान् पठित्वा खेचरो भवेत्।

अश्विनी शुक्लपक्षे च रोहिण्यसितपक्षके॥ ८६-२१२॥

अष्टम्यां हि नवम्यां तु पठेद् वारत्रयं निशि।

दिवसे वारमेकं तु स भवेत् पञ्चतत्त्ववित्॥ ८६-२१३॥

अनायासेन देवेश पञ्चामरादिसिद्धिभाक्।

खेचरीमेलनं तस्य नित्यं भवति निश्चितम्॥ ८६-२१४॥

स्वर्गे मर्त्ये च पाताले क्षणान्निःसरति ध्रुवम्।

अग्निस्तम्भं जलस्तम्भं वातस्तम्भं करोति सः॥ ८६-२१५॥

पञ्चतत्त्वक्रमेणैव श्मशाने यस्तु सम्पठेत्।

स भवेद् देवदेवेशः सिद्धान्तसारपण्डितः॥ ८६-२१६॥

शूकरासवसंयुक्तः कुलद्रव्येण वा पुनः।

बिल्वमूले पीठमूले विधानेन प्रपूजयेत्।

परेण परमा देवी तुष्टा भवति सिद्धिदा॥ ८६-२१७॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरण। षट्चक्रप्रकाशे

भैरवभैरवीसंवादे हाकिनीसहस्रनाम--। विन्यासो नाम षडशीतितमः पटलः॥ ८६॥

अथ सप्ताशीतितमः पटलः

श्रीनन्दभैरव उवाच

आनन्दभैरवि प्राणवल्लभे जगदीश्वरि।

तव प्रसादवाक्येन श्रुतं नामसहस्रकम्॥ ८७-१॥

हाकिन्याः कुलयोगिन्याः परमाद्भुतमङ्गलम्।

इदानीं श्रोतुमिच्छामि परनाथस्य वाञ्छितम्॥ ८७-२॥

सहस्रनामयोगाङ्गमष्टोत्तरसमाकुलम्।

भ्रूपद्मभेदनार्थाय हाकिनीयोगसिद्धये॥ ८७-३॥

परनाथस्य योगाधिसिद्धये कुलभैरवि।

कृपया वद मे प्रीता धर्मसिद्धिनिबन्धनात्॥ ८७-४॥

मम देहरक्षणाय पातिव्रात्यप्रसिद्धये।

महाविषहरे शीघ्रं वद योगिनि विस्तरात्॥ ८७-५॥

त्वत्प्रसादात् खेचराणां भैरवाणां हि योगिनाम्।

नाथोऽहं जगतीखण्डे सुधाखण्डे वद प्रिये॥ ८७-६॥

पुनः पुनः स्तौमि नित्ये त्वमेव सुप्रिया भव।

श्रीनन्दभैरवी उवाच

अथ योगेश्वर प्राणनाथ योगेन्द्र सिद्धिद॥ ८७-७॥

इदानीं कथये तेऽहं निजदेहसुसिद्धये।

सर्वदा हि पठस्व त्वं कालमृत्युं वशं नय॥ ८७-८॥

कृपया तव नाथस्य स्नेहपाशनियन्त्रिता।

तवाज्ञापालनार्थाय कालकूटविनाशनात्॥ ८७-९॥

भुक्तिमुक्तिक्रियाभक्तिसिद्धये तच्छृणु प्रभो।

नित्यामृतखण्डरसोल्लासनामसहस्रकम्॥ ८७-१०॥

अष्टोत्तरं प्रयत्नेन योगिनां हि हिताय च।

कथयामि सिद्धनामज्ञाननिर्णयसाधनम्॥ ८७-११॥

ओं ह्सौ सां परेशश्च पराशक्तिः प्रियेश्वरः ।

शिवः परः पारिभद्रः परेशो निर्मलोऽद्वयः॥ ८७-१२॥

स्वयंज्योतिरनाद्यन्तो निर्विकारः परात्परः।

परमात्मा पराकाशोऽपरोऽप्यपराजितः॥ ८७-१३॥

पार्वतीवल्लभः श्रीमान् दीनबन्धुस्त्रिलोचनः।

योगात्मा योगदः सिद्धेश्वरो वीरः स्वरान्तकः॥ ८७-१४॥

कपिलेशो गुरुर्गीतः स्वप्रियो गीतमोहनः।

गभीरो गाधनस्थश्च गीतवाद्यप्रियङ्करः॥ ८७-१५॥

गुरुगीतापवित्रश्च गानसम्मानतोज्झितः।

गयानाथो दत्तनाथो दत्तात्रेयपतिः शिवः॥ ८७-१६॥

आकाशवाहको नीलो नीलाञ्जनशरीरधृक्।

खगरूपी खेचरश्च गगनात्मा गभीरगः॥ ८७-१७॥

गोकोटिदानकर्त्ता च गोकोटिदुग्धभोजनः।

अभयावल्लभः श्रीमान् परमात्मा निराकृतिः॥ ८७-१८॥

सङ्ख्याधारी निराकारी निराकरणवल्लभः।

वाय्वाहारी वायुरूपी वायुगन्ता स्ववायुपाः॥ ८७-१९॥

वातघ्नो वातसम्पत्तिर्वाताजीर्णो वसन्तवित्।

वासनीशो व्यासनाथो नारदादिमुनीश्वरः॥ ८७-२०॥

नारायणप्रियानन्दो नारायणनिराकृतिः।

नावमालो नावकर्ता नावसंज्ञानधारकः॥ ८७-२१॥

जलाधारो ज्ञेय इन्द्रो निरिन्द्रियगुणोदयः।

तेजोरूपी चण्डभीमो तेजोमालाधरः कुलः॥ ८७-२२॥

कुलतेजा कुलानन्दः शोभाढ्यो वेदरश्मिधृक्।

किरणात्मा कारणात्मा कल्पच्छायापतिः शशी॥ ८७-२३॥

परज्ञानी परानन्ददायको धर्मजित्प्रभुः।

त्रिलोचनाम्भोजराजो दीर्घनेत्रो मनोहरः॥ ८७-२४॥

चामुण्डेशः प्रचण्डेशः पारिभद्रेश्वरो हरः।

गोपिता मोहितो गोप्ता गुप्तिस्थो गोपपूजितः॥ ८७-२५॥

गोपनाख्यो गोधनेशश्च चारुवक्रो दिगम्बरः।

पञ्चाननः पञ्चमीशो विशालो गरुडेश्वरः॥ ८७-२६॥

अर्धनारीश्वरेशश्च नायिकेशः कुलान्तकः।

संहारविग्रहः प्रेतभूतकोटिपरायणः॥ ८७-२७॥

अनन्तेशोऽप्यनन्तात्मा मणिचूडो विभावसुः।

कालानलः कालरूपी वेदधर्मेश्वरः कविः॥ ८७-२८॥

भर्गः स्मरहरः शम्भुः स्वयम्भुः पीतकुण्डलः।

जायापतिर्याजजूको विलाशीशः शिखापतिः॥ ८७-२९॥

पर्वतेशः पार्वणाख्यः क्षेत्रपालो महीश्वरः।

वाराणसीपतिर्मान्यो धन्यो वृषसुवाहनः॥ ८७-३०॥

अमृतानन्दितो मुग्धो वनमालीश्वरः प्रियः।

काशीपतिः प्राणपतिः कालकण्ठो महेश्वरः॥ ८७-३१॥

कम्बुकण्ठः क्रान्तिवर्गो वर्गात्मा जलशासनः।

जलबुद्बुदवक्षश्च जलरेखामयः पृथुः॥ ८७-३२॥

पार्थीवेशो महीकर्ता पृथिवीपरिपालकः।

भूमिस्थो भूमिपूज्यश्च क्षौणीवृन्दारकार्चीतः॥ ८७-३३॥

शूलपाणिः शक्तिहस्तो पद्मगर्भो हिरण्यभृत्।

भूगर्तसंस्थितो योगी योगसम्भवविग्रहः॥ ८७-३४॥

पातालमूलकर्ता च पातालकुलपालकः।

पातालनागमालाढ्यो दानकर्ता निराकुलः॥ ८७-३५॥

भ्रूणहन्ता पापराधिनागकः कालनागकः।

कपिलोग्रतपःप्रीतो लोकोपकारकृन्नृपः॥ ८७-३६॥

नृपार्चीतो नृपार्थस्थो नृपार्थकोटिदायकः।

पार्थीवार्चनसन्तुष्टो महावेगी परेश्वरः॥ ८७-३७॥

परापारापारतरो महातरुनिवासकः।

तरुमूलस्थितो रुद्रो रुद्रनामफलोदयः॥ ८७-३८॥

रौद्रीशक्तिपतिः क्रोधी कोपनष्टो विरोचनः।

असंख्येयाख्ययुक्तश्च परिणामविवजीतः॥ ८७-३९॥

प्रतापी पवनाधारः प्रशंस्यः सर्वनिर्णयः।

वेदजापी मन्त्रजापी देवता गुरुरीश्वरः॥ ८७-४०॥

श्रीनाथो गुरुदेवश्च परनाथो गुरुः प्रभुः।

परापरगुरुर्ज्ञानी तन्त्रज्ञोऽर्कशतप्रभाः॥ ८७-४१॥

तीक्ष्यौं गमनकारी च कालभावी निरञ्जनः।

कालकूटानलः श्रोतः पुञ्जपानपरायणः॥ ८७-४२॥

परिवारगणाढ्यश्च पाराशाषिसुतस्थितः।

स्थितिस्थापकरूपश्च रूपातीतोऽमलापतिः॥ ८७-४३॥

पतीशो भागुरिश्चैव कालश्चैव हरिस्तथा।

वैष्णवः प्रेमसिन्धुश्च तरलो वातवित्तहा॥ ८७-४४॥

भावस्वरूपो भगवान् निराकाशः सनातनः।

अव्ययः पुरुषः साक्षी चाच्युतो मन्दराश्रयः॥ ८७-४५॥

मन्दराद्रिक्रियानन्दो वृन्दावनतनूद्भवः।

वाच्यावाच्यस्वरूपश्च निर्मलाख्यो विवादहा॥ ८७-४६॥

वैद्यो वेदपरो ग्रन्थो वेदशास्त्रप्रकाशकः।

स्मृतिमूलो वेदयुक्तिः प्रत्यक्षकुलदेवता॥ ८७-४७॥

परीक्षको वारणाख्यो महाशैलनिषेवितः।

विरिञ्चप्रेमदाता च जन्योल्लासकरः प्रियः॥ ८७-४८॥

प्रयागधारी पयोऽर्थी गाङ्गागङ्गाधरः स्मरः।

गङ्गाबुद्धिप्रियो देवो गङ्गास्नाननिषेवितः॥ ८७-४९॥

गङ्गासलिलसंस्थो हि गङ्गाप्रत्यक्षसाधकः।

गिरो गङ्गामणिमरो मल्लिकामालधारकः॥ ८७-५०॥

मल्लिकागन्धसुप्रेमो मल्लिकापुष्पधारकः।

महाद्रुमो महावीरो महाशूरो महोरगः॥ ८७-५१॥

महातुष्टिर्महापुष्टिर्महालक्ष्मीशुभङ्करः।

महाश्रमी महाध्यानी महाचण्डेश्वरो महान्॥ ८७-५२॥

महादेवो महाह्लादो महाबुद्धिप्रकाशकः।

महाभक्तो महाशक्तो महाधूर्तो महामतिः॥ ८७-५३॥

महाच्छत्रधरो धारोधरकोटिगतप्रभा।

अद्वैतानन्दवादी च मुक्तो भङ्गप्रियोऽप्रियः॥ ८७-५४॥

अतिगन्धश्चातिमात्रो निणीतान्तः परन्तपः।

निणीतोऽनिलधारी च सूक्ष्मानिलनिरूपकः॥ ८७-५५॥

महाभयङ्करो गोलो महाविवेकभूषणः।

सुधानन्दः पीठसंस्थो हिङ्गुलादेश्वरः सुरः॥ ८७-५६॥

नरो नागपतिः क्रूरो भक्तानां कामदः प्रभुः।

नागमालाधरो धर्मी नित्यकर्मी कुलीनकृत्॥ ८७-५७॥

शिशुपालेश्वरः कीतीविकारी लिङ्गधारकः।

तृप्तानन्दो हृषीकेशेश्वरः पाञ्चालवल्लभः॥ ८७-५८॥

अक्रूरेशः पतिः प्रीतिवर्धको लोकवर्धकः।

अतिपूज्यो वामदेवो दारुणो रतिसुन्दरः॥ ८७-५९॥

महाकालः प्रियाह्लादी विनोदी पञ्चचूडधृक्।

आद्याशक्तिपतिः पान्तो विभाधारी प्रभाकरः॥ ८७-६०॥

अनायासगतिर्बुद्धिप्रफुल्लो नन्दिपूजितः।

शिलामूर्तीस्थितो रत्नमालामण्डितविग्रहः॥ ८७-६१॥

बुधश्रीदो बुधानन्दो विबुधो बोधवर्धनः।

अघोरः कालहर्ता च निष्कलङ्को निराश्रयः॥ ८७-६२॥

पीठशक्तिपतिः प्रेमधारको मोहकारकः।

असमो विसमो भावोऽभावो भावो निरिन्द्रियः॥ ८७-६३॥

निरालोको बिलानन्दो बिलस्थो विषभुक्पतिः।

दुर्गापतिर्दुर्गहर्ता दीर्घसिद्धान्तपूजितः॥ ८७-६४॥

सर्वो दुर्गपतिर्वीप्रो विप्रपूजापरायणः।

ब्राह्मणानन्दनिरतो ब्रह्मकर्मसमाधिवित्॥ ८७-६५॥

विश्वात्मा विश्वभर्ता च विश्वविज्ञानपूरकः।

विश्वान्तःकरणस्थश्च विश्वसंज्ञाप्रतिष्ठितः॥ ८७-६६॥

विश्वाधारो विश्वपूज्यो विश्वस्थोऽचीत इन्द्रहा।

अलाबुभक्षणः क्षान्तिरक्षो रक्षनिवारणः॥ ८७-६७॥

तितिक्षारहितो हूतिः पुरुहूतप्रियङ्करः।

पुरुषः पुरुषश्रेष्ठो विलालस्थः कुलालहा॥ ८७-६८॥

कुटिलस्थो विधिप्राणो विषयानन्दपारगः।

ब्रह्मज्ञानप्रदो ब्रह्मज्ञानी ब्रह्मगुणान्तरः॥ ८७-६९॥

पालकेशो विराजश्च वज्रदण्डो महास्त्रधृक्।

सर्वास्त्ररक्षकः श्रीदो विधिबुद्धिप्रपूरणः॥ ८७-७०॥

आर्यापुत्रो देवराजपूजितो मुनिपूजितः।

गन्धर्वपूजितः पूज्यो दानवज्ञाननाशनः॥ ८७-७१॥

अप्सरोगणपूज्यश्च मर्त्यलोकसुपूजितः।

मृत्युजिद्रिपुजित् प्लक्षो मृत्युञ्जय इषुप्रियः॥ ८७-७२॥

त्रिबीजात्मा नीलकण्ठः क्षितीशो रोगनाशनः।

जितारिः प्रेमसेव्यश्च भक्तिगम्यो निरुद्यमः॥ ८७-७३॥

निरीहो निरयाह्लादः कुमारो रिपुपूजितः।

अजो देवात्मजो धर्मोऽसन्तो मन्दमासनः॥ ८७-७४॥

मन्दहासो मन्दनष्टो मन्दगन्धसुवासितः।

माणिक्यहारनिलयो मुक्ताहारविभूषितः॥ ८७-७५॥

मुक्तिदो भक्तिदश्चैव निर्वाणपददानदः।

निवीकल्पो मोदधारी निरातङ्को महाजनः॥ ८७-७६॥

मुक्ताविद्रुममालाढ्यो मुक्तादामलसत्कटिः॥ ८७-७७॥

रत्नेश्वरो धनेशश्च धनेशप्राणवल्लभः।

धनजीवी कर्मजीवी संहारविग्रहोज्ज्वलः॥ ८७-७८॥

संङ्केतार्थज्ञानशून्यो महासङ्केतपण्डितः।

सुपण्डितः क्षेमदाता भवदाता भवान्वयः॥ ८७-७९॥

किङ्करेशो विधाता च विधातुः प्रियवल्लभः।

कर्ता हर्ता कारयिता योजनायोजनाश्रयः॥ ८७-८०॥

युक्तो योगपतिः श्रद्धापालको भूतशङ्करः।

भूताध्यक्षो भूतनाथो भूतपालनतत्परः॥ ८७-८१॥

विभूतिदाता भूतिश्च महाभूतिविवर्धनः।

महालक्ष्मीश्वरः कान्तः कमनीयः कलाधरः॥ ८७-८२॥

कमलाकान्त ईशानो यमोऽमरो मनोजवः।

मनयोगी मानयोगी मानभङ्गो निरूपणः॥ ८७-८३॥

अव्यक्तानन्दनिरतो व्यक्ताव्यक्तनिरूपितः।

आत्मारामपतिः कृष्णपालको रामपालकः॥ ८७-८४॥

लक्षणेशो लक्षभर्ता भावतीशः प्रजाभवः।

भरताख्यो भारतश्च शत्रुघ्नो हनुमान् कपिः॥ ८७-८५॥

कपिचूडामणिः क्षेत्रपालेशो दिक्करान्तरः।

दिशांपतिर्दीशीशश्च दिक्पालो हि दिगम्बरः॥ ८७-८६॥

अनन्तरत्नचूडाढ्यो नानारत्नासनस्थितः।

संविदानन्दनिरतो विजयो विजयात्मजः॥ ८७-८७॥

जयाजयविचारश्च भावचूडामणीश्वरः।

मुण्डमालाधरस्तन्त्री सारतन्त्रप्रचारकः॥ ८७-८८॥

संसाररक्षकः प्राणी पञ्चप्राणो महाशयः।

गरुडध्वजपूज्यश्च गरुडध्वजविग्रहः॥ ८७-८९॥

गारुडीशो मन्त्रिणीशो मैत्रप्राणहिताकरः।

सिद्धिमित्रो मित्रदेवो जगन्नाथो नरेश्वरः॥ ८७-९०॥

नरेन्द्रेश्वरभावस्थो विद्याभावप्रचारवित्।

कालाग्निरुद्रो भगवान् प्रचण्डेश्वरभूपतिः॥ ८७-९१॥

अलक्ष्मीहारकः क्रुद्धो रिपूणां क्षयकारकः।

सदानन्दमयो वृद्धो धर्मसाक्षी सुधांशुधृक्॥ ८७-९२॥

साक्षरो रिपुवर्गस्थो दैत्यहा मुण्डधारकः।

कपाली रुण्डमालाढ्यो महाबीजप्रकाशकः॥ ८७-९३॥

अजेयोग्रपतिः स्वाहावल्लभो हेतुवल्लभः।

हेतुप्रियानन्ददाता हेतुबीजप्रकाशकः॥ ८७-९४॥

श्रुतिक्षिप्रमणिरतो ब्रह्मसूत्रप्रबोधकः।

ब्रह्मानन्दो जयानन्दो विजयानन्द एव च॥ ८७-९५॥

सुधानन्दो बुधानन्दो विद्यानन्दो बलीपतिः।

ज्ञानानन्दो विभानन्दो भावानन्दो नृपासनः॥ ८७-९६॥

सर्वासनोग्रानन्दश्च जगदानन्ददायकः।

पूर्णानन्दो भवानन्दो ह्यमृतानन्द एव च॥ ८७-९७॥

शीतलोऽशीतिवर्षस्थो व्यवस्थापरिचायकः।

शीलाढ्यश्च सुशीलश्च शीलानन्दो पराश्रयः॥ ८७-९८॥

सुलभो मधुरानन्दो मधुरामोदमादनः।

अभेद्यो मूत्रसञ्चारी कलहाख्यो विषङ्कटः॥ ८७-९९॥

वाशभाढ्यः परानन्दो विसमानन्द उल्बणः।

अधिपो वारुणीमत्तो मत्तगन्धर्वशासनः॥ ८७-१००॥

शतकोटिशरुश्रीदो वीरकोटिसमप्रभः।

अजाविभावरीनाथो विषमापूष्णिपूजितः॥ ८७-१०१॥

विद्यापतिर्वेदपतिरप्रमेयपराक्रमः।

रक्षोपतिर्महावीरपतिः प्रेमोपकारकः॥ ८७-१०२॥

वारणाविप्रियानन्दो वारणेशो विभुस्थितः।

रणचण्डो रशेशश्च रणरामप्रियः प्रभुः॥ ८७-१०३॥

रणनाथी रणाह्लादः संग्रामप्रेतविग्रहः।

देवीभक्तो देवदेवो दिवि दारुणतत्परः॥ ८७-१०४॥

खड्गी च कवची सिद्धः शूली धूलिस्त्रिशूलधृक्।

धनुष्मान् धर्मचित्तेशोऽचिन्ननागसुमाल्यधृक्॥ ८७-१०५॥

अर्थोऽनर्थप्रियोऽप्रायो मलातीतोऽतिसुन्दरः।

काञ्चनाढ्यो हेममाली काञ्चनश्रृङ्गशासनः॥ ८७-१०६॥

कन्दर्पजेता पुरुषः कपित्थेशोऽर्कशेखरः।

पद्मगन्धोऽतिसद्गन्धश्चन्द्रशेखरभृत् सुखी॥ ८७-१०७॥

पवित्राधारनिलयो विद्यावद्वरबीजभृत्।

कन्दर्पसदृशाकारो मायाजिद् व्याघ्रचर्मधृक्॥ ८७-१०८॥

अतिसौन्दर्यचूडाढ्यो नागचित्रमणिप्रियः।

अतिगण्डः कुम्भकर्णः कुरुजेता कवीश्वरः॥ ८७-१०९॥

एकमुखो द्वितुण्डश्च द्विविधो वेदशासनः।

आत्माश्रयो गुरुमयो गुरुमन्त्रप्रदायकः॥ ८७-११०॥

शौरीनाथो ज्ञानमार्गी सिद्धमार्गी प्रचण्डगः।

नामगः क्षेत्रगः क्षेत्रो गगनग्रन्थिभेदकः॥ ८७-१११॥

गाणपत्यवसाच्छन्नो गाणपत्यवसादवः।

गम्भीरोऽतिसुसूक्ष्मश्च गीतवाद्यप्रियंवदः॥ ८७-११२॥

आह्लादोद्रेककारी च सदाह्लादी मनोगतिः।

शिवशक्तिप्रियः श्यामवर्णः परमबान्धवः॥ ८७-११३॥

अतिथिप्रियकरो नित्यो गोविन्देशो हरीश्वरः।

सर्वेशो भाविनीनाथो विद्यागर्भो विभाण्डकः॥ ८७-११४॥

ब्रह्माण्डरूपकर्ता च ब्रह्माण्डधर्मधारकः।

धर्मार्णवो धर्ममार्गी धर्मचिन्तासुसिद्धिदः॥ ८७-११५॥

अस्थास्थितो ह्यास्तिकश्च स्वस्तिस्वच्छन्दवाचकः ।

अन्नरूपी अन्नकस्थो मानदाता महामनाः॥ ८७-११६॥

आद्याशक्तिप्रभुर्मातृवर्णजालप्रचारकः।

मातृकामन्त्रपूज्यश्च मातृकामन्त्रसिद्धिदः॥ ८७-११७॥

मातृप्रियो मातृपूज्यो मातृकामण्डलेश्वरः।

भ्रान्तिहन्ता भ्रान्तिदाता भ्रान्तस्थो भ्रान्तिवल्लभः॥ ८७-११८॥

इत्येतत् कथितं नाथ सहस्रनाममङ्गलम्।

अष्टोत्तरं महापुण्यं स्वर्गीयं भुवि दुर्लभम्॥ ८७-११९॥

यस्य श्रवणमात्रेण नरो नारायणो भवेत्।

अप्रकाश्यं महागुह्यं देवानामप्यगोचरम्॥ ८७-१२०॥

फलं कोटिवर्षशतैर्वक्तुं न शक्यते बुधैः।

यस्य स्मरणमाकृत्य योगिनीयोगपारगः॥ ८७-१२१॥

सोक्षणः सर्वसिद्धीनां त्रैलोक्ये सचराचरे।

देवाश्च बहवः सन्ति योगिनस्तत्त्वचिन्तकाः॥ ८७-१२२॥

पठनाद्धारणाज्ज्ञानी महापातकनाशकः।

आयुरारोग्यसम्पत्तिबृंहितो भवति ध्रुवम्॥ ८७-१२३॥

संग्रामे ग्रहभीतौ च महारण्ये जले भये।

वारमेकं पठेद्यस्तु स भवेद् देववल्लभः॥ ८७-१२४॥

सर्वेषां मानसम्भङ्गी योगिराड् भवति क्षणात्।

पूजां कृत्वा विशेषेण यः पठेन्नियतः शुचिः॥ ८७-१२५॥

स सर्वलोकनाथः स्यात् परमानन्दमाप्नुयात्।

एकपीठे जपेद्यस्तु कामरूपे विशेषतः॥ ८७-१२६॥

त्रिकालं वाथ षट्कालं पठित्वा योगिराड् भवेत्।

आकाशगामिनीं सिद्धिं गुटिकासिद्धिमेव च॥ ८७-१२७॥

प्राप्नोति साधकेन्द्रस्तु राजत्वं हि दिने दिने।

सर्वदा यः पठेन्नित्यं सर्वज्ञः सुकुशाग्रधीः॥ ८७-१२८॥

अवश्यं योगिनां श्रेष्ठः कामजेता महीतले।

अज्ञानी ज्ञानवान् सद्योऽधनी च धनवान् भवेत्॥ ८७-१२९॥

सर्वदा राजसम्मानं पञ्चत्वं नास्ति तस्य हि।

गले दक्षिणबाहौ च धारयेद्यस्तु भक्तितः॥ ८७-१३०॥

अचिरात्तस्य सिद्धिः स्यान्नात्र कार्या विचारणा।

अवधूतेश्वरो भूत्त्वा राजते नात्र संशयः॥ ८७-१३१॥

अरक्तचन्दनयुक्तेन हरिद्राकुङ्कुमेन च।

सेफालिकापुष्पदण्डैर्दलसङ्कुलवजीतैः॥ ८७-१३२॥

मिलित्वा यो लिखेत् स्तोत्रं केवलं चन्दनाम्भसा।

स भवेत् पार्वतीपुत्रः क्षणाद्वा द्वादशाहनि॥ ८७-१३३॥

एकमासं द्विमासं वा त्रिमासं वर्षमेव च।

जीवन्मुक्तो धारयित्वा सहस्रनामकीर्तनम्॥ ८७-१३४॥

पठित्वा तद्विगुणशः पुण्यं कोटिगुणं लभेत्।

किमन्यं कथयिष्यामि सार्वभौमेश्वरो भवेत्॥ ८७-१३५॥

त्रिभुवनगणनाथो योगिनीशो धनाढ्यो।

मतिसुविमलभावो दीर्घकालं वसेत् सः ।

इह पठति भवानीवल्लभः स्तोत्रसारं।

दशशतमभिधेयं ज्ञानमष्टोत्तरं च॥ ८७-१३६।

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षट्चक्रप्रकाशे भ्रूपद्मभेदविन्यासे भैरवीभैरवसंवादे परशिवहाकिनीश्वराष्टोत्तर--। सहस्रनामपाठे

सप्ताशीतितमः पटलः॥ ८७॥

## अथाष्टाशीतितमः पटलः

श्रीनन्दभैरवी उवाच

श्रृणुष्व परमेश त्वं दुर्लभं योगिमण्डले ।

महायोगज्ञानसारं त्रैलोक्यमङ्गलं शुभम्॥ ८८-१॥

यस्य विज्ञानमात्रेण साधकोऽसाधकोऽपि वा।

मृत्युञ्जयो भवेज्ज्ञानी परमानन्दरूपभाक्॥ ८८-२॥

होमस्थानं शिखामध्ये दीपस्य भ्रूदलान्तरे।

परब्रह्मस्वरूपां तां शिखारूपां जगत्प्रियाम्॥ ८८-३॥

स्वाहाशक्तिं तत्र नाथ विचिन्त्य मनसा सुधीः ।

यः स्तुत्वा प्रत्यहं होमकर्मसिद्धिं समापयेत्॥ ८८-४॥

इत्येतत् परमं ज्ञानमन्यज्ज्ञानं श्रृणु प्रभो।

शिखोर्ध्वे च परा शक्तिः परंब्रह्मस्वरूपिणी॥ ८८-५॥

उष्ट्रमुखी रक्तमुखी कोटिकालानलोपमा ।

तां ध्यात्वा कुलपद्मस्य कर्णीकायां महामनाः॥ ८८-६॥

मनोयोगस्थितां देवीं परमानन्ददायिनीम् ।

सूक्ष्मातिसूक्ष्मभावस्थां स्थूलातिस्थूलविग्रहाम्॥ ८८-७॥

कालातीतां कालरूपां कालाकालप्रकाशिनीम् ।
धर्मोदयां भानुमतीं प्रबन्धकौशलेश्वरीम्॥ ८८-८॥
पार्वतीं रणमातङ्गीं मतङ्गगमनां पराम् ।
निर्वाणसिद्धिदां धात्रीं पञ्चतत्त्वप्रकाशिनीम्॥ ८८-९॥
पञ्चमीं पञ्चमस्थाञ्च पञ्चवक्त्रप्रियंवदाम् ।
पञ्चरश्ंमि पञ्चमवान् शोभितां दिक्पटाम्बराम्॥ ८८-१०॥
प्रवालस्थूलकोटीन्द्रनीलचन्द्रमणिस्रजाम् ।
द्विभुजां मौनशीलाञ्च ज्ञानपुस्तकधारिणीम्॥ ८८-११॥
एकाकारस्थितां रौद्रीं परदेवीं विभाव्य च ।
तच्चतुर्दीक्षु सततं शतयोगिनीमण्डलम्॥ ८८-१२॥
चक्रपङ्क्त्याकारशोभामण्डलं मण्डपस्थितम्।
तासां नामानि वक्ष्यामि शृणु भैरववल्लभ॥ ८८-१३॥
श्मशानवासिनी दुर्गा हरिणाक्षी प्रचण्डिका।
रौद्री श्यामा योगिनी च शिवानी शिवमोहिनी॥ ८८-१४॥
सुखिनी पञ्चमी बाला कुटिलाक्षी वसुन्धरा।
सुवर्णाङ्गी पावना च पवित्रा परमानना॥ ८८-१५॥
सिद्धिदा मङ्गला भाव्या सुरति कामदा रतिः।
प्रबला विमला चमना प्रभा काञ्चनमालिनी॥ ८८-१६॥
त्रिभङ्गदेहश्यामाङ्गी तरुणा तरलावती।
सुलभा दुर्लभा सर्वा प्रफुल्लकमलापि वा॥ ८८-१७॥

पातालमुखी गोमुण्डा घोरहासा विलासिनी।

अरुणा श्रवणा मन्त्री मालती मल्लिका तथा॥ ८८-१८॥

वैश्वानरी भरद्वाजा त्रिविभागा मतिः क्षुधा।

सुभद्राभाकरी लिप्ता नर्तका चिटिसुन्दरी॥ ८८-१९॥

बृहन्नली भागवती विशाला विरला तथा।

मानसी वानरीग्रीवा क्रोधिनी मोहिनी तथा॥ ८८-२०॥

आकर्षीणी स्तम्भिनी व त्रिजटा रुक्ममालिनी।

सप्तिका सुकला गीर्या गभीरा मुषलावती॥ ८८-२१॥

बृहन्नितम्बा मोहाक्षी मन्दिरा चन्द्रिका तथा।

सिद्धा विद्याधरा हारा रतिः कैशोरधर्मीणी॥ ८८-२२॥

तप्ता शान्तिर्भद्रदा च विकारी मञ्चवासिनी।

महाविद्या भवानी च तारब्रह्मस्वरूपिणी॥ ८८-२३॥

मातङ्गी बगला कृष्णा शिवा हैमवतीश्वरा।

समनापहरा काली कन्दर्पवनिता शुभा॥ ८८-२४॥

वाराणसीश्वरी बाला कमला चारुहासिनी।

अजन्ता हिमकन्या च शर्वाणी कुलचञ्चला॥ ८८-२५॥

तपस्विनी राजपुत्री चोमापर्णा निरञ्जना।

आधारभूता सावित्री वाच्यावाच्या चराचरा॥ ८८-२६॥

कल्क्येशी शशिवदना निर्वीकल्पसुपाक्षणी।

भुवनेशी सुन्दरी च सती सिद्धिप्रदा कला॥ ८८-२७॥

कृपणा पद्मवदना शब्देशी भगमालिनी।

आराधिता शोकहरा हरा हीरकमालिनी॥ ८८-२८॥

हालाहलहरा हारा रती कालानलापहा।

भैरवी वीरमाता च महाभाग्यवती उमा॥ ८८-२९॥

सुलभा दुर्गमाता च सुगन्धा गन्धमालिनी।

अमावास्या सिता भद्रा चारुणी सूर्यपुत्रिणी॥ ८८-३०॥

दानदा धनदा सिद्धिदायिनी भोगदायिनी।

इलावती रत्नमाला मनोयोगनिवासिनी॥ ८८-३१॥

मनस्विनी मूलमाता मूलमन्त्रस्वरूपिणी।

एतासां ध्यानमाकृत्य चतुर्दीक्षु क्रमेण तु॥ ८८-३२॥

विभाव्य तैजसीं सर्वां तेजोमालाविनाशिनीम्।

अतिसौन्दर्यलहरीं पारिजातवनान्तरे॥ ८८-३३॥

महामण्डलमध्ये तु रत्नसन्ताननिर्मीते।

ग्रहस्यापि महाकालं चतुर्द्वारं विचिन्तयेत्॥ ८८-३४॥

मणिकोटिविनिर्माणचतुस्तोरणभूषितम् ।

मण्डपस्योर्ध्वभागे च महाचन्द्रातपं शितम्॥ ८८-३५॥

शतसूर्यप्रभं कान्तं मुक्तादामविभूषितम्।

तथा मण्डपमध्योर्ध्वे वितालाङ्कं मनोहरम्॥ ८८-३६॥

तदधः स्वर्णनिर्माणच्छत्रं मणिमयं रुचिम्।

तदधः सिंहरूपाक्षि युक्तसिंहासनं परम्॥ ८८-३७॥

तदूर्ध्वे प्रेतबीजं तु प्रेतलिङ्गोपमं स्मृतम्।

प्रेतलिङ्गोपरि ध्यात्वा काञ्चनस्यापि मण्डलम्॥ ८८-३८॥

महापीठं त्रिकोणं तु कर्णीकायां महाप्रभम्।

शुक्लपद्मं महाशोभं षोडशच्छदमण्डितम्॥ ८८-३९॥

षोडशस्वरसंयुक्तं केशकेषु च वर्णकान्।

दक्षिणावर्तयोगेन विद्युद्रूपं विचिन्तयेत्॥ ८८-४०॥

चतुष्कोणत्रयं पश्चाच्चतुर्द्वारं मनोहरम्।

तत्र संचिन्तयेद् देवीं वारुणीमत्तविग्रहाम्॥ ८८-४१॥

पराम्बारूपिणीं तारां तरुणादित्यसन्निभाम्।

चतुर्द्वारे सदा ध्यायेद् देवानां चापि मण्डलम्॥ ८८-४२॥

सवाहनं दैवतं च परिवारसमन्वितम्।

इन्द्रनीलप्रभं कान्तं पूर्वद्वारीन्द्रचिन्तनम्॥ ८८-४३॥

वह्निकोणे तथा वह्निमण्डलं सर्वतोमुखम्।

परिवारान्वितं ध्यात्वा यमलोकं तु दक्षिणे॥ ८८-४४॥

यमं श्यामं महाकान्तं परिवारगणान्वितम्।

सवाहनं ततो ध्यायेन्नैर्ऋतं राक्षसीं पुरीम्॥ ८८-४५॥

तदुत्तरे सदा ध्यायेद् वरुणं मेषवाहनम्।

परिवारान्वितं शुक्लं भास्वरं तत्र चिन्तयेत्॥ ८८-४६॥

तदुत्तरे मरुल्लोकं कृष्णसारस्ववाहनम्।

परिवारान्वितं ध्यात्वा तत्पूर्वे चिन्तयेत् ततः॥ ८८-४७॥

कुबेरमुत्तरद्वारि परिवारगणान्वितम्।

सवाहनं कुत्सितञ्च सर्वरत्नोपशोभितम्॥ ८८-४८॥

ईशाने ईशलोकञ्च परिवारगणान्वितम्।

सवाहनं सर्वलोकपूजितं परमेश्वरम्॥ ८८-४९॥

परिवारान्वितं ध्यात्वा नानावाद्यसमन्वितम्।

भेरीतुरीधुधुरीणां सहस्रकोटिमेव च॥ ८८-५०॥

दुन्दुभिकुलितामोदगायनानन्दपूरितम्।

नानासुन्दरवाद्याढ्यं पूर्वलोकं विचिन्तयेत्॥ ८८-५१॥

वेणुवीणामृदङ्गानां सहस्रकोटिनादितम्।

यमलोकं नैर्ऋते च मन्त्रकोटिसमन्वितम्॥ ८८-५२॥

करतालकांस्यढक्काध्वनिकोटिप्रपूरितम्।

जलेश्वरमहालोकं दुन्दुभिध्वनिमोहितम्॥ ८८-५३॥

यन्त्रकोटिध्वनिश्रेणिमोहितं तत्र चिन्तयेत्।

झर्झरीपर्परीताङ्गीस्वनादनादितं रुचिम्॥ ८८-५४॥

मरुल्लोकं तथा ध्यायेत् कुबेरस्थानमेव च।

दुन्दुभिश्रेणिढक्कादियन्त्रनादविमोहितम्॥ ८८-५५॥

रागतालनृत्यगीतं मूतीमन्त्रं विचिन्तयेत्।

दीप्तिश्रेणिधरं कान्तं गन्धर्वनगरं ततः॥ ८८-५६॥

अप्सरोभिः परिवृतं सर्वत्र नगरे सुधीः।

विचिन्तयेद् गानरसं रसिकं सर्वमङ्गलम्॥ ८८-५७॥

सर्वलोकस्थिता शोभा शोभा सर्वविमोहिनी।

सर्वस्यान्तु समायान्तु देवषी यन्त्रगायकम्॥ ८८-५८॥

वाद्यवादकमेवं हि चिन्तयेत् परमावृतम्।

ब्रह्मषीमण्डलं तस्यां सर्वेषां गायनान्वितम्॥ ८८-५९॥

देवषीसर्वविज्ञानवाक्यरत्नस्वगायनम्।

विचिन्त्यैवं विधानेन निजपीठं विचिन्तयेत्॥ ८८-६०॥

पीठशक्तिं विचिन्त्याशु पीठनायकमेव च।

विचिन्त्यानन्दमग्नः स्यादचिरात् सिद्धिमाप्नुयात्।

अधो वाराणसीपीठं ध्यायेत् तत् क्रममाश्रृणु॥ ८८-६१॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षट्चक्रप्रकाशे भैरवीभैरवसंवादे पराशक्तिनिर्मूलस्थाननिर्णयो नाम अष्टाशीतितमः पटलः॥ ८८॥

## अथैकोननवतितमः पटलः

श्रीनन्दभैरवी उवाच

कालरूप महादेव कालकूटासवप्रिय।

इदानीं श्रृणु देवेश वाराणस्याः प्रियं पदम्॥ ८९-१॥

शतकोटियोगिनीनां मण्डलं योगिसेवितम्।

तं ध्यायेत् सर्वदा योगी यदि कल्याणमिच्छति॥ ८९-२॥

भ्रूमध्ये भाति सततं मण्डलाकारशोभितम्।

मातृकायन्त्ररूपं तु सर्वसारं विचिन्तयेत्॥ ८९-३॥

कोटिस्वयम्भूलिङ्गाढ्यं पुण्यकोटिफलोदयम्।

अतिसिद्धिप्रदं देशं देशनाथप्रियं पदम्॥ ८९-४॥

अमलाकमलाशक्तिकोटिकोटिसमन्वितम्।

त्रिशूलोपरि पूरं तु च्छत्राकारं फलाकरम्॥ ८९-५॥

कोटिलिङ्गप्रधानं तु योगेश्वरशिवं प्रभुम्।

अष्टोत्तरशतानन्दविग्रहं मन्मथान्तकम्॥ ८९-६॥

वराभयकरं सिद्धं डमरुच्छत्रधारिणम्।

त्रिशूलमुद्गराद्यस्त्रखेटकादिविभूषितम्॥ ८९-७॥

पञ्चमुखं दशभुजं शङ्खमालाकपालकम्।

ध्यात्वा सञ्चिन्तयेच्छम्भुं दश दिक्षु क्रमेण तु॥ ८९-८॥

स्थाने स्थाने दश दश मूर्तीचिह्नं विचिन्तयेत्।

शोणाभं विद्युताभञ्च पुरीरक्षणकारणम्॥ ८९-९॥

हेतुप्रियं गजारूढं वृषारूढं द्वयं द्वयम्।

अत्र चिन्तनमाकृत्य पीठविद्यावशं नयेत्॥ ८९-१०॥

दशकं व्याप्य तिष्ठन्ति मण्डलाकारसुक्रमात्।

अयुतं शिवलिङ्गं तु दश दिक्षु दश स्थले॥ ८९-११॥

विचिन्तयेच्छुक्लवर्णं काञ्चनालङ्कृतोज्ज्वलम्।

पूर्वस्यां दशरूपं तु चायुतावरणं प्रभुम्॥ ८९-१२॥

दश नाम प्रवक्ष्यामि शृणु भैरवभूपते।

जटिलः काल उन्मत्तः क्रोधराजः सदाशिवः॥ ८९-१३॥

परो दधीचिनाथश्च सुवाशी प्रमथेश्वरः।

यज्ञनाथेश्वरश्चैव चायुतेश्वरवल्लभः॥ ८९-१४॥

वह्निकोणे सदा भान्ति मूर्तीमन्तः शिवा दश।

वज्रधरो महाकालः कपिलेश्वर एव च॥ ८९-१५॥

पञ्चाननो योगिनाथो घर्घरेशः पिनाकधृक्।

पशुपालः क्षेमदश्च ब्रह्मनाथो दश स्मृताः॥ ८९-१६॥

एते चायुतलिङ्गेशा मूर्तीमन्तो विभान्ति च।

एतेषां ध्यानमाकृत्य पूजयेद् घृतधारया॥ ८९-१७॥

चिन्तयेद् दक्षिणे पश्चाद्दशमूर्तीं शिवस्य च।

वीरः शूलेश्वरः सिद्धेश्वरः श्रीपार्वतीश्वरः॥ ८९-१८॥

गणनाथेश्वरः शम्भुः प्रचण्डो दक्षयज्ञहा।

काशीपतिः पशुपतिः शिवा एते दश स्मृताः॥ ८९-१९॥

अयुतानन्दलिङ्गेशाः कपालशूलधारकाः।

मूर्तीमन्तो विभान्त्यत्र शिवमण्डलमध्यगाः॥ ८९-२०॥

एतान् सञ्चिन्तयेद् भक्त्या पीठक्षेत्रे च दक्षिणे।

नैर्ऋते चिन्तयेत् पश्चात् कामाख्यः शिवलिङ्गकः॥ ८९-२१॥

दक्षिणामूर्तीरीशानो वामनेशो मनोहरः।

वामदेवो बाणनाथो रघुवीरेश्वरस्ततः॥ ८९-२२॥

कामराजेश्वरः कामकलेशो दश ईश्वराः।

मूर्तीमन्तो विभान्त्यत्रायुतलिङ्गेश्वराः प्रभो॥ ८९-२३॥

विचिन्त्य परया भक्त्या पूजयेद् बिल्वपत्रकैः।

सर्वत्र मानसार्चा च पूर्वोक्तमूर्तीकल्पना॥ ८९-२४॥

वरुणे च ततो ध्यायेन्मण्डलस्थान् दश क्रमान्।

अरुणेश्वरो योगेन्द्रकाशीराजसुरान्तकाः॥ ८९-२५॥

त्रिशूली वरुणेशश्च कालाख्यः कामदायकः।

कालाग्निरुद्रो भद्रेशो दश रुद्राः प्रकीतीताः॥ ८९-२६॥

शिवलिङ्गायुतेशाश्च सर्वशक्तिसमन्विताः।

वायुकोणे स्थिता एते रुद्राश्चायुतलिङ्गपाः॥ ८९-२७॥

महारुद्रो वातनाथो रुद्रात्मा रौद्ररूपकः।

रूपनाथो हि हनुमान् सूर्येशो वसुधेश्वरः॥ ८९-२८॥

वासुकीवल्लभः सत्यपतिरेते महेश्वराः।

परिवारयुताः श्रेष्ठा महारुद्रादिवल्लभाः॥ ८९-२९॥

एते पूज्याश्चिन्तनीयाः कामनाफलसिद्धये।

उत्तरे चोत्तरास्यश्च कुबेरेश्वर ईश्वरः॥ ८९-३०॥

पञ्चाधारः पारमेशः परहंसप्रभाकरः।

अनन्तेशः कायरक्षो रत्नेश्वर उमापतिः॥ ८९-३१॥

एकादशैते रुद्राश्च नित्यायुतगणेश्वराः।

एते पूज्या ध्यायितव्याः पूर्वोक्तमूर्तीकल्पनाः॥ ८९-३२॥

ईशाने च ततो ध्यायेदीश्वरान् परमेश्वर।

ईशो वैश्वानरेशश्च विश्वामित्रेश्वरस्तथा॥ ८९-३३॥

ईशानोऽपि च मायेशो बटुकेशो रमेश्वरः।

कालान्तकेशः कामाख्यो महाकामपुरीश्वरः॥ ८९-३४॥

श्मशानवासिदेवेशः सर्वरूपप्रकाशकः।

एकादशैते रुद्राश्च कामपीठनिवासिनः॥ ८९-३५॥

अयुतानन्दलिङ्गेशाश्चिन्तनीयाः प्रपूजिताः।

वाराणसीमध्यपीठे त्रयोदश शिवेश्वराः॥ ८९-३६॥

अधोमण्डलमध्ये तु चिन्तयित्वा प्रपूजयेत्।

मृत्युञ्जयो मोक्षदश्च शिवेशो भैरवेश्वरः॥ ८९-३७॥

भूतनाथो भूतकर्ता क्षेत्रपालः परापरः।

मञ्जुघोषेश्वरः कालदमनः कौशलेश्वरः॥ ८९-३८॥

मुनिनाथो वर्णमाली रुद्रा भैरवरूपिणः।

एते त्रयोदशानन्दशिवरूपाः सुरेश्वराः॥ ८९-३९॥

अयुतानन्दलिङ्गेशाः पूज्यमानाः सुरासुरैः।

वराभयप्रदाः पञ्चतत्त्वप्रकाशकारिणः॥ ८९-४०॥

वाराणस्यूर्ध्वपीठे च त्रयोदश शिवान् यजेत्।

विचिन्त्य परमानन्दसाधकः स्थिरचेतसा॥ ८९-४१॥

ब्रह्मेशो ब्रह्मकुलेशो ब्रह्मलिङ्गो विधीश्वरः।

ब्रह्माण्डभेदकश्चात्मारामो वक्रेश्वरस्तथा॥ ८९-४२॥

बलीशो भार्गवेशश्च सदानन्देश्वरो हरः।

कृष्णेश्वरो रामनाथो रुद्रास्त्रयोदश स्मृताः॥ ८९-४३॥

अयुतानन्दलिङ्गेशा भैरवेन्द्राः प्रकीर्तिताः।

एते पूज्या महाकाल रुद्रास्त्रिभुवनेश्वराः॥ ८९-४४॥

कपालीशादयो ज्ञानज्ञेया निर्मलचेतसा।

सर्वाऽलङ्कारशोभाढ्या रत्नकुण्डलमण्डिताः॥ ८९-४५॥

सृष्टिसंहारकर्तारो देवकार्ये नियोजिताः।

एतेषां ध्यानमाकृत्य पूजयेच्चित्तपुष्पकैः॥ ८९-४६॥

तदा सिद्धिमवाप्नोति सत्यं सत्यं महेश्वर।

अकालतारका एते सर्वसिद्धिसमृद्धिदाः॥ ८९-४७॥

आनन्दभैरवाह्लादकारिणः कुलपण्डिताः।

एते रुद्राः पूजयन्ति महाविद्याः सुलक्षणाः॥ ८९-४८॥

तासां नाम प्रवक्ष्यामि क्रमशः शृणु भैरव।

द्रां द्रीं दश महाविद्याः पञ्चतत्त्वप्रकाशिकाः॥ ८९-४९॥

सर्वसिद्धिप्रदा नाथ पूजयन्ति महीतले।

सत्यत्रेताद्वापरे च कलौ पूर्णफलप्रदाः॥ ८९-५०॥

तासां नामानि वक्ष्यामि या या हि रुद्रपूजिताः।

त्रिपुरासुन्दरी देवी तथा त्रिपुरभैरवी॥ ८९-५१॥

भुवनेशी चान्नपूर्णा मातङ्गी विन्ध्यवासिनी।

छिन्नमस्ता च बगला त्रिकूटा पञ्चमी तथा॥ ८९-५२॥

कालिका तारिणी देवी काशीनाथप्रपूजिताः।

तन्त्रोक्तबाह्यपूजादिरवश्यं पूजयेत् सुधीः॥ ८९-५३॥

साधकः सिद्धिमाप्नोति कुलपूजाक्रमेण तु।

योगसिद्धिमवाप्नोति मासादेव न संशयः॥ ८९-५४॥

भ्रूपद्मभेदने काले त्ववश्यं परिपूजयेत्॥ ८९-५५॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षट्चक्र-- प्रकाशे

भैरवीभैरवसंवादे वाराणसीपीठनाथान्तर्यजनं नाम एकोननवतितमः पटलः॥ ८९॥

अथ नवतितमः पटलः

श्रीनन्दभैरवी उवाच

श्रृणु कान्त प्रवक्ष्यामि हाकिनीपञ्चमण्डलम्।

वाराणसीमध्यपीठे पञ्चकोणं विचिन्तयेत्॥ ९०-१॥

तत्र श्रीहाकिनीदेव्याः पञ्चपीठं विचिन्तयेत्।

पञ्चपीठे पञ्चदेवं रत्नमालाविमण्डितम्॥ ९०-२॥

भूतप्रेतपिशाचादियक्षदानवकोटिभिः।

वेष्टितं सर्वलोकाढ्यं पञ्चकोणं विचिन्तयेत्॥ ९०-३॥

पञ्चकोणे पञ्चपीठं कामदं व्यालसिद्धिदम्।

निर्वाणसिद्धिदं देव किमन्यत् कथयामि ते॥ ९०-४॥

पञ्चकोणे पञ्चतत्त्वं पञ्चबीजं स्वमेव च।

पूर्वकोणे इन्द्रबीजं पृथिव्याश्च त्रिकोणकम्॥ ९०-५॥

तद्दक्षिणे वायुबीजं वायवीशक्तिमण्डलम्।

वायुमुग्रवेगधरं धरणीभञ्जनाख्यकम्॥ ९०-६॥

तदधो गृहपीठे च त्रिकोणमण्डलोज्ज्वले।

जलबीजं वारुणाख्यं सर्वरत्नासनस्थितम्॥ ९०-७॥

शीतलं बहुरूपं तं त्रिलोकवायुभञ्जकम्।

सर्वाधस्तैजसं रूपं वह्निबीजं महाप्रभम्॥ ९०-८॥

सर्वदा तं मूर्तीमन्तं तेजोमालासमाकुलम्।

महोग्रं सर्वभक्षञ्च जलीयदोषभञ्जकम्॥ ९०-९॥

आकाशं सर्वशेषाख्यं महाप्रलयसङ्गमम्।

कुम्भकाधारचक्रं तु आकाशबीजरूपिणम्॥ ९०-१०॥

सर्वेषां लयसंस्थानं निर्मलं तत्त्वसिद्धिदम्।

हाकिनीपञ्चपीठञ्च पञ्च प्राणान् तदन्तरे॥ ९०-११॥

प्राणोऽपानः समानश्चोदानव्यानौ च वायवः।

मूर्तीमन्तो विभान्त्यत्र लोकानां मृत्युनाशनात्॥ ९०-१२॥

एतेषु वायुकुण्डेषु पूजयेत् पञ्चवायवीम्।

प्राणेशी गुदगापाना समानेशी कुलान्तरा॥ ९०-१३॥

उदानेशी व्यानमाता वायव्यः पञ्च पूजिताः।

पञ्चप्राणो पञ्चयोगं यः करोति कुलेश्वर॥ ९०-१४॥

वायवीष्वर्पयेन्नित्यं पञ्चतत्त्वं सुयोगवि।

शुद्धासवं शुद्धमांसं शुद्धमीनं तथापरम्॥ ९०-१५॥

शुद्धमुद्रां तथा शुद्धकुलचन्दनमर्पयेत्।

पञ्चतत्त्वं दापयेद् यः कुलसिद्धिनिबन्धनात्॥ ९०-१६॥

हाकिनीपरमायान्तु परमाभिः प्रतर्पयेत्।

वाराणसीमध्यपीठचक्रविद्या समा शृणु॥ ९०-१७॥

वाराणसीमण्डलञ्च त्रिकोणं षोडशाच्छदम्।

केशरद्वयमेवं तु पत्रे पत्रे प्रतिष्ठितम्॥ ९०-१८॥

चतुष्कोणत्रयं तस्योर्ध्वे चतुर्द्वारमेव च।

एतद्वाराणसीचक्रं सर्वकामसुसिद्धिदम्॥ ९०-१९॥

वाराणसीचक्रमध्ये त्रिकोणस्यान्तरे सुधीः।

प्रपञ्चगुणदुःखानि हरेच्च पञ्चकोणकम्॥ ९०-२०॥

त्रिकोणस्यान्तरे ध्यात्वा किन्न सिध्यति भूतले।

एतत्प्रकाशितं चक्रं यो ध्यायति निरन्तरम्॥ ९०-२१॥

मनोयोगसिद्धिभावं स प्राप्नोति न संशयः।

मनोयोगसिद्धिकाले सदावश्यं विचिन्तयेत्॥ ९०-२२॥

पञ्चकोणे पञ्चतत्त्वं काशीपीठे च लिङ्गिनः।

कोटिरूपधरा एते चात्रैव भान्ति नित्यशः॥ ९०-२३॥

हाकिनीमण्डलं मध्ये काश्यास्त्रिकोणयन्त्रके।

हाकिनी पञ्चतत्त्वाख्यां पञ्चभूतप्रकाशिनीम्॥ ९०-२४॥

पृथिवीजलरूपाञ्च तेजोरूपाञ्च वायवीम्।

गगनां क्रमतो ध्यायेद् दक्षिणावर्तसत्पथा॥ ९०-२५॥

विभाव्य पञ्चमीं देवीं हाकिनीमण्डले यजेत्।

सर्वत्र ह्यन्तर्यजनं कृत्वा सिद्धिमवाप्नुयात्॥ ९०-२६॥

इति वाराणसीचक्रमध्यस्थं पञ्चकोणकम्।

हाकिनीमण्डलं देवनायिकागणमण्डितम्॥ ९०-२७॥

सर्वालङ्कारशोभाढ्यं हेममालाविराजितम्।

शिवशक्त्यात्मकं चक्रं परमसिद्धिदायकम्॥ ९०-२८॥

अप्रकाश्यं सर्वतन्त्रे काशितं रुद्रयामले।

षट्कोणमण्डलं वक्ष्ये हाकिन्याः शिवशक्तिगम् ॥ ९०-२९॥

वाराणसीमण्डलाग्रे प्रतिभाति निरन्तरम्।

शिवशक्तिमयं शुद्धचक्रराजं विचिन्तयेत्॥ ९०-३०॥

तदूर्ध्वे चोन्मनीदेशं तदूर्ध्वे बोधनीपुरम्।

मण्डलं शृणु यत्नेन येनान्तर्यजनं लभेत्॥ ९०-३१॥

षट्कोणं कर्णीकामध्ये तद्बाह्ये मण्डलाष्टकम्।

तदूर्ध्वे षोडशदलं केशरद्वयसंयुतम्॥ ९०-३२॥

चतुर्द्वारं तदूर्ध्वे तु व्याप्य तिष्ठति सर्वदा।

षट्कोणमध्यदेशे तु परनाथं परान्वितम्॥ ९०-३३॥

षट्कोणे सर्वदा भान्ति षड्वक्रस्थितिशक्तयः।

पतिभिः सह देवेशी डाकिनी कुण्डलीप्रिया॥ ९०-३४॥

राकिणी लाकिनी देवी काकिनी शाकिनी तथा।

हाकिनी च दक्षिणतो ध्येया शिवसमीपगा॥ ९०-३५॥

ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः।

ततः परशिवो ध्येयः स्वमुक्तिमण्डलस्थितः॥ ९०-३६॥

ध्यात्वा सम्पूजयेच्चक्रे शिवशक्तिमयं परम्।

पराशक्तिसमाक्रान्तं स्वयम्भुलिङ्गरूपिणम्॥ ९०-३७॥

सर्वसिद्धान्तनिलयं वेदवेदाङ्गगायनम्।

मायातीतं निवीकल्पं स्वप्रकाशं निरञ्जनम्॥ ९०-३८॥

षट्कोणान्तर्गतं ध्यात्वा पराशक्तिसमन्वितम्।

तदूर्ध्वेऽष्टमण्डलं तु व्याप्य कोटिसहस्रशः॥ ९०-३९॥

योगिन्यः सन्ति नित्यं तु परमानन्दसिद्धिदाः।

तदूर्ध्वे षोडशारे च भान्ति स्वरसमन्विताः॥ ९०-४०॥

परा शक्तिः प्रभाकारा चतुर्द्वारे ततो लिखेत्।

अष्टवर्गक्रमेणापि सर्वसिद्धि विभावयेत्॥ ९०-४१॥

सिद्धिपूजामवाप्नोति मण्डलाकारभावनात्।

मण्डलं यो महाकालभ्रूर्ध्वे ध्यायेद्यदि प्रियम्॥ ९०-४२॥

महासिद्धिमवाप्नोति सत्यं सत्यं कुलेश्वर।

अनायासेन योगेन्द्र योगिनीसिद्धिमाप्नुयात्॥ ९०-४३॥

एतच्चक्रं विभाव्याशु भावसिद्धिमवाप्नुयात्।

भावसिद्धिस्थितं चक्रं मनोयोगसुसिद्धिदम्॥ ९०-४४॥

अन्यच्छ्रीबोधिनीचक्रस्याधोभागे विचिन्तयेत्।

उन्मनीज्ञानचक्रं तु सार्वज्ञसिद्धिदायकम्॥ ९०-४५॥

नवकोणं बिन्दुयुक्तं प्रेतबीजं विचिन्तयेत्।

तं व्याप्य नवकोणं तु मण्डलत्रयमेव च॥ ९०-४६॥

षोडशारं तद्बहिस्तु चतुर्द्वारं तु तद्बहिः।

दले दले सुरान् ध्यायेदष्टवर्गं ततो लिखेत्॥ ९०-४७॥

अष्टकोणे चतुर्द्वारमण्डलस्य विभाव्य च।

उन्मनीनगरं मध्ये तन्मध्ये पररूपिणम्॥ ९०-४८॥

शक्तियुक्तं विभाव्याशु सिद्धिमिष्टां प्रयच्छति।

पदार्थनवकं तत्र बीजयुक्तं विभावयेत्॥ ९०-४९॥

तत्पदार्थान् प्रवक्ष्यामि श‍ृणुष्व भैरवेश्वर।

पृथिवीं जलरेखाञ्च तेजोरूपाञ्च वायवीम्॥ ९०-५०॥

आकाशगामिनीं देवीं कालरूपां दिगम्बरीम्।

आत्मशक्तिं मनःशक्तिं दक्षिणावर्तयोगतः।

लिखित्वा स्वस्वबीजाढ्यां भावयेत् कुलवर्त्मना॥ ९०-५१॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे।

षट्चक्रप्रकाशेभैरवीभैरवसंवादे वाराणसीपञ्चपीठ--। प्रकाशो नाम नवतितमः पटलः॥

